नुबंधिक्रोधमानलोभमायान्यतरोदयेन प्रथमौपशमिकसम्यक्त्वात्पतितो मिथ्यात्वं नाद्यापि
गच्छतीत्यंतरालवर्ती सासादनः॥ निजशुद्धात्मादितत्त्वं वीतरागसर्वज्ञप्रणीतं परप्रणीतं च मन्य
ते यः स दर्शनमोहनीयभेदमिश्रकर्मोदयेन दधिगुडमिश्रभाववन्मिश्रगुणस्थानवर्ती भवा
ति॥ अथमतं येन केनाप्येकेन मम देवेन प्रयोजनं तथा सर्वे देवा वंदनीया न च निंदनीया इत्या
दि वैनयिकमिथ्यादृष्टिः॥ संशयमिथ्यादृष्टिर्वा तथा मन्यते तेन सरूपं मिथ्यादृष्टेः को वि
शेष इति॥ छ॥ तत्र परिहारः सर्वज्ञदेवेषु सर्वसमयेषु च भक्तिपरिणामेन येन केनाप्येकेन मम
ण्यं भविष्यतीति मत्वा संशयरूपेण भक्तिं करोति॥ निश्चयो नास्ति॥ मिश्रस्य पुनः उभयत्र निश्च
योऽस्तीति विशेषः स्वाभाविकानंतज्ञानाद्यनंतगुणाधारभूतं निजपरमात्मद्रव्यमुपादेयं इंद्रि
यसुखादिपरद्रव्यं हि हेयं॥ इत्यर्हत्सर्वज्ञप्रणीतनिश्चयव्यवहारनयसाध्यसाधकभावेन मन्यते॥ प
रं किंतु भूमिरेखादिसदृशक्रोधादिकद्वितीयकषायोदयेन निमित्तं तत्र लवगृहीततस्कारवदा

त्मनिंदादि सहितः सन्निंद्रियसुखमनुभवति॥ इत्यविरतसम्यग्दृष्टिलक्षणं॥ यः पूर्वोक्तप्रकारेण सम्यग्दृष्टिः सन भूमिरेखासदृशक्रोधादिद्वितीयकषायोदयाभावे सत्यभ्यंतरे निश्चयनयेनैकदेशरागादिरहितस्वाभाविकसुखानुभूतिलक्षणेषु बहिर्विषयेपुनरेकदेशहिंसानृतस्तेयाब्रह्मपरिग्रहनिवृत्तिलक्षणेषु॥ दंसणवयसामाइय॥ पोसहसचित्तराइभत्तेय॥ बंभारंभपरिग्गह॥ अणुमणउद्दिठ्ठ देसविरदेय॥ ७॥ इतिगाथाकथितैकादशनिलयेषु वर्त्तते स पंचमगुणस्थानवर्ती श्रावको भवति॥ सएवसदृष्टिः धूलिरेखादिसदृशक्रोधादितृतीयकषायोदयाभावे सत्यभ्यंतरे निश्चयनयेन रागाद्युपाधिरहितस्वशुद्धात्मसंवित्तिसमुत्पन्नसुखामृतानुभवलक्षणेषु बहिर्विषयेषु पुनः सामस्त्येन हिंसानृतस्तेयाब्रह्मपरिग्रहनिवृत्तिलक्षणेषु च पंचमहाव्रतेषु वर्त्तते यदा तदा दुःस्वप्नादिव्यक्ताव्यक्तप्रमादसहितोपि षष्ठगुणस्थानवर्ती प्रमत्तसंयतो भवति॥ सएव जलरेखादिसदृशसंज्वलनकषायमंदोदये सति निःप्रमादशुद्धात्मसंवित्तिमलजनकव्यक्ताव्यक्तप्रमादरहितः सन सप्तमगुणस्थ

नवर्त्यप्रमत्तसंयतो भवति॥ सएवातीतसंज्वलनकषायमंदोदये सत्यपूर्वपरमाह्लादैकसुखानुभूतिल
क्षणोऽपूर्वकरणोपशमिकक्षपकसंज्ञोऽष्टमगुणस्थानवर्ती भवति॥ दृष्टश्रुतानुभूतभोगाकांक्षा
दिरूपसमस्तसंकल्परहितनिजनिश्चयपरमात्मतत्वैकाग्रध्यानपरिणामेन कृत्वा येषां जीवाना
मेकसमये परस्परं पृथक्त्वं कर्तुं नायाति॥ ते वर्णसंस्थानादिभेदेप्यनिवृत्तिकरणोपशमकक्षप
कसंज्ञा द्वितीयकषायाद्येकविंशतिभेदभिन्नचारित्रमोहप्रकृतीनामुपशमनक्षपणसमर्था न
वमगुणस्थानवर्त्तिनो भवंति॥ सूक्ष्मकृष्टिगतलोभकषायस्योपशमकाः क्षपकाश्च दशमगुणस्था
नवर्तिनो भवंति॥ परमोपशममूर्तिनिजात्मस्वभावसंवित्तिबलेन सकलोपशांतमोहा एकादशम
गुणस्थानवर्तिनो भवंति॥ उपशमश्रेणिमार्गेणानिःकषायशुद्धात्मभावनाबलेन क्षीणकषाया
द्वादशमगुणस्थानवर्तिनो भवंति॥ मोहक्षपणानंतरमंतर्मुहूर्तकालं स्वशुद्धात्मसंवित्तिलक्षणै
कत्ववितर्कावीचारद्वितीयशुक्लध्याने स्थित्वा तदंत्यसमये ज्ञानावरणदर्शनावरणांतरायत्र

यं युगपदेकसमयेन निर्मूल्य मेघपंजरविनिर्गतदिनकर इव सकलविमलकेवलज्ञानकिरणैर्लोकालो
कप्रकाशकास्त्रयोदशगुणस्थानवर्त्तिनो जिनभास्करा भवंति॥ मनोवचनकायवर्गणालंबनक
र्मादाननिमित्तात्मप्रदेशपरिस्पंदलक्षणयोगरहिताश्चतुर्दशगुणस्थानवर्त्तिनस्त्वयोगिजि
ना भवंति॥ ततश्च निश्चयरत्नत्रयात्मककारणभूतसमयसारसंज्ञेन परमयथाख्यातचारित्रेण च
तुर्दशगुणस्थानातीताः॥ ज्ञानावरणाद्यष्टकर्मरहिताः सम्यक्त्वाद्यष्टगुणांतर्भूतनिर्नामनिर्गोत्रा
द्यनंतगुणाः सिद्धा भवंतीति॥ अत्राह शिष्यः॥ केवलज्ञानोत्पत्तौ मोक्षकारणभूतरत्नत्रयपरि

भाव्यं॥ सयोग्ययोगिजिनस्थानद्वयकालो नास्ति॥ प
हृ॥ यथाख्यातचारित्रं जातं परं किंतु परमयथाख्यातं नास्ति॥ अत्र दृष्टांत॥ यथा चौरा
भावेपि पुरुषस्य चौरसंसर्गदोषं जनयति॥ तथा चारित्रविनाशकचारित्रमोहोदयाभा
केवलिनां निःक्रियशुद्धात्माचरणविलक्षणो योगत्रयव्यापारश्चारित्रमलं जन

याति॥ योगत्रययातेपुनरयोगिजिनेचरमसमयंविहायशेषाघातिकर्मतीव्रोदयश्चारित्रमलंज
नयति॥ चरमसमयेतुमंदोदयेसतिचारित्रमलाभावान्मोक्षंगच्छंति॥ इतिचतुर्दशगुणस्थानव्या
ख्यानंगतं॥ इदानींमार्गणाःकथ्यंते॥ गइइंदियेसुकायेजोएवेदेकसायणाणेय॥ संजमदंस
णलेस्साभवियासम्मत्तसण्णिआहारे॥१॥ इतिगाथाकथितक्रमेणगत्यादिचतुर्दशमार्गणा
ज्ञातव्याः॥ तद्यथा॥ स्वात्मोपलब्धिसिद्धिविलक्षणानारकतिर्यग्मनुष्यदेवगतिभेदेन
चतुर्विधागतिमार्गणाभवति॥ अतींद्रियशुद्धात्मतत्त्वप्रतिपक्षभूतैकद्वित्रिचतुःपंचेंद्रिय
भेदेनपंचप्रकारेंद्रियमार्गणा॥ अशरीरात्मतत्त्वविसदृशपृथिव्यप्तेजोवायुवनस्पतित्रसका
यभेदेनषड्विधाकायमार्गणा॥ निर्व्यापारशुद्धात्मपदार्थविलक्षणमनोवचनकाययोगभेदे
नत्रिधायोगमार्गणा॥ अथवाविस्तरेणसत्यासत्योभयानुभयभेदेनचतुर्विधोमनोयोगोवचन
योगश्च॥ औदारिकौदारिकमिश्र॥ वैक्रियकमिश्राहारकआहारकमिश्रकार्माणकायभेदेन

द्रव्य०
१८

सप्तविधकाययोगाश्चेति॥समुदायेनपंचदशविधावायोगमार्गणा॥वेदोदयोद्भवरागादिदोषरहि
तपरमात्मद्रव्याद्भिन्नास्त्रीपुंनपुंसकभेदेनत्रिधावेदमार्गणाः॥निःकषायशुद्धात्मस्वभावप्रति
कूलक्रोधमानमायालोभभेदेनचतुर्विधाकषायमार्गणा॥विस्तरेणकषायनोकषायभेदेनपं
चविंशतिविधावा॥मत्यादिसंज्ञानपंचककुमत्याद्यज्ञानत्रयंचेत्यष्टविधाज्ञानमार्गणा॥सामा
यिकच्छेदोपस्थापनपरिहारविशुद्धिसूक्ष्मसांपराययथाख्यातभेदेनचारित्रंपंचविधं॥संय
मासंयमस्तथैवासंयमश्चेतिप्रतिपक्षरूपेणसप्तप्रकारसंयममार्गणा॥चक्षुरचक्षुरवधिकेव
लदर्शनभेदेनचतुर्विधादर्शनमार्गणा॥कषायोदयरंजितयोगप्रवृत्तिर्विसदृशपरमात्मद्रव्य
प्रतिपन्थिनीकृष्णनीलकापोततेजःपद्मशुक्लभेदेनषड्विधालेश्यामार्गणा॥भव्याभव्यभेदे
नद्विविधाभव्यमार्गणा॥अत्राहशिष्यः॥शुद्धपारिणामिकपरमभावरूपशुद्धनिश्चयेनगुण
स्थानमार्गणास्थानरहिताजीवाइत्युक्तं॥पूर्वंइदानींपुनर्भव्याभव्यरूपेणमार्गणामध्येपि

पारिणामिकभावोभणितः इतिपूर्वापरविरोधः॥ ८॥ परिहारमाह॥ पूर्वंचशुद्धपारिणामिक
भावापेक्षयागुणस्थानमार्गणास्थाननिषेधःकृतः इदानींपुनर्भव्याभव्यत्वद्वयमशुद्धपारि
णामिकभावरूपंमार्गणामध्येपिघटते॥ ननुशुद्धाशुद्धभेदेनपारिणामिकभावोद्विधाना
स्ति॥ किंतुशुद्धएवनैवं॥ यद्यपिसामान्यरूपेणोत्सर्गव्याख्यानेनशुद्धपारिणामिकभावक
थ्यते॥ तथाप्यपवादव्याख्यानेनाशुद्धपारिणामिकभावोप्यस्ति तथाहिजीवभव्याभव्यत्वा
निचेति॥ तत्वार्थेत्रिविधापारिणामिकभावोभणितस्तत्रशुद्धचैतन्यरूपंजीवत्वमविनश्व
रत्वेनशुद्धद्रव्याश्रितत्वात्॥ शुद्धद्रव्यार्थिकसंज्ञः शुद्धपारिणामिकभावोभण्यतेयत्पुनः
कर्मजनितःदशप्राणरूपंजीवत्वंभव्यत्वमभव्यत्वंचेति॥ त्रयंतद्विनश्वरत्वेनपर्यायाश्रितत्वे
त पर्यायार्थिकसंज्ञस्त्वशुद्धपारिणामिकभावउच्यते॥ अशुद्धत्वंकथमितिचेत॥ यद्यपितद
शुद्धपारिणामिकत्रयंव्यवहारेणसंसारिजीवेस्ति॥ तथापिसव्वेसुद्धाहुसुद्धणया॥ इतिवचना

द्रव्य०
२६

तच्छुद्धणाया॥इतिवचनात शुद्धनिश्चयेन नास्ति॥मुक्तजीवे पुनः सर्वथैव नास्ति इति हेतोरशुद्ध
त्वं भण्यते॥ तत्राशुद्धाशुद्धपारिणामिकमध्ये शुद्धपारिणामिकभावो ध्यानकाले ध्येयरूपो भव
ति ध्यानरूपो न भवति॥ कस्मात ध्यानपर्यायस्य विनश्वरत्वात॥ शुद्धपारिणामिकस्तु द्रव्यरू
पत्वादविनश्वर इति भावार्थः॥ औपशमिकक्षायोपशमिकक्षायिकसम्यक्त्वभेदेन त्रिधा सम्य
क्त्वमार्गणा॥ मिथ्यादृष्टिसासादनमिश्रसंज्ञा विपक्षत्रयभेदेन सह षड्विधा ज्ञातव्या॥ संज्ञित्वा
ऽसंज्ञित्वविसदृशपरमात्मस्वरूपाद्भिन्ना संज्ञासंज्ञिभेदेन द्विधा संज्ञीमार्गणा॥ आहारकाना
हारकजीवभेदेनाहारकमार्गणापि द्विधेति चतुर्दशमार्गणास्वरूपं ज्ञातव्यं॥ एवं पुढविजल
तेयवाऊ इत्यादिगाथाद्वयेन तृतीयगाथापादत्रयेण च॥ गुणजीवापज्जत्ती॥ पाणासण्णाय
मग्गणाओय॥ उवओगोवियकमसो॥ वीसंतुपरूवणाभणिया॥ १॥ इतिगाथाप्रभृतिकथित
स्वरूपं धवलजयधवलमहाधवलप्रबंधाभिधानसिद्धांतत्रयबीजपदं सूचितं॥ सर्वशुद्धाशु

मित्यादिविशेषगुणाः॥ तथैवास्तित्व॥ वस्तुत्व॥ प्रमेयत्वादिसामान्यगुणाः॥ स्वागमाविरोधेनानंता

ज्ञातव्याः॥ संक्षेपरुचिशिष्यंप्रतिपुनर्विवक्षिताभेदनयेनानंतज्ञानादिचतुष्टयमनंतज्ञानदर्शनसु

खत्रयं॥ केवलज्ञानदर्शनद्वयं॥ साक्षादभेदनयेनशुद्धचैतन्यमेवैकोगुणइति॥ पुनरपिकथंभूता

सिद्धाः चरमशरीरात्किंचिदूनाभवंति॥ तत्किंचिदूनत्वंशरीरांगोपांगजनितनासिकादिछि

र्णत्वेसति॥ यस्मिन्नेवक्षणेसयोगिचरमसमयेत्रिंशत्प्रकृत्युदयविच्छेदमध्येशरीरांगो

गनामकर्मोदयविच्छेदोजातस्तस्मिन्नेवक्षणेजातमितिज्ञातव्यं॥ कश्चिदाह॥ यथाप्रदीपस्य

भाजनाद्यावरणेप्रकाशस्यविस्तारोभवति॥ तथादेहाभावेलोकप्रमाणेनभाव्यमिति॥ तत्रो

:॥ प्रदीपसंबंधीयोसौप्रकाशविस्तारःपूर्वंस्वभावेनैवतिष्ठति॥ पश्चादावरणंजातं॥ जी

प्रदेशत्वस्वभावोभवति॥ यस्तुप्रदेशानांसंबंधीविस्तारः सस्वभावो॥

भवति॥ कस्मादितिचेत्॥ पूर्वंलोकमात्रप्रदेशाविस्तीर्णानिरावरणास्तिष्ठंति॥ पश्चात्प्रदीप

तस्सुद्धणाया॥इतिवचनात्शुद्धनिश्चयेननास्ति॥मुक्तजीवेपुनः सर्वथैवनास्ति इतिहेतोरशुद्ध
त्वंभण्यते॥तत्रशुद्धाशुद्धपारिणामिकमध्येशुद्धपारिणामिकभावोध्यानकालेध्येयरूपोभव
तिध्यानरूपोनभवति॥कस्मात्ध्यानपर्यायस्यविनश्वरत्वात्॥शुद्धपारिणामिकवस्तुद्रव्यरू
पत्वादविनश्वरइतिभावार्थः॥औपशमिकक्षायोपशमिकक्षायिकसम्यक्तभेदेनत्रिधासम्य
क्तमार्गणा॥मिथ्यादृष्टिसासादनमिश्रसंज्ञाविपक्षत्रयभेदेनसम्यक्त्वषड्विधाज्ञातव्याः॥संज्ञित्वा
ऽसंज्ञित्वविसदृशापरमात्मस्वरूपाद्भिन्नासंज्ञासंज्ञिभेदेनद्विधासंज्ञीमार्गणा॥आहारकाना
नाहारकजीवभेदेनाहारकमार्गणापिद्विधेतिचतुर्दशमार्गणास्वरूपंज्ञातव्यं॥पुढविजल
तेयवाऊइत्यादिगाथाद्वयेनतृतीयगाथापादत्रयेणवा॥गुणजीवापज्जत्ती॥पाणासण्णाय
मग्गणाओय॥उवओगोविपकमसो॥वीसंतुपरूवणाभणिया॥१॥इतिगाथामभ्रितकथित
स्वरूपंधवलजयधवलमहाधवलप्रबंधाभिधानसिद्धांतत्रयबीजपदंसूचितं॥सर्वशुद्धाशु

द्धगाथा॥ इति शुद्धात्मतत्त्वप्रकाशकं तृतीयगाथाचतुर्थपादेन पंचास्तिकायप्रवचनसारसमयसा
राभिधानप्राभृतत्रयस्यापि बीजपदं सूचितमिति॥ अत्र गुणस्थानमार्गणादिमध्ये केवलज्ञानदर्श
नद्वयं॥ क्षायकसम्यक्त्वमनाहारकशुद्धात्मस्वरूपं च साक्षादुपादेयं॥ यत्पुनश्च शुद्धात्मसम्यक्
श्रद्धानज्ञानानुचरणलक्षणं कारणसमयसारस्वरूपं तत्तस्यैवोपादेयभूतस्य॥ विवक्षितैक
देशशुद्धनयेन साधकत्वात्पारंपर्येणोपादेयं॥ शेषं तु हेयमिति॥ यच्चाध्यात्मग्रंथस्य बीजपदभू
तं शुद्धात्मस्वरूपमुक्तं तत्पुनरुपादेयमेव॥१३॥ अनेन प्रकारेण जीवाधिकारमध्ये शुद्धाशुद्ध
जीवकथनमुख्यत्वेन सप्तमस्थले गाथात्रयं गतं॥ अथेदानीं गाथापूर्वार्द्धेन सिद्धस्वरूप
मुत्तरार्द्धेन॥ पुनरूर्ध्वगतिस्वभावत्वं च कथयति॥ णिक्कम्मा अट्ठगुणा॥ किंचूणा चरमदेहदो सि
द्धा॥ लोयग्गठिदा णिच्चा॥ उप्पादवएहिं संजुत्ता॥१४॥ सिद्धाः सिद्धा भवंतीति क्रियाध्याहारः किं
विशिष्टाः॥ णिक्कम्मा अट्ठगुणा किंचूणा चरमदेहदो निःकर्माणोऽष्टगुणाः किंचिदूनाश्चरमदे

हृतः शकायादितिसूत्रपूर्वार्द्धेनासिद्धस्वरूपमुक्तं॥ऊ॥ उर्द्धगमनस्वभावं कथ्यते॥लोयग्गठिदाणिच्चा उप्पादवयेहिसंजुत्ता॥तेचासिद्धाःलोकाग्रस्थिताःनित्याःउत्पादव्ययाभ्यांसंयुक्ताःइति॥ऊ॥अतो विस्तारः कर्म्मारिविध्वंसकस्वशुद्धात्मसंवित्तिबलेनज्ञानावरणादिमूलोत्तरगतसमस्तकर्म्मप्रकृति विनाशकत्वादष्टकर्म्मरहिताः॥सम्मत्तणाणदंसण॥वीरियसुहमंतहेवअवगाहणं॥अगुरुलघु मव्वावाहं॥अट्ठगुणाहुंतिसिद्धाणं॥ऊ॥इतिगाथाकथितक्रमेणतेषामष्टकर्मरहितानामष्टगुणाः कथ्यंते॥तथाहि॥केवलज्ञानादिगुणास्पदनिजशुद्धात्मैवोपादेयइतिरुचिरूपंनिश्चयनयसम्यक्तं यत्पूर्वंतपश्चरणावस्थायांभावितंतस्यफलभूतंसमस्तजीवादितत्वविषयेविपरीताभिनिवेशरहित परिणतिरूपंपरमक्षायिकसम्यक्तंभण्यते॥पूर्वंछद्मस्थावस्थायांभावितस्यनिर्विकारस्वसंवेदनज्ञान स्यफलभूतंयुगपल्लोकालोकसमस्तवस्तुगतविशेषपरिच्छेदकंकेवलज्ञानं॥निर्विकल्पस्वशुद्धा त्मसत्तावलोकनरूपंयत्पूर्वंदर्शनंभावितंतस्यैवफलभूतंयुगपल्लोकालोकसमस्तवस्तुगतसं

मान्यग्राहकं केवलदर्शनं ॥ कस्मिंश्चित्स्वरूपचलनकारणे जाते सति घोरपरीषहोपसर्गादौ निजनिरं
जनपरमात्मध्यानेपूर्वं यद्धैर्यमवलंबितं तस्यैव फलभूतमनंतपदार्थपरिच्छित्तिविषये खेदरहितत्व
मनंतवीर्यं ॥ सूक्ष्मातींद्रियकेवलज्ञानविषयत्वात्सिद्धस्वरूपस्य सूक्ष्मत्वं भण्यते ॥ एकप्रदीपप्रका
शानानाप्रदीपप्रकाशवदेकसिद्धक्षेत्रे संकरव्यतिकरदोषपरिहारेणानंतसिद्धावकाशदानसाम
र्थ्यमवगाहनगुणो भण्यते ॥ यदि सर्वथा गुरुत्वं भवति तदा लोहपिंडवदधःपतनं ॥ यदि च सर्वथा गु
रुत्वं भवति तदा लोहपिंडवदधःपतनं ॥ यदि च सर्वथा लघुत्वं भवति तदा वाताहतार्कतूलवत्सर्वे
देवभ्रमणमेव स्यान्न च तथा तस्मादगुरुलघुगुणोऽभिधीयते ॥ सहजशुद्धस्वरूपानुभवसमुत्पन्नरागादिवि
भावरहितसुखामृतस्य यदेकदेशसंवेदनं कृतं पूर्वं तस्यैव फलभूतमव्याबाधानंतसुखत्वं भण्यते इति
मध्यमरुचिशिष्यापेक्षया सम्यक्त्वादिगुणाष्टकं भणितं ॥ विस्ताररुचिशिष्यं प्रति पुनर्विशेषभेदनये
न निर्गतित्वं निरिंद्रियत्वं निकायत्वं ॥ निर्योगत्वं निर्वेदत्वं ॥ निःकषायत्वं ॥ निर्गोत्रत्वं ॥ निरायुषत्वं ॥

मित्यादिविशेषगुणाः तथैवास्तित्ववस्तुत्वप्रमेयत्वादिसामान्यगुणाः स्वागमाविरोधेनानन्ता
ज्ञातव्याः संक्षेपरुचिशिष्यं प्रति पुनर्विवक्षिताभेदनयेनानन्तज्ञानादिचतुष्टयमनन्तज्ञानदर्शनसु
खत्रयं केवलज्ञानदर्शनद्वयं साक्षादभेदनयेन शुद्धचैतन्यमेवैको गुण इति पुनरपि कथंभूता
सिद्धाः चरमशरीरात् किंचिदूना भवन्ति तत्किंचिदूनत्वं शरीरोपाङ्गजनितनासिकादिछि
द्राणामपूर्णत्वे सति यस्मिन्नेव क्षणे सयोगिचरमसमये त्रिंशत्प्रकृत्युदयविच्छेदमध्ये शरीरोपा
ङ्गनामकर्मोदयविच्छेदो जातस्तस्मिन्नेव क्षणे जातमिति ज्ञातव्यं कश्चिदाह
भाजनाद्यावरणाभावे प्रकाशस्य विस्तारो भवति तथा देहाभावे लोकप्रमाणेन भाव्यमिति
परिहारः प्रदीपसंबंधी योऽसौ प्रकाशविस्तारः पूर्वं स्वभावेनैव तिष्ठति पश्चादावरणं जातं जी
वस्य तु लोकमात्रासंख्येयप्रदेशत्वं स्वभावो भवति यस्तु प्रदेशानां संबंधी विस्तारः स स्वभावो
न भवति कस्मादिति चेत् पूर्वं लोकमात्रप्रदेशा विस्तीर्णा निरावरणास्तिष्ठन्ति पश्चात्प्रदी

वदावरणाज्ञातमेव तन्न ॥ किंतु पूर्वमेवानादिसंतानरूपेण शरीरेणावृतस्तिष्ठति ॥ ततः कारणा
त्प्रदेशानां संहारो विस्तारो न भवति ॥ विस्तारश्च शरीरनामकर्माधीन एव न च स्वभावः ॥ तेन
कारणेन शरीराभावे विस्तारो न भवति ॥ अपरमप्युदाहरणं दीयते ॥ यथा हस्तचतुष्टयप्रमा
णवस्त्रं पुरुषेण मुष्टौ बद्धं तिष्ठति ॥ पुरुषाभावे संकोचविस्तारौ वा न करोति ॥ नः प्रतिकाले सार्द्र
मृन्मयभाजनं वा शुष्कं सज्जलाभावे सति ॥ तथा जीवोपि पुरुषस्थानीयजलस्थानीयशरी
राभावे विस्तारसंकोचौ न करोतीति ॥ ॥ यत्रैव मुक्तस्तत्रैव तिष्ठतीति ये केचन वदंति तन्निषे
धार्थं पूर्वप्रयोगादसंगत्वाद्बंधच्छेदात्तथागतिपरिणामाच्चेति हेतुचतुष्टयेन तथैवाविद्धकु
लालचक्रवद्व्यपगतलेपालाबुवदेरंडबीजवदग्निशिखावच्चेति दृष्टांतचतुष्टयेन च स्वभा
वोर्ध्वगमनं ज्ञातव्यं ॥ तच्च लोकाग्रपर्यंतमेव न च परतो धर्मास्तिकायाभावादिति ॥ नित्यं इति
विशेषणं मुक्तात्मनां कल्पशतप्रमितकाले गते जगति शून्ये जाते सति पुनरागमनं भवति

सदाशिववादिनो वदंति तन्निषेधार्थं विज्ञेयं॥ उत्पादव्ययसंयुक्त इति विशेषणं सर्वथैवापरिणा
मनिषेधार्थमिति॥छ॥ किंच विशेषेण निष्कलो विनश्वरशुद्धात्मस्वरूपाद्भिन्नं सिद्धानां नारकादिग
तिषु भ्रमणं नास्ति॥ कथमुत्पादव्ययत्वमिति॥ तत्र परिहारः॥ आगमकथितागुरु
लघुपतितहानिवृद्धिस्वरूपेणाय॥ अर्थपर्यायास्तदपेक्षया॥ अथवा येन येनोत्पादव्ययध्रौव्य
रूपेण प्रतिक्षणं ज्ञेयपदार्थाः परिणमंति तत्परिच्छित्त्याकारेणानीहितवृत्त्या सिद्धज्ञानमपि
परिणमति तेन कारणेनोत्पादव्ययत्वं॥ अथवा व्यंजनपर्यायापेक्षया संसारपर्यायविनाशः सिद्ध
योत्पादः शुद्धजीवद्रव्यत्वेन ध्रौव्यत्वमिति॥ एवं नयविभागेन नवाधिकारैर्जीवद्रव्यं ज्ञातव्यं॥छ॥
अथवा तेदवबहिरात्मांतरात्मा परमात्मभेदेन त्रिधा भवति॥ तद्यथा स्वशुद्धात्मसंवित्तिसमुत्पन्नवा
स्तवसुखात्प्रतिपक्षभूतेनेंद्रियसुखेनासक्तो बहिरात्मा तद्विलक्षणोंतरात्मा॥ अथवा देहरहि
तानिजशुद्धात्मद्रव्यभावनालक्षणभेदज्ञानरहितत्वेन देहादिपरद्रव्येष्वेकत्वभावनापरिणतो ब

हिरात्मा॥ तस्मात्प्रतिपक्षभूतोंतरात्मा॥ अथवा हेयोपादेयविचारकचित्तनिर्दोषपरमात्मनो
भिन्ना रागाद्यो दोषाः शुद्धचैतन्यलक्षण आत्मेत्युक्तलक्षणेषु चित्तदोषात्मसु त्रिषु वीतरागस
र्वज्ञप्रणीतेष्वनेकेषु वा पदार्थेषु यस्य परस्परसापेक्षनयविभागेन श्रद्धानं ज्ञानं च नास्ति स बहिरा
त्मा॥ तस्माद्विसदृशोंतरात्मेति रूपेण बहिरात्मांतरात्मनोर्लक्षणं ज्ञातव्यं॥ छ॥ परमात्मल
क्षणं कथ्यते॥ सकलविमलकेवलज्ञानेन येन कारणेन समस्तं लोकालोकं जानाति व्याप्नोति
तेन कारणेन विष्णुर्भण्यते॥ परमब्रह्मसंज्ञनिजशुद्धात्मभावनासमुत्पन्नसुखामृततृप्तस्य स
त उर्वशीरंभातिलोत्तमादिदेवकन्याभिरपि यस्य ब्रह्मचर्यव्रतं न खंडितं स परमब्रह्म भण्यते॥
केवलज्ञानादिगुणैश्वर्ययुक्तस्य सतो देवेंद्रादयोपि तत्पदाभिलाषिणः संतो यस्याज्ञां कुर्वंति
स ईश्वराभिधानो भवति॥ केवलज्ञानशब्दवाच्यं गतं ज्ञानं यस्य स सुगतः॥ अथवा शोभनमविन
श्वरं मुक्तिपदं गतः सुगतः॥ छ॥ शिवं परमकल्याणं॥ निर्वाणं ज्ञातमक्षयं॥ प्राप्तं मुक्तिपदं येन

द्रव्य
२३

सशिवःकीर्तितः ॥२॥ इतिश्लोककथितलक्षणःशिवःकामक्रोधादिदोषजयेनानंतज्ञानादिगुण
सहितोजिनः इत्यादिपरमागमकथिताष्टोत्तरसहस्रसंख्यनामवाच्यःपरमात्माज्ञातव्यः ॥ एवंम
तेषुत्रयात्मसुमध्येमिथ्यादृष्टिभव्यजीवबहिरात्माव्यक्तिरूपेणतिष्ठति ॥ अंतरात्मपरमात्मद्वयं
शक्तिरूपेणाभाविनैगमनयापेक्षयाव्यक्तिरूपेणच ॥ अभव्यजीवेपुनर्बहिरात्माव्यक्तिरूपेण ॥ अं
तरात्मपरमात्मद्वयंशक्तिरूपेणैवेतियद्यपिजीवेपरमात्माशक्तिरूपेणविद्यतेतर्हिकथमभव्यत्व
मितिचेत् ॥ परमात्मशक्तिःकेवलज्ञानादिरूपेणाव्यक्तिर्नभविष्यतीत्यभव्यत्वशक्तिःपुनः
शुद्धनयेनोभयत्रसमानायदिपुनःशक्तिरूपेणाप्यभव्यजीवेकेवलज्ञानंनास्तितदाकेवलज्ञा
नावरणंनाघटते ॥ भव्याभव्यद्वयंपुनरशुद्धनयेनेति ॥ भावार्थः ॥ एवंयथामिथ्यादृष्टिसंज्ञेबहिरा
त्मनिनयविभागेनदर्शितमात्मत्रयं ॥ तथाशेषगुणस्थानेष्वपि ॥ तद्यथा ॥ बहिरात्मावस्थाया
मंतरात्मद्वयंशक्तिरूपेणाभाविनैगमनयेनव्यक्तिरूपेणाभाविज्ञेयं ॥ अंतरात्मावस्थायांतुबहि

रानक्षरात्मकभेदेन भाषात्मको द्विधा भवति॥ तत्राप्यक्षरात्मकः संस्कृतप्राकृतापभ्रंशपैशाचिकादिभाषाभेदे
नार्यम्लेछमनुष्यादिव्यवहारहेतुर्बहुधा॥ अनक्षरात्मकस्तु द्वींद्रियादितिर्यग्जीवेषु सर्वज्ञदिव्यध्वनौ च
अभाषात्मको प्रायोगिकवैस्रसिकभेदेन द्विविधः॥ क्ष॥ ततं वीणादिकं ज्ञेयं । विततं पटहादिकं । घनं तु कं
सतालादि॥ सुषिरं वंशादिकं विदुः॥ १॥ इति श्लोककथितक्रमेण प्रयोगभवप्रायोगिकः चतुर्धा॥ विस्र
सास्वभावेन भावो वैस्रसिको मेघादिप्रभवो बहुधा॥ क्ष॥ किंच शब्दातीतनिजपरमात्मभावनाच्युतेन शब्दा
दिमनोज्ञामनोज्ञरूपपंचेंद्रियविषयासक्तेन च जीवेन यदुपार्जितं सुस्वरदुःस्वरनामकर्म्म तदुदयेन यद्यपि जी
वे शब्दो दृश्यते तथापि स जीवसंयोगेनोत्पन्नत्वाद्व्यवहारेण जीवशब्दो भण्यते॥ निश्चयेन पुनः पुद्गल
स्वरूप एवेति॥ बंधः कथ्यते॥ मृत्पिंडादिरूपेण योऽसौ बहुधा बंधः स केवलः पुद्गलबंधः यस्तु कर्म्मनोकर्म
रूपः स जीवपुद्गलसंयोगबंधः॥ क्ष॥ किंच विशेषः कर्म्मबंधपृथग्भूतस्वशुद्धात्मभावनारहितजीवस्यानुपच
रितासद्भूतव्यवहारेण द्रव्यबंधः तथैवाशुद्धनिश्चयनयेन योऽसौ रागादिरूपो भावबंधः कथ्यते॥ सोपि शुद्धनि

द्रव्य°
२३

सशिवः कीर्तितः ॥१॥ इतिश्लोककथितलक्षणः शिवः कामक्रोधादिदोषवर्जितेनानंतज्ञानादिगुण
सहितो जिनः इत्यादिपरमागमकथिताष्टोत्तरसहस्रसंख्यनामवाच्यः परमात्मा ज्ञातव्यः ॥ एवमे
तेषु त्र्यात्मसु मध्ये मिथ्यादृष्टिभव्यजीवे बहिरात्मा व्यक्तिरूपेण तिष्ठति ॥ अंतरात्मपरमात्मद्वयं
शक्तिरूपेण भाविनैगमनयापेक्षया व्यक्तिरूपेण च ॥ अभव्यजीवे पुनर्बहिरात्मा व्यक्तिरूपेण अं
तरात्मपरमात्मद्वयं शक्तिरूपेणैवेति यद्यपि जीवे परमात्मा शक्तिरूपेण विद्यते तर्हि कथमभव्यत्व
मिति चेत् ॥ परमात्मशक्तिः केवलज्ञानादिरूपेण व्यक्तिर्न भविष्यतीत्यभव्यत्वशक्तिः पुनः
शुद्धनयेनोभयत्र समाना यदि पुनः शक्तिरूपेणाप्यभव्यजीवे केवलज्ञानं नास्ति तदा केवलज्ञा
नावरणं नोपपद्यते ॥ भव्याभव्यद्वयं पुनरशुद्धनयेनेति ॥ भावार्थः ॥ एवं यथा मिथ्यादृष्टिसंज्ञे बहिरा
त्मनि नयविभागेन दर्शितमात्मत्रयं तथा शेषगुणस्थानेष्वपि ॥ तद्यथा ॥ बहिरात्मावस्थाया
मंतरात्मद्वयं शक्तिरूपेण भाविनैगमनयेन व्यक्तिरूपेण च विज्ञेयं ॥ अंतरात्मावस्थायां तु बहिरा

त्मा भूतपूर्वन्यायेन घटवत् परमात्मस्वरूपं तु शक्तिरूपेण भाविनैगमनयेन। व्यक्तिरूपेण च परमात्मा
वस्थायां पुनरंतरात्मा बहिरात्मा च भूतपूर्वनयेनेति॥ अथ त्रिविधात्मानं गुणस्थानेषु योजयति॥ मिथ्यात्व
सासादनमिश्रगुणस्थानत्रये तारतम्यन्यूनाधिकभेदेन बहिरात्मा ज्ञातव्यः॥ अविरतगुणस्था
ने तद्योग्याशुभलेश्यापरिणतो जघन्यांतरात्मा। क्षीणकषायगुणस्थाने पुनरुत्कृष्टः॥ अविर
तक्षीणकषाययोर्मध्ये मध्यमः। सयोग्ययोगिगुणस्थानद्वये विवक्षितैकदेशशुद्धनयेन सिद्धस
दृशः परमात्मा सिद्धस्तु साक्षात्परमात्मेति॥ ७॥ अत्र बहिरात्मा हेयः उपादेयभूतस्यानंतसुखसाध
कत्वादंतरात्मोपादेयः॥ परमात्मा पुनः साक्षादुपादेयः इति अभिप्रायः॥ ८॥ एवं षड्द्रव्यपंचास्ति
कायप्रतिपादकप्रथमाधिकारमध्ये नमस्कारादिचतुर्दशगाथाभिर्नवभिरंतरस्थलैर्जीवद्र
व्यकथनरूपेण प्रथमोंतराधिकारः समाप्तः॥ अतः परं यद्यपि शुद्धबुद्धैकस्वभावपरमात्मद्रव्यमु
पादेयं भवति। तथापि हेयरूपस्य अजीवद्रव्यस्य गाथाष्टकेन व्याख्यानं करोति। कस्मादिति चे

द्रव्य०
२५

त्‌ हे यत्नस्सम्यग्ज्ञानेसतिपश्चादुपादेयस्वीकारोभवतीतिहेतोः॥ तद्यथा॥ अज्जीउपुग्गलोउ॥ धम्माधर्मा
अधम्मआगासं॥ कालोपुग्गलमुत्तो॥ रूवादिगुणो अमुत्तिसेसाउ॥ १६॥ अज्जीउपुग्गलोउ॥ अज्जीवपुन
ज्ञेयः सकलविमलकेवलज्ञानदर्शनद्वयंशुद्धोपयोगइति॥ मतिज्ञानादिरूपोविकल्पोऽशुद्धोपयोगइ
तिद्विविधोपयोगः॥ अव्यक्तसुखदुःखानुभवनरूपाकर्मफलचेतना॥ तथैवमतिज्ञानादिमनःपर्यय
पर्यंतमशुद्धोपयोगइतिस्वेहापूर्वेष्टानिष्टविकल्परूपेणाऽविशेषरागाद्यपरिणामनंकर्मचेतना।
केवलज्ञानादिरूपाशुद्धचेतना॥ इत्युक्तलक्षणोपयोगश्चेतनाचयत्रनास्तिसभवत्यजीवइतिविज्ञेय
पुनः पश्चात्जीवाधिकारानंतरंपुग्गलधम्मोअधम्मआयासंकालो॥ सचपुद्गलधर्माधर्माका
शकालद्रव्यभेदेनपंचधा॥ पूरणगलनस्वभावत्वात्पुद्गलइत्युच्यते॥ गतिस्थित्यवगाहवर्तनालक्ष
णाधर्माधर्माकाशकालाः॥ पुग्गलमुत्तो॥ पुद्गलोमूर्त्तः॥ कस्मात्॥ रूवादिगुणो॥ रूपादिगुणसहि
तोयतः॥ अमुत्तिसेसाउ॥ रूपादिगुणाभावादमूर्त्ताभवंति॥ पुद्गलात्शेषाश्चत्वारइति॥ तथाहि॥ यथा

अनंतज्ञानदर्शनसुखवीर्यगुणचतुष्टयं सर्वजीवसाधारणं । तथास्पर्शरसगंधवर्णगुणचतुष्टयं सर्व
पुद्गलसाधारणं । यथावाशुद्धबुद्धैकस्वभावसिद्धजीवेऽनंतचतुष्टयमतींद्रियं । तथैवशुद्धपुद्गल
परमाणुद्रव्ये रूपादिचतुष्टयमतींद्रियं । यथारागादिस्नेहगुणेनकर्मबंधावस्थायांज्ञानादिचतु
ष्टयस्याशुद्धत्वं । तथास्निग्धरूक्षत्वगुणेनद्व्यणुकादिबंधावस्थायांरूपादिचतुष्टयस्याशुद्धत्वं । त
थावनिस्नेहनिजपरमात्मभावनाबलेनरागादिस्नेहविनाशसत्यनंतचतुष्टयस्यशुद्धत्वं । त
थाजघन्यगुणानांबंधोनभवतीतिवचनात्परमाणुद्रव्येस्निग्धरूक्षत्वगुणस्यजघन्यत्वसति
रूपादिचतुष्टयस्यशुद्धत्वमवबोद्धव्यमित्यभिप्रायः । अथपुद्गलद्रव्यस्यविभावव्यंजनपर्यायान्प्र
तिपादयति ॥ ० ॥ सद्दोबंधोसुहुमो थूलोसंठाणभेदतमछाया ॥ उज्जोदादवसहिया पुग्गलदव्वस्स
पज्जाया ॥ १६ ॥ शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायाः । आतपोद्योतसहिताःपुद्गल
द्रव्यस्यपर्यायाभवंति ॥ ० ॥ अथविस्तरः ॥ भाषात्मकोऽभाषात्मकश्चद्विधाशब्दः । तत्राऽक्षरात्म

द्रव्यसं०
२५

रानक्षरात्मकभेदेन भाषात्मको द्विधा भवति॥ तत्राप्यक्षरात्मकः संस्कृतप्राकृतापभ्रंसपैशाचिकादिभाषाभे
देनार्यम्लेच्छमनुष्यादिव्यवहारहेतुर्बहुधा॥ अनक्षरात्मकस्तु द्वींद्रियादितिर्यग्जीवेषु सर्वज्ञदिव्यध्वनौ च
॥ अभाषात्मको प्रायोगिकवैश्रसिकभेदेन द्विविधः॥ ४॥ ततं वीणादिकं ज्ञेयं॥ विततं पटहादिकं॥
सतालादि॥ सुषिरं वंशादिकं विदुः॥ १॥ इति श्लोककथितक्रमेण प्रयोगे भवः प्रायोगिकः चतुर्धा॥
सा स्वभावेन भावो वैश्रसिको मेघादिप्रभवो बहुधा॥ ५॥ किंच शब्दातीतनिजपरमात्मभावनाच्युते
द्विमनोज्ञामनोज्ञपंचेंद्रियविषयासक्तेन जीवेन यदुपार्जितं सुस्वरदुःस्वरनामकर्म तदुदयेन
वेशब्दो दृश्यते तथापि स जीवसंयोगेनोत्पन्नत्वात् व्यवहारेण जीवशब्दो भण्यते॥ निश्चयेन पुनः पुद्गल
स्वरूप एवेति॥ बंधः कथ्यते॥ मृत्पिंडादिरूपेण योऽसौ बहुधा बंधः स केवलपुद्गलबंधः यस्तु कर्मनोकर्म
रूपः स जीवपुद्गलसंयोगबंधः॥ ६॥ किंच विशेषः कर्मबंधपृथग्भूतस्वशुद्धात्मभावनारहितजी
रितासद्भूतव्यवहारेण द्रव्यबंधस्तथैवाशुद्धनिश्चयेन योऽसौ रागादिरूपो भावबंधः कथ्यते॥ सोऽपि शुद्धनि

अथनयेनपुद्गलबंधएव॥बिल्वाद्यपेक्षयाबदरादीनांसूक्ष्मत्वंपरमाणोः साक्षादितिबदराद्यपेक्षयाबिल्वा
दीनांस्थूलत्वंजगद्व्यापिनिमहास्कंधेसर्वोत्कृष्टमिति॥समचतुरस्र॥न्यग्रोध॥सातिक॥कुब्जक॥वामन॥हुं
ड॥भेदेनषट्प्रकारसंस्थानं॥यद्यपिव्यवहारनयेनजीवस्यास्तितथाप्यसंस्थानाच्चिच्चमत्कारपरिणतेर्भि
न्नत्वान्निश्चयेनपुद्गलस्थानमेव॥यद्यपिजीवादन्यत्रवृत्तत्रिकोणचतुष्कोणाद्यभिव्यक्ताव्यक्तरूपबहुधा
संस्थानं॥तदपिपुद्गलएवगोधूमादिचूर्णरूपेणघृतखंडादिरूपेणबहुधाभेदाज्ञातव्याः॥दृष्टिप्रतिबंध
कोंधकारस्तमइतिभण्यते॥वृक्षाद्याश्रयरूपामनुष्यादिप्रतिबिंबरूपाचछायाविज्ञेया॥उद्योतश्चंद्रविमा
नेखद्योतादितिर्यग्जीवेषुचभवति॥आतपः आदित्यविमानेऽन्यत्रापिसूर्यकांतमणिविशेषादौपृथ्वी
कायेज्ञातव्यः॥अयमत्रार्थः यथाजीवस्यशुद्धनिश्चयेनस्वात्मोपलब्धिलक्षणेसिद्धस्वरूपेस्वभावव्यं
जनएवस्वभावव्यंजनपर्याय॥एकविभावव्यंजनपर्यायः पर्यायेविद्यमानोप्यनादिकर्मबंधवशात्॥स्निग्
धरूक्षस्थानीयरागद्वेषपरिणामेसति॥स्वाभाविकपरमानंदैकलक्षणस्वास्थ्यभावभ्रष्टस्यनारकादि

विभावव्यंजनपर्याया भवंति॥छ॥ तथा पुद्गलस्यापि निश्चयनयेन शुद्धपरमाणवस्थालक्षणो स्वभावव्यंजनप
र्याये सत्यपि स्निग्धरूक्षत्वाद्बंधो भवतीति वचनात् रागद्वेषस्थानीयबंधयोग्यस्निग्धरूक्षत्वपरिणामस
त्युक्तलक्षणाः शब्दादयोप्यागमोक्तलक्षणा आकुंचनसारणदधिदुग्धादयो विभावव्यंजनपर्याया ज्ञातव्याः
॥छ॥ एवं जीवाधिकारमध्ये पूर्वसूत्रोदितरूपादिगुणचतुष्टययुक्तस्य तत्रैव सूत्रोदितशब्दादिपर्यायसहि
तस्य संक्षेपेणाणुस्कंधभेदभिन्नस्य पुद्गलद्रव्यस्य व्याख्यानमुख्यत्वेन प्रथमस्थले गाथाद्वयं गतं॥छ॥ अ
थ धर्मद्रव्यमाख्याति॥ गइपरिणयाण धम्मो पुग्गलजीवाण गमणसहयारी॥ तोयं जह मच्छाणं॥ अ
च्छंता णेव सो णेई॥१७॥ गतिपरिणतानां धर्मो जीवपुद्गलानां गमनसहकारिकारणं भवति दृष्टांतमाह
तोयं यथा मत्स्यानां स्वयं तिष्ठतो नैव स नयति तानीति तथाहि यथा सिद्धो भगवानमूर्तोपि निःक्रियस्तथैवा
प्रेरकोपि सिद्धवदनंतज्ञानादिगुणस्वरूपोहमित्यादिव्यवहारेण सविकल्पसिद्धभक्तियुक्तानां निश्चयेन
निर्विकल्पसमाधिरूपस्वकीयोपादानकारणपरिणतानां भव्यानां सिद्धगतेः सहकारिकारणं भवति त

ष्यानिः क्रियामूर्त्तोप्रेरकोपि धर्मास्तिकायः ॥ स्वकीयोपादानकारणेन गच्छतां जीवपुद्गलानां च गतेः स
हकारि भवति ॥ लोकप्रसिद्धदृष्टांतेन तु मत्स्यादीनां जलादिवदित्यभिप्रायः ॥ एवं धर्मद्रव्यव्याख्यान
रूपेन गाथा गता ॥ अथाऽधर्मद्रव्यमुपदिशति ॥ ठाणजुदाण अधम्मो पुग्गलजीवाण ठाणसहयारी ॥
छाया जह पहियाणं गच्छंता णेव सो धरई ॥१८॥ स्थानयुक्तानामधर्मः पुद्गलजीवानां स्थितेः सहकारिकारणं
भवति ॥ तत्र दृष्टांतमाह ॥ छाया यथा पथिकानां स्वयं तिष्ठतः जीवपुद्गलान् स नैव धरतीति ॥ तद्यथा स्व
यंवित्तिसमुत्पन्नसुखामृतरूपपरमस्वास्थ्यं यद्यपि निश्चयेन स्वरूपे स्थितिकारणं भवति ॥ तथा सिद्धोहं शुद्धो
हं ॥ अणंतणाणादिगुणसमिद्धोहं ॥ देहपरिमाणो णिच्चं ॥ असंखदेसो अमुत्तो य ॥ इति गाथाकथित
सिद्धभक्तिरूपेणेह पूर्वं सविकल्पावस्थायां सिद्धोपि यथा भव्यानां बहिरंगसहकारिकारणं भवति तथैव
स्वकीयोपादानकारणेन स्वयमेव तिष्ठतां जीवपुद्गलानां अधर्मद्रव्यं स्थितेः सहकारिकारणं लोकव्यवहा
रेण तु छायावद्वा पृथिवीवद्वेति सूत्रार्थः ॥ एवमधर्मद्रव्यकथनेन गाथा गता ॥ अथाकाशद्रव्यमाह ॥

अवगासदाणजोग्गं जीवादीणं वियाण आयासं। जेण्हं लोगागासं अल्लोगागासमिदि दुविहं॥१९॥

जीवादीनामवकाशदानयोग्यमाकाशंविजानीहिहेशिष्य॥ किंविशिष्टंजैनं॥ जिनस्येदंजैनं
वा॥ तच्चलोकाकाशअलोकाकाशभेदेनद्विविधमिति॥ इदानींविस्तरः सहजशुद्धसुखाम
स्वादेनपरमसमरसीभावेनभरितावस्थेषुकेवलज्ञानाद्यनंतगुणाधारभूतेषुलोकाकाशप्रमितासंख्ये
यस्वकीयशुद्धप्रदेशेषुयद्यपिनिश्चयनयेनसिद्धास्तिष्ठंति॥ तथाप्युपचरितासद्भूत
त्रायांतिष्ठंतीतिभण्यंते॥ सचेदृशोमोक्षोयत्रप्रदेशेपरमध्यानेनात्मास्थितः शत्रुकर्मरहितोभव
ति॥ तत्रैवभवतिनान्यत्रध्यानप्रदेशेकर्मपुद्गलानत्यक्त्वा॥ ऊर्द्धगमनस्वभावेनगत्वामुक्तात्मानोय
तोलोकाग्रेतिष्ठंतिततःउपचारेणलोकाग्रमपिमोक्षःप्रोच्यते॥ यथातीर्थभूतपुरुषसेवितस्थानम
पिभूमिजलादिरूपमुपचारेणतीर्थंभवति॥ सुखबोधकाथितमानेनयथातथैवसर्वेद्रव्याणि॥ यद्यपि
श्चयनयेनस्वकीयस्वकीयप्रदेशेषुतिष्ठंति॥ तथाप्युपचरितासद्भूतव्यवहारेणलोकाकाशेतिष्ठंतीत्यभि

प्रोयाभगवतांश्रीनेमिचंद्रसैद्धांतदेवानामिति॥ १८॥ तमेवलोकाकाशंविशेषेणद्रढयति॥ [illegible] ॥२॥ धम्माधम्मा
काः पुद्गलजीवाश्चसंतियावत्याकाशेसलोकः॥ तथाचोक्तं॥ लोक्यंतेजीवादिपदार्थायत्रसलोकइ
ति॥ तस्माल्लोकात्परतोवहिर्भागेपुनरनंताकाशमलोकइति॥ अत्राह॥ सोभाभिधानराजश्रेष्ठि हे
भावन्॥ केवलज्ञानस्याऽनंतभागप्रमिताकाशद्रव्यंतस्याप्यनंतभागोसर्वमध्यमप्रदेशेलोकस्तिष्ठ
तिसचानाद्यनिधनःकेनापिपुरुषविशेषेणनकृतोनहृतोनधृतोनरक्षितः॥ तथैव॥ संख्यातप्र
देशाःतत्राऽसंख्यातप्रदेशेलोकेऽनंतानंतजीवास्तेभ्योप्यनंतगुणपुद्गलालोकाकाशप्रमितास
ंख्येयकालानूद्रव्याणि॥ प्रत्येकंलोकाकाशप्रमाणोधर्माऽधर्मोइत्युक्तलक्षणपदार्थाः कथ
मवकाशंलभंते॥ इतिभावनाह॥ एकप्रदीपप्रकाशेनानाप्रदीपप्रकाशवदेकगूढनागरसगद्याणकगू
ढरसनागगद्याणकेभस्मघटमध्येसूईकाउष्ट्रदुग्धइत्यादिवऋसुवर्णवदित्यादिदृष्टांतेनविशिष्टा

वगाहनशक्तिवशाद्संख्यातप्रदेशोपिलोकेवस्थानमवगाहंनविरुध्यते॥ यदिपुनरित्थंभूतावगाहनश
क्तिर्नभवतितर्हिअसंख्यातप्रदेशेष्वसंख्यातपरमाणूनामेवावस्थानं॥ तथासतिसर्वेजीवायथाशुद्ध
निश्चयेनशक्तिरूपेणनिरावरणाःशुद्धबुद्धैकस्वभावास्तथाव्यक्तिरूपेणव्यवहारनयेनापिनचतथाप्रत्य
क्षागमविरोधाश्चेति॥ एवमाकाशद्रव्यप्रतिपादनरूपेणसूत्रद्वयंगतं॥ अथनिश्चयव्यवहारका
लस्वरूपंकथयति॥ दव्वपरिवट्टरूवो जो सो कालो हवेइ ववहारो॥ परिणामादीलक्खो वट्टणलक्खो
यपरमट्ठो॥२१॥ दव्वपरियट्टरूवो॥ जोद्रव्यपरिवर्तनरूपोयः॥ सोकालोहवेइववहारो॥ सकालोभव
तिव्यवहाररूपः॥ सचकथंभूतः परिणामादीलक्खो॥ परिणामक्रियापरत्वापरत्वेनलक्षणइतिपरिणा
मादिलक्ष॥ इदानींनिश्चयकालःकथ्यते॥ वट्टणलक्खोयपरमट्ठो॥ वर्तनालक्षणश्चपरमार्थकाल
इतितद्यथा॥ जीवपुद्गलयोःपरिवर्तननवजीर्णपर्यायस्तस्ययासमयघटिकादिरूपास्थितिःस्वरूपंयस्य
सभवति॥ द्रव्यपर्यायरूपोव्यवहारकालः॥ तथाचोक्तं॥ प्रस्फुरत्प्रभतेनास्थितिःकालसंज्ञकास्तस्यपर्या

यस्य संबंधिनी यासौ समयघटिकादिरूपा स्थितिः सा व्यवहारकालसंज्ञा भवति न च पर्यायः ॥ इत्यभिप्रायः
यत एव पर्यायसंबंधिनी स्थितिर्व्यवहारकालसंज्ञा भवति ॥ तत एव जीवपुद्गलसंबंधिपरिणामेन पर्याये
न ॥ तथैव देशांतरचलनरूपया गोदोहनपाकादिपरिस्पंदलक्षणरूपया वा क्रियया
तथैव दूरासन्नचलनरूपकालकृतपरत्वापरत्वेन च लक्ष्यते ॥ ज्ञायते यः स परिणामक्रियापरत्वाप
रत्वलक्षण इत्युच्यते ॥ अथ द्रव्यरूपनिश्चयकालमाह ॥ स्वकीयोपादानकारणरूपेण स्वयमेव परिणा
ममानानां पदार्थानां कुंभकारचक्रस्याधस्तनशिलावत् ॥ शीतकालाध्ययने अग्निवत् ॥ पदार्थपरि
णामे तद्यत्सहकारित्वं सा वर्त्तना भण्यते ॥ सैव लक्षणं यस्य स वर्त्तनालक्षणः कालाणुद्रव्यरूपो निश्चय
कालः इति व्यवहारकालनिश्चयकालस्वरूपं च विज्ञेयं ॥ कश्चिदाह ॥ समयरूप एव निश्चयकाल
स्तस्मादन्यः कालाणुद्रव्यरूपो निश्चयकालो नास्त्यदर्शनात् ॥ तत्रोत्तरं दीयते ॥ समयस्तावत्काल
स्तस्यैव पर्यायः ॥ कथं पर्याय इति चेत् ॥ पर्यायस्योत्पन्नप्रध्वंसित्वात् ॥ तथा चोक्तं ॥ समय उत्पन्नप्रध्वं

सीसचपर्यायोद्रव्यंविनानभवति।यस्यतस्यसमयरूपपर्यायकालस्योपादानकारणभूतंद्रव्यंतेनापिकाल
ाभाव्यं।इंधनाग्निसहकारिकारणोत्पन्नस्योदनपर्यायस्यतंडुलोपादानकारणवत् अथवानरनारका
यस्यजीवोपादानकारणवदिति।तदपिकस्मात्उपादानकारणसदृशंकार्यंभवतीतिवचनात्।
अथमतंसमयादिकालपर्यायाणांकालद्रव्यमुपादानकारणंनभवति।किंतुसमयोत्पत्तौमंदगतिपरिणतपुद्ग
।स्तथानिमिषकालोत्पत्तौनयनपुटविघटनं।तथैवघटिकाकालपर्यायोत्पत्तौघटिकासामग्री
भूतजलभाजनपुरुषहस्तादिव्यापारो।दिवसपर्यायेतुदिनकरबिंबमुपादानकारणमितिनैवं।यथातंडुलो
पादानकारणोत्पन्नस्यसतउदनपर्यायस्य।शुक्लकृष्णादिवर्णाः।सुरभिदुरभिगंधः।स्निग्धरूक्षादिस्पर्शाः म
धुरादिरसविशेषारूपागुणादृश्यंते।तथापुद्गलपरमाणुनयनपुटविघटनजलभाजनपुरुषव्यापारादि
पैः पुद्गलपर्यायैरुपादानभूतैः समुत्पन्नासमयनिमिषघटिकादिवसादिकालपर्यायाणाम
पिशुक्लकृष्णादिगुणाःप्राप्नुवंतिनचतथा।उपादानकारणसदृशंकार्यंभवतीतिवचनात्।किंतुज्ञान

योसावनाद्यनिधनः ॥ तच्चैवामूर्तो नित्यः समयाद्युपादानकारणभूतोपि समयादिविकल्परहितः काला
णुद्रव्यरूपस्य निश्चयकालः यस्तु सादिसांतः समयघटिकाप्रहरादिविवक्षितव्यवहारविकल्परूपस्त
स्यैवद्रव्यकालस्य पर्यायभूतः स व्यवहारकाल इति ॥ ॥ अथ मत्र भावः ॥ यद्यपि काललब्धिवशेनानंतसु
खभाजनो भवति जीवस्तथापि विशुद्धज्ञानदर्शनस्वभावनिजपरमात्मतत्त्वस्य सम्यक्श्रद्धानज्ञाना
नुष्ठानसमस्तबहिर्द्रव्येच्छानिवृत्तिलक्षणतपश्चरणरूपा या तु निश्चयचतुर्विधाराधना सैव तत्रोपाद
नकारणं ज्ञातव्यं न च कालस्तेन स हेय इति ॥ ॥ अथ निश्चयकालस्यावस्थानक्षेत्रं द्रव्यगणनां च प्रति
पादयति ॥ लोयायासपदेसे इक्केक्के जे ठिया हु इक्केक्का ॥ रयणाणं रासी इव ते कालाणू असंखदव्वाणि
॥ २२ ॥ लोयायासपदेसे इक्किक्के जे ठिया हु इक्किक्का ॥ लोकाकाशप्रदेशेष्वेकैकेषु ये स्थिताः ॥ एकै
कासंख्योपेता हु स्फुटं का इव रयणाणं रासीमिव ॥ परस्परतादात्म्यपरिहारेण रत्नानां राशिरिव ते
कालाणव ॥ कतिसंख्योपेताः ॥ असंखदव्वाणि ॥ लोकाकाशप्रमिता असंख्येयद्रव्याणीति ॥ ॥ तथाहि ।

यथांगुलिद्रव्यस्य यस्मिन्नेव क्षणे वक्रपर्यायोत्पत्तिस्तस्मिन्नेव क्षणे पूर्वप्राञ्जलपर्यायविनाशोंगुलिरूपे
णा ध्रौव्यमिति द्रव्यसिद्धिः॥ यथैव च केवलज्ञानादिव्यक्तिरूपेण कार्यसमयसारस्योत्पादो निर्विकल्पस
माधिरूपकारणसमयसारस्य विनाशः तदुभयाधारपरमात्मद्रव्यत्वेन ध्रौव्यमिति वा द्रव्यसिद्धिः॥ तथा का
लाणोरपि मंदगतिपरिणतपुद्गलपरमाणूनाम् क्लोकतस्य कालाणूपादानकारणोत्पन्नस्य यस्तु व
र्तमानसमयस्योत्पादः॥ स एवातीतसमयापेक्षया विनाशस्तदुभयाधारकालाणुद्रव्यत्वेन ध्रौव्यमित्यु
त्पादव्ययध्रौव्यात्मककालद्रव्यसिद्धिः लोकवहिर्भागे कालाणुद्रव्याभावात्कथमाकाशद्रव्यस्य परिणति
रिति चेत्॥ अखंडद्रव्यत्वादेकदेशदण्डाहतकुंभकारचक्रभ्रमणवत् तथैवैकदेशमनोहरस्पर्शनेंद्रियविष
यानुभवसर्वांगसुखवल्लोकमध्यस्थितकालाणुद्रव्यधारणैकदेशेनापि सर्वत्र परिणमनं भवतीति॥
शेषद्रव्याणां परिणतेः सहकारिकारणं भवति॥ कालद्रव्यस्य किं सहकारिकारणमिति॥ य
थाकाशद्रव्यमशेषद्रव्याणामाधारः स्वस्यापि॥ तथा कालद्रव्यमपि परेषां परिणतिसहकारिकारणं

स्यापि ॥ उ ॥ अथमते ॥ यथाकालद्रव्यंस्वस्योपादानकारणंपरिणतेः सहकारिकारणंचभवति यथसर्व
द्रव्याणि कालद्रव्येणकिंप्रयोजनमिति ॥ उ ॥ नैवंयदिशुध्याभूतवर्हिणासहकारिकारणेनप्रयोजनंना
स्ति ॥ तर्हिसर्वद्रव्याणांसाधारणगतिस्थित्यवगाहनविषयधर्माधर्माकाशद्रव्यैरपिसहकारिकारणभू
तैः प्रयोजनंनास्ति ॥ किंचकालस्यघटिकादिवसादिकार्यंप्रत्यक्षेणदृश्यते ॥ धर्मादीनांपुनरागमकथ
नमेवप्रत्यक्षेणकिमपिकार्यंनदृश्यते ॥ ततस्तेषामपिकालद्रव्यस्येवाभावः प्राप्नोति ॥ ततश्चजीवपुद्गल
द्रव्यद्वयमेवसत्वागमविरोधः ॥ उ ॥ किंचसर्वद्रव्याणांपरिणतिसहकारित्वंकालस्यैवगुणः ॥ घ्राणेंद्रियस्यरस
स्वादनमिवान्यद्रव्यस्यगुणोन्यद्रव्यस्यकर्तुंनायाति ॥ द्रव्यसंकरदोषप्रसंगादिति ॥ उ ॥ कश्चिदाह यावं
ताकालेनैकाकाशप्रदेशंपरमाणुरतिक्रामति ॥ ततः तावत्कालेनसमयोभवतीत्युक्तमागमे एकसमये
नचतुर्दशरज्जुगमनेयावंत आकाशप्रदेशास्तावंतः समयाः प्राप्नुवंतीति ॥ उ ॥ परिहारमाह यएकाकाश
प्रदेशातिक्रमेणयत्समयव्याख्यानंकृतंतन्मंदगत्यपेक्षया ॥ यत्पुनरेकसमयेचतुर्दशरज्जुगमनव्याख्यं

नेतत्पुनः शीघ्रगत्यपेक्षया॥ तेन कारणेन चतुर्दशरज्जुगमनेप्येकसमयः॥ तत्र दृष्टांतः॥ कोपि देवदत्तो योजन
शतं मंदगत्या दिनशतेन गच्छति॥ स एव विद्याप्रभावेन शीघ्रगत्या दिनेनैकेन गच्छति तत्र किं दिनशतं भव
ति॥ किंत्वेक एव दिवसः तथा चतुर्दशरज्जुगमनेनैक एव समयः॥ छ॥ किंच॥ स्वयं विषयानुभवरहितोप्य
यं जीवः परकीयविषयानुभवं दृष्टं श्रुतं च मनसि स्मृत्वा यद्विषयाभिलाषं करोति तदपध्यानं भण्यते
तत्प्रभृति समस्तविकल्पजालरहितं स्वसंवित्तिसमुत्पन्नसहजानंदैकलक्षणसुखरसास्वादसहितं यत्
तद्वीतरागचारित्रं भवति। यत्पुनस्तदविनाभूतं तन्निश्चयसम्यक्तं वीतरागसम्यक्तं चेति भण्यते॥ तदेव का
लत्रयेपि मुक्तिकारणं कालस्तु तदभावे सहकारिकारणमपि न भवति॥ ततः स हेय इति॥ तथा चोक्तं॥ किंप
लविएण बहुणा जे सिद्धा॥ णरवरा गए काले सिज्झिहहि जे वि भविया तं जाणह सम्ममाहप्पं॥ छ॥ इदमत्र तात्प
र्यं कालद्रव्यमन्यद्वा परमागमाविरोधेन विचारणीयं॥ परं किंतु वीतरागसर्वज्ञवचनं प्रमाणमिति म
नसि निश्चित्य विवादो न कर्तव्यः कस्मादिति चेत्॥ विवादे रागद्वेषौ भवतस्ततश्च संसारवृद्धिरिति॥ छ॥ एवं का

लद्रव्यव्याख्यानमुख्यत्वेन पंचमस्थलं सूत्रद्वयं गतं ॥ इति गाथाष्टकसमुदायेन पंचभिः स्थलैः पुद्ग
लादिपंचविधाजीवद्रव्यकथनरूपेण द्वितीयांतराधिकारः समाप्तः ॥ अतः परं सूत्रपंचकपर्यंतं पं
चास्तिकायव्याख्यानं करोति तत्रादौ गाथापूर्वार्द्धेन षट्द्रव्यव्याख्यानोपसंहारः उत्तरार्द्धेन तु पंचास्ति
कायव्याख्यानप्रारंभः कथ्यते ॥ एवं छब्भेयमिदं जीवाजीवप्पभेददो दव्वं । उत्तं कालविजुत्तं णादव्वा पं
च अत्थिकाया दु ॥२३॥ एवं षड्भेदमिदं जीवाजीवप्रभेदतो द्रव्यं । एवं पूर्वोक्तप्रकारेण षड्भेदमिदं जी
वाजीवप्रभेदतः सकाशात् द्रव्यमुक्तं कथितं प्रतिपादितं । उक्तं कालवियुक्तं ज्ञातव्याः पंच अस्तिकायास्तु । उ
क्तं षड्भेदद्रव्यं कालेन वियुक्तं रहितं ज्ञातव्यं पंचास्तिकायाः पुनरिति ॥ पंचेति संख्या ज्ञाता तावदिदा
नीमस्तित्वं कायत्वं च निरूपयति ॥ संति जदो तेणेदे अत्थीति भणंति जिणवरा जम्हा । काया इव बहु
देसा तम्हा काया य अत्थिकाया य ॥२४॥ संति जदो तेणेदे अत्थि त्ति भणंति जिणवरा । संति विद्यंते यत
एते जीवाद्याकाशपर्यंताः पंच तेन कारणेनैते अस्तीति भणंति जिनवराः सर्वज्ञाः ॥ जम्हा काया इव बहु

पृष्ठसं० ३२

देसा(त)म्हा कायाय॥ यस्मात्काया इव बहुप्रदेशास्तस्मात्कारणात् कायाश्च भणंति जिनवराः॥ अस्तिकाया
य॥ एवं न केवलं पूर्वोक्तप्रकारेणास्तित्वेन युक्ता अस्तिसंज्ञास्तथैव कायत्वेन युक्ताः कायसंज्ञा भवंति॥ कि
नूभयमेलापकेनास्तिकायसंज्ञाश्च भवंति॥ ७॥ इदानीं संज्ञालक्षणप्रयोजनानि भेदोप्यस्तित्वेन सह भे
दं दर्शयति॥ ७॥ तथाहि॥ शुद्धजीवास्तिकाये सिद्धत्वलक्षणः शुद्धद्रव्यव्यंजनपर्यायः केवलज्ञानाद
यो विशेषगुणाः अस्तित्ववस्तुत्वागुरुलघुत्वादयः सामान्यगुणाश्च तथैवाव्याबाधानंतसुखाद्यनंतगुण
व्यक्तिरूपस्य कार्यसमयसारस्योत्पादो रागादिविभावरहितपरमस्वास्थ्यरूपस्य कारणसमयसारस्य
व्ययस्तदुभयाधारभूतपरमात्मद्रव्यत्वेन ध्रौव्यमित्युक्तलक्षणैर्गुणपर्यायैरुत्पादव्ययध्रौव्यैश्च स
ह(मु)क्तावस्थायां संज्ञालक्षणप्रयोजनादिभेदेपि सत्तारूपेण प्रदेशरूपेण च भेदो नास्ति॥ क
स्मादिति चेत्॥ मुक्तात्मसत्तायां गुणपर्यायाणामुत्पादव्ययध्रौव्याणां चास्तित्वं सिद्ध्यतीति॥ परस्प
रसाधितासिद्धत्वादिति कायत्वं कथ्यते॥ बहुप्रदेशप्रचयदृष्ट्वा यथा शरीरं कायो भण्यते तथानंतज्

णाधारभूतानां लोकाकाशप्रमितासंख्येयशुद्धप्रदेशानां प्रचयं समूहं संघातं मेलापकं दृष्ट्वा मुक्तात्म
नि कायत्वं भण्यते ॥ यथा शुद्धगुणपर्यायोत्पादव्ययध्रौव्यैः सहमुक्तात्मनः सत्तारूपेणास्तित्वं येनाभे
दोपदिष्टं तथा यथासंभवं संसारिजीवेषु पुद्गलधर्माधर्माकाशकालेषु च द्रष्टव्यं ॥ कालद्रव्यं वि
हाय कायत्वं चेति ॥ सूत्रार्थः ॥ अथ कायत्वव्याख्याने पूर्वं यत्प्रदेशास्तित्वं सूचितं तस्य विशेषव्या
ख्यानं करोतीत्येका पातनिका ॥ द्वितीया तु कस्य द्रव्यस्य कियंतः प्रदेशा भवंतीति प्रतिपादयति
क्र॥ होंति असंखा जीवे ॥ धम्माधम्मे अणंत आयासे ॥ मुत्ते तिविह पदेसा ॥ कालस्सेगो ण तेण सो ॥
काऊ ॥ २६ ॥ होंति असंखा जीवे धम्माधम्मे भवंति ॥ लोकाकाशप्रमितासंख्येयप्रदेशाः प्रदीपवदु
पसंहारविस्तारयुक्तेऽप्येकजीवे नित्यस्वभावविस्तीर्णयोर्धर्माधर्मयोरपि ॥ अणंत आयासे ॥ अनं
तप्रदेशा आकाशे भवंति ॥ मुत्ते तिविह पदेसा ॥ मूर्तपुद्गलद्रव्ये संख्याताऽसंख्याताऽनंताणूनां पिं
डाः स्कंधास्त एव त्रिविधाः प्रदेशा भण्यंते ॥ न चैकदेशप्रदेशाः ॥ कस्मात्पुद्गलस्यानंतप्रदेशत्वेऽप्र

द्रव्यसं०
३३

वस्याभावादिति॥ कालस्येगो॥ कालाणुद्रव्यस्यैकप्रदेशस्यापि द्व्यणुकादिस्कंधपर्यायस्येव तवक्रमेद्वाप्यपेक्षा
यत्वं जातं॥ तथा कालाणोरपि द्रव्येणैकस्यापि पर्यायेण कायत्वं भवत्विति॥ ७॥ तत्र परिहारः॥ स्निग्धरूक्षत्वहेतु
कस्यबंधस्याभावान्न भवति॥ तदपि कस्मात्॥ स्निग्धरूक्षत्वं पुद्गलस्यैव धर्मो यतः कारणादिति॥ अणुत्वं
पुद्गलसंज्ञा कालस्याणुसंज्ञा कथमिति चेत्॥ ७॥ तत्रोत्तरं॥ अणुशब्देन व्यवहारेण पुद्गला उच्यंते॥ निश्च
येन तु वर्णादिगुणानां पूरणगलनयोगात् पुद्गला इति॥ वस्तुवृत्त्या पुनरणुशब्दः सूक्ष्मवाचकः॥ तद्यथा
परमेणाणुः॥ अणुकोर्थः सूक्ष्म इति व्युत्पत्त्या परमाणुः सच सूक्ष्मवाचको ऽणुशब्दो निर्विभा
गपुद्गलविवक्षायां पुद्गलाणुं वदंति॥ अविभागकालद्रव्यविवक्षायां तु कालाणुं कथयंतीत्यर्थः॥ अथप्र
देशलक्षणमुपलक्षयति॥ ७॥ जावदियं आयासं अविभागीपुग्गलाणुउट्ठद्धं तंखुपदेसंजाणे स
व्वाणुट्ठाणदाणरिहं॥ २७॥ जावदियं आयासं अविभागीपुग्गलाणुउट्ठद्धं तंखुपदेसंजाणे॥ यावत्प्रमाण
माकाशमविभागपुद्गलपरमाणुनावष्टब्धं व्याप्तं तदाकाशं खुस्फुटं प्रदेशं जानीहि हे शिष्य॥ कथंभूतं

—द्वौपिरागद्वेषस्थानीयबंधयोग्यस्निग्धरूक्षगुणाभ्यां परिणम्य द्व्यणुकादिस्कंधस्वविभावव्यंजनपर्यायवक्रविधोवक्रमदेशोभवति तेनकारणे
नवक्रमदेशात्तद्वत्कायकारणत्वादुपचारेण कायो भण्यते अथमतं यथा पुद्गलपरमाणोर्द्रव्यस्

खं काउ
रुणपे
देसा
रास्न
रसो
सर्व
यथा
क
ति

प्रदेशं ॥ सव्वाणट्ठाणदाणारिहं ॥ सर्वाणूनां सूक्ष्मस्कंधानां च स्थानदानस्यावकाशदानार्हं योग्यं समर्थं

मिति ॥ ७ ॥ एतावेकंमूर्ताकाशस्य शक्तिरस्त्याकाशस्य तत एवासंख्यातप्रदेशोपि लोके अनंतानंतजीवा

स्तेभ्योप्यनंतगुणपुद्गलावकाशं लभंते ॥ तथा चोक्तं ॥ जीवपुद्गलविषये अवकाशदानसामर्थ्यं ॥ एग

णिगोदसरीरे ॥ जीवा दव्वप्पमाणदो दिट्ठा ॥ सिद्धेहिं अणंतगुणा ॥ सव्वेण वितीदकालेण ॥ २९ ॥ उग्गाढ

गाढणिचिदो ॥ पुग्गलकायेहिं सव्वदो लोगो ॥ सुहमेहिं वादरेहिं यणंताणंतेहिं विविहेहिं ॥ ३० ॥ अथ

मतं मूर्तपुद्गलानां विभागो भेदो भवतु नास्ति विरोधः ॥ अमूर्तस्याखंडस्याकाशद्रव्यस्य कथं विभागकल्पने

ति ॥ ७ ॥ तन्न ॥ रागाद्युपाधिरहितस्वसंवेदनप्रत्यक्षभावनोत्पन्नसुखामृतरसास्वादतृप्तस्य मुनियुग

लस्यावस्थानक्षेत्रमेकमनेकं वा ॥ यद्येकं तर्हि द्वयोरेकत्वं प्राप्नोति ॥ न च तथा भिन्नं चेत् ॥ तथा निर्विभा

गद्रव्यस्यापि विभागकल्पना यागतं ॥ घटाकाशं पटाकाशमित्यादिवत् ॥ ७ ॥ एवं सूत्रपंचकेन पंचास्ति

कायप्रतिपादकनामा तृतीयोंतराधिकारः ॥ इति श्रीनेमिचंद्रसैद्धांतिदेवविरचिते द्रव्यसंग्रहे [illegible]

द्रव्यसं०
२७

णादि सत्तविंशतिगाथाभिः स्थलत्रयेण जीवसमुदायेन षड्द्रव्यपञ्चास्तिकायप्रतिपादकनामा प्रथमोऽधिकारः
समाप्तः ॥ ७ ॥ अतः पूर्वोक्तप्रकारषड्द्रव्याणां चूलिकारूपेण विस्तरव्याख्यानं क्रियते ॥ तद्यथा ॥ परिणा
मजीवमुत्तं ॥ सपदेसं एय खित्त किरियाय ॥ णिच्चं कारण कत्ता ॥ सव्वगदमिदरह्यिपवेसा ॥ परिणाम इत्या
दिव्याख्यानं क्रियते ॥ परिणामपरिणामिनौ जीवपुद्गलौ स्वभावपरिणामाभ्यां कृत्वा ॥ शेषचत्वारिद्रव्या
णि विभावव्यंजनपर्यायाभावान्मुख्यवृत्त्यापुनरपरिणामीति ॥ जीव : शुद्धनिश्चयनयेन विशुद्धज्ञान
दर्शनस्वभावशुद्धचैतन्यप्राणशब्देनोच्यते तेन जीवतीति जीव : व्यवहारनयेन पुन : कर्मोदयजनितद्रव्य
भावरूपैश्चतुर्भिः प्राणैर्जीवति जीविष्यति जीवितपूर्वो वा जीव : पुद्गलादिपंचद्रव्याणि पुनरजीवरूपाणि ॥
मुत्तं ॥ अमूर्त्तशुद्धात्मनो विलक्षणा : स्पर्शरसगंधवर्णवती मूर्त्तिरुच्यते ॥ तत्सद्भावात् मूर्त्त : पुद्गल ॥ जीव
द्रव्यं पुनरनुपचरितासद्भूतव्यवहारेण मूर्त्तमपि शुद्धनिश्चयेनामूर्त्त : ॥ धर्माधर्माकाशकालद्रव्याणि
चामूर्त्तानि ॥ सपदेसं ॥ लोकमात्रप्रमितासंख्येयप्रदेशलक्षणं जीवद्रव्यमादिकं

स्तिकायसंज्ञानिसप्रदेशानि॥ कालद्रव्यंपुनर्बहुप्रदेशत्वलक्षणकायत्वाभावादप्रदेशं॥ एवं द्रव्यार्थिक
नयेनधर्माधर्माकाशद्रव्याण्येकानिभवंति॥ जीवपुद्गलकालद्रव्याणिपुनरनेकानिभवंति क्षेत्रंसर्व
द्रव्याणामवकाशदानसामर्थ्यात्क्षेत्रमाकाशमेकं॥ शेषद्रव्याण्यक्षेत्राणि॥ किरियाय॥ क्षेत्रात्क्षे
त्रांतरगमनरूपापरिस्पंदवतीचलनवतीक्रियासाविद्यतेययोस्तौक्रियावंतौजीवपुद्गलौ॥ धर्माधर्मा
काशकालद्रव्याणिपुनर्निष्क्रियाणि॥ णिच्चं॥ धर्माधर्माकाशकालद्रव्याणियद्यप्यर्थपर्यायत्वे
नानित्यानि॥ तथापिमुख्यवृत्त्याविभावव्यंजनपर्यायाभावान्नित्यानि॥ द्रव्यार्थिकनयेनचजीवपुद्गल
द्रव्येपुनर्यद्यपिद्रव्यार्थिकनयापेक्षयानित्ये॥ तथाप्यगुरुलघुपरिणतिस्वरूपस्वभावपर्यायापेक्षया
विभावव्यंजनपर्यायापेक्षयाचानित्ये॥ कारण॥ पुद्गलधर्माधर्माकाशकालद्रव्याणिव्यवहारनयेन
जीवस्यशरीरवाङ्मनःप्राणापानादिगतिस्थित्यवगाहवर्त्तनाकार्याणिकुर्वंतीतिकारणानिभवंति
जीवद्रव्यंपुनर्यद्यपिगुरुशिष्यादिरूपेणपरस्परोपग्रहंकरोति॥ तथापिपुद्गलादिपंचद्रव्याणांकिमा

मपिनकरोतीत्यकारणा॥ कर्त्ता शुद्धपारिणामिकपरमग्राहकेनशुद्धद्रव्यार्थिकनयेनयद्यपिबंधमोक्षद्रव्यभावरूप
भयादीनामकर्त्ताजीवस्तथाप्यशुद्धनिश्चयेनशुभाशुभोपयोगाभ्यांपरिणतःसनपुण्यपाप
योःकर्त्तातत्फलभोक्ताचभवति॥विशुद्धज्ञानदर्शनस्वभावनिजशुद्धात्मद्रव्यस्यसम्यक्श्रद्धानज्ञानानु
ष्ठानरूपेणशुद्धोपयोगेनतुपरिणतःसन्मोक्षस्यापिकर्त्तातत्फलभोक्ताचेति शुभाशुभशुद्धपरिणामं
नांपरिणामनमेवकर्तृत्वंसर्वत्रज्ञातव्यमिति॥पुद्गलादिपंचद्रव्याणांचस्वकीयपरिणामेनपरिणामन
मेवकर्तृत्वंवस्तुवृत्त्यापुनःपुण्यपापादिरूपेणाकर्तृत्वमेव॥सर्वगतं॥लोकालोकव्याप्त्यपेक्षयासर्वगतमा
काशंभण्यते॥लोकव्याप्त्यपेक्षयाधर्माधर्मौचजीवद्रव्यं॥पुनरेकजीवापेक्षयालोकपूरणावस्थांविहा
यासर्वगतं॥नानाजीवापेक्षयासर्वगतमेवभवति॥पुद्गलद्रव्यंपुनर्लोकरूपमहास्कंधापेक्षयासर्वगतं
शेषपुद्गलापेक्षयासर्वगतंनभवति॥कालद्रव्यंपुनरेककालाणुद्रव्यापेक्षयासर्वगतंनभवति॥लोकप्र
देशप्रमाणनानाकालाणुविवक्षयालोकेसर्वगतंभवति॥इदानींप्रवेश॥यद्यपिसर्वद्रव्या

रोकदेशावगाहेनान्योन्यानुप्रवेशेनतिष्ठंति॥ तथापिनिश्चयनयेनचेतनादिस्वकीयस्वरूपंनत्यजंतीति
॥ अत्रषट्द्रव्येषुमध्येवीतरागचिदानंदैकादिगुणस्वभावंशुभाशुभमनोवचनकायव्यापाररहितंनि
जशुद्धात्मद्रव्यमेवोपादेयमितिभावार्थः॥ ॥ अतऊर्ध्वंपुनरपिषट्द्रव्याणांमध्येहेयोपादेयस्वरूपंवि
शेषेणविचारयति॥ ॥ तत्रशुद्धनिश्चयेनशक्तिरूपेणशुद्धबुद्धैकस्वभावत्वात्सर्वेजीवाउपादेयाभ
वंति॥ व्यक्तिरूपेणपुनःपंचपरमेष्ठिनएव॥ तत्राप्यर्हत्सिद्धद्वयमेव॥ तत्रापिनिश्चयेनसिद्धएव॥ परम
निश्चयेनतुभोगाकांक्षादिरूपसमस्तविकल्पजालरहितपरमसमाधिकालेसिद्धसदृशःस्वशु
द्धात्मैवोपादेय॥ शेषद्रव्याणिहेयानीतितात्पर्यं॥ ॥ शुद्धबुद्धैकस्वभावइतिकोर्थः॥ मिथ्यात्वरागादि
समस्तविभावरहितत्वेनशुद्धइत्युच्यते॥ केवलज्ञानाद्यनंतगुणसहितत्वाद्बुद्धः॥ ॥ इतिशुद्धबुद्धैक
लक्षणंसर्वत्रज्ञातव्यं॥ एवंषट्द्रव्यचूलिकासमाप्ता॥ ॥ चूलिकाशब्दस्यार्थःकथ्यते॥ चूलिका
विशेषव्याख्यानं॥ अथवाउक्तानुक्तव्याख्यानं॥ अथवाउक्तानुक्तसंकीर्णव्याख्यानंचेति॥ ॥ अतःपरं

जीवपुद्गलपर्यायरूपाणामास्रवादिसप्तपदार्थानामेकादशगाथापर्यंतव्याख्यानंकरोति॥ ॐ॥ तत्रादौ
सवंधगाइत्याद्यधिकारसूत्रगाथैका तदनंतरमास्रवपदार्थव्याख्यानरूपेण आसवदिजेणइत्यादि
गाथात्रयं ॐ ततः परं वंधव्याख्यानकथनेन वज्झदिकम्मंइतिप्रभृतिगाथाद्वयं॥ ॐ॥ ततोपिसंवरकथन
रूपेणचेदणपरिणामोइत्यादिसूत्रद्वयं॥ ॐ॥ ततश्चनिर्जराप्रतिपादनरूपेणजहकालेणतवेणयइति
प्रभृतिसूत्रमेकं ॐ॥ तदनंतरंमोक्षस्वरूपकथनेन॥ सव्वस्सकम्मणोजोइत्यादिसूत्रमेकं ततश्चपुण्यपा
पद्वयकथनेनसुहअसुहइत्यादिसूत्रमेकं चेत्येकादशगाथाभिः स्थलसप्तकेनसमुदायेनद्वितीयाधि
कारेसमुदायपातनिका॥ तत्राहशिष्यः॥ यद्येकांतेनजीवाजीवौपरिणामिनौभवतस्तदासंयोगपर्या
यरूपएकएवपदार्थः॥ यदिपुनरेकांतेनापरिणामिनौभवतस्तदाजीवाजीवद्रव्यरूपौद्वावेवपदा
र्थौस्तस्ततः आस्रवादिसप्तपदार्थाः कथंघटंतइति॥ ॐ॥ तत्रोत्तरंकथ्यते॥ कथंचित्परिणामित्वाद्घ
टंते॥ कथंचित्परिणामित्वंकोऽर्थः यथास्फटिकमणिविशेषोयद्यपिस्व

पुद्गलाधिजनितं पर्यायांतरं परिणामति गच्छति ॥ यद्यप्युपाधिं गच्छति तथापि निश्चयेन शुद्धस्वरूपं न
त्यजति ॥ तथा जीवोपि यद्यपि शुद्धद्रव्यार्थिकनयेन सहजशुद्धचिदानंदैकस्वभावस्तथाप्यनादिक
र्मबंधपर्यायवशेन रागादिपरद्रव्योपाधिपर्यायं गच्छति ॥ यद्यपि पर्यायेण परिणमति तथापि निश्च
येन शुद्धस्वरूपं न त्यजति ॥ पुद्गलोपि तथा ॥ इति परस्परसापेक्षत्वं कथंचित्परिणामित्वशब्दस्यार्थः ॥
एवं कथंचित्परिणामित्वे सति जीवपुद्गलसंयोगपरिणतिनिर्वृत्ता आस्रवादिसप्तपदार्था घटंते ॥ ते च पूर्वो
क्ताजीवाजीवपदार्थाभ्यां सह नव भवंति ॥ त एव नव पदार्थाः ॥ पुण्यपापपदार्थद्वयस्याभेदनयेन कृत्वा
पुण्यपापबंधपदार्थस्य वा मध्ये ऽंतर्भावविवक्षायां सप्त तत्त्वानि भण्यंते ॥ इति हे भगवन् ॥ यद्यपि कथं
चित्परिणामित्वबलेन भेदप्रधानपर्यायार्थिकनयेन नव पदार्थाः सप्त तत्त्वानि वा सिद्धानि तथापि
तैः किं प्रयोजनं ॥ यथैवाभेदनयेन पुण्यपापपदार्थद्वयस्यांतर्भावो जातः ॥ तथैव विशेषाभेदनयविव
क्षायामास्रवादिपदार्थानामपि जीवाजीवमध्ये ऽंतर्भावे कृते जीवाजीवौ द्वावेव पदार्थाविति ॥ तत्र

परिहारः हेयोपादेयतत्त्वपरिज्ञानप्रयोजनार्थमास्रवादिपदार्थव्याख्यानं भवतीति॥ ३ ॥ तत्रैव कथयति
यत्तत्त्वमक्षयानंतसुखं तस्य कारणं मोक्षः॥ मोक्षस्य कारणं संवरनिर्जराद्वयं॥ तस्य कारणं विशुद्ध
ज्ञानदर्शनस्वभावनिजात्मतत्त्वसम्यक्श्रद्धानज्ञानानुचरणनिश्चयरत्नत्रयस्वरूपं तत्साधकं व्यवहा
ररत्नत्रयस्वरूपं चेति॥ इदानीं हेयतत्त्वं कथ्यते॥ आकुलत्वोत्पादकं नारकादिदुःखं निश्चयेंद्रियसुखं
च हेयं॥ तस्य कारणं संसारः॥ संसारकारणमास्रवबंधपदार्थद्वयं॥ तस्य कारणं पूर्वोक्तव्यवहारनि
श्चयरत्नत्रयाद्विलक्षणं मिथ्यादर्शनज्ञानचारित्रत्रयमिति॥ एवं हेयोपादेयतत्त्वव्याख्याने कृते सति
सप्ततत्त्वनवपदार्थाः स्वयमेव सिद्धा इति॥ इदानीं कस्य पदार्थस्य कः कर्त्तेति कथ्यते॥ निजनिरंजनशुद्धा
त्मभावनोत्पन्नपरमानंदैकलक्षणसुखामृतरसास्वादपराङ्मुखो बहिरात्मा भण्यते॥ स चास्रवबंधपा
पस्य कर्त्ता भवति॥ क्वापि काले पुनर्मंदमिथ्यात्वमंदकषायोदये सति भोगाकांक्षादि
निदानबंधेन भाविकाले पापानुबंधिपुण्यपदार्थस्यापि कर्त्ता यस्तु॥ पूर्वोक्तबहिरात्मनो विलक्षणः सम्य

ष्टिः सन्संवरनिर्जरामोक्षपदार्थत्रयस्य कर्त्ता ॥ रागादिविभावरहितपरमसामायिके यदा स्थातुं समर्थो न भ

वति तदा विषयकषायोत्पन्नदुर्ध्यानवंचनार्थं संसारस्थितिछेदं कुर्वन् पुण्यानुबंधी तीर्थंकरनामक

र्मप्रकृत्यादिविशिष्टपुण्यपदार्थस्यापि कर्त्ता भवतीति ॥ कर्तृत्वविषये नयविभागः कथ्यते ॥ मिथ्या

दृष्टेर्जीवस्य पुद्गलद्रव्यपर्यायरूपाणामास्रवबंधपुण्यपापपदार्थानां कर्तृत्वमनुपचरितासद्भूतव्य

वहारेण ॥ जीवभावपर्यायरूपाणां पुनरशुद्धनिश्चयेनेति ॥ सम्यग्दृष्टेस्तु संवरनिर्जरामोक्षपदानां द्रव्यरूपा

णां यत्कर्तृत्वं तदप्यनुपचरितासद्भूतव्यवहारेण जीवभावपर्यायरूपाणां तु विवक्षितैकदेशशुद्धनि

श्चयनयेनेति ॥ परमशुद्धनिश्चयेन तु ॥ णवि उप्पज्जइ णवि मरइ ॥ बंधु ण मुक्खु करेइ ॥ जिउ परमत्थें

जोइया ॥ जिणवर एउ भणेइ ॥ इति वचनाद्बंधमोक्षौ न स्तः ॥ स च पूर्वोक्तविवक्षितैकदेशशुद्धनिश्च

य ॥ आगमभाषया किं भण्यते ॥ स्वशुद्धात्मसम्यक्श्रद्धानज्ञानानुचरणरूपेण भविष्यतीति भव्यः ॥ ए

वंभूतभव्यत्वसंज्ञस्य पारिणामिकभावस्य संबंधिनी व्यक्तिर्भण्यते ॥ अध्यात्मभाषया पुनर्द्रव्यशक्ति

रूपशुद्धपारिणामिकभावविषये भावना भण्यते॥ पर्यायनामान्तरेण निर्विकल्पसमाधिर्वा शुद्धोपयोगादिकं
चेति॥ यत एव भावना मुक्तिकारणं तत एव शुद्धपारिणामिकभावो ध्येयरूपो भवति ध्यानभावनारूपो न
भवति॥ कस्मादिति चेत्॥ ध्यानभावनारूपो न भवति॥ कस्मादिति चेत्॥ ध्यानभावनापर्यायो विनश्वरः
स च द्रव्यरूपत्वादविनश्वर॥ इति इदमत्र तात्पर्यं॥ मिथ्यात्वरागादिविकल्पजालरहितनिजशुद्धात्मभा
वनोत्पन्नसहजानंदैकलक्षणसुखसंवित्तिरूपा च भावना मुक्तिकारणं भवति। तां च कोपि जनः के
नापि पर्यायनामांतरेण भणतीति॥ ॥ एवं पूर्वोक्तप्रकारेणानेकांतव्याख्यानेनास्रवबंधपुण्य
पापपदार्था जीवपुद्गलसंयोगपरिणामरूपविभावपर्यायेणोत्पद्यंते॥ संवरनिर्जरामोक्षपदार्थाः
पुनर्जीवपुद्गलसंयोगपरिणामविनाशोत्पन्नेन विवक्षितस्वभावपर्यायेणेति स्थितं॥ ॥ तद्यथा
आसवबंधणसंवरणिज्जरमोक्खसपुण्णपावा जे॥ जीवाजीवविसेसा॥ तेवि समासेण पभणामो॥ २८
॥ आस्रवनिरास्रवस्वसंवित्तिलक्षणशुभाशुभपरिणामेन शुभाशुभकर्मागमनमास्रवः॥ बंधण

वेधातीति शुद्धात्मतत्त्वोपलंभभावनाच्युतजीवस्य कर्मप्रदेशैः सह संश्लेषो बंधः ॥ संवर ॥ कर्मास्रवनिरो
धसमर्थस्वसंवित्तिपरिणतजीवस्य शुभाशुभकर्मागमनसंवरणं संवरः ॥ णिज्जरा ॥ शुद्धोपयोगभावना
सामर्थ्येन नीरसीभूतकर्मपुद्गलानामेकदेशगलनं निर्जरा ॥ मोक्खो ॥ जीवपुद्गलसंश्लेषरूपबंधस्य वि
घटनसमर्थः स्वशुद्धात्मोपलब्धेः परिणामो मोक्ष इति ॥ सुपुण्णपावा जे ॥ पुण्यपापसहिता ॥ ये ते विसमा
सेण पभणामो ॥ यथा जीवाजीवपदार्थौ व्याख्यातौ पूर्वं तथा नास्रवादिपदार्थान् समासेन संक्षेपे
ण प्रभणामो वयं ते च ॥ कथंभूताः जीवाजीवविसेसा ॥ जीवाजीवविशेषाः ॥ चैतन्यभावरूपा जीवस्य वि
शेषाः ॥ चैतन्याभावरूपा अजीवस्य विशेषाः ॥ विशेषा इति कोर्थः पर्यायाः ॥ चैतन्या अशुद्धपरिणामा जी
वस्य ॥ अचेतनाः कर्मपुद्गलपर्यायाः अजीवस्येत्यर्थः ॥ एवमधिकारसूत्रगाथा गता ॥ ॥ अथ गाथात्र
येणास्रवव्याख्यानं क्रियते ॥ तत्रादौ भावास्रवद्रव्यास्रवस्वरूपं सूचयति ॥ [illegible]
[illegible] ॥ आसवदि जेण कम्मं परि

मध्यतोसविसेउभावासउ॥ आस्रवतियेनकर्मपरिणामेनात्मनः सविज्ञेयोभावास्रवः॥ कर्मास्रवनि
र्मूलनसमर्थशुद्धात्मभावनाप्रतिपक्षभूतेनयेनपरिणामेनास्रवतिकर्मकस्यआत्मनःस्वस्यसपरिणामोभ
॥सचकथंभूतःजिणुत्तो जिनेनसर्वज्ञवीतरागेणोक्तः॥ कम्मासवणंपरोहोदि॥ कर्मास्र
भवति॥ छ॥ ज्ञानावरणादिद्रव्यकर्मआस्रवणमागमनं॥ परःकोपि भावास्रवादन्योभिन्नोभावा
स्रवनिमित्तेनतैलम्रक्षितानांधूलिसमागमनमिवद्रव्यास्रवभवतीति॥ छ॥ ननुआस्रवतियेनकर्मतेनै
वपदेनद्रव्यास्रवोलब्धः पुनरपिकर्मास्रवणंपरोभवतीतिद्रव्यास्रवव्याख्यानंकिमर्थमितियदुक्तंत्वया
तन्न॥ छ॥ येनपरिणामेनकिंभवति॥ आस्रवतिकर्मतत्परिणामस्यसामर्थ्यंदर्शितंनचद्रव्यास्रवव्याख्या
नमितिभावार्थः॥ छ॥ अथभावास्रवस्वरूपंविशेषेणकथयति॥ छ॥ मिच्छत्ताविरदिपमादजोगकोधा
दउथविसेया॥ पणपणपणदसतियचउ कमसोभेदाउपुव्वस्स॥ ३०॥ मिच्छत्ताविरदिपमादजोगकोधादउ॥
मिथ्यात्वाविरतिप्रमादयोगक्रोधादयः॥ अभ्यंतरेवीतरागनिजात्मतत्त्वानुभूतिरुचिविषयेविपरीताभिनिवेशज

नकंवाहिविषयेतुपरकीयशुद्धात्मतत्त्वप्रभृतिसमस्तद्रव्येषुविपरीताभिनिवेशोत्पादकंचमिथ्यात्वंभणप
तं॥अभ्यंतरेनिजपरमात्मस्वरूपभावनोत्पन्नपरमसुखामृतरतिविलक्षणावाहिविषयेपुनरव्रतादिरू
पोव्रतविरतिः॥अभ्यंतरेनिःप्रमादशुद्धात्मानुभूतिचलनरूपःवहिर्विषयेतुमूलोत्तरगुणमलजन
कश्चेतिप्रमादः निश्चयेननिःक्रियस्यापिपरमात्मनोव्यवहारेणवीर्यांतरायक्षयोपशमोत्पन्नोमनो
वचनकायवर्गणावलंवनःकर्म्मादानहेतुआत्मप्रदेशपरिस्पंदोयोगइत्युच्यते॥अभ्यंतरेपरमोप
शममूर्त्तिकेवलज्ञानाद्यनंतगुणस्वभावपरमात्मस्वरूपक्षोभकारकःवहिर्विषयेतुपराभासंबंधित्वे
नक्रूरत्वाद्यावेशरूपाःक्रोधादयश्चेत्युक्तलक्षणाःपंचास्रवाः॥अथहोविण्णेया॥विज्ञेया॥ज्ञातव्याः
कतिभेदास्ते॥पणपणपणदसतियचदुकमसोभेदादुपंचपंचपंचदशत्रिचतुर्भेदाःक्रमसोभवंतिपुन
श्च॥तथाहि॥एयंतवुद्धदरसी॥विवरीउवम्हतावसोविणउ॥इंदोवियसंसयिदो॥मक्कडिउचेवअण्णाणी
इतिगाथाकथितलक्षणंपंचविधंमिथ्यात्वंहिंसानृतस्तेयाब्रह्मपरिग्रहाकांक्षारूपेणविरतिःपंचविधा

ऽप्यवामनसहितपंचेंद्रियप्रभृतिपृथिव्यादिषट्कायविराधनाभेदेनद्वादशविधा॥ऽ॥ विकहातहयकसाया ३
दियणिद्दातहेवपणयोय॥ चउचउपणमेगेगं होंतिपमादाहुपण्णरसा॥ऽ॥ इतिगाथाकथितक्रमेणपंच
दशप्रमादाः॥मनोवचनकायव्यापारभेदेनत्रिविधोयोगः॥विस्तरेणपंचदशभेदावाक्रोधमानमायालो
भभेदेनकषायाश्चत्वारः॥कषायनोकषायभेदेनपंचविंशतिविधावा॥एतेसर्वेभेदाःकस्यसंबंधिनःपुव
स्य॥पूर्वसूत्रोदितभावास्रवस्येत्यर्थः॥ऽ॥अथद्रव्यास्रवस्वरूपमुद्योतयति॥ऽ॥णाणावरणादीणंजो
ग्गंजंपुग्गलंसमासवदि॥दव्वासवोसणेओ॥अणेयभेदोजिणक्खादो॥३१॥णाणावरणादीणं॥सहजशुद्ध
केवलज्ञानमभेदेनकेवलज्ञानाद्यनंतगुणाधारभूतंज्ञानशब्दवाच्यंपरमात्मानंवाआवृणोतीतिज्ञानावरणं
तदादिर्येषांतानिज्ञानावरणादीनितेषांजोग्गं योग्यंजंपुग्गलसमासवदि॥स्नेहाभक्तशरीराणां
समागमइव॥निःकषायशुद्धात्मसंवित्तिच्युतजीवानांकर्मवर्गणारूपंयत्पुद्गलद्रव्यंसमास्रवति॥दव्वासऊ
सणेऊद्रव्यास्रवःविज्ञेयः॥अणेयभेऊ॥सचज्ञानदर्शनावरणीयवेदनीयमोहनीयायुर्नामगोत्रांतरा

नामकर्ममूलप्रकृतिभेदेन॥ तथैव॥ पणणवदुअठवीसा॥ चउतियणवदीयदोण्णिपंचेव॥ बावण्णहीणविय
सय॥ पयडिविणासेणहोंतितेसिद्धा॥ छ॥ इतिगाथाकथितक्रमेणाष्टचत्वारिंशदधिकशतसंख्याप्रमितोत्त
रप्रकृतिभेदेनतथाचासंख्येयलोकप्रमितपृथिवीकायनामकर्माद्युत्तरोत्तरप्रकृतिरूपेणानेकभेदइति
जिणक्खादो॥ जिनाख्यातोजिनप्रणीतइत्यर्थः॥ छ॥ एवमास्रवव्याख्यानगाथात्रयेणप्रथमस्थलंगतं॥ छ॥
अतःपरंसूत्रद्वयेनबंधव्याख्यानंक्रियते॥ तत्रादौगाथापूर्वार्द्धेनभावबंधमुत्तरार्द्धेनतुद्रव्यबंधस्वरूपमा
वेदयति॥ छ॥ बज्झदिकम्मंजेणदु॥ चेदणभावेणभावबंधोसो॥ कम्मादपदेसाणं॥ अण्णोण्णपवेसणंइदरो॥ ३२॥ टी
का॥ पू॥ बज्झदिकम्मंजेणदु॥ चेदणभावेणभावबंधोसो॥ बध्यतेकर्मयेनचेतनभावेनसभावबंधोभव
ति॥ समस्तकर्मबंधविध्वंसनसमर्थाखंडैकप्रत्यक्षप्रतिभासमयपरमचैतन्यविलासलक्षणज्ञानगुण
स्याभेदनयेनानंतज्ञानादिगुणाधारभूतपरमात्मनोवासंबंधिनीयातुनिर्मलानुभूतिस्तद्विपक्षभूतेन॥
मिथ्यात्वरागादिपरिणतिरूपेणवाशुद्धचेतनभावेनपरिणामेनबध्यतेज्ञानावरणादिकर्मयेनभावेन

सभाववंधो भणंते॥ कम्मादपदेसाणं तो॥ अण्णोण्णपवेसणं इदरो॥ कर्मात्मप्रदेशानामन्योन्यप्रवेशात्मितरः
भाववंधनिमित्तेन कर्मप्रदेशानामात्मप्रदेशानां च क्षीरनीरवदन्योन्यप्रवेशनसंश्लेषो द्रव्यवंध इ-
ति॥ अथ तस्यैव वंधस्य गाथापूर्वार्द्धेन प्रकृतिवंधादिभेदच्चतुष्टयं कथयति उत्तरार्द्धेन तु प्रकृतिवंधा-
दीनां कारणं चेति॥ क॥ पयडिट्ठिदिअणुभागप्पदेसभेदा दु। चदुविधो बंधो॥ जोगा पयडिपदेसा ठिदिअणु-
भागा कसायदो होंति॥ ३३॥ पयडिट्ठिदिअणुभागप्पदेसभेदा दु चदुविधो वंधो॥ प्रकृतिस्थित्यनुभागप्रदेश-
भेदाच्चतुर्विधो भवति॥ तथाहि॥ ज्ञानावरणीयस्य कर्मणः का प्रकृतिः देवतामुखवस्त्रमिव ज्ञानप्रच्छा-
दनता दर्शनावरणीयस्य का प्रकृतिः राजदर्शनप्रतिषेधकप्रतीहारवद्दर्शनप्रच्छादनता॥ सातासातवेद-
नीयस्य का प्रकृतिः मधुलिप्तखड्गधारास्वादनवदल्पसुखबहुदुःखोत्पादनता॥
ति: मद्यपानवद्धेयोपादेयविचारविकलता॥ आयुःकर्मणः का प्रकृतिः निगलवदुत्पत्तगाम
॥नामकर्मणः॥ का प्रकृतिः चित्रकारपुरुषवन्नानारूपकरणता॥ गोत्रकर्मणः का प्रकृतिः निग

फलघुभाजनकारककुंभकारवदुच्चनीचगोत्रकरणात्॥ अंतरायकर्मणः का प्रकृतिः भंडागारिकवद्दान
विघ्नकरेति ॥ तथाचोक्तं॥ पडपडिहारासिमज्जा हडिचित्तकुलालभंडयारीणं॥ जह एदेसिं भावा तहवि
हकम्मामुणेयव्वा॥ ॥ इतिदृष्टांताष्टकेन प्रकृतिबंधो ज्ञातव्यः ॥ अजागोमहिष्यादिदुग्धानामर
सादिस्वकीयमधुररसावस्थानपर्यंतं यथा स्थितिर्भण्यते॥ तथा जीवप्रदेशेष्वपि यावत्कालं कर्मसं
बंधेन स्थितिः तावत्कालस्थितिबंधो ज्ञातव्यः॥ यथा च तेषामेव दुग्धानां तारतम्येन रसगतशक्तिविशे
षोनुभागो भण्यते॥ तथा जीवप्रदेशस्थितकर्मस्कंधानामपि सुखदुःखदानसमर्थशक्तिविशेषोनु
भागबंधो विज्ञेयः॥ सर्वघातिकर्मसंबंधिनो शक्तिर्लतादारुअस्थिपाषाणशक्तिभेदेन चतुर्धा॥ तथैव
अशुभाघातिकर्मसंबंधी च निंबकांजीरविषहालाहलरूपेण॥ शुभघातिकर्मसंबंधी पुनर्गुडखंडशर्करामृत
रूपेण चतुर्धा भवतीति ॥ एकैकात्मप्रदेशे सिद्धानंतैकभागसंख्या॥ अभव्यानंतगुणप्रमिता॥ अनंतानं
तपरमाणवः प्रतिक्षणं बंधमायांतीति प्रदेशबंधः॥ इदानीं बंधकारणं कथ्यते ॥ जोगा पयडिपदेसा ठिदि

अणुभागा कसायदो होंति॥ योगात्प्रकृतिप्रदेशौ॥ स्थित्यनुभागौ कषायतो भवत इति॥ तथाहि निश्चयेन नि:
क्रियाणामपि शुद्धात्मप्रदेशानां व्यवहारेण परिस्पंदनहेतुर्योगः तस्मात्प्रकृतिप्रदेशबंधद्वयं भवति निर्दो
षपरमात्मभावनाप्रतिबंधकक्रोधादिकषायोदयात् स्थित्यनुभागबंधद्वयं भवतीति॥ क॥ आस्रवे बंधे
च मिथ्यात्वाविरत्यादिकारणानि समानानि॥ को विशेष इति चेत् नैवं॥ प्रथमक्षणे कर्मस्कंधानामागमनमा
स्रवः॥ आगमनानंतरं॥ द्वितीयक्षणादौ जीवप्रदेशेष्ववस्थानं बंध इति भेदः॥ यत एव योगकषायाद्बंधचतुष्ट
यं भवति॥ ततो बंधविनाशार्थं योगकषायत्यागेन निजशुद्धात्मनि भावना कर्तव्येति तात्पर्यं॥ ३३॥ एवं
बंधव्याख्यानेन सूत्रेण द्वितीयस्थलं गतं॥ अत ऊर्ध्वं गाथाद्वयेन संवरपदार्थः कथ्यते॥ तत्र प्रथमगाथा
यां भावसंवरद्रव्यसंवरस्वरूपं निरूपयति॥ क॥ चेदणपरिणामो जो॥ कम्मस्सासवणिरोहणे हेदू॥ सो भा
वसंवरो खलु॥ दव्वासवरोहणो अण्णो॥ १॥ चेदनपरिणामो यः कथंभूतः॥ कर्मास्रवनिरोधने हेतुः स भा
वसंवरो भवति॥ खलु स्फुटं॥ दव्वासवरोहणो अण्णो॥ द्रव्यकर्मास्रवनिरोधने समर्थः स्याद्द्रव्यसंवर इति॥ क॥

तद्यथा॥ निश्चयेनस्वतःसिद्धत्वात्परकारणनिरपेक्षः सर्वदाविनश्वरत्वात्नित्यः परमोद्योतस्वभाव
त्वात्स्वपरप्रकाशनसमर्थः अनाद्यनंतत्वादादिमध्यांतमुक्तः दृष्टश्रुतानुभूतभोगाकांक्षारूपनिदान
बंधादिसमस्तरागादिविभावमलरहितत्वादत्यंतनिर्मलः परमचैतन्यविलासलक्षणत्वाच्चिदुच्छ
लनिर्भरः स्वाभाविकपरमानंदैकलक्षणत्वात्परमसुखमूर्तिः निरास्रवसहजस्वभावत्वात्सर्वकर्मसं
वरहेतुरित्युक्तलक्षणः परमात्मातत्स्वभावभावनारूपोनिश्चयोयोसौशुद्धचेतनपरिणामः सभावसंवरोभवति
यस्तुभावसंवरात्कारणभूतादुत्पन्नकार्यभूतोनवतरद्रव्यकर्मागमनाभावः सद्रव्यसंवरः इत्यर्थः॥ अथसं
वरविषयेनयविभागः कथ्यते॥ तथाहि॥ मिथ्यादृष्ट्यादिक्षीणकषायपर्यंतमुपर्युपरिमंदत्वात्तारतम्येन
तावदशुद्धनिश्चयोवर्त्तते॥ तस्यमध्येपुनर्गुणस्थानभेदेनशुभाशुभशुद्धानुष्ठानरूपमुपयोगत्रयंतिष्ठ
ति॥ तदुच्यते॥ मिथ्यादृष्टिसासादनमिश्रगुणस्थानेषूपर्युपरिमंदत्वेनाशुभोपयोगोवर्त्तते॥ ततोप्य
संयतसम्यग्दृष्टिश्रावकप्रमत्तसंयतेषुपारंपर्येणशुद्धोपयोगसाधकउपर्युपरितारतम्येनशुभोपयो

कारणेनापि सकलनिरावरणेन मुक्तजभावमुपादानकारणसदृशं कार्यं भवतीति वचनात्॥ ७ ॥ तत्रोत्त
रं दीयते॥ युक्तायुक्तं भवतापरं किं तूपादानकारणमपि षोडशवर्णिकार्यस्याधस्तनवर्णिकोपादान
कारणवत्॥ मृन्मयकलशकार्यस्य मृत्पिंडस्थासकोशकुशूलोपादानवदिति च कार्यादेकदेशेन
भिन्नं भवति॥ यदि पुनरेकांतेनोपादानकारणस्य कार्येण सह भेदाभेदो वा भवति॥ तर्हि पूर्वोक्तसुवर्णमृ
त्तिकादृष्टांतद्वयवत्कार्यकारणभावो न घटते॥ ततः किं सिद्धं॥ एकदेशेन निरावरणत्वेन क्षायोपशमि
कज्ञानलक्षणमेकदेशव्यक्तिरूपं विवक्षितैकदेशशुद्धनयेन संवरशब्दवाच्यं शुद्धोपयोगस्वरूपं मु
क्तिकारणं भवति॥ यच्च लब्ध्यपर्याप्तसूक्ष्मनिगोदजीवे नित्योद्घाटं निरावरणं ज्ञानं श्रूयते॥ तदपि सूक्ष्म
निगोदसर्वजघन्यक्षयोपशमापेक्षया निरावरणं न च सर्वथा॥ कस्मादिति चेत्॥ तदावरणे जीवाभा
वः प्राप्नोति॥ वस्तुतः उपरितनक्षायोपशमिकमेव॥ यदि पुनर्लोचनपटलस्यैकदेशनिरावरणवत्केव
लज्ञानांशरूपं भवति॥ तर्ह्येकदेशेनापि लोकालोकप्रत्यक्षतां प्राप्नोति न च तथा दृश्यते॥ ७ ॥ किंतु

प्रचुरमेघप्रच्छादितादित्यविंबवन्निबिडलोचनपटलवद्वास्तोकंप्रकाशयतीत्यर्थः॥ अथक्षयोपशमलक्षणंक
थ्यते॥ सर्वप्रकारेणात्मगुणप्रच्छादिकाकर्मशक्तयसर्वघातिस्पर्द्धकानिभणंते॥ विवक्षितैकदेशेनात्मगुण
प्रच्छादिकाशक्तयोदेशघातिस्पर्द्धकानिभणंते॥ सर्वघातिस्पर्द्धकानामुदयाभावएवक्षयस्तेषामेवास्तित्व
मुपशममुच्यते॥ सर्वघात्युदयाभावलक्षणक्षयेणसहितउपशमः तेषामेकदेशघातिकानामुदयश्चेतिस
मुदायेनक्षयोपशमोभणंते॥ क्षयोपशमेभवःक्षायोपशमिकोभावः॥ अथवादेशघातिस्पर्द्धकोदयेपि
सतिजीवएकदेशेनज्ञानादिगुणंलभतेयत्रसक्षायोपशमिकोभावः॥ तेनकिंसिद्धं॥ पूर्वोक्तसूक्ष्मनिगो
दजीवेज्ञानावरणीयदेशघातिस्पर्द्धकोदयेसत्येकदेशेनज्ञानंगुणंलभतेतेनकारणेनतत्क्षायोपशमि
कंज्ञानं॥ नचक्षायिकं॥ कस्मादेकदेशोदयसद्भावादिति॥ अयमत्रार्थः यद्यपिपूर्वोक्तंशुद्धोपयोगलक्ष
णंक्षायोपशमिकज्ञानंमुक्तिकारणंभवति॥ तथापिध्यातृपुरुषेणयदेकसकलनिरावरणमखंडैक
सकलविमलकेवलज्ञानलक्षणंपरमात्मस्वरूपंतदेवाहंनचखंडज्ञानरूपमितिभावनीयं॥ एवंसंवरतत्व

आख्याविशेषेनयविभागोज्ञातव्यमिति॥ अथसंवरकारणभेदान्कथयतीत्येकपातनिकाद्वितीयातुकैः
कृत्वासंवरोभवतीति॥ पृष्टेप्रत्युत्तरंददाति॥ इतिपातनिकाद्वयंमनसिधृत्वासूत्रमिदंप्रतिपादयति॥ भ
गवान्॥ ७॥ वदसमिदीगुत्तीऊ॥ धम्माणुपेहापरीसहजऊय॥ चारित्तंबहुभेया॥ णायव्वा भावसंवरविसेसा
३५॥ वदसमिदिगुत्तीऊ व्रतसमितिगुप्तयः धम्माणुपेहा धर्मस्तथैवानुप्रेक्षाः
परीसहजऊय परीषहजयश्च॥ चारित्तंबहुभेया॥ चारित्रंबहुभेदयुक्तं॥ णादव्वा भावसंवरविसेसा एते
सर्वेमिलित्वाभावसंवरविशेषाभेदाज्ञातव्याः॥ इति॥ ७॥ अथविस्तरः॥ निश्चयेनविशुद्धज्ञानदर्शनस्व
भावनिजात्मतत्वभावनोत्पन्नसुखसुधास्वादबलेनसमस्तशुभाशुभरागादिविकल्पनिवृत्तिर्व्रतं॥ व्य
वहारेणतत्साधकहिंसानृतस्तेयाब्रह्मपरिग्रहाच्चयावज्जीवनिवृत्तिलक्षणंपंचविधंव्रतं॥ निश्चयेना
नंतज्ञानादिस्वभावेनिजात्मनिसम्यक्समस्तरागादिविभावपरित्यागेनतल्लीनतच्चिंतनतन्मयत्वेन
अयनंगमनंपरिणमनंसमितिः॥ व्यवहारेणतद्बहिरंगसहकारिकारणभूताचाचारादिचरणग्रंथोक्त

ईर्याभाषैषणादाननिक्षेपोत्सर्गसंज्ञाः पंचसमितयः॥ निश्चयेनसहजशुद्धात्मभावनालक्षणात् गूढस्थानेसंसा
रकारणरागादिभयात्स्वस्यात्मनोगोपनंप्रच्छादनंझंपनंप्रवेशनंरक्षणंगुप्तिः॥ व्यवहारेणबहिरंगसाध
नार्थंमनोवचनकायव्यापारनिरोधोगुप्तिः॥ निश्चयेनसंसारेपतंतमात्मानंमोक्षस्थानेधरतीतिविशु
द्धज्ञानदर्शनलक्षणनिजभावनात्मकोधर्मः॥ व्यवहारेणतत्साधनार्थंदेवेंद्रनरेंद्रादिवंद्यपदेधरती
त्युत्तमक्षमामार्दवार्जवसत्यशौचसंयमतपस्त्यागाकिंचन्यब्रह्मचर्यलक्षणोदशप्रकारोधर्मः
द्वादशानुप्रेक्षाःकथ्यंते॥ अध्रुवाशरणसंसारैकत्वान्यत्वाशुच्यास्रवसंवरनिर्जरालोकदुर्लभबो
धिधर्मानुचिंतनमनुप्रेक्षाः॥ ताश्चकथ्यंते॥ तद्यथा॥ द्रव्यार्थिकनयेनटंकोत्कीर्णज्ञायकैकस्वभावत्वे
नाविनश्वरस्वभावनिजपरमात्मद्रव्यादन्यद्भिन्नंयज्जीवसंबंधेअशुद्धनिश्चयनयेनरागादिविभा
वभावकर्मअनुपचरितासद्भूतव्यवहाराद्द्रव्यकर्मरूपंच॥ तथैवतत्स्वस्वामिसंबंधेनगृहीतंयच्चेतनं
वनितादिकंअचेतनंसुवर्णादिकंतदुभयमिश्रंचेत्युक्तलक्षणंतत्सर्वमध्रुवमितिभावयितव्यंतद्भा

वनासहितपुरुषस्यतेषांवियोगेपिसत्युच्छिष्टेष्विवममत्वंनभवति॥तत्रममत्वाभावाद्विनश्वरान्निजपरमा
त्मानमेवभेदाभेदरत्नत्रयभावनाभावयति॥यादृशमविनश्वरमात्मानंभावयतितादृशमेवाक्षयानंतसु
खस्वभावमुक्तात्मानंप्राप्नोतीतिअध्रुवानुप्रेक्षागता॥अथनिश्चयरत्नत्रयपरिणतंस्वशुद्धात्मद्रव्यंतद्ब
हिरंगसहकारिकारणभूतंपंचपरमेष्ठ्याराधनंचशरणं॥तस्माद्बहिर्भूतायेदेवेन्द्रचक्रवर्त्तिसुभटकोटि
भटपुत्रादिचेतना॥गिरिदुर्गभूमिविवरमणिमंत्राज्ञाप्रासादौषधादयः॥पुनरचेतनास्तदुभयात्मकामिश्रा
श्चमरणकालादौमहाटव्यांव्याघ्रगृहीतमृगबालकस्येवमहासमुद्रेपोतच्युतपक्षिणइवशरणं
नभवंतीतिविज्ञेयं॥तद्विज्ञायभोगाकांक्षारूपनिदानबंधादिनिरालंबनेस्वसंवित्तिसमुत्पन्नसुखामृतसा
रालंबनेस्वशुद्धात्मन्येवावलंबनंकृत्वाभावनांकरोति॥यादृशंशरणभूतमात्मानंभावयतितादृशमेवसर्वका
लशरणभूतं॥शरणागतवज्रपंजरसदृशंनिजशुद्धात्मानंप्राप्नोतीतिअशरणानुप्रेक्षाव्याख्यानं॥२॥अथशु
द्धात्मद्रव्यादितराणिसपूर्वापूर्वमिश्रपुद्गलद्रव्याणिज्ञानावरणादिद्रव्यकर्मस्वरूपाणिशरीरपोषणार्थ

द्रव्यसं० ५६

पुनर्यानादिपंचेंद्रियविषयरूपेणाऽनंतवारान् गृहीत्वा मुक्तानि ॥ इतिद्रव्यसंसारः स्वशुद्धात्मद्रव्यसंवि
त्तेः सहजशुद्धलोकाकाशप्रमितासंख्येयप्रदेशाभिन्ना ये लोकक्षेत्रप्रदेशास्तत्रैकैकप्रदेशव्याप्या
नंतवारान् यत्र न याता न मृता अयं जीवः स कोपि प्रदेशो नास्तीति क्षेत्रसंसारः ॥ स्वशुद्धात्मानुभूतिरूपनिर्वि
कल्पसमाधिकालं विहाय प्रत्येकं दशकोटाकोटिसागरोपमप्रमितोत्सर्पिण्यवसर्पिण्येकैकसमये नाना
नापरावर्तनकालेनानंतवारान् अयं जीवो यत्र न यातो न मृतः स समयो नास्तीति कालसंसारः ॥ अभेद
रत्नत्रयात्मकसमाधिबलेन सिद्धगतौ स्वात्मोपलब्धिलक्षणसिद्धपर्यायरूपेण योऽसावुत्पादो भवस्तं
विहाय नारकतिर्यग्मनुष्यभवेषु तथैव देवभवेषु च निश्चयरत्नत्रयभावनारहितभोगाकांक्षानिदानपूर्व
कद्रव्यतपश्चरणरूपजिनदीक्षाबलेन नवग्रैवेयकपर्यंत ॥ [illegible]
[illegible] इतिगाथाकथितपदानितथागमनिषिद्धान्य
पदानि च त्यक्त्वा भवविध्वंसकनिजशुद्धात्मभावनारहितो भवोत्पादकमिथ्यात्वरागादिभावनासहि

तस्यसन्नपंजीवाऽनंतवारान्जीवित्वामृत्वाभवःसंसारोत्तरात्य ॥ अथभावसंसारःकथ्यते ॥ त
ध्यणा ॥ सर्वजघन्यप्रकृतिबंधप्रदेशबंधनिमित्तानिसर्वजघन्यमनोवचनकायपरिस्पंदरूपाणिश्रेण्य
संख्येयभागप्रमितानिचतुःस्थानपतितानिसर्वजघन्ययोगस्थानानिभवंतितथैवसर्वोत्कृष्टप्रकृतिबंध
प्रदेशबंधनिमित्तानिसर्वोत्कृष्टमनोवचनकायव्यापाररूपाणितद्योगश्रेण्यसंख्येयभागप्रमितानि
चतुःस्थानपतितानिसर्वोत्कृष्टयोगस्थानानिचभवंति ॥ तथैवसर्वजघन्यस्थितिबंधनिमित्तानिसर्व
जघन्यकषायाध्यवसायस्थानानि ॥ तान्यप्यसंख्येयलोकप्रमितानिषट्स्थानपतितानिचभवंति ॥ त
थैवचसर्वोत्कृष्टस्थितिबंधनिमित्तानिसर्वोत्कृष्टकषायाध्यवसायस्थानानितान्यप्यसंख्येयलोकप्र
मितानिषट्स्थानपतितानिचभवंति ॥ तथैवसर्वजघन्यानुभागबंधनिमित्तानिसर्वजघन्यानुभागाध्य
वसायस्थानानि ॥ तान्यप्यसंख्येयलोकप्रमितानिषट्स्थानपतितानिचभवंतितथैवचसर्वोत्कृष्टानु
भागबंधनिमित्तानिसर्वोत्कृष्टानुभागाध्यवसायस्थानानि ॥ तान्यप्यसंख्येयलोकप्रमितानिषट्

स्थानपतितानि च विक्षेपाणि च। तेनैव प्रकारेण स्वकीयस्वकीयजघन्योत्कृष्टयोर्मध्ये तारतम्येन मध्यमानि
च भवंति॥ तथैव जघन्यादुत्कृष्टपर्यंतानि ज्ञानावरणादिमूलोत्तरप्रकृतीनां स्थितिबंधस्थानानि च तानि
सर्वाणि परमागमकथितानुसारेणानंतवारान् भ्रमितान्यनेन जीवेन परं किंतु पूर्वोक्तसमस्तप्रकृतिबंधा
दीनां सद्भावविनाशकारणानि विशुद्धज्ञानदर्शनस्वभावनिजपरमात्मतत्त्वसम्यक्श्रद्धानज्ञानानुचरण
रूपाणि यानि सम्यग्दर्शनज्ञानचारित्राणि तान्येव न लब्धानीति भावसंसारः॥५॥ एवं पूर्वोक्तप्रकारे
ण द्रव्यक्षेत्रकालभवभावरूपं पंचप्रकारसंसारं भावयतो॥ ऽस्य जीवस्य संसारातीतस्वशुद्धात्मसंवि
त्तिविनाशकेषु संसारवृद्धिकारणेषु च मिथ्यात्वाविरतिप्रमादकषाययोगेषु परिणामो न जायते॥ किंतु
संसारातीतसुखास्वादे रतो भूत्वा स्वशुद्धात्मसंवित्तिबलेन संसारविनाशकनिजनिरंजनपरमात्मन्ये
व भावनां करोति ततश्च यादृशमेव परमात्मानं भावयति तादृशमेव लब्ध्वा संसारविलक्षणे मोक्षेऽनं
तकालं तिष्ठतीति॥ अयं तु विशेषः॥ नित्यनिगोदजीवान् विहाय पंचप्रकारसंसारव्याख्यानं ज्ञातव्यं॥ क

द्विति चेत् ॥ नित्यनिगोदजीवानां कालत्रयेपि त्रसत्वं नास्तीति ॥ तथा चोक्तं ॥ अत्थि अणंता जीवा जेहिं
ण पत्तो तसाण परिणामो ॥ भावकलंकसुपउरा ॥ णिगोदवासं ण मुंचंति ॥ ५४ ॥ अनुपद्धितीय ॥ अनादि
मिथ्यादृष्टयोपि भरतपुत्रास्त्रयोविंशत्यधिकनवशतपरमाणा ॥ ९ ॥ ते अपि नित्यनिगोदवासिनः क्ष
पितकर्माणि इन्द्रगोपाः संजातास्तेषां च पुंजो भूतानामुपरि भरतहस्तिना पादो दत्तस्ततस्ते मृत्वापि व
र्द्धनकुमाराद्या भरतपुत्रा जातास्ते च केनापि वदत्यपि सहनवदंति ॥ ततो भरतेन समवसरणे भगवान् पृष्टो ॥
भगवता च प्राक्तनं वृत्तांतं कथितं तत् श्रुत्वा ते तपो गृहीत्वा क्षणात् स्तोककालेन मोक्षं गताः ॥
आचाराराधनाटिप्पणके कथितमास्ते ॥ ७ ॥ इति संसारानुप्रेक्षा गता ॥ अथैकत्वानुप्रेक्षा कथ्यते
तद्यथा ॥ निश्चयरत्नत्रयलक्षणैकत्वभावनापरिणतस्य जीवस्य निश्चयनयेन सहजानंतसुखाद्य
नंतगुणाधारभूतं केवलज्ञानमेवैकं सहजं शरीरं ॥ शरीरं कोर्थः स्वरूपं न च सप्तधातुमयौदारिकशरी
रं तथैवार्तरौद्रध्यानविलक्षणपरमसामायिकलक्षणैकत्वभावनापरिणतनिजात्मतत्त्वमेवै

द्रव्यसं०
५०

केसहायास्त्वेतपरमहितसकारी परमोवधुर्न च विनश्वरहितकारी पुत्रकलत्रगोत्रादिः तेनैव प्रकारेण परमोप
न्यासंयमलक्षणो वा स्वभावनासहित स्वशुद्धात्मपदार्थ एकस्वाविनश्वरहितकारी परमार्थः न च सुवर्णा
द्यर्थः तथैव निर्विकल्पसमाधिसमुत्पन्ननिर्विकारपरमानंदैकलक्षणानाकुलत्वस्वभावात्मसुख
मेवैकं सुखं न चाकुलत्वोत्पादकेंद्रियसुखमिति कस्मादिति चेत् एवं पुनः सुवर्णाद्यर्थेंद्रियसुखादिकं जीव
स्य निश्चयेन निराकृतमिति चेत्। यतो मरणकाले जीव एक एव भवांतरं गच्छति न च देहादीनि तथैव
वरोगग्रस्तकालविषयक बायादि धर्मेन रहित स्वशुद्धात्मक सहायो भवति तदपि कथमिति चेत् यदि
चरमदेहो भवति तर्हि केवलज्ञानादिव्यक्तिरूपं मोक्षं प्रापयतीत्यर्थः अचरमदेहस्य तु संसारस्थितिं स्तो
कं कृत्वा देवेन्द्राद्यभ्युदयसुखं दत्वा च पश्चात्पारंपर्येण मोक्षं प्रापयतीत्यर्थः तथा चोक्तं सग्गं तवेण स
व्वो विय पावए किंतु झाणजोएण जो पावइ सो पावइ परभवे सासयं सोक्खं ५५ एवमेकत्वभावनाफलं ज्ञा
त्वा निरंतरं निजशुद्धात्मैकभावना कर्तव्या इति एकत्वानुप्रेक्षा गता ४ अथान्यत्वानुप्रेक्षां कथयति

तथाहि॥ पूर्वोक्तानि यानि देहबंधुजनसुवर्णार्थेन्द्रियसुखादीनि कर्माधीनत्वेन विनश्वराणि तथैव हेय
भूतानि तानि सर्वाणि टंकोत्कीर्णज्ञायकैकस्वभावत्वेन नित्यात्॥ सर्वप्रकारोपादेयभूतान्निर्विकारपरमचैत
न्यचिच्चमत्कारस्वभावान्निजपरमात्मपदार्थात्॥ निश्चयनयेनान्यानि भिन्नानि तेभ्यः पुनरात्माप्यन्यो भिन्न
इति॥ अयमत्र भावः एकत्वानुप्रेक्षायामेकोऽहमित्यादि विधिरूपेण व्याख्यानं॥ अन्यत्वानुप्रेक्षायां तु देहा
दयो मत्सकाशादन्ये मदीया न भवंतीति निषेधरूपेणेति॥ एकत्वान्यत्वानुप्रेक्षायां विधिनिषेधरूप एव विशेषस्ता
त्पर्यं तदेव॥ इत्यन्यत्वानुप्रेक्षा समाप्ता॥ ५॥ अतः परमशुचित्वानुप्रेक्षा कथ्यते। तद्यथा सर्वाशुचिशुक्र
शोणितकारणोत्पन्नत्वात्तथैव वसासृग्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः स्युक्ताशुचिसप्तधातुमय
त्वेन। तथा नासिकादिनवरंध्रद्वारैरपि स्वरूपेणाशुचित्वात्तथैव मूत्रपुरीषाद्यशुचिमलानामुत्पत्तिस्था
नत्वाच्चाशुचिरयं देहः॥ न केवलमशुचिकारणत्वेनाशुचिः स्वरूपेणाशुच्युत्पादकत्वेन चाशुचिः। शुचि
गंधमाल्यवस्त्रादीनामशुचित्वोत्पादकत्वाच्चाशुचिः॥ इदानीं शुचित्वं कथ्यते॥ सहजशुद्धकेवलज्ञा

नादिगुणानामाधारभूतत्वात्॥ स्वयंनिश्चयेनशुचिरूपत्वाच्चपरमात्मैवशुचिः॥ जीवोबम्हाजीवम्हिचेव
चरियाहविज्जजोजदिणो॥ तंजाणबंभचेरं॥ विमुक्कपरदेहभत्तिस्स॥ ५६॥ इतिगाथाकथितनिर्मलब्रह्मच
र्यंचात्रैवनिजपरमात्मनिस्थितानामेवलभ्यतेतथैवब्रह्मचारीसदाशुचिरितिवचनात्तथाविधब्रह्मचारि
णामेवशुचित्वंनचकामक्रोधादि॥ रतानांजलस्नानादिशौचेपितथैवच॥ ॥ जन्मनाजायतेशूद्रः
क्रियायाद्विजउच्यते॥ श्रुतेनश्रोत्रियोज्ञेयो ब्रह्मचर्येणब्राह्मणः॥ इतिवचनात्तथैवनिश्चयशुद्धात्मा
महात्मा॥ तथाचोक्तं॥ नारायणेनयुधिष्ठिरंप्रतिविशुद्धात्मनदीस्नानमेवपरमशुचित्वकारणंनचलौ
किकगंगादितीर्थस्नानादिकं॥ ॥ आत्मानदीसंयमतोयपूर्णा॥ सत्यावहाशीलतटादयोर्मिः॥ तत्रा
भिषेकंकुरुपाण्डुपुत्रनवारिणाशुद्ध्यतिचान्तरात्मा॥ इत्यशुचित्वानुप्रेक्षागता॥ ॥ अतऊर्ध्वमास्रवानुप्रे
क्षाकथ्यते॥ समुद्रेसच्छिद्रपात्रवदयंजीवइन्द्रियाद्यास्रवैः संसारसागरेपततीति॥ वार्तिकं॥ अतीन्द्रिय
शुद्धात्मसंवित्तिविलक्षणानिस्पर्शनरसनघ्राणचक्षुःश्रोत्राणीन्द्रियाणिभण्यन्ते॥ परमात्मपरममूर्तिपर

मात्मस्वभावस्य क्षोभोत्पादकाः क्रोधमानमायालोभकषाया अभिधीयंते। रागादिविकल्पनिवृत्ति
रूपायाः शुद्धात्मानुभूतेः प्रतिकूलानि हिंसानृतस्तेयाब्रह्मपरिग्रहप्रवृत्तिरूपाणि पंच अव्रतानि। निः
क्रियनिर्विकल्पशुद्धात्मतत्त्वविपरीता मनोवचनकायव्यापाररूपा परमागमोक्ता सम्यक्त्वक्रिया मिथ्या
त्वक्रिया इत्यादि पंचविंशति क्रिया उच्यंते। इंद्रियकषायाव्रतक्रियारूपास्रवाणां स्वरूपं ज्ञातव्यं।
यथा समुद्रेऽनेकरत्नभांडपूर्णस्य सच्छिद्रपोतस्य जलप्रवेशे सति पातो भवति न च वेलापत्तनं प्राप्नोति। तथा
सम्यग्दर्शनज्ञानचारित्रलक्षणामूल्यरत्नभांडपूर्णजीवपोतस्य पूर्वोक्तास्रवद्वारैः कर्मजलप्रवेशे
सति संसारसमुद्रे पातो भवति न च केवलज्ञानाव्याबाधसुखाद्यनंतगुणरत्नपूर्णमुक्तिवेलापत्तनं प्रा
प्नोतीति। एवमास्रवगतदोषानुचिंतनमास्रवानुप्रेक्षा ज्ञातव्येति ॥७॥ अथ संवरानुप्रेक्षा कथ्यते। त
स्यैव जलपात्रस्य छिद्रस्य झंपने सति जलप्रवेशाभावे निर्विघ्नेन वेलापत्तनं प्राप्नोति। तथा जीवजल
पात्रे निजशुद्धात्मानुभूतिबलेन इंद्रियाद्यास्रवच्छिद्राणां झंपने सति कर्मजलप्रवेशाभावे निर्विघ्नेन के

द्र०स०

५१

यनंतगुणरत्नपूर्णमुक्तिवेलापत्तनं प्राप्नोतीति ॥ एवं संवरगुणानुचिंतनसंवरानुप्रेक्षा ज्ञातव्येति ॥ ८ ॥
[illegible] ॥ यथा कोऽप्यजीर्णदोषेण मलसंचये जाते सत्याहारं त्यक्त्वा किमपि हरीतक्या
दिकं मलपाचकमग्निदीपनं चौषधं गृह्णाति तेन च मलपाकेन मलानां पतनं गलनं निर्जरणं सति सुखी भ
वति ॥ तथायं भव्यजीवोऽप्यजीर्णजनकाहारस्थानीयमिथ्यात्वरागाद्यज्ञानभावेन कर्ममलसंचये सति
मिथ्यात्वरागादिकं त्यक्त्वा परमौषधस्थानीयजीवितमरणलाभालाभसुखदुःखादिसमभावनाप्रतिपाद
कं कर्ममलपाचकं च ॥ शुद्धध्यानाग्निदीपकं च जिनवचनौषधं सेवते तेन च कर्ममलानां गलनं पतनं नि
र्जरणं सति सुखी भवति किंच ॥ यथा कोऽपि धीमान् अजीर्णप्रभवदुःखं जातं तदजीर्णे गतेऽपि न विस्मरति त
तश्चाजीर्णजनकाहारं परिहरति ॥ तेन च सर्वदैव सुखी भवति ॥ तथा विवेकिजनोऽप्यार्तो नरो धर्मपरो
भवति इति वचनाद् दुःखोत्पत्तिकाले ये धर्मपरिणामा जायंते तान् दुःखे गतेऽपि न विस्मरति ॥ ततश्च
निजपरमात्मानुभूतिबलेन निर्जरार्थं दृष्टश्रुतानुभूतभोगाकांक्षादिविभावपरिणामत्यागरूपैः संवे

गवैराग्यपरिणामैवर्त्तितव्यमिति॥ संवेगवैराग्यलक्षणं कथ्यते॥ [illegible]

[illegible]

[illegible] अनंतानंताकाशस्य बहुमध्यप्रदेशे घनोदधिघनवाततनुवाताभिधानवातत्रयवे-
ष्टितानादिनिधनावर्त्तमानिश्चलसंख्यातप्रदेशो लोकोऽस्ति तस्याकारः कथ्यते॥ अधोमुखार्द्धमुरज-
स्योपरि पूर्णमुरजस्थापिते यादृशाकारो भवति तादृशाकारोऽयं भवति तादृशाकारः॥ परं किंतु मुरजो
वृत्तो लोकस्तु चतुष्कोण इति विशेषः॥ अथवा प्रसारितपादस्य कटितटविन्यस्तहस्तस्य ऊर्द्ध्वस्थितपु-
रुषस्य यादृशाकारो भवति तादृशः॥ इदानीं तस्यैव लोकस्यायामविस्तारः कथ्यते॥ चतुर्दशरज्जुप्रमाणोत्से-
धस्तथैव दक्षिणोत्तरेण सर्वत्र सप्तरज्जुप्रमाणायामो भवति॥ पूर्वपश्चिमेन पुनरधोभागे सप्तरज्जुवि-
रः॥ ततश्चाधोभागात्क्रमहानिरूपेण हीयते॥ यावन्मध्यलोके रज्जुप्रमाणविस्तारो भवति॥ ततो मध्य-
लोकादूर्द्ध्वं क्रमवृद्ध्या वर्द्धते यावद्ब्रह्मलोकांते रज्जुपंचकविस्तारो भवति॥ ततश्चोर्द्ध्वं पुनरपि हीयते यं

द्रव्य०
५२

ब्रह्मलोकांते रज्जुप्रमाणविस्तारो भवति ॥ तस्य ब्रह्मलोकस्य मध्ये पुनरूर्ध्वलस्य मध्याधोभागाच्छिद्रकृतसोतानि द्वि
संवच्छनालिकेव चतुःकोणा त्रसनाडी भवति ॥ सा चैकरज्जुविष्कंभा चतुर्दशरज्जूत्सेधा विज्ञेया ॥ तस्याः त्व
धोभागे सप्तरज्जवोऽधोलोकसंबंधिन्यः ऊर्ध्वभागे मध्यलोकोत्सेधसंबंधिलक्षयोजनप्रमाणमेरूत्सेधः स
प्तरज्जव ऊर्ध्वलोकसंबंधिन्यः ॥ अतः परमधोलोकः कथ्यते ॥ अधोभागे मेरोराधारभूता रत्नप्रभाख्या
प्रथमपृथिवी तस्या अधोऽधः प्रत्येकमेकैकरज्जुप्रमाणमाकाशं गत्वा यथाक्रमेण शर्करावालुकापंकधूम
तमोमहातमःसंज्ञा षट्भूमयो भवंति ॥ तस्मादधोभागे रज्जुप्रमाणक्षेत्रे भूमिरहितनिगोदादिपंचस्थावरभृ
तं च तिष्ठंति ॥ रत्नप्रभादिपृथिवीनां प्रत्येकं घनोदधिघनवाततनुवातत्रयमाधारभूतं भवतीति विज्ञेयं ।
कस्यां पृथिव्यां कति नरकबिला भवंतीति ॥ प्रश्ने यथाक्रमेण कथयति ॥ तासु त्रिंशत्पंचविंशतिपंचदश
दशत्रिपंचोनैकनरकशतसहस्राणि पंच चैव यथाक्रमं ॥ ८४००००० ॥ अथ रत्नप्रभादिपृथिवीनां क्र
मेण पिंडस्य प्रमाणं कथयति ॥ पिंडस्य काठिन्यं बाहुल्यस्येति ॥ अशीतिसहस्राधिकैकलक्षं तथैव

षट्त्रिंशदष्टाविंशति चतुर्विंशति विंशति षोडशसहस्रप्रमितानि योजनानि त्रसनाल्यानि॥ तिर्यग्विस्तरस्तु च
तुर्दिशभागे॥ यद्यपि त्रसनाड्येकरज्जुप्रमाणास्तथापि त्रसरहितबहिर्भागे लोकांतप्रमाण इति॥ तथा च
तं भुवामंतस्पृगंतीनां॥ लोकांतसंबंधेत्तु च अत्र विस्तारेण॥ तिर्यग्विस्तारपर्यंतामंडत्वेन मंदरावगाहः
योजनसहस्रबाहुल्यो मध्यलोके या चित्रा पृथिवी तिष्ठति॥ तस्याधोभागे षोडशसहस्रबाहुल्यः खर
भागस्तिष्ठति॥ तस्मादप्यधश्चतुरशीतियोजनसहस्रबाहुल्यः पंकभागस्तिष्ठति॥ ततोप्यधोभागे अशी
तिसहस्रबाहुल्योऽब्बहुलभागस्तिष्ठति॥ एवं रत्नप्रभापृथ्वी त्रिभेदा ज्ञातव्या॥ तत्र खरभागे असुरकुलं
विहाय नवप्रकारभवनवासिदेवानां॥ तथैव राक्षसकुलं विहाय सप्तप्रकारव्यंतरदेवानामावासा ज्ञात
व्या इति॥ पंकभागे पुनरसुराणां राक्षसानां चेति॥ अब्बहुलभागे नारकास्तिष्ठंति॥ तत्र च भूमिकमा
सादधोधः सर्वपृथिवीषु स्वकीयबाहुल्यात् सकाशादधः उपरि च एकैकयोजनसहस्रं विहाय मध्यभा
गभूमिक्रमेण पटलानि भवंति॥ त्रयोदशैकादशनवसप्तपंचत्र्येकसंख्यानि॥ तान्येव सर्वसमुदायेन पुनरे

द्रव्यसं०

५२

कानपंचाशत्प्रमितानिपटलानि॥ पटलानिकोर्थः प्रस्ताराइंद्रकाःतभूमयइति॥ तत्ररत्नप्रभायांसीमंतसंज्ञे
प्रथमप्रस्तारेनरलोकवद्व्यक्तसंख्येययोजनविस्तारं॥ मध्यबिलंतस्येंद्रकसंज्ञा॥ तस्यचतुर्दिग्भागप्रतिदिशंपं
क्तिरूपेणाप्यसंख्येययोजनविस्ताराएकोनपंचाशद्बिलानितथैवविदिक्चतुष्टयप्रतिदिशंपंक्ति
॥तान्यप्यसंख्यातयोजनविस्तारानितेषामपिश्रेणीबद्धसंज्ञा॥ दिवि
दिगष्टांतरेषुपंक्तिरहितत्वेनपुष्पप्रकारवत्कानिचित्संख्येययोजनविस्ताराणिकानिचिदसंख्येययो
जनविस्ताराणियानितिष्ठंतितेषांप्रकीर्णकसंज्ञा॥ इतींद्रकश्रेणीबद्धप्रकीर्णकरूपेणत्रिधानरका
भवंतीत्यनेनक्रमेणप्रथमपटलव्याख्यानंविज्ञेयं॥ तथैवपूर्वोक्तैकोनपंचाशत्पटलेष्वयमेवव्याख्या
नक्रमः किंत्वष्टश्रेणीष्वेकैकपटलंप्रत्येकैकहीनेतावत्सप्तमपृथिव्यांचतुर्दिशाभागेष्वेकंबिलंतिष्ठ
रत्नप्रभादिनारकदेहोत्सेधः कथ्यते॥ प्रथमपटलेहस्तत्रयं॥ ततः क्रमवृद्ध्यावसानत्रयोदशपटलेस
प्तचापानिहस्तत्रयंमंगुलषट्कंचेति॥ ततोद्वितीयपृथिव्यादिषुचरमेंद्रकेषुद्विगुणद्विगुणोत्सेधमा

ते सप्तमपृथिव्यांचापप्रांतपंचकं भवति उपरितननरकेयउत्कृष्टोत्सेधः सोधस्तननरकेविशेषाधिकोजघन्यो
भवति तथैवपटले आयुःप्रमाणंकथ्यते प्रथमपृथिव्यांप्रथमपटलेजघन्येनदशसहस्रवर्षाणि ततःअ
गमोक्तक्रमवृद्ध्यावसानपटलेसर्वोत्कर्षेणैकसागरोपमं ततःपरंद्वितीयपृथिव्यांपूर्वक्रमेणत्रिसप्तद
शसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टजीवितं यच्चप्रथमपृथिव्यामुत्कृष्टं तद्द्वितीयायां
समयाधिकंजघन्यं तथैवपटलेषु च एवंसप्तमपृथिवीपर्यंतंज्ञातव्यं स्वशुद्धात्मसंवित्तिलक्षणानि
श्चयरत्नत्रयविलक्षणैःतीव्रमिथ्यादर्शनज्ञानचारित्रैःपरिणतानामसंज्ञिपंचेंद्रियसरटपक्षिसर्प
सिंहस्त्रीणांक्रमेणरत्नप्रभादिषट्पृथिवीषुगमनशक्तिरस्तिसप्तम्यांतुकर्मभूमिमनुष्याणांमत्स्या
णामेवकिंच यदिकोपिनिरंतरंनरकेगच्छतितदापृथिवीक्रमेणाष्टसप्तषट्पंचचतुस्त्रिद्विसंख्यवाराने
वकिंतु सप्तमनरकादागताःपुनरप्येकवारंतत्रान्यत्रवानरकेगच्छंतीतिनियमः नरकादागताजी
वाबलदेववासुदेवप्रतिवासुदेवचक्रवर्तिसंज्ञसलाकापुरुषानभवंति चतुर्थपंचमषष्ठमसप्तमनरके

न्यः समागताः क्रमेणातीर्थंकरचरमदेहभावसंयतश्रावका न भवंति। तर्हि किं भवंतिः॥ छ॥ [illegible]

[illegible] इदानीं नारकदुःखानि कथ्यंते

तथाहि॥ विशुद्धज्ञानदर्शनस्वभावनिजपरमात्मतत्त्वसम्यक्श्रद्धानज्ञानानुष्ठानभावनोत्पन्ननिर्विकारपरमा

नंदैकलक्षणसुखामृतरसास्वादरहितैः पंचेंद्रियविषयसुखास्वादलंपटैर्मिथ्यादृष्टिजीवैर्यदुपार्जितं

नरकायुर्नरकगत्यादिपापकर्म तदुदयेन नरके समुत्पद्य पृथिवीचतुष्टये तीव्रोष्णदुःखं पंचम्याः पुनरु

परिमत्रिभागे तीव्रोष्णदुःखं॥ अधोभागे तीव्रशीतदुःखं॥ षष्ठीसप्तम्योरतितीव्रशीतोत्पन्नदुःखमनुभवंति।

तथैव छेदनभेदनक्रकचविदारणयंत्रपीडनशूलारोहणादितीव्रदुःखं सहंते॥ छ॥ तथा चोक्तं॥ अच्छिणिमी

लणमेत्तं णत्थि सुहं दुक्खमेव अणुबद्धं॥ णिरये णेरइयाणं अहोणिसं पच्चमाणाणं॥ [illegible]॥ प्रथमपृ

थिवीत्रयपर्यंतमसुरोदीरितं चेति॥ एवं ज्ञात्वा नारकदुःखविनाशार्थं भेदाभेदरत्नत्रयभावना कर्तव्येति। सं

क्षेपेणाधोलोकव्याख्यानं ज्ञातव्यं॥ अतः परं तिर्यग्लोकव्याख्यानं कथ्यते॥ जंबूद्वीपादिशुभनामानो द्वीप

लवणोदादिशुभनामानः समुद्राश्च द्विगुणद्विगुणविस्तारेण पूर्वं परिवेष्ट्य वृत्ताकाराः स्वयंभूरमणपर्यंताः
तिर्यग्विस्तारेण विस्तीर्णास्तिष्ठंति यतस्तेन कारणेन तिर्यग्लोको भण्यते मध्यलोकश्च तद्यथा तेषां
द्वितृतीयोद्धारसागरोपमलोमच्छेदप्रमितअसंख्यातद्वीपसमुद्रेषु मध्ये जंबूद्वीपस्तिष्ठति स च जंबूद्वी
पलक्षितो मध्यभागस्थितमेरुपर्वतसहितो वृत्ताकारो लक्षयोजनप्रमाणस्तद्द्विगुणविष्कंभेण योज
त्ता
नलक्षद्वयप्रमाणेन वृत्याकारेण बहिर्भागे लवणसमुद्रेण वेष्टितः सोपि लवणसमुद्रस्तद्द्विगुणविस्ता
रेण योजनलक्षचतुष्टयप्रमाणेन वृत्ताकारेण बहिर्भागे धातकीखंडद्वीपेन वेष्टितः सोपि धातकीखंडद्वी
पस्तद्द्विगुणविस्तारेण योजनाष्टलक्षप्रमाणो बहिर्भागे कालोदकसमुद्रेण वेष्टितः सोपि कालोदकसमुद्रस्त
द्द्विगुणविस्तारेण षोडशयोजनलक्षप्रमाणेन वृत्ताकारेण बहिर्भागे पुष्करद्वीपेन वेष्टितः इत्यादि द्वि
गुणद्विगुणविष्कंभः स्वयंभूरमणद्वीपस्वयंभूरमणसमुद्रपर्यंतो ज्ञातव्यः यथा जंबूद्वीपलवणसमुद्रवि
ष्कंभद्वयसमुदायाद्योजनलक्षत्रयप्रमितात्सकाशाद्धातकीखंडकलक्षेणाधिकः तथैवासंख्येयद्वीप

समुद्रविष्कंभेभ्यः स्वयंभूरमणसमुद्रविष्कंभः एकलक्षेणाधिको ज्ञातव्यः॥ एवमुक्तलक्षणासंख्येयद्वीपस
मुद्रेषु व्यंतरदेवानां पर्वताद्युपरिगता आवासाः॥ अधोभूभागगतानि भवनानि॥ तथैव द्वीपसमुद्रादिगतानि पुरा
णि च परमागमोक्तभिन्नलक्षणानि॥ तथैव खरभागपंकभागस्थितप्रतराऽसंख्येयप्रमाणासंख्येयव्यं
तरदेवावासाः॥ तथैव द्वासप्ततिलक्षाधिककोटिसप्तप्रमितभवनवासिदेवसंबंधीभवनान्यकृत्रिमजिनचै
त्यालयसहितानि भवंति॥ एवं संक्षेपेण तिर्यग्लोको व्याख्यातः॥ अथ तिर्यग्लोकमध्यस्थितमनु
ष्यलोको व्याख्यायते॥ तन्मध्यस्थितजंबूद्वीपे सप्त क्षेत्राणि कथ्यंते॥ दक्षिणदिग्भागादारभ्य भरतहैमवतह
रिविदेहरम्यकहैरण्यवतैरावतसंज्ञानि सप्त क्षेत्राणि भवंति॥ क्षेत्राणि कोऽर्थः॥ वर्षा वंशा देशा जनपदा इत्यर्थः॥ ते
षां क्षेत्राणां विभागकारकाः षट्कुलपर्वताः कथ्यंते॥ दक्षिणदिग्भागमादिं कृत्वा हिमवन्महाहिमवन्निष
धनीलरुक्मिशिखरिसंज्ञा भरतादिसप्तक्षेत्राणामंतरेषु पूर्वापरायताः षट्कुलपर्वता भवंति॥ कोऽर्थः॥ वर्षधर
पर्वताः सीमापर्वता इत्यर्थः॥ तेषां पर्वतानामुपरि क्रमेण ह्रदाः कथ्यंते॥ पद्ममहापद्मतिगिंछकेसरिमहापुं

रीकपुंडरीकसंज्ञा अकृत्तिमाः षड्ह्रदा भवंति॥ ह्रदा इति केच्यते॥ सरोवराणीत्यर्थः तेभ्यः पद्मादिषड्ह्रदेभ्यः सकाशा
द्गंगाप्रमुखा यित्[?] तत्क्रमेण निर्गता याश्चतुर्दश महानद्यस्ताः कथ्यंते॥ तथाहि॥ हिमवत्पर्वतस्य पद्मनाममहाह्र
दे क्रोशावगाहे॥ क्रोशार्द्धाधिकषड्योजनप्रमाणविस्तारपूर्वतोरणद्वारेण निर्गत्य पर्वतस्योपरि पूर्वदिशाभा
गेन योजनशतपंचकं गच्छति ततो गंगाकूटसमीपे दक्षिणेन वावृत्य भूमिस्थकुंडे पतति॥ तस्माद्दक्षिण
द्वारेण निर्गत्य भरतक्षेत्रमध्यभागस्थितस्य दीर्घत्वेन पूर्वापरसमुद्रस्पर्शितो विजयार्द्धस्य गुहाद्वारेण निर्ग
त्य ततः आर्यखंडार्द्धभागे पूर्वेणावृत्य प्रथमावगाहे दशगुणेन गव्यूतिपंचकावगाहेन तथैव प्रथ
मविष्कंभापेक्षया दशगुणेन योजनार्द्धसहितद्विषष्टियोजनप्रमाणविस्तारेण च पूर्वसमुद्रं प्रविष्टा गं
गा॥ तथा गंगावत्सिंधुरपि तस्मादेव हिमवत्पर्वतस्य पद्मह्रदात्पर्वतस्योपरि पश्चिमद्वारेण निर्गत्य पश्चा
द्दक्षिणदिग्भागेन पतित्वा विजयार्द्धगुहाद्वारेण निर्गत्य आर्यखंडार्द्धभागे पश्चिमेनावृत्य पश्चिमसमुद्रं प्रविष्टे
ति॥ एवं दक्षिणदिग्भागे समागते गंगासिंधुभ्यां पूर्वापरायतेन विजयार्द्धपर्वतेन च षट्खंडीकृतं भरतक्षे

त्रं॥ अथमहाहिमवतपर्वतस्यमहापद्मह्रदाद्दक्षिणविभागेनहैमवतक्षेत्रमध्येसमागत्यतत्रस्थनाभिगि
रिपर्वतंयोजनार्द्धेनास्पृष्ट्वातोतस्यैवार्द्धप्रदक्षिणांकृत्वारोहितपूर्वसमुद्रंगता॥ तथैवहिमवत्पर्वतस्थित
पद्मह्रदादुत्तरेणागत्यतमेवनाभिगिरिंयोजनार्द्धेनास्पृष्ट्वातोतस्यैवार्द्धप्रदक्षिणांकृत्वारोहितास्यापश्चि
मसमुद्रंगता॥ इतिरोहिद्रोहितास्यासंज्ञंनदीद्वयंहैमवतसंज्ञजघन्यभोगभूमिक्षेत्रेज्ञातव्यं॥ ३॥ अथ
निषधपर्वतातिगिंछनामह्रदाद्दक्षिणेनागत्यनाभिगिरिपर्वतंयोजनार्द्धेनस्पृष्ट्वातोतस्यैवार्द्धप्रदक्षिणां
कृत्वाहरित्पूर्वसमुद्रंगता॥ तथैवमहाहिमवत्पर्वतस्यमहापद्मनामह्रदात् उत्तरभागेनागत्यतमेवना
भिगिरियोजनार्द्धेनास्पृष्ट्वातोतस्यैवार्द्धप्रदक्षिणांकृत्वाहरिकांत न नामनदीपश्चिमसमुद्रंगता॥ इतिहरि
द्धरिकांतासंज्ञनदीद्वयंहरिसंज्ञमध्यमभोगभूमिक्षेत्रेविज्ञेयं॥ अथनीलपर्वतस्थितकेसरीनामह्रदाद्द
क्षिणेनागत्योत्तरकुरुसंज्ञोत्कृष्टभोगभूमिक्षेत्रमध्येनगत्वामेरुसमीपेगजदंतपर्वतंभित्वाचप्रदक्षिणे
नयोजनार्द्धेनमेरुंविहायपूर्वं॥ भद्रशालवनस्यमध्येनपूर्वविदेहस्यचमध्येनसीतानामनदीपूर्वसमुद्रं

तथैवनिषिधपर्वतस्योपरितिगिंछनामद्रहादुत्तरदिग्भागेनागत्यदेवकुरुसंज्ञोत्तमभोगभूमिक्षेत्रमध्येनगा
त्वामेरुसमीपेगजदंतपर्वतंभित्वाचप्रदक्षिणेनयोजनार्द्धेनमेरुं विहायपश्चिमभद्रसालवनस्यमध्ये
नपश्चिमविदेहस्यमध्येनसीतोदापश्चिमसमुद्रंगता॥ एवंसीतासीतोदासंज्ञेनदीद्वयंविदेहाभिधानक
र्मभूमिक्षेत्रेज्ञातव्यं॥ ॥ अथयत्पूर्वंगंगासिंधुनदीद्वयस्यविस्तारावगाहप्रमाणंभणितं॥ तदेवक्षेत्रे
क्षेत्रेनदीयुगलप्रतिविदेहपर्यंतंद्विगुणंज्ञातव्यं॥ ॥ अथगंगाचतुर्दशसहस्रपरिवारनदीसहितासिं
धुरपितद्वद्गुणासंख्यानं॥ रोहिद्रोहितास्याद्वयंततोपिद्विगुणसंख्यानं॥ हरिद्धरिकांताद्वयमितितथाथ
द्विशत्याधिकयोजनशतपंचकमेकोनविंशतिभागीकृतैकयोजनस्यभागषट्कंच॥ यद्दक्षिणोत्तरेणकर्म
भूमेर्नामसंज्ञंभरतक्षेत्रस्यविष्कंभप्रमाणंतद्विगुणंहिमवत्पर्वते॥ तस्माद्विगुणंहैमवत[illegible]क्षेत्रे॥ इत्यादि
द्विगुणंद्विगुणंविदेहपर्यंतंज्ञातव्यं॥ तथापद्मद्रहेयोजनसहस्रायामस्तदर्द्धप्रमाणविष्कंभोदशयोजनाव
गाहोयोजनैकप्रमाणपद्मविष्कंभस्य॥ तस्मान्महापद्मेद्विगुणस्तस्मादपितिगिंछेद्विगुणइति॥ अथयथा

भरतेहिमवत्पर्वतान्निर्गतंगंगासिंधुद्वयंतथोत्तरेकर्मभूमिसंज्ञैरावतक्षेत्रेशिखरिपर्वतान्निर्गतंरक्तारक्तोदान
दीद्वयं॥यथाचहैमवतसंज्ञजघन्यभोगभूमिक्षेत्रेहिमवन्महाहिमवन्नामपर्वतद्वयात्क्रमेणनिर्गतंरोहिद्रोहित
स्यानदीद्वयं॥तथोत्तरेहैरण्यवतसंज्ञजघन्यभोगभूमिक्षेत्रेशिखरिरुक्मिसंज्ञपर्वतद्वयात्क्रमेणनिर्गतंसुव
र्णकूलारूप्यकूलानदीद्वयं॥यथैवहरिसंज्ञमध्यमभोगभूमिक्षेत्रेनिषधमहाहिमवन्नामपर्वतद्वयात्क्रमेण
निर्गतं॥हरिद्धरिकांतानदीद्वयं॥तथोत्तरेरम्यकसंज्ञकमध्यमभोगभूमिक्षेत्रेरुक्मिनीलनामपर्वतद्वयात्क्र
मेणनिर्गतंनारीनरकांतानदीद्वयमितिविज्ञेयं॥सुखमसुखमादिषट्कालसंबंधीपरमागमोक्तायुरुत्सेधादि
सहितदशसागरोपमकोटीकोटिप्रमितावसर्पिणीतथोत्सर्पिणीच॥यथाभरतेचवर्त्ततेतथैरावतेच
अयंतुविशेषः॥भरतैरावतम्लेच्छखंडविजयार्द्धनगेषुचचतुर्थःसमयाद्यंततुल्यकालोस्तिनापरः॥किं
वहुनायथाषद्वीपार्धएकभागोज्ञातद्वितीयभागस्तथैवज्ञातव्यः॥तथैवजंबूद्वीपस्यक्षेत्रपर्वतनदीद्रहादी
नांयेदक्षिणभागव्याख्यानेतउत्तरेपिविज्ञेयं॥अथदेहममत्वभूतमिथ्यात्वरागादिविभावरहितकेवल

ज्ञानदर्शनसुखाद्यनंतगुणसहितेचनिजपरमात्मद्रव्येयासम्यग्दर्शनज्ञानचारित्रभावनातयाकृत्वावि
गतदेहादेहरहितासंतोमुनयःप्रचुरेणयत्रमोक्षंगच्छंतिसविदेहोभण्यते॥ तस्यजंबूद्वीपस्यमध्यवर्त्तिनःकि
मपिविवरणंक्रियते॥ तद्यथा॥ नवनवतिसहस्रयोजनोत्सेधः एकसहस्रावगाहः॥ आदौभूमितलेदशयोज
नसहस्रप्रवृत्तविस्तारउपर्युपरिपुनरेकादशांशहानिक्रमेणहीयमानत्वेसतिमस्तकेयोजनसहस्रविस्तारः
आगमोक्ताकृत्रिमचैत्यालयदेववनदेवावासाद्यागमकथितानेकाश्चर्यसहितोविदेहक्षेत्रमध्येमहामेरु
पर्वतोस्ति॥ सएवगजोजातस्तस्मान्मेरुगजात्सकाशादुत्तरमुखेदंतद्वयाकारेणयन्निर्गतंपर्वतद्वयंतस्य
गजदंतद्वयसंज्ञेति॥ सेष्यात्तरभागेनीलपर्वतेलग्नंतिष्ठति तयोर्मध्येयत्त्रिकोणाकारक्षेत्रमुत्तमभोग
भूमिरूपंतस्योत्तरकुरुसंज्ञातस्यचमध्येमेरोरीशानदिग्भागेशीतानीलपर्वतयोर्मध्येपरमागमवर्णिता
नाद्यकृत्रिमपार्थिवोजंबूवृक्षस्तिष्ठति॥ तस्याश्चशीतायाउभयतटेयमलगिरिसंज्ञपर्वतद्वयंविज्ञेयं।
तस्मात्पर्वतद्वयाद्दक्षिणदिग्भागेकियंतमध्वानंगत्वाशीतानदीमध्येअंतरांतरेणपद्मादिह्रदपंचक

द्रव्यसं०
६५

णाविस्तारस्येंद्रकसंज्ञातस्य चतुर्दिग्भागेष्वसंख्येययोजनविस्ताराणि पंक्तिरूपेण सर्वद्वीपसमुद्रोपरि प्रति
दिशायां नि[illegible] द्विषष्टिविमानानि तिष्ठंति तेषां श्रेणीबद्धसंज्ञा यानि च पंक्तिरहितपुष्पप्रकरव
द्विदिक्चतुष्टये तिष्ठंति तेषामसंख्यासंख्येययोजनविस्ताराणां प्रकीर्णकसंज्ञेति समुदायेन पटलसं
ज्ञां ज्ञातव्यं तत्र पूर्वापरदक्षिणश्रेणित्रयविमानानि तन्मध्ये विदिक्द्वयविमानानि च सौधर्मसंबं
धी भवंति शेषविदिग्द्वयविमानानि तथोत्तरश्रेणी विमानानि च पुनरीशानसंबंधीनि अस्मात्पट
लादुपरि जिनदृष्टमानेनासंख्येयान्यसंख्येयानि योजनानि गत्वा तेनैव क्रमेण द्वितीयादिपटलानि भ
वंति अयं तु विशेषः श्रेणीचतुष्टयपटले पटले प्रतिदिशमेकैकविमानं हीयते यावत्सर्वानुत्तरपटले
चतुर्दिक्ष्वेकैकविमानं तिष्ठतीति एते सौधर्मादिविमानाश्चतुरशीतिलक्षसप्तनवतिसहस्रत्रयोवि
शतिप्रमिता अकृत्रिमसुवर्णमयरत्नमयजिनगृहमंडिता ज्ञातव्या इति अथ देवानामायुःप्रमाणं क
थ्यते भवनवासिषु जघन्येन दशवर्षसहस्राणि उत्कर्षेण पुनः असुरकुमारेषु सागरोपमं नागकुमारेषु

पल्यत्रयं ॥ सुपर्णेषु सार्द्धद्वयं ॥ द्वीपकुमारेषु द्वयं ॥ शेषकुलषट्के सार्द्धपल्यमिति ॥ व्यंतरेषु जघन्येन दशवर्षसहस्रं
ति ॥ उत्कर्षेण पल्यमधिकमिति ज्योतिष्कदेवेषु जघन्येन पल्याष्टमभागः ॥ उत्कर्षेण चन्द्रे लक्षवर्षाधिकं
पल्यं ॥ सूर्ये सहस्राधिकं पल्यं ॥ शेषं ज्योतिष्कदेवतानामागमानुसारेणेति ॥ ७ ॥ अथ सौधर्मैशानयोर्जघन्येन
साधिकपल्यं ॥ उत्कर्षेण साधिकसागरोपमद्वयं सनत्कुमारमाहेन्द्रयोः साधिकसागरोपमसप्तकं ॥ ब्रह्मब्रह्मो
त्तरयोः साधिकसागरोपमदशकं ॥ लांतवकापिष्ठयोः साधिकानि चतुर्दशसागरोपमाणि ॥ शुक्रमहाशु
क्रयोः षोडश साधिकानि ॥ सतारसहस्रारयोरष्टादश साधिकानि ॥ आनतप्राणतयोर्विंशतिरेव ॥ आरणा
च्युतयोर्द्वाविंशतिरिति ॥ अतः परं अच्युतकल्पादूर्ध्ववासिनां नवग्रैवेयकेषु द्वाविंशतिसागरोपम
प्रमाणादूर्ध्वमेकैकसागरोपमं वर्द्धमानं सत्सु एकत्रिंशत्सागरोपमाणि ग्रैवेयके भवंति ॥ नवानुदिशपटले द्वा
त्रिंशत्पंचानुत्तरपटले त्रयस्त्रिंशत्स्वोत्कृष्टायुःप्रमाणं ज्ञातव्यं ॥ तदायुः सौधर्मादिस्वर्गेषु यदुत्कृष्टं
तत्तस्मिन्परस्मिन्स्वर्गे सर्वार्थसिद्धिं विहाय जघन्यं चेति ॥ गाथाविशेषव्याख्यानं त्रिलोकसारादौ बोद्ध

यं॥ ७॥ किंच॥ आदिमध्यांतमुक्तशुद्धबुद्धैकस्वभावपरमात्मनि सकलविमलकेवलज्ञानलोचनेना
दर्शे बिंबानिवत् शुद्धात्मादिपदार्था लोक्यंते दृश्यंते ज्ञायंते परिछिद्यंते यस्तेन कारणेन स एव निश्चयलो
कः तस्मिन्निश्चयलोकाख्ये स्वकीयशुद्धपरमात्मनि अवलोकनं वा स निश्चयलोकः॥ ७॥ सस्साउ
यत्तिलेस्सा इंदियवसदाय अट्टरुद्दाणि॥ णाणं च दुप्पउत्तं मोहो पावप्पदो होदि॥ २॥ इति गाथोदित
विभावपरिणामादिकस्य समस्तशुभाशुभसंकल्पविकल्पत्यागेन निजशुद्धात्मभावनोत्पन्नपरमा
ह्लादैकसुखामृतरसास्वादानुभवनेन च या भावना सैव निश्चयलोकानुप्रेक्षा॥ शेषा पुनर्व्यवहारे
णेति॥ एवं संक्षेपेण लोकानुप्रेक्षाव्याख्यानं समाप्तं॥ ७॥ [faint] अथ बोधिदुर्लभानुप्रेक्षां कथयति॥ ८॥ तद्यथा॥ एकें
द्रियविकलेंद्रियपंचेंद्रियसंज्ञी पर्याप्तमनुष्यदेशकुलरूपेंद्रियपटुत्वनिर्व्याध्यायुष्कवरबुद्धिसद्धर्मश्रवणग्र
हणधारणश्रद्धानसंयमविषयसुखव्यावर्तनक्रोधादिकषायनिवर्तनेषु परंपरं दुर्लभेषु कथंचित्
तालीयकन्यायेन लब्धेष्वपि तल्लब्धिरूपबोधेः फलभूतस्वशुद्धात्मसंवित्त्यात्मकनिर्मलधर्मध्या

नवहिभागोतस्मिंश्चारक्षेत्रेसूर्यस्यचतुरशीतिशतसंख्यामार्गाभवंति॥चंद्रस्यपंचदशैवदेव॥तत्रजंबूद्वीपाभ्यंत

रेकर्कटसंक्रांतिदिनेदक्षिणायनप्रारंभेनिषधपर्वतस्योपरिप्रथममार्गेसूर्यः प्रथमोदयंकरोति॥यच्चसूर्य

विमानस्थनिर्दोषपरमात्मनोजिनस्यसाकृत्रिमंजिनबिंबप्रत्यक्षेनदृष्ट्वाहृदयेध्यानारूढ्यानिर्मलस

म्यक्तानुरागेण॥भरतचक्रीपुष्पांजलिमुत्क्षिप्यार्घंददातीतितन्मार्गस्थितभरतक्षेत्रादित्यस्यैरावतक्षेत्रा

दित्येनसहतथापिचंद्रस्यापिचंद्रेणासहतथैवमरुणापिसहृयंतरंभवति॥तद्विशेषणागमतोविज्ञेयं॥छ

॥अथसद्दाभिसभरणिअद्दा॥असलेसमजत्थ॥अवरवरा॥रोहिणिविसहपुणा॥उसुत्ति उत्तराभद्दमासेसा

१३॥इतिगाथाकथितानिजघन्योत्कृष्टमध्यमनक्षत्राणि॥तन्मध्येकस्मिन्नक्षत्रेबुकियंतदिनानिति

सूर्यादित्यदूति॥इउरविंदोरिक्खा॥सत्तट्ठियपंचगामणखंडहिया॥अहियाहियणयणाभवंडारिक्खो॥इउरवि

अक्कसमुज्जता॥इत्यनेनगाथासूत्रेणागमकथितक्रमेणाप्यगनीयमेलापकेकृतेसतिषडधिकषष्टिपु

तत्रिंशत्संख्यादिनानिभवंति॥तस्यदिनसमूहार्द्धस्यपदार्द्धाणाभ्यंतरादक्षिणेनवहिभागोषुदिनकराग

ण्तितदादक्षिणायणसंज्ञा यदापुनः समुद्रात्सकाशाद्उत्तरेणाभ्यंतरमार्गेषु सर्पयातितदोत्तरायणसंज्ञे
ति॥ तत्रयदादक्षिणाभ्यंतरेप्रथममार्गपरिधौकर्कटसंक्रांतिदिनेदक्षिणायनप्रारंभेतिष्ठत्यादित्यस्तदाच
तुर्णवतिसहस्रपंचविंशत्यधिकपंचयोजनशतप्रमाणउत्कर्षेणादित्यविमानस्यपूर्वापरेणातपविस्ता
रोविज्ञेयः॥ तत्रपुनरष्टदशमुहूर्तोदिवसोभवति द्वादशमुहूर्ता रात्रिरिति॥ ततःक्रमेणातपहानौसत्यांमुहू
र्तद्वयस्यैकषष्टिभागीकृतस्यैकोभागोदिवसमध्येदिनंप्रतिहीयते॥ यावत्लवणसमुद्रेऽवसानमार्गेमा
घमासेमकरसंक्रांतावुत्तरायणादिवसेत्रिषष्टिसहस्राधिकषोडशयोजनप्रमाणोजघन्येनादित्यवि
मानस्यपूर्वापरेणातपविस्तारोभवति॥ तथैवद्वादशमुहूर्तोदिवसोभवति॥ अष्टादशमुहूर्तारात्रिर्भवति।
शेषविशेषव्याख्यानंलोकविभागादौविज्ञेयं॥ खलुमनुष्यक्षेत्राद्बहिर्भागेज्योतिष्कविमानास्तेषांचल
ननास्ति॥ तेचमानुषोत्तरपर्वताद्बहिर्भागेपंचाशत्सहस्राणियोजनानांगत्वावलयाकारपंक्तिक्रमेण
पूर्वक्षेत्रंपरिवेष्ट्यतिष्ठंति॥ तत्रप्रथमवलयेचतुश्चत्वारिंशदधिकशतप्रमाणाश्चंद्रास्तथादित्या।

ख्यातारांते गा तिष्ठंति॥ ततः परं योजनलक्षलक्षे गते तेनैव क्रमेण वलयं भवति॥ अयं तु विशेषः। वलयव
लयं प्रति चतुष्टयं सूर्यचतुष्टयं च वर्द्धते॥ यावत्पुष्करार्द्धबहिर्भागे वलयाष्टकमिति ततः पुष्करसमुद्रप्रवेशवेदि
कायाः सकाशात्पंचाशत्सहस्रप्रमितयोजनानि जलमध्ये प्रविश्य पूर्वं चतुश्चत्वारिंशदधिकशतप्रमा
णं प्रथमवलयं व्याख्यानं॥ तस्माद्द्विगुणसंख्यानं प्रथमवलयं भवति॥ तदनंतरं पूर्ववद्योजनलक्षे।
लक्षे गते वलयं भवति॥ चंद्रचतुष्टयस्य सूर्यचतुष्टयस्य च वृद्धिरित्य तेनैव क्रमात्स्वयंभूरमणसमुद्रबहि
र्भागवेदिकापर्यंतं ज्योतिष्कदेवानामवस्थानं बोद्धव्यं॥ ते च प्रतरासंख्येयभागप्रमिता असंख्येयज्योति
ष्कविमाना॥ अकृत्रिमसुवर्णरत्नमयजिनचैत्यालयमंडिता ज्ञातव्या॥ ॥ इति संक्षेपेण ज्योतिर्लोक
व्याख्यानं समाप्तं॥ अथानंतरमूर्द्ध्वलोकः कथ्यते॥ तद्यथा॥ सौधर्मैशानसनत्कुमारमाहेंद्रब्रह्मब्रह्मो
त्तरलांतवकापिष्ठशुक्रमहाशुक्रशतारसहस्रारानतप्राणतारणाच्युतसंज्ञाः षोडशस्वर्गाः॥ ततोपि
नवग्रैवेयकसंज्ञास्ततश्च नवानुदिशसंज्ञं नवविमानसंख्यमेकपटलं॥ ततोपि पंचानुत्तरसंज्ञं पंचवि।

मानसंख्यमेकपटलं चेत्युक्तक्रमेणोपर्युपरि वैमानिकोऽस्तीति। वार्त्तिकं संग्रहवाक्यसमुदायकथनमि
तियावत् आदिमध्यांतेषु द्वादशाष्टचतुर्योजनवृत्तविष्कंभा चत्वारिंशत्प्रमितयोजनोत्सेधा या मेरुचूलिकातिष्ठ
ति। तस्या उपरि कुरुभूमिवालाग्रांतरितं पुनः ऋजुविमानमस्ति तदादिं कृत्वा चूलिकासहितलक्षयोजनप्रमा
णामेरूत्सेधमानमर्द्धाधिकैकरज्जुप्रमाणं यदाकाशक्षेत्रं तत्पर्यंतं सौधर्मेशानसंज्ञं स्वर्गयुगलं तिष्ठति।
ततः परमर्द्धाधिकैकरज्जुपर्यंतं सनत्कुमारमाहेंद्रसंज्ञं स्वर्गयुगलं भवति। तस्मादर्द्धरज्जुप्रमाणाकाशप
र्यंतं ब्रह्मब्रह्मोत्तराभिधानं स्वर्गयुगलमस्ति। तस्मादर्द्धरज्जुपर्यंतं लांतवकापिष्ठनामस्वर्गद्वयं तिष्ठति। त
तश्चार्द्धरज्जुपर्यंतं शुक्रमहाशुक्राभिधानं स्वर्गद्वयं ज्ञातव्यं। तदनंतरमर्द्धरज्जुपर्यंतं सतारसहस्रारसंज्ञं स्व
र्गद्वयं भवति। ततोप्यर्द्धरज्जुपर्यंतमानतप्राणतनामस्वर्गयुगलं। ततः परमर्द्धरज्जुपर्यंतमाकाशं यावदारणा
च्युताभिधानस्वर्गद्वयं ज्ञातव्यमिति। तत्र प्रथमयुगलद्वये स्वकीयस्वकीयस्वर्गनामानश्चत्वार इंद्रा
मध्ययुगलचतुष्टये पुनः स्वकीयप्रथमस्वर्गाभिधान एकैकेंद्रो भवति। उपरितनयुगलद्वयेपि स्वकी

द्विगुणानिभवंति॥भरतक्षेत्रादीनिचविस्तारायामाभ्यांद्वयाःकुलपर्वताः पुनर्विस्तारेणद्वैगुण्यंनचायामंप्रति त
न्नधातकीखंडद्वीपेयथाचक्रस्यारास्तथाकाराःकुलपर्वताभवंति॥यथाचाराणांविवराणिक्षेत्राणिमध्येऽभ्यंतरे
संकीर्णानिबहिर्भागेविस्तीर्णानितथाक्षेत्राणिज्ञातव्यानि॥ ८॥ इत्थंभूतधातकीखंडद्वीपमष्टयोजनलक्षवलयवि
ष्कंभःकालोदकसमुद्रःपरिवेष्ट्यतिष्ठति॥तस्माद्बहिर्भागेयोजनलक्षाष्टकंगत्वापुष्करवरद्वीपस्यार्द्धवलयाकारेण
चतुर्दिक्षुभागेमानुषोत्तरनामपर्वतास्तिष्ठति॥तत्रपुष्करार्द्धेपिधातकीखंडवद्दक्षिणोत्तरेष्वाकारनामपर्वतद्व
यं॥पूर्वापरेणक्षुल्लकमेरुद्वयंच॥ तथैवभरतादिक्षेत्रविभागाश्चबोधव्याः॥परंकिंतुजंबूद्वीपभरतादिसंख्यापक्ष
याभरतक्षेत्रादिद्विगुणत्वेनचधातकीखंडापेक्षयाकुलपर्वतानांतुधातकीखंडकुलपर्वतापेक्षयाद्विगुणावि
ष्कंभआयामश्चउत्सेधसमानःपुनर्दक्षिणभागेविजयार्द्धपर्वतेयोजनानिपंचविंशतिः॥हिमवतिपर्वतेशतं
महाहिमवतिद्विशतंनिषधेचतुःशतं॥तथोत्तरभागेचमेरुसमीपगजदंतेषुशतपंचकं॥नदीसमीपवक्षारेषुचत्वा
रिनीलनिषधसमीपेचतच्छतंच॥ प्रोक्तपर्वतानांचमेरुंत्यक्त्वायदेवजंबूद्वीपभणितंतदेवार्द्धतृतीयद्वीपेषुचावि

ज्ञेयं॥ तथा॥नामानि च द्वीपपर्वतनदीदेशनगरादीनां तान्येव तथैव क्रोशद्योत्सेधा पंचशतधनुर्विस्तारा॥ पद्म
रागरत्नमयी वनादीनां वेदिका सर्वत्र समानेति॥ अत्रापि चक्राकारवत्पंक्तिर आराविवसंस्थानानि क्षेत्राणि
ज्ञातव्यानि॥ मानुषोत्तरपर्वताद्भ्यंतरभाग एव मनुष्यास्तिष्ठंति न च बहिर्भागे॥ तेषां च जघन्यजीवितमंतर्मु
हूर्तप्रमाणं॥ मुत्कर्षेण पल्यत्रयं॥ मध्यमध्यमविकल्पा बहवः॥ तथा तिरश्चां च॥ एवं असंख्येयद्वीपसमुद्र
विस्तीर्णतिर्यग्लोकमध्येऽर्द्धतृतीयद्वीपप्रमाणः संक्षेपेण मनुष्यलोको व्याख्यातः॥ अथात्र मानुषो
त्तरपर्वतात्सकाशाद्बहिर्भागे स्वयंभूरमणद्वीपार्द्धपरिक्षिप्य सौ नागेंद्रनामा पर्वतस्तस्मात्पूर्वभागे ये
संख्यातीता द्वीपसमुद्रास्तिष्ठंति॥ तेषु यद्यपि व्यंतरा निरंतरा इति वचनाद्व्यंतरदेवावासास्तिष्ठंति त
थापि पल्यप्रमाणायुषां तिरश्चां संबंधिनी भोगभूमिर्जघन्या इति विज्ञेयं॥ नागेंद्रपर्वताद्बहिर्भागे स्वयं
भूरमणद्वीपार्द्धे समुद्रे च पुनर्विदेहवत्सर्वदैव कर्मभूमि[illegible]श्चतुर्थकालश्च परं किंतु मनुष्या न संति॥
एवमुक्तलक्षणतिर्यग्लोकस्य तदभ्यंतरमध्यभागवर्तिनो मनुष्यलोकस्य च प्रतिपादनेन संक्षेपेण म

ध्यलोकव्याख्यानंसमाप्तं॥ ॐ॥ अत्रमनुष्यलोके द्वयर्द्धीनयात चतुष्टयंतिर्यग्लोकेतुनंदीस्वरकुंडलरुचका
भिधानद्वीपत्रयमाकृमेणद्विपंचाशत्चतुष्टयसंख्यानिचाकृत्रिमाणिस्वतंत्रजिनगृहाणिज्ञातव्यानि॥ अ
तः ऊर्द्धज्योतिर्लोकः कथ्यते॥ तद्यथा॥ चंद्रादित्यग्रहनक्षत्रप्रकीर्णकतारकाश्चेतिज्योतिष्कदेवाः
पंचविधाभवंति॥ तेषांमध्येऽस्माद्भूतेमिलाउपरिनवत्याधिकसप्तशतयोजनान्याकाशेगत्वातारकाविमा
नाःसंति॥ ततोपियोजनदशकंगत्वासूर्यविमानाः ततःपरंअसीतियोजनानिगत्वाचंद्रविमानाःत
तोपित्रैलोक्यसारकथितक्रमेणयोजनचतुष्टयंगतेअश्विन्यादिनक्षत्रविमानाः॥ तदनंतरंयोजनचतुष्ट
यंगतेबुधविमानाः॥ ततोपियोजनत्रयगतेशुक्रविमानाः॥ ततःपरंयोजनत्रयगतेबृहस्पतिविमानाः
ततोयोजनत्रयानंतरंमंगलविमानाः॥ ततोपियोजनत्रयानंतरंशनैश्चरविमानाइति॥ ॐ॥ तथाचो
क्तं॥ सत्तणउदिसयाइं॥ दससीदिचदुदुगं च तियचउक्कं॥ ताराखिससिरिक्खा॥ बुहभग्गवगुरुअंगारसणी॥ १॥ तेच
ज्योतिष्कदेवाअर्द्धतृतीयद्वीपेषुनिरंतरंमेरोःप्रदक्षिणेनपरिभ्रमणंगतिंकुर्वंतितत्रघटिकाप्रहरादि

द्रव्यसं०
६१

वसादिरूपः स्थूलव्यवहारकालसमयनिमिषादिसूक्ष्मव्यवहारकालवत्॥ यद्यप्यनाद्यनिधनेन समयघ
टिकादिविवक्षिताविकल्परहितेन कालाणुद्रव्यरूपेणानिश्चयकालेनोपादानभूतेन जन्यते तथापि
चंद्रादित्यादिज्योतिष्कदेवविमानगमनागमनेन कुंभकारनिमित्तभूतेन मृत्पिंडोपादानजनितघटइ
व व्यज्यते प्रकटीक्रियते ज्ञायते॥ तेन कारणेनोपचारेण ज्योतिष्कदेव॥ इत्यभिधीयते॥ निश्चयकालस्तु
तद्विमानगतिपरिणतेर्बहिरंगसहकारी भवति॥ कुंभकारचक्रभ्रमणस्याधस्तनशिलावदिति इदा
नीमर्द्धतृतीयद्वीपेषु चंद्रादित्यसंख्या कथ्यते॥ तथाहि॥ जंबूद्वीपे चंद्रद्वयं सूर्यद्वयं च लवणोदे चतुष्टयं
धातकीखंडद्वीपे द्वादश चंद्रादित्याश्च॥ कालोदकसमुद्रे द्विचत्वारिंशत् चंद्रआदित्याश्च॥ पुष्करा
र्द्धद्वीपे द्वासप्ततिचंद्रादित्याश्चेति॥ ० ॥ ततः परं भरतैरावतस्थितजंबूद्वीपचंद्रसूर्ययोः किमपि विवर
णं क्रियते॥ तद्यथा॥ जंबूद्वीपाभ्यंतरे योजनानामशीतिशतं॥ बहिर्भागे लवणसमुद्रसंबं
शतत्रयमितिसमुदायेन दशोत्तरयोजनशतपंचकं चारक्षेत्रं भण्यते॥ तत्रैव चंद्रादित्ययोरेकमेव तत्र भरते

भवति॥ तदनंतरंक्षेत्रंतिष्ठति॥ ततोप्यनंतरंविभंगानदीभवति॥ ततोक्षेत्रंतस्मादपिवक्षारपर्वतस्तिष्ठति॥ ततश्च
क्षेत्रं॥ ततोपिविभंगानदी॥ तदनंतरंक्षेत्रं॥ ततः परंवक्षारपर्वतोस्ति॥ ततश्चक्षेत्रं॥ ततोविभंगानदी॥ ततश्चक्षे
त्रं॥ ततोवक्षारपर्वतः॥ ततःक्षेत्रं॥ तदनंतरंपूर्वसमुद्रसमीपेयद्देवारण्यंतस्यवेदिकाचेति॥ नवाभित्तिरष्टक्षेत्राणि
ज्ञातव्यानि॥ तेषांक्रमेणनामानिकथ्यंते॥ कच्छा॥ सुकच्छा॥ महाकच्छा॥ कच्छकावती॥ आवर्ता॥ लांगलाव
र्ता॥ पुष्कला॥ पुष्कलावतीचेति॥ ७॥ इदानींक्षेत्रमध्यस्थितनगरीणांनामानिकथ्यंते॥ क्षेमा॥ क्षेमपुरी॥ अरि
ष्टा॥ रिष्टपुरी॥ खड्गा॥ मंजूषा॥ ऊषधी॥ पुंडरीकिणीचेति॥ अतऊर्ध्वंसीतायादक्षिणभागेनिषिधपर्वतादुत्तरभा
गेयान्यष्टक्षेत्राणितानिकथ्यंते॥ तद्यथा॥ पूर्वोक्तायादेवारण्यवेदिकातस्याःपश्चिमभागेक्षेत्रमस्ति॥ तदनंतरंव
क्षारपर्वतः॥ ततःपरंक्षेत्रं॥ ततोविभंगानदी॥ ततश्चक्षेत्रं॥ तस्माद्वक्षारपर्वतः॥ ततःक्षेत्रं॥ ततोविभंगानदी॥ त
तश्चक्षेत्रं॥ ततोवक्षारपर्वतः॥ ततःक्षेत्रं॥ ततोविभंगानदी॥ तदनंतरंक्षेत्रं॥ ततोवक्षारपर्वतः॥ ततःक्षेत्रं॥ ततोम
हदिशाभागेपूर्वभद्रशालवनवेदिकाभवतीति॥ नवाभित्तिसुमध्येष्टक्षेत्राणिज्ञातव्यानि॥ इदानींतेषांक्रमेणना

द्रव्यसं०

५८

मानिकथ्यंते॥वच्छा॥सुवच्छा॥महावच्छा॥वच्छकावती॥रम्या॥रम्यका॥रमणीया॥मंगलावतीचेति॥ ॥तन्मध्यस्थितनगरीणांनामानि कथ्यंते॥सुसीमा॥कुंडला॥अपराजिता॥प्रभाकरी॥अंका॥पद्मा॥शुभा॥रत्नसंचयेति॥इतिपूर्वविदेहक्षेत्रविभागव्याख्यानं समाप्तं॥ ॥अ पूर्वापरेण [illegible] ॥विंशतिसहस्रयोजनविष्कंभः पश्चिमभद्रशालवनानंतरं पश्चिमविदेहस्तिष्ठति॥तत्रनिषधपर्वतादुत्तरभागे सीतोदनद्या दक्षिणभागे यानि क्षेत्राणि तेषां विभाग उच्यते॥तथाहि॥ मेरोर्दिशा भागे या पश्चिमभद्रशालवनवेदिका तिष्ठति॥तस्याः पश्चिमक्षेत्रंभवति॥ततोदक्षिणोत्तरायतो वक्षारपर्वतस्तिष्ठति॥तदनंतरंक्षेत्रं॥ततो विभंगनदी॥ततः क्षेत्रं॥ततो वक्षारपर्वतः॥ततः परंक्षेत्रं॥ततो विभंगनदी॥ततः क्षेत्रं॥ततो वक्षारपर्वतः॥ततः परंक्षेत्रं॥ततो विभंगनदी॥ततः क्षेत्रं॥ततो वक्षारपर्वतः॥ततः क्षेत्रं॥तदनंतरं पश्चिमसमुद्रसमीपे यद्भूतारण्यवनं तिष्ठति तस्य वेदिका चेति नवभिः सीमभिः अष्टौ क्षेत्राणि भवंति॥तेषां नामानि कथ्यंते॥पद्मा॥सुपद्मा॥महापद्मा॥पद्मकावती॥शंखा॥नलिना॥कुमुदा॥सलिला चेति॥तन्मध्यस्थितनगरीणां नामानि कथ्यंते॥अश्वपुरी॥सिंहपु

री॥ महापुरी॥ महापुरी॥ विजयापुरी॥ अरजापुरी॥ विरजापुरी॥ अशोकापुरी॥ वीतशोकापुरी॥ ७ ॥ इतऊर्द्धं सीतोद
या उत्तरभागे नीलकुलपर्वतदक्षिणभागयानि क्षेत्राणि तिष्ठंति॥ तेषां विभागभेदं कथयति॥ पूर्वभणितायाभू
तारण्यवनवेदिकायास्या: पूर्वभागे क्षेत्रं भवति॥ तदनंतरं वक्षारपर्वत: तदनंतरं क्षेत्रं ततो विभंगनदी ततः क्षेत्रं
ततो वक्षारपर्वत:॥ ततः क्षेत्रं॥ ततश्च विभंगनदी॥ ततोपि क्षेत्रं॥ ततो वक्षारपर्वत: ततः क्षेत्रं ततो विभंगन
दी॥ ततः क्षेत्रं॥ ततश्च वक्षारपर्वत:॥ ततः क्षेत्रं॥ ततोपि मेरुदिशाभागे पश्चिमभद्रशालवनवेदिका चेति नवभि
त्ति सुमध्ये अष्टौ क्षेत्राणि भवंति॥ तेषां क्रमेण नामानि कथ्यंते॥ वप्रा॥ सुवप्रा॥ महावप्रा॥ वप्रकावती॥ गंधा॥ सुगंधा
गंधिला॥ गंधमालिनी चेति॥ ततस्तन्मध्यस्थितनगरीणां नामानि कथ्यंते॥ विजया॥ वैजयंती॥ जयंती॥ अप
राजिता॥ चक्रपुरी॥ खड्गपुरी॥ अयोध्या॥ अवध्या चेति॥ अथ यथा भरतक्षेत्रे गंगासिंधुनदीद्वयेन विजयार्द्धप
र्वतेन च म्लेच्छखंडपंचकमार्यखंडं चेति षट्खंडानि जातानि॥ तथैव तेषु द्वात्रिंशत्क्षेत्रेषु गंगासिंधुसमान
नदीद्वयेन विजयार्द्धपर्वतेन प्रत्येकं खंडषट्कं ज्ञातव्यं॥ अयं तु विशेष: एतेषु क्षेत्रेषु सर्वदैव चतुर्थकालादिसमा

नकाल: उत्कर्षेण पूर्वकोटिजीवितं। पंचशतचापोत्सेधश्चेति विज्ञेयं॥ पूर्वस्य प्रमाणं कथ्यते॥ पूर्वस्य परिमाणं॥ सप्तति खलु सहस्रकोटीउ॥ छप्पण्णं च सहस्सा॥ बोधव्वा वासगाणाम॥ ६ इति संक्षेपेण जंबूद्वीपव्याख्यानं समाप्तं॥ ६ तदनंतरं यथा सर्वद्वीपेषु सर्वसमुद्रेषु च द्वीपसमुद्रमर्यादाकारकयोजनाष्टकोत्सेधा वज्रवेदिकास्ति॥ तथा जंबूद्वीपस्यास्तीति विज्ञेयं॥ तद्बहिर्भागे योजनलक्षद्वयवलयविष्कंभ: आगमकथितषोडशसहस्रयोजनजलोत्सेधाद्यनेकाश्चर्यसहितो लवणसमुद्रोस्ति॥ तस्मादपि बहिर्भागे योजनलक्षचतुष्टयवलयविष्कंभो धातकीखंडद्वीपोस्ति॥ तत्र दक्षिणभागे लवणोदधिकालोदधिसमुद्रद्वयवेदिकास्पर्शी दक्षिणोत्तरायामसहस्रयोजनविष्कंभः शतचतुष्टयोत्सेध इष्वाकारनामा पर्वतोस्ति॥ तथोत्तरभागेपि तेन पर्वतद्वयेन खंडीकृते पूर्वापरधातकीखंडद्वयं जातं॥ तत्र पूर्वधातकीखंडद्वीपमध्ये चतुरशीतिसहस्रयोजनोत्सेध: सहस्रयोजनावगाहः क्षुल्लकमेरुरस्ति तथा पश्चिमधातकीखंडेपि यथा जंबूद्वीपे महामेरौ भरतादिक्षेत्रहिमवदादिपर्वतगंगादिनदीपद्मादिह्रदानां दक्षिणोत्तरव्याख्यानं कृतं॥ तथात्र पूर्वधातकीखंडमेरौ पश्चिमधातकीखंडमेरौ च ज्ञातव्यं॥ अत एव जंबूद्वीपापेक्षया संख्यां प्रति

ध्यानरूपः परमसमाधिर्दुर्लभः॥ कस्मादिति चेत्॥ तत्प्रतिबंधकमिथ्यात्वविषयकषायनिदान-
विभावपरिणामानां प्रबलत्वादिति॥ तस्मात्सैव निरंतरं भावनीया तद्भावनारहितानां पुनरपि सं-
तथा चोक्तं॥ इत्थमतिदुर्लभरूपां बोधिं लब्ध्वा यदि प्रमादी स्यात्॥ संसृतिभीमारण्ये भ्रमि-
...कोनरः सुचिरं॥ पुनश्चोक्तं॥ मनुष्यभवदुर्लभत्वे अशुभपरिणामबहुलत्वाल्लोकस्य चाविपुलतां म-
हात्तियोनिवकुलताच कुत्सं सुदुर्लभां मनुष्ययोनिं॥ ...बोधिसमाधिलक्षणं कथ्यते॥ सम्यग्दर्शनज्ञान-
चारित्राणामप्राप्तप्रापणं बोधिस्तेषामेव निर्विघ्नेन भवांतरप्रापणं समाधिरिति॥ एवं संक्षेपेण दुर्लभानु-
प्रेक्षा समाप्ता॥ ११॥ अथ धर्मानुप्रेक्षां कथयति॥ तद्यथा॥ संसारे पतंतं जीवमुद्धृत्य नागेंद्रनरेंद्रदेवेंद्रादिवंद्ये
अव्याबाधानंतसुखाद्यनंतगुणलक्षणे मोक्षपदे धरतीति धर्मः॥ तस्य च भेदाः प्रतिपाद्यंते॥ अहिंसालक्ष-
णः सागारानागारलक्षणो वा॥ उत्तमक्षमादिलक्षणो वा॥ निश्चयव्यवहाररत्नत्रयात्मको वा॥ शुद्धात्मसं-
वित्त्यात्मकमोहक्षोभरहितात्मपरिणामो वा धर्मः॥ अस्य धर्मस्यालाभे ऽतीतानंतकाले भ्रमता जी-

द्रव्यसं०
८६

वो॥ ७॥ [illegible] ॥ [illegible] ॥ [illegible]
७०॥ इतिगाथाकथितचतुराशीतिलक्षदोषम ध्येपरमस्वास्थ्यभावनास्वन्नानिश्चयोत्कृष्टपरमार्थिकसु
खविलक्षणानिपंचेंद्रियासुखाभिलाषजनितव्याकुलत्वोत्पादकानिदुःखानिसहमानः संभ्रमतोयजी
वःयदापुनरेवंगुणविशिष्टस्यधर्म्मस्यलाभोभवति। तदाराजाधिराजमहाराजार्द्धमंडलीकमहामंडली
कबलदेववासुदेवकामदेवसकलचक्रवर्त्तिदेवेंद्रगणधरदेवतीर्थंकरपरमदेवप्रथमकल्याणकत्रयपर्यं
तंविविधाभ्युदयसुखंप्राप्यपश्चादभेदरत्नत्रयभावनाबलेनाक्षयानंतसुखादिगुणास्पदमर्हत्पदंसिद्धपदंलभ
ते इतिनतकारणेनधर्मएवपरमरसरसायनं॥ निधिनिधानंकल्पवृक्षः कामधेनुश्चिंतामणिरिति ७॥
किंबहुनायैर्जिनेश्वरप्रणीतश्चधर्म्मप्राप्य॥ दृढमतयोजातास्तएवधन्याः॥ तथाचोक्तं॥ धन्यायेप्रतिबुद्धा ध
र्मेःखलुजिनवरैःसमुपदिष्टेः येप्रतिपन्नाधर्म्मं॥ स्वभावनोपस्थितमनीषाः इतिसंक्षेपेणधर्मानुप्रेक्षा
समाप्ता॥ ७॥ इत्युक्तलक्षणाध्रुवानित्याशरणसंसारैकत्वान्यत्वाशुचित्वास्रवसंवरनिर्जरालोकदुर्लभबो

धिधर्म्मतत्वानुचिंतनसंज्ञानिरा स्रवस्वशुद्धात्मतत्वपरिणतिरूपस्य संवरस्य कारणभूता द्वादशानुप्रेक्षाः
समाप्ताः ॥ अथ व्याख्यानं ... ॥ क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रो
शवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानदर्शनानीति द्वाविंशतिपरीषहा विज्ञेयाः
तेषां क्षुधादिवेदनानां तीव्रोदयेपि सुखदुःखजीवितमरणलाभालाभनिंदाप्रशंसादिसमतारूपपरमसा
मायिकेन नवतरशुभाशुभकर्मसंवरणचिरंतनशुभाशुभकर्मनिर्ज्जरणसमर्थेनायं निजपरमात्मभाव
नासंजातनिर्विकारनित्यानंदलक्षणसुखामृतसंवित्तेरचलनं स परीषहजय इति ॥ अथ चारित्रं कथ्य
ते ॥ शुद्धोपयोगलक्षणनिश्चयरत्नत्रयपरिणतेस्वशुद्धात्मस्वरूपे चरणमवस्थानं चारित्रं ॥ तच्च तार
तम्यभेदेन पंचविधं ॥ तथाहि ॥ सर्वे जीवाः केवलज्ञानमया इति भावनारूपेण समतालक्षणं सामायि
कं ॥ अथवा परमस्वास्थ्यबलेन युगपत्समस्तशुभाशुभसंकल्पविकल्पत्यागरूपसमाधिलक्षणं वा
निर्विकारस्वसंवित्तिबलेन रागद्वेषपरिहाररूपं वा शुद्धात्मानुभूतिबलेनार्त्तरौद्रपरित्यागरूपं वा समस्त

सुखदुःखादिमध्यस्थरूपंचेति॥अथछेदोपस्थापनंकथयति॥यदायुगपत्समस्तविकल्पत्यागरूपे
परमसामायिकेस्थातुमशक्तोऽयंजीवस्तदासमस्तहिंसानृतस्तेयाब्रह्मपरिग्रहेभ्योविरतिर्व्रतमित्यनेनपंच
प्रकारविकल्पभेदेनव्रतच्छेदेनरागादिविकल्परूपसावद्येभ्योनिवर्त्यनिजशुद्धात्मन्यात्मानमुपस्थापयतीति
छेदोपस्थापनं॥अथवाछेदेव्रतखंडनेसतिनिर्विकारस्वसंवित्तिरूपनिश्चयप्रायश्चित्तेनतत्साधकब
हिरंगव्यवहारप्रायश्चित्तेनवास्वात्मन्युपस्थापनंछेदोपस्थापनमिति॥ छ॥अथपरिहारविशुद्धिंकथयति॥ती
संवासोजम्मे॥वासपुधत्तंचतित्थयरमूले॥पच्चक्खाणंपढिदो॥संझूणदुगाउयविहारो॥१॥इतिगाथाक
थितलक्षणपुरुषस्यमिथ्यात्वरागादिविकल्पमलानांप्रत्याख्यानेनपरिहारेणविशेषेणस्वात्मनःशुद्धिर्नैर्मल्यं
परिहारविशुद्धिश्चारित्रमिति॥छ॥अथसूक्ष्मसांपरायचारित्रंकथयति॥सूक्ष्मातींद्रियनिजशुद्धात्मसंवि
त्तिबलेनसूक्ष्मलोभाभिधानसांपरायस्यकषायस्ययत्रनिरवशेषोपशमनंक्षपणंवातत्सूक्ष्मसांपराय
चारित्रमिति॥छ॥अथयथाख्यातचारित्रंकथयति॥छ॥यथासहजशुद्धस्वभावत्वेननिष्कंपत्वेननिष्क॥

वायमात्मस्वरूपं तथैवाख्यातं कथितं यथाख्यातचारित्रमिति ॥ इदानीं सामायिकादिचारित्रपंचकस्य
गुणस्थानस्वामित्वं कथयति ॥ प्रमत्ताप्रमत्तापूर्वानिवृत्तिसंज्ञगुणस्थानचतुष्टये सामायिकचारित्रं भ
वति ॥ छेदोपस्थापनं परिहारविशुद्धिस्तु प्रमत्ताप्रमत्तगुणस्थानद्वये सूक्ष्मसांपरायचारित्रं पुनरेकस्मि
न्नेव सूक्ष्मसांपरायगुणस्थाने ॥ यथाख्यातचारित्रमुपशांतकषायक्षीणकषायसयोगिजिनायोगि
जिनाभिधानगुणस्थानचतुष्टये भवतीति ॥ [illegible] ॥ संयमासंयमसंज्ञं दार्शनिकै
द्येकादशभेदभिन्नं देशचारित्रमेकस्मिन्नेव पंचमगुणस्थाने ज्ञातव्यं ॥ असंयमस्तु मिथ्यादृष्टिसा
सादनमिश्राविरतसम्यग्दृष्टिसंज्ञगुणस्थानचतुष्टये भवतीति ॥ चारित्रव्याख्यानं समाप्तं ॥ एवं व्रत
समितिगुप्तिधर्मद्वादशानुप्रेक्षापरीषहजयचारित्राणां भावसंवरकारणभूतानां यद्व्याख्यानं कृतं ॥ तत्र
निश्चयरत्नत्रयसाधकव्यवहाररत्नत्रयरूपस्य शुभोपयोगस्य प्रतिपादकानि यानि वाक्यानि तानि पापास्र
वसंवरकारणानि ज्ञातव्यानि ॥ यानि तु व्यवहाररत्नत्रयसाध्यस्य शुद्धोपयोगलक्षणनिश्चयरत्नत्रय

द्रव्यसं० ६८

साध्यस्यमुख्यरूपेणागलक्षणानिश्चयरत्नत्रयस्यप्रतिपादकानितानिपुण्यपापद्वयसंवरकारणानिभवंतीतिज्ञा
तव्यं॥ अत्राहसोमानामराजश्रेष्ठी भगवन्नेतेषुव्रतादिसंवरकारणेषुमध्ये संवरानुप्रेक्षैव सारभूता साचैव सं
वरंकरिष्यति॥ विशेषप्रपंचेनेति॥ भगवानाह॥ त्रिगुप्तिलक्षणनिर्विकल्पसमाधिस्थानांयतीनांतयैवपू
र्यते तत्रासमर्थानांपुनर्बहुप्रकारेणसंवरप्रतिपक्षभूतामोहोविजृंभते तेनकारणेनव्रतादिविस्तरंकथयं
त्याचार्या॥ इति॥ ३५॥ आसिदिसंदोकिरियाणं॥ अक्किरियाणंतुहोदिचुलसीदी॥ सत्तठीअस्साणं॥ दण
इयाइंतिवत्तीसं॥ १॥ जोगपयडिपदेसाठिदिअणुभागाकसायदोहोदि॥ अपरिणदुच्छिण्णेसु॥ अंबंधठिदि
कारणंणत्थि॥ २॥ एवंसंवरतत्वव्याख्यानेसूत्रद्वयेनतृतीयस्थलंगतं॥ ३॥ अथसदृष्टिजीवस्यसंवर
पूर्वकंनिर्जरातत्वंकथयति॥ ३॥ जहकालेणतवेणय॥ भुत्तरसंकम्मपुग्गलंजेण॥ भावेणसडदिणेया॥ त
स्सडणंचेदिणिज्जरादुविहा॥ ३६॥ णेयाइत्यादिव्याख्यानंक्रियते॥ णेयाज्ञातव्या॥ का॥ निर्ज्जरा॥ भवनिर्ज्जे
रासाकानिर्विकारपरमचैतन्यचिच्चमत्कारानुभूतिसंजातसहजानंदस्वभावसुखामृतरसास्वादरूपाभा

वरस्पधारा: ॥ जेण भावेण ॥ येन भावेन जीवपरिणामेन किं भवति ॥ सडदि विशीर्यते पतति गलति विनश्य
ति ॥ किंकर्तृ ॥ कम्मपुग्गलं ॥ कर्म्मारिविध्वंसकस्वकीयस्वभात्मनोविलक्षणं कर्मपुद्गलद्रव्यं ॥ कथंभूतं ॥ भु
त्तरसं स्वोदयकाले भव्यसंसारिक सुखदुःखरूपेण भुक्तरसं दत्तफलं ॥ केनकारणभूतेन ॥ कालेन ॥ जहका
लेण ॥ स्वकालपच्यमानाम्रफलवत् सविपाकनिर्ज्जरापेक्षया ॥ निज शुद्धात्मसंवित्तिपरिणामस्य ब
हिरंगसहकारिकारणभूतेन काललब्धिसंज्ञेन पथ्याकालेन ॥ न चावलपथ्याकालेन ॥ तवेण य ॥ अका
लपच्यमानानां आम्रादिफलविपाकनिर्ज्जरापेक्षया अंतरंग ॥ समस्तपरद्रव्येच्छानिरोधलक्षणेन ब
हिरंगेण तत्त्वसंवित्तिसाधकसंभूतेनानशनादिद्वादशविधेन तपसा चेति ॥ तस्सडणं च ॥ तस्य कर्मणो
गलनं यच्च सा द्रव्यनिर्ज्जरा ॥ ननु पूर्वं यदुक्तं सडदि तेनैव द्रव्यनिर्जरा लब्धा ॥ पुनरपि सडणं किमर्थं भणि
तं ॥ तत्रोत्तरं ॥ तेन सडदि शब्देन निर्मलात्मानुभूतिग्रहणभावनिर्ज्जराभिधानपरिणामस्य सामर्थ्यमु
क्तं न च द्रव्यनिर्ज्जरेति ॥ इति द्रव्यभावरूपेण निर्ज्जरा द्विविधा भवतीति ॥ ३६ ॥ अथाह ।

॥शिष्यः॥सविपाकनिर्ज्जरानरकादिगतिष्वज्ञानिनामपिदृश्यते॥संज्ञानिनामेवेति॥नियमोनास्ति॥ तत्रोत्तरं॥अ
त्रैवमोक्षकारणंसंवरपूर्विकानिर्ज्जरासैवग्राह्या॥या॥पुनरज्ञानिनांनिर्ज्जरासागजस्नानवन्निःफला॥यतस्तोकंक
र्म्मनिर्जरयतियद्यपि॥अशुभकर्म्मविनाशंकरोति॥तथापिसंसारस्थितिंस्तोकांकुरुतेतद्भवेतीर्थकरप्रकृत्यादि
विशिष्टपुण्यबंधकारणंभवति॥पारंपर्येणमुक्तिकारणंचेति॥वीतरागसद्दृष्टीनांपुनःपुन्यपापद्वयविनाशेन
तद्भवेपिमुक्तिकारणमिति॥उक्तंचश्रीकुंदकुंदाचार्यदेवैः॥जंअण्णाणीकम्मं खवेदिभवसयसहस्सकोडी
हिं॥तंणाणीतिहिंगुत्तो॥खवेदिउस्सासमेत्तेण॥१॥कश्चिदाह॥सद्दृष्टीनांवीतरागविशेषणंकिमर्थं॥रागा
दयोहेयमदीयनभवंतीति॥भेदविज्ञानेजातेसरागानुभवेपिज्ञानमात्रेणमोक्षोभवतीति तत्रपरिहारः॥अंध
कारेपुरुषद्वयमेकःप्रदीपहस्तःतिष्ठति॥अन्यःपुनरेकःप्रदीपरहितस्तिष्ठति॥सचकूपपतनंसर्प्पादिकं
वानजानातितस्यविनाशेदोषोनास्ति॥यस्तुप्रदीपहस्तस्तस्यकूपपतनादिविनाशेप्रदीपफलंनास्ति॥
कूपपतनादिकंत्यजतितस्यप्रदीपफलमस्ति॥तथाकोपिरागादयोहेयामदीयानभवंतीतिभेद

नातिसकर्म्मणा बध्यते ॥ तावदन्यः कोपिरागादिभेदविज्ञानेजातेपि यावतांशेनरागादिकमनुभवतितावतांशेन

नसोपिबध्यते ॥ यावतस्यापिरागादिभेदविज्ञानफलं नास्ति ॥ यस्तुरागादिभेदविज्ञानेजातेसतिरागादिकंत्यजति

तस्यभेदविज्ञानफलमस्तिइतिज्ञातव्यं ॥ तथाचोक्तं ॥ चरकुसुंदसरासस्यसारोसप्पादिदोसपरिहारो ॥ चक्कूहो

दिणिरत्थंतद्धूणाविलेपडंतस्स ॥ ३६ ॥ एवंनिर्ज्जराव्याख्यानमुख्यत्वेनचतुर्थस्थलंगतं ॥ अथमोक्षतत्वमावेदयति

७ ॥ [illegible] ॥

यद्यपिसामान्येननिरवशेषनिराकृतकर्म्ममलकलंकस्यात्मनः आत्यंतिकस्वाभाविकाचिंत्याद्भुतानुपमस

कलविमलकेवलज्ञानाद्यनंतगुणास्पदमवस्थांतरंमोक्षोभण्यते ॥ तथापिविशेषेणभ्भावरूपेणद्विधाभव

तीति ॥ वार्त्तिकं ॥ ७ ॥ तद्यथा ॥ णाउसभावमारको ॥ ज्ञेयोज्ञात्यः सभावमोक्षः सक अप्पणोऊपरिणामोनिश्च

यरत्नत्रयात्मककारणसमयसाररूपोऊंस्फुटं आत्मनः परिणामः ॥ कथंभूतः ॥ सव्वस्सकम्मणोजोखयहेदू

सर्वस्यद्रव्यभावारूपस्य ॥ मोहनीयादिघातिचतुष्टयस्यकर्म्मणोयः क्षयहेतुरिति ॥ द्रव्यमोक्षंकथयति ॥ दव्ववि

द्रव्य०
७०

मुक्तो भवति॥ अयोगिचरमसमये द्रव्यविमोक्षो भवति॥ कोसौ॥ अप्पकम्मपुथभावो॥ टंकोत्कीर्णशुद्धबुद्धैकस्वभावपरमात्म
न॥ आयुरादिशेषाघातिकर्मणामपि य आत्यंतिकपृथग्भावो विश्लेषो विघटनमिति॥ तस्य मुक्तात्मनः सुखं कथ्यते॥ आ
त्मोपादानसिद्धं स्वयमतिशयवद्वीतबाधं विशालं॥ वृद्धिह्रासव्यपेतं विषयविरहितं निःप्रतिद्वंद्वभावं॥ अन्यद्रव्यान
पेक्षं निरुपममितं शाश्वतं सर्वकालं॥ उत्कृष्टानंतसारं परमसुखमतस्तस्य सिद्धस्य जातं॥१॥ कश्चिदाह॥ इंद्रियसुख
मेव सुखं मुक्तात्मनामिंद्रियशरीराभावे पूर्वोक्तमतींद्रियसुखं कथं घटत इति॥ तत्रोत्तरं दीयते॥ सांसारिकसुखं तु
वत्स्त्रीसेवादिकपंचेंद्रियविषयप्रभवमेव यत्पुनः पंचेंद्रियविषयव्यापाररहितानां निर्व्याकु
सुखं तदतींद्रियसुखमत्रैव दृश्यते॥ पंचेंद्रियमनोजनितविकल्पजालरहितानां निर्विकल्पसमाधिस्थानां प
रमयोगिनां रागादिरहितत्वेन स्वसंवेद्यमात्मसुखं तद्विशेषेणातींद्रियं यच्च
देकपारमार्थिकपरमानंदपरिणतानां मुक्तात्मनामतींद्रियसुखं तदत्यंतविशेषेण ज्ञातव्यमिति॥
: संसारिणां निरंतरं कर्मबंधोस्ति तथैवोदयोप्यस्ति शुद्धात्मभावनाप्रस्तावो नास्ति कथं मोक्षो भविष्यतीति

यथा भाविकालसमयानां क्रमेण गच्छतां यद्यपि भाविकालसमयराशेः स्तोकत्वं भवति तथाप्यवसानं नास्ति। तथा मु
क्तिं गच्छतां जीवानां यद्यपि जीवराशेः स्तोकत्वं भवति तथाप्यवसानं नास्ति भवतीति। चेतर्हि पूर्वकाले बहवोपि जी
वा मोक्षं गताः इदानीं जगतः शून्यत्वं किं न दृश्यते। किंच। अभव्यानामभव्यसमानभव्यानां च मोक्षो नास्ति क
थं शून्यत्वं भविष्यति॥३७॥ एवं संक्षेपेण मोक्षतत्त्वव्याख्यानेनैकसूत्रेण पंचमस्थलं गतं॥ अत ऊर्द्धं षष्ठमस्थले गा
थापूर्वार्द्धेन पुण्यपापपदार्थद्वयस्वरूपमुत्तरार्द्धेन पुण्यपापप्रकृतिसंख्यां कथयामीत्यभिप्रायं मनसि धृत्वा भगवा
न् सूत्रमिदं प्रतिपादयति॥ सुहअसुहभावजुत्ता पुण्णं पावं हवंति खलु जीवा। सादं सुहाउ णामं गोदं पुण्णं परा
णि पावं च॥३८॥ पुण्णं पावं हवंति खलु जीवा। चिदानंदैकसहजशुद्धस्वभावत्वेन पुण्यपापबंधमोक्षादिपर्यायरू
पविकल्परहिता अपि संतानागतानादिकर्मबंधपर्यायेण पुण्यं पापं च भवंति खलु स्फुटं जीवाः। कथंभूताः
सुहअसुहभावजुत्ता उक्तमिथ्यात्वविषये भावपदार्थे च कुरु परां भक्तिं भावनमस्कारे तत्त्वज्ञानेनायुक्तो भव
सदापि॥ पंचमहाव्रतरक्षां कोपचतुष्कस्य निग्रहं परमं दुर्दान्तेन्द्रियविजयं तपःसिद्धिविधौ कुरूद्योगं॥ इत्या

योदयवर्णितलक्षणेनशुभोपयोगभावेनपरिणामेनतद्विलक्षणेनाशुभोपयोगपरिणामेनचयुक्ताः इदानीं
पुण्यपापभेदान्कथयति॥ सादंसुहाउणामंगोदंपुण्णं सद्वेद्यशुभायुर्नामगोत्राणिपुण्यंचभवति॥ पराणिपा
वंच॥ तस्मादपराणिकर्म्माणिपापंचेति॥ तद्यथा॥ सद्वेद्यमेकं॥ तिर्यग्मनुष्यदेवायुस्त्रयं॥ शुभायुषः॥ कीर्त्तितीर्थ
र्थकरत्वादिनामप्रकृतीनांसप्तत्रिंशत्॥ उच्चैर्गोत्रमिति॥ समुदायेनाष्टचत्वारिंशत्संख्याः पुण्यप्रकृत
योविज्ञेया॥ शेषाद्व्यशीतिपापमिति॥ तत्रदर्शनविशुद्धिर्विनयसंपन्नताशीलव्रतेष्वनतिचारोभीक्ष्णज्ञा
नोपयोगसंवेगौशक्तितस्त्यागतपसीसाधुसमाधिर्वैयावृत्त्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिराव
श्यकापरिहाणिर्मार्गप्रभावनाप्रवचनवात्सल्यत्वमितितीर्थकरत्वस्य॥ इत्युक्तलक्षणषोडशभावनोत्प
न्नतीर्थंकरनामकर्म्मैवविशिष्टंपुण्यंषोडशभावनासुमध्येपरमागमभाषया॥ छ॥ मूढत्रयंमदाश्चाष्टौ॥
तथानायतनानिषट्॥ अष्टौशंकादयश्चेति॥ दृग्दोषाःपंचविंशतिः॥ छ॥ इतिश्लोककथितपंचविंश
तिमलरहितंतथाध्यात्मभाषयानिजशुद्धात्मोपादेयरुचिरूपासम्यक्त्वभावनैवमुख्येतिविज्ञेयं॥ छ॥ सम्य

दृष्टेः पुण्यपापद्वयमपि हेयं कथं पुण्यं करोतीति चेत्॥ तत्र युक्तिमाह॥ यथा कोऽपि देशांतरस्थः मनोहरस्त्रीसमीपा
दागतपुरुषाणां तदर्थं दानसन्मानादि करोति॥ तथा सम्यग्दृष्टिरप्युपादेयरूपेण स्वशुद्धात्मानमेव भाव
यति॥ चारित्रमोहोदयात् तत्रासमर्थः सन्निर्दोषपरमात्मस्वरूपाणामर्हत्सिद्धानां तदाराधिकाचार्योपा
ध्यायसाधूनां च परमात्मपदप्राप्त्यर्थं विषयकषायवंचनार्थं च दानपूजनादिगुणस्तवनादिनाऽपरमभक्तिं
करोति॥ तेन भोगाकांक्षादिनिदानरहितपरिणामेन कुटुंबिनां पलालमिवानीहितवृत्त्या विशिष्टपुण्यमा
स्रवति॥ तेन च स्वर्गे देवेंद्रलौकांतिकादिविभूतिं प्राप्य विमानपरिवारादिसंपदं जीर्णतृणमिव गणयन् पंचम
हाविदेहेषु गत्वा पश्यति॥ किं पश्यतीति चेत्॥ तदिदं समवसरणं त एते वीतरागसर्वज्ञाः त एते भेदाभेदरत्न
त्रयाराधकाः गणधरदेवादयो ये पूर्वं श्रूयंते त इदानीं प्रत्यक्षेण दृष्टा इति मत्वा विशेषेण दृढधर्ममतिर्भूत्वा
चतुर्थगुणस्थानयोग्यामात्मभावनामपरित्यजन्॥ भोगानुभवेपि सति धर्मध्यानेन कालं नीत्वा स्वर्गादाग
त्य तीर्थंकरादिपदं प्राप्यापि पूर्वभवभावितविशिष्टभेदज्ञानवासनाबलेन मोहं न करोति॥ ततो जिनदीक्षा

गृहीत्वापुण्यपापरहितनिजपरमात्मध्यानेनमोक्षंगच्छतीति॥ मिथ्यादृष्टिस्तुतीव्रनिदानबंधपुण्येनभोगान्प्रा

प्यपश्चादर्द्धचक्रवर्त्तिरावणादिवन्नरकंगच्छतीति॥ एवमुक्तलक्षणपुण्यपापपदार्थद्वयेनसहपूर्वो

क्तानिसप्ततत्वान्येवनवपदार्थाभवंतीतिज्ञातव्यं॥ ३८॥ [illegible]

[illegible]

[illegible]

[illegible] सम्मद्दंसणइत्यादिविंशतिगाथाभिर्निश्चयव्यवहारमोक्षमार्गप्रतिपादकमुख्यत्वेनप्र

थमोउत्तराधिकारः॥ ततःपरंदुविहंपिमोक्खहेउं इतिप्रभृतिद्वादशसूत्रैर्ध्यानध्यातृध्येयध्यानफल

कथनमुख्यत्वेनद्वितीयोत्तराधिकारः॥ इत्युत्तराधिकारद्वयेनतृतीयाधिकारेसमुदायपातनिका॥

अथप्रथमतःसूत्रपूर्वार्द्धेनव्यवहारमोक्षमार्गमुत्तरार्द्धेनचनिश्चयमोक्षमार्गंनिरूपयति॥ [illegible]

[illegible] सम्मद्दंसणणाणं

चरणंमोरकस्सकारणंजाणोववहारा॥ सम्यग्दर्शनज्ञानचारित्रत्रयंमोक्षस्यकारणंहेशिष्यजानीहिव्यवहारनया
त्॥ णिच्छयदोतत्तियमइओणिओअप्पा॥ निश्चयतस्तत्त्रितयमयोनिजात्मेति॥ तथाहि॥ वीतरागसर्वज्ञप्रणीत
षड्द्रव्यपंचास्तिकायसप्ततत्त्वनवपदार्थसम्यक्श्रद्धानज्ञानव्रताद्यनुष्ठानविकल्परूपोव्यवहारमोक्षमा
र्गः॥ निजनिरंजनशुद्धात्मतत्त्वसम्यक्श्रद्धानज्ञानानुचरणैकाग्र्यपरिणतिरूपोनिश्चयमोक्षमार्गः॥ अथ
स्व
वाशुद्धात्मभावनासाधकबहिर्द्रव्याश्रितोव्यवहारमोक्षमार्गः॥ केवलस्वसंवित्तिसमुत्पन्नरागादिविक
ल्पोपाधिरहितसुखानुभूतिरूपो निश्चयमोक्षमार्गः॥ अथवाधातुपाषाणेऽग्निवत्साधकोव्यवहा
रमोक्षमार्गः सुवर्णस्थानीयनिर्विकारःस्वोपलब्धिसाध्यरूपोनिश्चयमोक्षमार्गः॥ एवंसंक्षेपेणव्यव
हारनिश्चयमोक्षमार्गलक्षणंज्ञातव्यमिति॥ ३९॥ अथाभेदेनसम्यग्दर्शनज्ञानचारित्राणिस्वशुद्धा
त्मैववर्त्तनकारणेननिश्चयेनात्मैवनिश्चयमोक्षमार्गः इत्याख्याति॥ अथवापूर्वो
क्तःमकारांतेनदृढयति॥ ४०॥ रयणत्तयंणवट्टइ॥ अप्पाणंमुयत्तुअण्णदवियम्हि तम्हातत्तियमइओ होदि

रयणात्तयंणवट्टइ॥ अप्पाणंमुयंतुअण्णदवियम्हि॥ रत्नत्रयंनवर्त्तेस्वकीय
शुद्धात्मानंमुक्त्वाअन्याचेतनद्रव्ये॥ तम्हातत्तियमइउहोदिहुमोक्खस्सकारणंआदा॥ तस्मात्तत्त्रियम
यमात्मानमेवनिश्चयेनमोक्षस्यकारणंभवतिहुजानीहीति॥ ॥ अथविस्तरः॥ रागादिविकल्पोपाधि
रहितचिच्चमत्कारभावनोत्पन्नमधुररसास्वादसुखोहमितिनिश्चयरुचिरूपंसम्यग्दर्शनं॥ तस्यैवसु
खस्यसमस्तविभावेभ्यःस्वसंवेदनज्ञानेनपृथकपरिच्छेदनंसम्यग्ज्ञानं॥ तथैवदृष्टश्रुतानुभूतभोगाकां
क्षाप्रभृतिसमस्तापध्यानरूपमनोरथजनितसंकल्पविकल्पजालत्यागेनतत्रैवसुखेरतस्यसंतुष्टस्य
तृप्तस्यैकाकारपरमसमरसीभावेनद्रवीभूतचित्तस्यपुनःपुनःस्थिरीकरणंसम्यक्चारित्रं॥ इत्युक्तल
क्षणंनिश्चयरत्नत्रयंशुद्धात्मानंविहायान्यत्रघटपटादिबहिर्द्रव्येनवर्त्ततेयतस्ततःकारणादभे
दनयेनानेकद्रव्यात्मकैकपानकवत्तदेवसम्यग्दर्शनंतदेवसम्यग्ज्ञानंतदेवसम्यक्चारित्रं॥ तदेवस्वा
त्मतत्त्वमित्युक्तलक्षणंनिजशुद्धात्मानमेवमुक्तिकारणंजानीहि॥ ४०॥ एवंप्रथमस्थलेसूत्रद्वयेननिश्च

मव्यवहारमोक्षमार्गस्वरूपंसंक्षेपेनव्याख्याय॥तदंतर्गतद्वितीयस्थलेगाथाषट्कपर्यंतंसम्यक्त्वादित्रयंक्रमेणवि
वृणोति॥तत्रादौसम्यक्त्वमाह॥ छ ॥जीवादीसद्दहणंसम्मत्तंरूवमप्पणोतंतु॥दुरभिणिवेसविमुक्कंणाणंसम्मं
खुहोदिसदिजम्हि॥ ४१॥ जीवादीसद्दहणंसम्मत्तं॥वीतरागसर्वज्ञप्रणीतशुद्धजीवादितत्त्वविषयेच
लमलिनावगाढरहितत्वेनश्रद्धानंरुचिर्निश्चयइदमेवेत्थमेवेतिनिश्चयबुद्धिःसम्यग्दर्शनं॥रूवमप्पणो
तंतु॥तच्चाभेदनयेनरूपंस्वरूपंतुपुनःकस्यात्मनःआत्मपरिणामइत्यर्थः॥तस्यसामर्थ्यंमाहात्म्यंद
र्शयति॥दुरभिणिवेसविमुक्कंणाणंसम्मंखुहोदिसदिजम्हि॥यस्मिन्सम्यक्त्वेसतिज्ञानंसम्यक्भवति
खुस्फुटंकथंभूतंसम्यग्भवति॥दुरभिनिवेसविमुक्कं॥चलितप्रतिपत्तिगच्छत्तृणस्पर्शशुक्तिकाशकलरजत
विज्ञानसदृश॥संशयविमोहविभ्रमैःरहितमित्यर्थः॥ छ ॥इतोविस्तरः॥सम्यक्त्वेसतिज्ञानेसम्यग्भवती
तियदुक्तं॥तस्यविवरणंक्रियते॥तथाहि॥गौतमाग्निभूतिवायुभूतिनामानोविप्राःपंचपंचशतब्राह्म
णोपाध्यायाः॥वेदचतुष्टयंज्योतिष्कव्याकरणादिषडंगानिमनुस्मृत्याद्यष्टादशस्मृतिशास्त्रा।

नीतथाभारताद्यष्टादशपुराणानिमीमांसान्यायविस्तरःइत्यादिलौकिकसर्वशास्त्राणियद्यपिज्ञा
नेतितथापितेषांहितज्ञानंसम्यक्त्वंविनामिथ्याज्ञानमेव॥यदापुनःप्रसिद्धकथान्यायेनश्रीवी
रवर्द्धमानस्वामितीर्थंकरपरमदेवसमवसरणमानस्तंभावलोकनमात्रेदेवागमभावयादर्शनचारि
त्रमोहनीयोपशमक्षयोपशमसंज्ञेनाध्यात्मभावयास्वशुद्धात्माभिमुखपरिणामसंज्ञेनचकालादिलब्धि
विशेषेणमिथ्यात्वंविलयंगतं॥तदैवमिथ्याज्ञानंसम्यग्ज्ञानंजातं॥ततश्चजयतिभावामित्यादिन
मस्कारंकृत्वाजिनदीक्षांगृहीत्वाकचलोचनंतरमेवचतुर्ज्ञानसप्तर्द्धिसंपन्नास्त्रयोपिगणधरदेवाःसं
जाताः॥गौतमस्वामीतुभव्योपकारार्थंद्वादशांगश्रुतरचनांकृतवान्॥पश्चान्निश्चयरत्नत्रयभा
वनाबलेनत्रयोपिमोक्षंगताः॥शेषपंचशतब्राह्मणाजिनदीक्षांगृहीत्वायथासंभवं
स्वर्गमोक्षंगताः॥अभव्यसेनःपुनरेकादशांगधारकोपिसम्यक्त्वंविनामिथ्याज्ञानीजातः॥इति
एवंसम्यक्त्वमहात्म्येनज्ञानतपश्चरणव्रतोपशमध्यानादिकंमिथ्यारूपमपिसम्यग्भवति॥तद

द्रव्यसं०
७५

भावविषये पूर्वोक्तउपाधिवसर्वत्रवधोतिज्ञातव्यं॥ तत्त्वं सम्यक्त्वं पंचविंशतिमलरहितं भवति॥ तद्यथा॥ लो
कमूढसमयमूढत्रयं भवति॥ तत्र क्षुधाद्यष्टादशदोषरहितमनंतज्ञानाद्यनंतगुणसहितं वीतरागस
र्वज्ञदेवतास्वरूपमजानन् ख्यातिपूजालाभरूपलावण्यसौभाग्यपुत्रकलत्रराज्यादिविभूतिनिमि
त्तं रागद्वेषोपहतार्त्तरौद्रपरिणतक्षेत्रपालचंडिकादिमिथ्यादेवतानां यदाराधनं करोति जीवस्त
द्देवतामूढत्वं भण्यते॥ न च ते देवाः किमपि फलं प्रयच्छंति॥ कथमिति चेत्॥ रावणेन रामस्वामिलक्ष्मी
धरविनाशार्थं बहुरूपिणीविद्यासाधिता॥ कौरवैस्तु पांडवनिर्मूलनार्थं कात्यायनी विद्यासाधिता
कंसेन नारायणविनाशार्थं बह्व्योपि विद्याः समाराधिता भिः कृतं न किमपि रामस्वामिपांडवनारा
यणानां वास्तु॥ यद्यपि मिथ्यादेवता राधना कृता तथापि निर्मलसम्यक्त्वोपार्जितेन पूर्वकृतपुण्येन
सर्वं निर्विघ्नं जातमिति॥ ७॥ अथ लोकमूढत्वं कथयति॥ गंगादिनदीतीर्थस्नानसमुद्रस्नानप्रातःस्ना
नजलप्रवेशमरणाग्निप्रवेशमरणगोग्रहणादिमरणभूम्यग्निवटवृक्षपूजादीनि पुण्यकारणानि

निर्भवतीति यदुक्तं तल्लोकमूढत्वं ॥ अन्यदपि लौकिकपारमार्थिकहेयोपादेयस्वरूपपरिज्ञानरहिता
नामज्ञानिजनानां प्रवाहेन यद्धर्मानुष्ठानं तदपि लोकमूढत्वं विज्ञेयमिति ॥ अथ समयमूढत्वमाह ॥ अज्ञानिज
नचित्तचमत्कारोत्पादकं ज्योतिष्कमंत्रवादादिकं दृष्ट्वा वीतरागसर्वज्ञप्रणीतसमयं विहाय कुदेवागमलिंगि
नां भयाशास्नेहलोभैः धर्मार्थं विनयप्रणामपूजापुरस्कारादिकरणं समयमूढत्वमिति ॥ एवमुक्तलक्षणमूढ
त्रयं सरागसम्यग्दृष्ट्यवस्थायां परिहरणीयमिति ॥ त्रिगुप्तावस्थालक्षणवीतरागसम्यक्त्वप्रस्तावे पुनर्नि
जनिरंजननिर्दोषपरमात्मैव देव इति निश्चयबुद्धिर्देवतामूढरहितत्वं विज्ञेयं तथैव मिथ्यात्वरागादिरूप
मूढभावत्यागेन स्वशुद्धात्मन्येवानुष्ठानं लोकमूढरहितत्वं ज्ञातव्यं ॥ तथैव च समस्तशुभाशुभसंकल्प
विकल्परूपपरभावत्यागेन निर्विकारतात्त्विकपरमानंदैकलक्षणपरमसमरसीभावेन तस्मिन्नेव स
म्यगाह्सेणायनं गमनं परिणमनं समयमूढरहितत्वं बोधव्यं ॥ इति मूढत्रयं व्याख्यातं ॥ ७ ॥ अथ मदा
ष्टकस्वरूपं कथयति ॥ विज्ञानैश्वर्यज्ञानतपःकुलबलजातिरूपसंज्ञं मदाष्टकं सरागसम्यग्दृष्टिभिस्त्या

द्रव्यसं० ज्यमिति ॥ वीतरागसम्यग्दृष्टीनां पुनर्मानकषायादुत्पन्नमदमात्सर्यादिसमस्तविकल्पजालपरिहारेण
७६ ममकाराहंकाररहितेस्वशुद्धात्मनि भावनैव मदाष्टकत्यागइति ॥ ममकाराहंकारलक्षणं कथयति
कर्मजनितदेहपुत्रकलत्रादौ ममेदमिति ममकारः तत्रैवाभेदेन गौरस्थूलादिदेहोहं राजाहमित्यहंकार
लक्षणमिति ॥ अथ षडनायतनं कथयति ॥ मिथ्यादेवो मिथ्यादेवाराधको मिथ्यातपो मिथ्यात
पस्वी ॥ मिथ्यागमो मिथ्यागमधरपुरुषश्चेत्युक्तलक्षणमनायतनषट्कं सरागसम्यग्दृष्टीनां त्याज्यं
भवतीति ॥ वीतरागसम्यग्दृष्टीनां पुनः समस्तदोषायतनभूतानां मिथ्यात्वविषयकषायरूपानायतना
नां परिहारेण केवलज्ञानाद्यनंतगुणायतनभूते स्वशुद्धात्मनि निवास एवानायतनसेवापरिहार इति
॥ अनायतनशब्दस्यार्थः कथ्यते ॥ सम्यक्त्वादिगुणानामायतनं गृहमावास आश्रय आधारकारणानि
मित्तमायतनं भण्यते ॥ तद्विपक्षभूतमनायतनमिति ॥ अतःपरं शंकाद्यष्टमलत्यागं कथयति ॥ निःशंका
द्यष्टगुणप्रतिपालनमेव शंकाद्यष्टमलत्यागो भण्यते ॥ तद्यथा भवति तथा कथयति रागादिदोषा अज्ञा

नेवासत्यवचनैकांतंतदुभयमपिवीतरागसर्वज्ञानांनास्तितत:कारणात् ॥ नत्रसीताहरणापादपतत्व
मोक्षमार्गचभेद्य ।शंकाशंसय:संदेहानकर्तव्य: तत्रशंकादोषपरिहारविषयेपुनरत्रनचोरक
थामसिद्धांतेश्रेवविभीषणकथा ॥ तथाहि ॥ सीताहरणप्रघट्टकेरामरावणयोरामलक्ष्मणाभ्यांसहसंग्रा
मप्रस्तावेविभीषणेनविचारितेरामस्तावदष्टमबलदेवोलक्ष्मणश्चाष्टमोवासुदेवो ॥ रावणश्चाष्टम:
प्रतिवासुदेवइति ॥ तस्यचप्रतिवासुदेवस्यवासुदेवहस्तेनमरणमितिजैनागमेकथितमास्तेतन्मिथ्या
नभवतीतिनि:शंकोभूत्वात्रिलोककंटकरावणंस्वकीयंज्येष्ठंभ्रातरंत्यक्त्वाअक्षौहिणीप्रमितचतु
रंगबलेनसहरामस्वामिपार्श्वेगतइति ॥ तथैवदेवकीवासुदेवद्वयंचानि:शंकंज्ञातव्य ॥ तथाहि यदादे
वकीबालकस्यमारणनिमित्तंकंसेनप्रार्थनाकृतातदातांप्रत्यपरोलोचितमदीयपुत्रोनवमवासुदे
वोभविष्यति ॥ तस्यहस्तेनजरासिंधुनाम्नानवमप्रतिवासुदेवस्यकंसस्यापिमरणंभविष्यतीतिजैना
गमेभणितंतिष्ठतीति ॥ तथैवातिमुक्तकभट्टारकेणापिकथितमितिनिश्चित्यकंसायस्वकीयबालक

दते॥ तथाचोक्तं भव्यैर्जिनागमे शंका न कर्तव्येति॥ कः॥ इदं व्यवहारेण निःशंकितत्वं व्याख्यातं॥ निश्च
येन पुनस्तस्यैव व्यवहारनिःशंकगुणस्य सहकारित्वेन इहलोकपरलोकात्राणागुप्तिमरणव्याधिवेद
नाकस्मिकाऽभिधान भयसप्तकं मुक्त्वा घोरोपसर्गपरीषहप्रस्तावे शुद्धोपयोगलक्षणनिश्चयभाव
नेवनिःशंकगुणो ज्ञातव्य इति॥ अथ निःकांक्षतागुणं कथयति॥ कः॥ इहलोकपरलोकाशारूपभोग
कांक्षानिदानत्यागेन केवलज्ञानाद्यनंतगुणव्यक्तिरूपमोक्षार्थं दानपूजातपश्चरणाद्यनुष्ठान
करणं निःकांक्षागुणो भण्यते॥ तथानंतमतिकन्यातथाप्रसिद्धाकिति
कथ्यते॥ यदा लोकापवादपरिहारार्थं अमुकाज्ञातालदारामस्वामिनादत्तेपट्टमहादेवीविभूतिप
दत्यक्तासकलभूषणानागारेकेवलिपालमूले कृतांतवक्त्रादिराजाभिस्तथा वज्रराज्ञीभिश्च सहा
जिनदीक्षां गृहीत्वा शशिप्रभाद्यार्यिकासमुदायेन सह ग्रामपुरखेटकादिविहारेण भेदाभेदरत्नत्रयभा
वनायां द्वाषष्टिवर्षाणि जिनसमयप्रभावनां कृत्वा पश्चादवसाने त्रयस्त्रिंशद्दिवसपर्यंतं निर्विकार

परमात्मभावनासहितं संन्यासं कृत्वा च्युताभिधाने षोडशस्वर्गे प्रतीन्द्रो जातः ततश्च निर्मलसम्यक्त्व
फलं दृष्ट्वा धर्मानुरागेण नरकं रावणलक्ष्मणयोः संबोधनं कृत्वेदानीं स्वर्गे तिष्ठति ॥ अग्रे स्वर्गादा
गत्य सकलचक्रवर्ती भविष्यति ॥ तौ च रावणलक्ष्मीधरौ तस्य पुत्रौ भविष्यतः ततश्च तीर्थकरपा
दमूले पूर्वभवान्तरं दृष्ट्वा पुत्रद्वयेन परिवारेण च सह जिनदीक्षां गृहीत्वा भेदरत्नत्रयभावनया पंचानुत्त
रविमाने त्रयो ऽप्यहमिन्द्रा भविष्यन्ति तस्मादागत्य रावणस्तीर्थकरो भविष्यति सीता च गणधर इति ल
क्ष्मीधरो विधातकीखंडद्वीपे तीर्थकरो भविष्यति इति व्यवहारनिःकांक्षागुणो ज्ञातव्यः ॥ निश्च
येन पुनस्तस्यैव व्यवहारनिःकांक्षागुणस्य सहकारित्वेन दृष्टश्रुतानुभूतपंचेन्द्रियभोगत्यागेन निश्चय
रत्नत्रयभावनोत्पन्नपारमार्थिकस्वात्मोत्थसुखामृतरसे चित्तसंतोषः स एव निःकांक्षागुण इति
॥ अथ निर्विचिकित्सागुणं कथयति ॥ भेदाभेदरत्नत्रयाराधकभव्यजीवानां दुर्गंधबीभत्सादिकं दृष्ट्वा ध
र्मबुद्ध्या कारुण्यभावेन वा यथायोग्यं विचिकित्सापरिहरणं द्रव्यनिर्विचिकित्सागुणो भण्यते ॥ यत्पुनर्जै

द्रव्यसं०
७८

नसमयेसर्वेसमीचीनंपरंकिंतुवस्त्रप्रावरणंजलस्नानादिकंचनकुर्वंति ॥ तदेवदूषणमित्यादिकुत्सितभावस्य
विशिष्टविवेकबलेनपरिहरणंभावनिर्विचिकित्साभण्यतइति ॥ अस्यव्यवहारनिर्विचिकित्सागुणस्यविषये
उद्दायनमहाराजकथारुक्मिणीमहादेवीकथाचागमप्रसिद्धाज्ञातव्येति ॥ ७ ॥ निश्चयेनपुनस्तस्यैवव्य
वहारनिर्विचिकित्सागुणस्यबलेनसमस्तद्वेषादिविकल्परूपकल्लोलमालात्यागेननिर्मलात्मानुभू
तिलक्षणेनिजशुद्धात्मनिव्यवस्थानंनिर्विचिकित्सागुणइति ॥ ७ ॥ अतःपरममूढदृष्टिगुणंकथयति ।
वीतरागसर्वज्ञप्रणीतागमबाह्यैः कुदृष्टिभिर्यत्प्रणीतंधातुवादखन्यवादहरमेखलक्षुद्रविद्याव्यंतर
विकुर्वणादिकमज्ञानिजनचित्तचमत्कारोत्पादकंदृष्ट्वाश्रुत्वाचमूढभावेनयोसौधर्मबुद्ध्यातत्ररुचिंभ
क्तिंनकरोति ॥ एवंव्यवहारेणामूढदृष्टिरुच्यते ॥ तत्रचोत्तरमथुरायांउद[illegible]भट्टारकेरेवतिश्राविकाचंद्र
प्रभनामविद्याधरब्रह्मचारिसंबोधिनीकथाप्रसिद्धेति ॥ निश्चयेनपुनःतस्यैव
प्रसादेनांतस्तत्वबहिस्तत्वनिश्चयेजातेसतिसमस्तमिथ्यात्वरागादिशुभाशुभसंकल्पविकल्पेष्वात्म

बुद्धिमुपादेयबुद्धिं हित्वबुद्धिममत्वभावं त्यक्त्वा त्रिगुप्तिरूपेण विशुद्धज्ञानदर्शनस्वभावेन निश्चलावस्थानं त
द्वामूढदृष्टित्वमिति ॥ ७ ॥ [illegible] ॥ पुत्रकलत्रादौ बाह्ये द्रव्ये ममेदमिति संकल्पनं संक
ल्पः ॥ अभ्यंतरे सुख्यहं दुःख्यहं इति हर्षविषादकारणं विकल्प इति ॥ अथवा वस्तुवृत्त्या संकल्पन इति कोर्थः
विकल्प इति तस्यैव पर्यायः ॥ [illegible] ॥ भेदाभेदरत्नत्रयभावनारूपो मोक्षमार्गः स्वभावे
न शुद्ध एव तावत् तत्राज्ञानिजननिमित्तेन तथैवाशक्तजननिमित्तेन च धर्मस्य पैशून्यं दूषणमपवादो दु
प्रभावना यदा भवति तदागमाविरोधेन यथाशक्त्यार्थेन धर्मोपदेशेन वा यद्धर्मार्थं दोषस्य झंपनं निवारणं
क्रियते तद्व्यवहारनयेनोपगूहनं भण्यते ॥ तत्र मायाब्रह्मचारिणा पार्श्वभट्टारकप्रतिमालग्नरत्नहरणे कृते
सत्युपगूहनविषये जिनदत्तश्रेष्ठिकथा प्रसिद्धेति ॥ अथवा रुद्रजनन्या ज्येष्ठासंज्ञाया लोकापवादे जाते
सति ॥ यद्दोषझंपनं कृतं तत्र चेलिनी महादेवी कथाति ॥ निश्चयेन पुनस्तस्यैव व्यवहारोपगूहनगुणस्य स
हकारित्वेन निजनिरंजननिर्दोषपरमात्मनः प्रच्छादका ये मिथ्यात्वरागादिदोषास्तेषां तस्मिन्नेव परमात्म

द्रव्यसं०
७९

निजस्य कर्मश्च्छादनं ज्ञानानुष्ठानरूपं यद्ध्यानं तेन प्रच्छादनं विनाशनं गोपनं झंपनं तदेवोपगूहनमिति ॥५॥ अ
थ स्थितीकरणं कथयति ॥ भेदाभेदरत्नत्रयाधारस्य चातुर्वर्णसंघस्य मध्ये यदा कोपि दर्शनचारित्रमोहो
दयेन दर्शनं ज्ञानं चारित्रं वा परित्यक्तुं वांछति तदागमाविरोधेन यथाशक्त्या धर्मश्रवणेन वा अर्थेन वे
केनाप्युपायेन यद्धर्मे स्थिरत्वं क्रियते तद्व्यवहारेण स्थितीकरणमिति ॥ तत्र च पुष्पडालतपोधनस्य स्थि
तीकरणप्रस्तावे वारिषेणकुमारकथागमप्रसिद्धेति ॥ निश्चयेन पुनस्तेनैव व्यवहारस्थितीकर
णगुणेन धर्मे दृढत्वे जाते सति दर्शनचारित्रमोहोदयजनितसमस्तमिथ्यात्वरागादिविकल्पजालत्या
गेन निजपरमात्मस्वभावनोत्पन्नपरमानंदैकलक्षणसुखामृतरसास्वादेन तल्लयतन्मयपरमसम
रसीभावेन चित्तस्थिरीकरणमेव स्थितीकरणमिति ॥६॥ अथ वात्सल्याभिधानं सप्तममंगं प्रतिपादय
ति ॥७॥ बाह्याभ्यंतररत्नत्रयाधारे चतुर्विधसंघे वत्से धेनुवत् पंचेंद्रियविषयनिमित्तं पुत्रकलत्रसुवर्णा
दिस्नेहवद्वा यदकृत्रिमस्नेहकरणं तद्व्यवहारेण वात्सल्यं भण्यते ॥ तत्र च ह

धिनीबलिनामदुष्टमंत्रिणानिश्चयव्यवहाररत्नत्रयाराधकाकंपनाचार्यप्रभृतिसप्तशतयतीनामु
पसर्गेक्रियमाणेसतिविष्णुकुमारनाम्नानिश्चयव्यवहारमोक्षमार्गाराधकपरमयतिनाविकुर्वणर्द्धि
प्रभावेनवामनरूपंकृत्वाबलिमंत्रिपार्श्वेपादत्रयप्रमाणभूमिप्रार्थनंकृत्वापश्चादेकपादोमेरुमस्तके
दत्तोद्वितीयस्तुमानुषोत्तरपर्वतेतृतीयपादस्यावकाशोनास्तीति वचनछलेनमुनिवात्सल्यनिमि
त्तंबलिमंत्रीबद्धइत्येकातावदागमप्रसिद्धाकथा ॥ छ ॥ द्वितीयाचदशपुरनगराधिपतेर्वज्रकर्ण
नाम्नाउज्जयनीनगराधिपतिनासिंहोदरमहाराजेनजैनोयंममनमस्कारंनकरोतीतिमत्वादश
पुरनगरपरिवेष्टनेनोपसर्गेक्रियमाणेभेदाभेदरत्नत्रयभावनाप्रियेणरामस्वामिनावज्रकर्ण
वात्सल्यनिमित्तंसिंहोदरोबद्धइतिरामायणमध्येप्रसिद्धेयंवात्सल्यकथेति ॥ छ ॥ निश्चयवात्स
ल्यंपुनस्तस्यैवव्यवहारवात्सल्यगुणस्यसहकारित्वेन ॥ धर्मेदृढत्वेजातेसतिमिथ्यात्वरागादिस
मस्तशुभाशुभबहिर्भावेषुप्रीतिंत्यक्त्वा ॥ रागादिविकल्पोपाधिरहितपरमस्वास्थ्यसंवित्तिसंजातस

दानैकलक्षणसुखामृतरसास्वादप्रीतिकरणमेवेति सप्तमांगं व्याख्यातं ॥ ७ ॥ अथाष्टमांगं प्रभावना
गुणो व्याख्यायते ॥ ७ ॥ श्रावकेन दानपूजादिना तपोधनेन च तपःश्रुतादिना जैनशासनप्रभावनाक
र्तव्येति ॥ व्यवहारेण प्रभावनागुणो ज्ञातव्यः ॥ ७ ॥ तत्र पुनरुत्तरपुराणे जिनसमयप्रभावनाशीलायाः
उर्विलामहादेव्याः प्रभावनानिमित्तमुपसर्गे जाते सति वज्रकुमारनाम्ना विद्याधरश्रमणेनाकाशे जै
नरथभ्रमणेन प्रभावना कृतेत्येका तावदागमप्रसिद्धा कथा ॥ ७ ॥ द्वितीया तु जिनसमयप्रभावना
शीलवप्रामहादेवीनाम स्वकीयजनन्या निमित्तं स्वस्य धर्मानुरागेण च हरिषेणनामदशमचक्रवर्ति
ना तद्भवमोक्षगामिना जिनसमयप्रभावनार्थमुत्तुङ्गतोरणजिनचैत्यालयमंडितं सर्वभूमितलं कृ
तमिति रामायणे प्रसिद्धेयं कथा ॥ निश्चयेन पुनस्तस्यैव व्यवहारप्रभावनागुणस्य बलेन मिथ्यात्व
विषयकषायप्रभृतिसमस्तविभावपरिणामरूपपरसमयानां प्रभावं हत्वा शुद्धोपयोगलक्षणस्वसंवेदन
ज्ञानेन विशुद्धज्ञानदर्शनस्वभावनिजशुद्धात्मनः प्रकाशनमनुभवनमेव प्रभावनेति ॥ ७ ॥ एवमुक्त

प्रकारेणमूढत्रयमदाष्टकषडनायतनशंकाद्यष्टमलरहितंशुद्धजीवादितत्त्वार्थश्रद्धानलक्षणंसरागा
सम्यक्त्वाभिधानंव्यवहारसम्यक्त्वंविज्ञेयं॥तथैवतेनैवव्यवहारसम्यक्त्वेनपारंपर्येणसाध्यंशुद्धोपयोगल
क्षणनिश्चयरत्नत्रयभावनोत्पन्नपरमाह्लादैकरूपसुखामृतरसास्वादनमेवोपादेय॥मिंद्रियसुखादि
कंचहेयमितिरुचिरूपंवीतरागचारित्रविनाभूतंवीतरागसम्यक्त्वाभिधानंनिश्चयसम्यक्त्वंचज्ञातव्यमि
ति॥छ॥अत्रव्यवहारसम्यक्त्वमध्येनिश्चयसम्यक्त्वंकिमर्थंव्याख्यातमितिचेत्॥व्यवहारसम्यक्त्वेननि
श्चयसम्यक्त्वंसाध्यत॥इतिसाध्यसाधकभावज्ञापनार्थमिति॥इदानींयेषांजीवानांसम्यग्दर्शनग्रहणा
त्पूर्वंआयुर्बंधोनास्तीति॥तेषांव्रताभावेपिनरकादिकुत्सितस्थानेषुजन्मनभवतीतिकथयति॥स
म्यग्दर्शनशुद्धाःनारकतिर्यङ्नपुंसकस्त्रीत्वानिदुःकुलविकृताल्पायुर्दरिद्रतांचव्रजंतिनाप्यव्रतिकाः
छ॥इतःपरंमनुष्यगतिसमुत्पन्नसम्यग्दृष्टेःप्रभावंकथयति॥छ॥ओजस्तेजोविद्यावीर्ययशोवृद्धिविजयवि
भवसनाथाः॥उत्तमकुलामहार्थामानवतिलकाभवंतिदर्शनपूताः॥छ॥अथदेवगतौपुनःप्रकी

द्रव्यसं०
८१

र्यकेदेवावाहनेदेवाकिल्बिषेदेवनीचेदेवत्रयं विहायान्येषुमहर्द्धिकदेवेष्वेवोत्पद्यतेसम्यग्दृष्टिः॥ छ॥ इदा
नीं सम्यक्त्वग्रहणात्पूर्वंदेवायुष्कं विहायये॥ बद्धायुष्कास्तान्प्रतिसम्यक्त्वमाहात्म्यंकथयति॥ छ॥ हेट्ठि
मछप्पुढवीणं॥ जोइसवणभवणसव्वइत्थीसु॥ पुण्णिदरेणहिसम्मो॥ णसासणोणारयापुण्णे॥ १॥ तमेवा
र्थंप्रकारान्तरेणकथयति॥ छ॥ ज्योतिर्भावनभौमेषु॥ षट्स्वधःश्वभ्रभूमिषु॥ तिर्यक्षुनरसुरस्त्रीषु॥ सद्द
ष्टिर्नैवजायते॥ छ॥ अथौपशमिकवेदकक्षायिकाभिधानसम्यक्त्वत्रयमध्येकस्यांगतौकस्यसम्यक्त्व
स्यसंभवोस्तीतिकथयति॥ छ॥ सौधर्मादिष्वसंख्यातायुष्कतिर्यक्षुतथापिरत्नप्रभावनौचस्यात्सम्यक्त्व
त्वत्रयंभोगिनां॥ छ॥ कर्मभूमिजपुरुषेचत्रयंसंभवति॥ बद्धायुष्कलब्धायुष्कोपिकिंत्वौपशमिकमप
र्याप्तावस्थायांमहर्द्धिकदेवेष्वेव॥ छ॥ शेषेषुदेवतिर्यक्षुषट्स्वधःश्वभ्रभूमिषुवेदकौपशमिकौस्या
तांपर्याप्तदेहिनां॥ इतिनिश्चयव्यवहाररत्नत्रयात्मकमोक्षमार्गावयविनःप्रथमावयवभूतस्यसम्यक्त्व
स्यव्याख्यानेनगाथागता॥ ४॥ अथरत्नत्रयात्मकमोक्षमार्गेद्वितीयावयवभूतस्यसम्यग्ज्ञानस्य.

रूपंप्रतिपादयति॥ ॥संसयविमोहविब्भमविवज्जियंअप्पपरसरूवस्स॥ गहणंसम्मण्णाणं॥ सायारमणेयभे
यंतु॥ ५॥ संशयःशुद्धात्मतत्त्वादिप्रतिपादकमागमज्ञानेकिं॥ वीतरागसर्वज्ञप्रणीतंभविष्यतिपरसमयप्र
णीतंवेतिसंशयः॥ तत्रदृष्टांतं॥ स्थाणुर्वापुरुषोवा॥ विमोहःपरस्परसापेक्षनयद्वयेनद्रव्यगुणपर्यायादिप
रिज्ञानाभावोविमोहः॥ तत्रदृष्टांतं गच्छत्तृणस्पर्शवद्दिग्मोहवद्वा॥ विभ्रम मनेकांतात्मकवस्तुनोनित्य
क्षणिकैकांतादिरूपेणग्रहणंविभ्रमः॥ ॥ तत्रदृष्टांतः॥ शुक्तिकायांरजतविज्ञानवत्॥ विवज्जियं इत्यु
क्तलक्षणसंशयविमोहविभ्रमैर्वर्जितं॥ अप्पपरसरूवस्सगहणं॥ सहजशुद्धकेवलज्ञानदर्शनस्वभाव
स्वात्मस्वरूपस्यग्रहणंपरिच्छेदनंपरिच्छित्तिस्तथापरद्रव्यस्यचभावकर्मद्रव्यकर्मनोकर्मरूपस्यजीवसं
बंधिनस्तथैवपुद्गलादिपंचद्रव्यस्वरूपस्यपरकीयजीवस्यचपरिच्छेदनंयत्तत्सम्मण्णाणं॥ सम्यग्ज्ञानं
भवति॥ तच्चकथंभूतंसायारं॥ घटोयंपटोयमित्यादिग्रहणव्यापाररूपेणसाकारं॥ सविकल्पंव्यवसा
यात्मकंनिश्चयात्मकमित्यर्थः॥ पुनरपिकिंविशिष्टं॥ अणेयभेयंतु॥ अनेकभेदंतु॥ पुनरितितस्यभेदा॥

कथ्यंते॥मतिश्रुतावधिःमनःपर्ययकेवलज्ञानभेदेनपंचधा॥अथवाश्रुतज्ञानोपलक्षणाद्वादशांगानिभेदा
ह्यंचेति॥द्विभेदं॥द्वादशांगानांनामानिकथ्यंते॥आचारं॥सूत्रकृतंस्थानंसमवायनामधेयं॥व्याख्याप्रज्ञप्तिः
ज्ञातृकथोपासकाध्ययनं॥अंतकृद्दशं॥अनुत्तरोपपादिकदशं॥प्रश्नव्याकरणं॥विपाकसूत्रं॥दृष्टि
वादश्चेति॥दृष्टिवादस्यचपरिकर्म॥सूत्रं॥प्रथमानुयोगं॥पूर्वगतं॥चूलिकाभेदेनपंचभेदाःकथ्यंते॥
चंद्रसूर्यजंबूद्वीपद्वीपसागरव्याख्याप्रज्ञप्तिभेदेनपरिकर्मपंचविधंभवति॥सूत्रमेकभेदमेव॥प्रथ
मानुयोगोप्येकभेदः॥पूर्वगतंपुनरुत्पादपूर्वं॥अग्रायणीयं॥वीर्यानुवादं॥अस्तिनास्तिप्रवादं॥स
प्रवादं॥आत्मप्रवादं॥कर्मप्रवादं॥प्रत्याख्यानं॥विद्यानुवादं॥कल्याणनामधेयं॥प्राणानुवादं॥
याविशालं॥लोकसारं॥पूर्वंचेतिचतुर्दशभेदं॥जलगतस्थलगताकाशगतहरमेखलादिमायास्वरू
पशक्त्यादिरूपपरावर्तनभेदेनचूलिकापंचविधाचेति॥संक्षेपेणद्वादशांगव्याख्यानं॥ ॥अंग
बाह्यंपुनःसामायिकंचतुर्विंशतिस्तवं॥वंदनाप्रतिक्रमणं॥वैनयिकं॥कृतिकर्म॥दशवैकालिकं

उत्तराध्ययनं कल्पव्यवहारः॥ कल्पाकल्पं॥ महाकल्पं॥ पुंडरीकं॥ महापुंडरीकं॥ अशीतिकं चेति॥ च
तुर्दशप्रकीर्णकसंज्ञं बोद्धव्यमिति॥ ॥ अथ वृषभादिचतुर्विंशतितीर्थंकरभरतादिद्वादशच
क्रवर्तिविजयादिनवबलदेव॥ त्रिपृष्ठादिनववासुदेव॥ सुग्रीवादिनवप्रतिवासुदेवसंबंधित्रिषष्टिपु
रुषपुराणभेदभिन्नः प्रथमानुयोगो भण्यते॥ उपासकाध्ययनादौ श्रावकधर्मं आचाराधनादौ य
तिधर्मं च यत्र मुख्यत्वेन कथयति स चरणानुयोगो भण्यते॥ त्रिलोकसारे जिनांतरलोकविभागा
दिग्रंथव्याख्यानं करणानुयोगो विज्ञेयः॥ प्राभृततत्त्वार्थसिद्धांतादौ यत्र शुद्धाशुद्धजीवादिषड्
द्रव्यादीनां मुख्यवृत्त्या व्याख्यानं क्रियते स द्रव्यानुयोगो भण्यते॥ इत्युक्तलक्षणानुयोगचतुष्टयरूपेण
चतुर्विधं श्रुतज्ञानं ज्ञातव्यमिति॥ ॥ अनुयोगाधिकारपरिच्छेदप्रकरणमित्याद्येकार्थः॥ अथ षट्
द्रव्यपंचास्तिकायसप्ततत्त्वनवपदार्थेषु मध्ये निश्चयनयेन स्वकीयशुद्धात्मद्रव्यं स्वशुद्धजीवास्तिका
यो निजशुद्धात्मतत्त्वं निजशुद्धात्मपदार्थ उपादेयः॥ शेषं च हेयमिति संक्षेपेन हेयोपादेयभेदेन द्वि

द्रव्यसं० ध्याव्यवहारज्ञानमिति॥छ॥ इदानीं तैनैव विकल्परूपव्यवहारज्ञानेन साध्यं निश्चयज्ञानं कथ्यते॥ तथाहि

८३ रागात्परकलत्रादिवांछारूपं द्वेषात्परवधबंधछेदादिवांछारूपं च मदीयापध्यानं कोपि न जानातीति मत्वा स्व

शुद्धात्मभावनासमुत्पन्नसदानंदैकलक्षणसुखामृतनिर्मलजलेन चित्तशुद्धिमकुर्वाणः॥ सन्नयं जीवो

भेषेण यल्लोकरंजनां करोति तन्मायाशल्यं भण्यते॥ निजनिरंजननिर्दोषपरमात्मैवोपादेय

इति रुचिरूपसम्यक्त्वाद्विलक्षणं मिथ्याशल्यं भण्यते॥ निर्विकारपरमचैतन्यभावनोत्पन्नपरमाह्लादैकरूप

सुखामृतरसास्वादमलभमानोयं जीवो दृष्टश्रुतानुभूतभोगेषु यन्नियतं निरंतरं चित्तं ददाति तन्निदानश

धीयते॥ इत्युक्तलक्षणशल्यत्रयविभावपरिणामप्रभृतिसमस्तशुभाशुभसंकल्पविकल्परहिते

समुत्पन्नतात्त्विकपरमानंदैकलक्षणसुखामृततृप्तेन

स्व

विकल्परूपेण वेदनं परिज्ञानमनुभवनमिति निर्विकल्पस्वसंवेदनज्ञानमेव निश्चयज्ञानं भण्यते॥

हरिणः॥ इत्युक्तप्रकारेणाभ्यंतरे यन्निर्विकल्पस्वसंवेदनज्ञानं भण्यते तन्न घटते॥ कस्मादिति चे

तत्रउच्यते॥ सत्तावलोकरूपंचक्षुरादिदर्शनंयथाजैनमतेनिर्विकल्पंकथ्यते॥ तथाबौधमतेज्ञानंनिर्वि।
कल्पंभण्यते॥ परंकिंतुतन्निर्विकल्पमपिविकल्पजनकंभवति॥ जैनमतेतुविकल्पस्योत्पादकंभवत्येवंन।
किंतुस्वरूपेणैवसविकल्पमिति॥ तथैवस्वपरप्रकाशकंचेति॥ तत्रपरिहारः॥ कथंचित्सविकल्पकंच तथाहि
यथाविषयानंदरूपस्वसंवेदनंरागसंवित्तिविकल्परूपेणसविकल्पमपिशेषानीहितसूक्ष्मविकल्पानां
सद्भावेपिसति॥ तेषांमुख्यत्वंनास्ति॥ तेनकारणेननिर्विकल्पमपिभण्यते॥ तथास्वशुद्धात्मसंवित्तिरूपं।
वीतरागस्वसंवेदनज्ञानमपिस्वसंवित्त्याकारैकविकल्पेनसविकल्पमपिबहिर्विषयानीहितसूक्ष्मविकल्पै
नांसद्भावेपिसतितेषांमुख्यत्वंनास्तितेनकारणेननिर्विकल्पमपिभण्यते॥ यतश्चेहापूर्वस्वसंवित्त्याका
रांतर्मुखप्रतिभासेपिबहिर्विषयानीहितसूक्ष्मविकल्पाअपिसंतिततःकारणात्स्वपरप्रकाशंचप्र
सिद्धं॥ इदंतुसविकल्पनिर्विकल्पस्यतथैवस्वपरप्रकाशकस्यचज्ञानस्यव्याख्यानंयद्यागमाध्यात्म
तर्कशास्त्रानुसारेणविशेषेणव्याख्यायतेतदामहान्विस्तारोभवति॥ सचाध्यात्मशास्त्रत्वान्नकृतः॥ ५

द्रव्यसं॰
२५

ति॥ छ॥ एवंरत्नत्रयात्मकमोक्षमार्गावयविनिरूपितोऽवयवभूतस्यसम्यग्ज्ञानस्यव्याख्यानेनगाथापत॥ ४२
अथनिर्विकल्पसत्ताग्राहकंदर्शनंकथयति॥ छ॥ जंसामण्णंगहणं॥ भावाणंणेवकट्टुमायारं॥ अविसेसिदूण
अट्ठे॥ दंसणमिदिभण्णएसमए॥ ५॥ ४३॥ जंसामण्णंगहणंभावाणंणेवकट्टुमायारं॥ यत्सामान्येनसत्ताव
लोकनग्रहणंपरिच्छेदनं॥ भावानांपदार्थानां॥ किंकृत्वा॥ णेवकट्टुमायारं॥ नैवकृत्वाकं आकारंविकल्पं
तदपिकिंकृत्वा॥ अविसेसिदूणअट्ठे॥ अविशेष्याविभेद्यअर्थान्केनरूपेणशुक्लोऽयं॥ कृष्णोऽयं॥ दीर्घोऽयं
ह्रस्वोऽयं॥ घटोऽयंपटोऽयमित्यादि॥ दंसणमिदिभण्णएसमए॥ तत्सत्तावलोकनं॥ दर्शनमितिभण्यते॥ समये
परमागमे॥ इदमेवतत्त्वार्थश्रद्धानलक्षणंसम्यग्दर्शनंनवक्तव्यं॥ कस्मादितिचेत्॥ तत्रश्रद्धानंविकल्प-
रूपमिदंतुनिर्विकल्पंयतः॥ छ॥ अयमत्रभावः॥ यदाकोऽपिकिमप्यवलोकयतिपश्यतितदायावद्विकल्पं
नकरोतितावत्सत्तामात्रग्रहणंदर्शनंभण्यते॥ पश्चाच्छुक्लादिविकल्पेजातेज्ञानमिति॥ ४३॥ अथछद्म
स्थानांज्ञानंसत्तावलोकनदर्शनपूर्वकंभवति॥ मुक्तात्मनांयुगपदितिप्रतिपादयति॥ छ॥ दंसणपुव्वं॥ णा॥

नवकं यदवग्रहेहादिरूपं मतिज्ञानं भणितं तदपि दर्शनपूर्वकत्वादुपचारेण दर्शनं भण्यते॥ यतस्तेन कारणेन
श्रुतज्ञानमनःपर्ययज्ञानद्वयमपि दर्शनपूर्वकं ज्ञातव्यमिति॥ एवं छद्मस्थानां सावरणक्षायोपशमिकज्ञा
नसहितत्वात् दर्शनपूर्वकं भवति॥ केवलिनां तु भगवतां निर्विकारस्वसंवेदनसमुत्पन्ननिरावरणक्षायिक
ज्ञानसहितत्वान्निर्मेघादित्ये युगपदातपप्रकाशवद्दर्शनं ज्ञानं च युगपदेवेति विज्ञेयं॥ छ॥ छद्मस्था इति
कोऽर्थः॥ छद्मशब्देन ज्ञानदर्शनावरणद्वयं भण्यते॥ तत्र तिष्ठंतीति छद्मस्थाः॥ एवं तर्काभिप्रायेण सत्ता
वलोकदर्शनं व्याख्यातं॥ इत ऊर्ध्वं सिद्धांताभिप्रायेण कथ्यते॥ तथाहि॥ उत्तरज्ञानोत्पत्तिनिमित्तं य
त्प्रयत्नं तद्रूपं यत्स्वस्यात्मनः परिछेदनमवलोकनं तद्दर्शनं भण्यते॥ तदनंतरं यद्बहिर्विषये विकल्परूपे
ण पदार्थग्रहणं तज्ज्ञानमिति वार्तिकं॥ यथा कोऽपि पुरुषो घटविषयविकल्पं कुर्वन्नास्ते पश्चा
त्पटपरिज्ञानार्थं चित्ते जाते सति घटविकल्पाद्व्यावर्त्य यत्स्वरूपे प्रयत्नमवलोकनं परिछेदनं करोति
तद्दर्शनमिति॥ तदनंतरं पटोऽयमिति निश्चयं यद्बहिर्विषयरूपेण पदार्थग्रहणविकल्पं क

छदमत्थाणं॥ ण दोण्णि उवउग्गा॥ जुगवं जम्हा केवलिणाहे जुगवं तु ते दोवि॥ ४४॥ दंसणपुव्वं णाणं छदमत्था
णांनदोणिउवउगा॥ सत्तावलोकनदर्शनपूर्वकं ज्ञानं भवति॥ छद्मस्थानां संसारिणां॥ कस्मात्॥ णदोणिउ
वउगा जुगवं जम्हा॥ ज्ञानदर्शनोपयोगद्वयं युगपन्न भवति॥ यस्मात्केवलिणाहे जुगवं तु ते दोवि॥ केवलिनाथे
तु युगपत्तौ ज्ञानदर्शनोपयोगौ द्वौ भवतः॥ अथ विस्तरः॥ चक्षुरादींद्रियाणां स्वकीयस्वकीयक्षयोपशमानुसारेण
तद्योग्यदेशस्थितरूपादिविषयाणां ग्रहणमेव सन्निपातः संबंधः सन्निकर्षो भण्यते॥ न च नैयायिकमतव
त्॥ चक्षुरादींद्रियाणां रूपादिस्वकीयस्वकीयविषयपार्श्वे गमनं इति सन्निकर्षो वक्तव्यः॥ स एव संबंधो लक्षणं य
स्य तत् लक्षणं यत् निर्विकल्पं सत्तावलोकनदर्शनं तत्पूर्वं शुक्लमित्याद्यवग्रहादिविकल्परूपमिंद्रियानिंद्रि
यजनितं मतिज्ञानं भवति॥ इत्युक्तलक्षणमतिज्ञानपूर्वकं तु धूमादग्निविज्ञानवदर्थादर्थान्तरग्रहणरू
पं लिंगजं॥ तथैव घटादिशब्दश्रवणरूपं शब्दजं चेति द्विविधं श्रुतज्ञानं भवति॥ अथावधिज्ञानं पुनरव
धिदर्शनपूर्वकमिति॥ ईहामतिज्ञानपूर्वकं तु मनःपर्ययज्ञानं भवति॥ अत्र श्रुतज्ञानमनःपर्ययज्ञानज

सम्यक्त्वं भण्यते॥ यतः कारणात् परिभेदो नास्ति तर्हि कथमावरणद्वयमिति चेत्॥ तत्रोत्तरं येन कर्मणा पदार्थपरिच्छित्ति
रूपः क्षयोपशमः प्रच्छाद्यते तस्य ज्ञानावरणसंज्ञा॥ तस्यैव क्षयोपशमविशेषस्य यत्कर्म पूर्वोक्तलक्षणं विपरी
ताभिनिवेशमुत्पादयति तस्य मिथ्यात्वसंज्ञेति॥ भेदनयेनावरणभेदः निश्चयनयेन पुनरभेदविवक्षायां कर्मत्वं प्र
त्यावरणद्वयमप्येकमेव ज्ञातव्यं॥ एवं दर्शनपूर्वकं ज्ञानं भवतीति व्याख्यानरूपेण गाथा गता॥ ४४॥ अथ स
म्यग्दर्शनपूर्वकं रत्नत्रयात्मकं मोक्षमार्गं तृतीयावयवभूतं स्वशुद्धात्मानुभूतिरूपशुद्धोपयोगलक्षणवीत
रागचारित्रस्य पारंपर्येण साधकं सरागचारित्रं प्रतिपादयति॥ ॥ असुहादो विणिवित्ती सुहे पवित्ती य
जाण चारित्तं॥ वदसमिदिगुत्तिरूवं ववहारणया दु जिणभणियं॥ ४५॥ अस्यैव सरागचारित्रस्यैकदेशा
वयवभूतं देशचारित्रं तावत्कथ्यते॥ तद्यथा॥ मिथ्यात्वादिसप्तप्रकृत्युपशमक्षयोपशमक्षये सत्यध्यात्मभा
षया निजशुद्धात्माभिमुखपरिणामविशेषे शुद्धात्मभावनोत्पन्ननिर्विकारवास्तवसुखामृतमुपादेयं कृ
त्वा संसारशरीरभोगेषु योसौ हेयबुद्धिः सम्यग्दर्शनशुद्धिः स चतुर्थगुणस्थानवर्ती व्रतरहितो दर्शनिको भ

छद्मस्थानां न द्वौ उपयोगौ युगपत् यस्मात् केवलिनाथे युगपत् तु तौ द्वावपि ॥ ४४ ॥ दंसणपुव्वंणाणंछदुमत्थाणं

णदोण्णिउवउग्गा॥ सत्तावलोकनदर्शनपूर्वकंज्ञानंभवति॥ छद्मस्थानांसंसारिणां॥ कस्मात्॥ णदोण्णिउ

वउग्गाजुगवंजम्हा॥ ज्ञानदर्शनोपयोगद्वयंयुगपन्नभवति॥ यस्मात्केवलिणाहेजुगवंतुतेदोवि॥ केवलिनाथे

तुयुगपत्तौज्ञानदर्शनोपयोगौद्वौभवतः॥ अथविस्तरः॥ चक्षुरादीन्द्रियाणांस्वकीयक्षयोपशमानुसारेण

तद्योग्यदेशस्थितरूपादिविषयाणांग्रहणमेवसन्निपातःसंबंधःसन्निकर्षोभण्यते॥ नचनैयायिकमतव

त्॥ चक्षुरादीन्द्रियाणांरूपादिस्वकीयविषयपार्श्वेगमनमितिसन्निकर्षोवक्तव्यः॥ सएवसंबंधोलक्षणेय

थातत्क्षणोत्पन्नंनिर्विकल्पंसत्तावलोकनदर्शनंतत्पूर्वंशुक्लमित्याद्यवग्रहादिविकल्परूपमिन्द्रियानिन्द्रि

यजनितंमतिज्ञानंभवति॥ इत्युक्तलक्षणमतिज्ञानपूर्वकंतुधूमादग्निविज्ञानवदर्थादर्थांतरग्रहणरू

पंलिंगजं॥ तथैवघटादिशब्दश्रवणरूपंशाब्दंचेतिद्विविधंश्रुतज्ञानंभवति॥ अथावधिज्ञानंपुनरव

धिदर्शनपूर्वकमिति॥ ईहामतिज्ञानपूर्वकंतुमनःपर्ययज्ञानंभवति॥ अत्रश्रुतज्ञानमनःपर्ययज्ञानज

रोतितत्ज्ञानं भण्यते ॥ ६ ॥ अत्राह शिष्यः ॥ यद्यात्मग्राहकं दर्शनं भण्यते तर्हि यथा नैयायिकमते ज्ञानमात्मा
नं न जानाति तथा जैनमतेपि ज्ञानमात्मानं न जानातीति दूषणं प्राप्नोति ॥ अत्र परिहारः नैयायिकमते ज्ञानं
पृथक् दर्शनं पृथगिति गुणद्वयं नास्ति ॥ तेन कारणेन तेषामात्मपरिज्ञानाभावदूषणं प्राप्नोति ॥ जैनमते पु
नर्ज्ञानगुणेन परद्रव्यं जानाति ॥ दर्शनगुणेनात्मानं च जानात्यात्मपरिज्ञानाभावदूषणं न प्राप्नोति ॥ क
स्मादिति चेत् ॥ यथैकोप्यग्निर्दहतीति दाहकः पचतीति पाचको विषयभेदेन द्विधा भिद्यते ॥ तथैवा
भेदनयेनैकमपि चैतन्यं भेदनयविवक्षायां यदात्मग्राहकत्वेन प्रवृत्तं तदा तस्य दर्शनं इति संज्ञा ॥ पश्चा
त् यच्च परद्रव्यग्राहकत्वेन प्रवृत्तं तस्य ज्ञानसंज्ञेति विषयभेदेन द्विधा भिद्यते ॥ किंच ॥ यदि सामान्यग्राह
कं दर्शनं विशेषग्राहकं ज्ञानं भण्यते तदा ज्ञानस्य प्रमाणत्वं न प्राप्नोति ॥ कस्मादिति चेत् ॥ वस्तुग्राहकं
प्रमाणं वस्तु च सामान्यविशेषात्मकं ॥ ज्ञानेन पुनर्वस्त्वेकदेशो विशेष एव गृहीतो न च वस्तु ॥ सिद्धान्तेन
पुनर्निश्चयेन गुणगुणिनोरभिन्नत्वात् ॥ संशयविमोहविभ्रमरहितवस्तुज्ञानस्वरूपात्मैव प्रमाणं स च

प्रदीपवत्स्वपरगतंसामान्यंविशेषंचजानाति॥तेनकारणेनाभेदेनतस्यैवप्रमाणत्वमिति॥अथमतं॥य
दिदर्शनंबहिर्विषयेनप्रवर्त्ततेतदांधवत्सर्व्वजनानामंधत्वंप्राप्नोतीति॥नैवं॥वक्तव्यं॥बहिर्विषयेदर्शनाभा
वेपिज्ञानेनविशेषेणसर्व्वंपरिछिन्नतीति॥अयंतुविशेषः॥दर्शनेनात्मनिगृहीतेसत्यात्माविनाभूतंज्ञा
नमपिगृहीतंभवति॥ज्ञानेचगृहीतेसतिज्ञानविषयभूतंबहिर्वस्त्वपिगृहीतंभवतीति॥अथोक्तं॥भवता
यद्यात्मग्राहकंदर्शनंभण्यतेतर्हि॥जंसामण्णंगहणंभावाणंतद्दर्शनमितिगाथार्थः कथंघटते॥तत्रो
त्तरं॥सामान्यग्रहणंतद्दर्शनंकस्मादितिचेत्॥आत्मावस्तुपरिछित्तिंकुर्वन्निदंनजानामीदंजानामि
इतिविशेषपक्षपातंनकरोति॥किंतुसामान्येनवस्तुपरिछिनत्तितेनकारणेनसामान्यशब्देनात्मा
भण्यते॥इतिगाथार्थः किंबहुना॥ यदिकोपितर्कार्थंसिद्धांतार्थंचज्ञात्वैकांतदुराग्रहत्यागेननयवि
भागेनमध्यस्थवृत्त्याव्याख्यानंकरोति॥तदाद्वयमपिघटतइति॥ कथमितिचेत्॥तर्केमुख्यवृत्त्याप
रसमयव्याख्यानं॥तत्रयदाकोपिपरसमयीपृच्छति॥जैनागमेदर्शनंज्ञानंचेतिगुणद्वयंजीवस्यकथ्य

ते तत्कथं घटत इति तदानीं आत्मग्राहकं दर्शनमिति कथिते सति तेन ज्ञानेनेति यस्मादाचार्यैस्तेषां
शिष्याणां सुखबोधार्थं व्याख्यानेन वस्तुनः सामान्यपरिच्छेदनं तस्य सत्तावलोकनदर्शनसंज्ञा स्थापिता य
त्पुनः शुक्लमिदमित्यादि विशेषपरिच्छेदनं तस्य ज्ञानसंज्ञा स्थापितेति दोषो नास्ति सिद्धांते पुनः स्वसमयव्या
ख्यानमुख्यत्वात्सूक्ष्मव्याख्याने क्रियमाणे सत्याचार्यैरात्मग्राहकं दर्शनं व्याख्यातमित्यत्रापि दोषो नास्ति ॥
अत्राह शिष्यः सत्तावलोकदर्शनस्य ज्ञानेन सह भेदो ज्ञातस्तावत् इदानीं यत्तत्त्वार्थश्रद्धानरूपं सम्यग्दर्शनं
वस्तुविचाररूपं सम्यग्ज्ञानं तयोर्विशेषो न ज्ञायते ॥ कस्मादिति चेत् ॥ सम्यग्दर्शने पदार्थनिश्चयोऽस्ति तथैव
सम्यग्ज्ञाने च को विशेष इति ॥ अत्र परिहारः ॥ अर्थग्रहणपरिच्छित्तिरूपः क्षयोपशमविशेषो ज्ञानं भण्यते
तत्रैव भेदनयेन वीतरागसर्वज्ञप्रणीतशुद्धात्मादितत्त्वेष्विदमेवेत्थमेवेति निश्चयसम्यक्त्वमिति ॥ अवि
कल्परूपेणाभेदनयेन पुनर्यदेव सम्यग्ज्ञानं तदेव सम्यक्त्वमिति ॥ कस्मादिति चेत् ॥ अतत्त्वे तत्त्वबुद्धिर्देवे
ऽदेवबुद्धिरधर्मे धर्मबुद्धिरित्यादिविपरीताभिनिवेशरहितस्य ज्ञानस्यैव सम्यक्त्वविशेषवाच्योऽवस्थाविशेषः ॥

पृ०सं० चारित्रमुपदिशति॥ ॥ असुहादो विणिवित्ती सुहे पवित्ती य जाण चारित्तं॥ अशुभान्निवृत्तिः शुभे प्रवृत्तिश्चापि जा
८८ नीहि चारित्रं॥ तच्च कथंभूतं वदसमिदिगुत्तिरूवं ववहारणया दु जिणभणियं॥ व्रतसमितिगुप्तिरूपं व्यवहारनयाज्जि
नैरुक्तमिति॥ ॥ तथाहि॥ प्रत्याख्यानावरणसंज्वलनतीव्रकषायक्षयोपशमे सति॥ विसयकसाउग्गाढो दुस्सुदिदुच्चि
त्तदुट्ठोहिजुदो॥ उग्गो उम्मग्गपरो उवओगो जस्स सो असुहो॥ ॥ इति गाथाकथितलक्षणाद् अशुभोपयोगान्निवृ
त्तिस्तद्विलक्षणे शुभोपयोगे प्रवृत्तिश्च हे शिष्य चारित्रं जानीहि॥ तच्चाराधनादिचरणशास्त्रोक्तप्रकारेण पं
चमहाव्रतपंचसमितित्रिगुप्तिरूपमपहृतसंयमाख्यं शुभोपयोगलक्षणं सरागचारित्राभिधानं भवति॥ त
त्र योसौ बहिर्विषये पंचेन्द्रियविषयादिपरित्यागः स उपचरितासद्भूतव्यवहारेण यश्चाभ्यंतरे रागादिपरिहारः
स पुनरशुद्धनिश्चयेनेति नयविभागो ज्ञातव्यः॥ एवं निश्चयचारित्रसाधकं व्यवहारचारित्रं व्याख्यातमिति॥
॥ अथ तेनैव व्यवहारचारित्रेण साध्यं निश्चयचारित्रं निरूपयति॥ ॥ बहिरब्भंतरकिरियारोहो भवकार
णप्पणासट्ठं॥ णाणिस्स जं जिणुत्तं तं परमं सम्मचारित्तं॥ ४६॥ व्या॥ तत्परमोपेक्षालक्षणं नि

स्वसंवित्यात्मकसुखापये॥गा विना भूतपरमसम्यक्चारित्रं ज्ञातव्यं॥ तत्किं॥ बहिरब्भंतरकिरियारोहो॥ निष्क्रि
यनित्यनिरंजनविशुद्धज्ञानदर्शनस्वभावस्य निजात्मनः प्रतिपक्षभूतस्य बहिर्विषये शुभाशुभवचनकाय
व्यापाररूपस्य तथैवाभ्यंतरे शुभाशुभमनोविकल्परूपस्य च क्रियाव्यापारस्य योसौ निरोधस्त्यागः सच किम
र्थं॥ भवकारणप्पणासट्ठं॥ पंचप्रकारभवातीतनिर्दोषपरमात्मनो विलक्षणस्य भवस्य संसारस्य व्यापाररू
पस्य कारणभूतो योसौ शुभाशुभकर्माश्रवस्तस्य प्रणाशार्थं विनाशार्थं॥ इत्युभयक्रियानिरोधलक्षण
चारित्रं॥ कस्य भवति॥ णाणिस्स॥ निश्चयरत्नत्रयात्मकाभेदज्ञानिनः पुनरपि किं विशिष्टं॥ यत् जं॥
जिणुत्तं॥ यज्जिनेन वीतरागसर्वज्ञेनोक्तमिति॥ तं वीतरागसम्यक्ज्ञानाविनाभूतं निश्चयरत्नत्रयात्मक
निश्चयमोक्षमार्गतृतीयावयवरूपं वीतरागचारित्रं व्याख्यातं॥४६॥ इति द्वितीयस्थले गाथाषट्कं गतं॥ ए
वं मोक्षमार्गप्रतिपादकतृतीयाधिकारमध्ये निश्चयव्यवहारमोक्षमार्गसंक्षेपकथनेन सूत्रषट्कं॥ तदनं
तरं तस्यैव मोक्षमार्गस्यावयवभूतानां सम्यग्दर्शनज्ञानचारित्राणां विशेषविवरणरूपेण सूत्राष्टकेति।

स्थलद्वयसमुदायेनाष्टगाथाभिर्मोक्षमार्गाधिकारः समाप्तः ॥ ॥ अतः परं ध्यानध्यातृध्येयध्यानफलक
थनमुख्यत्वेन प्रथमस्थले गाथात्रयं ॥ ततोपि पंचपरमेष्ठिव्याख्यानरूपेण द्वितीयस्थले गाथापंचकं ॥ ततस्त
स्यैव ध्यानस्योपसंहाररूपविशेषव्याख्यानेन तृतीयस्थले सूत्रचतुष्टयमिति ॥ स्थलत्रयसमुदायेन द्वादश
सूत्रैर्द्वितीयांतराधिकारे समुदायपातनिका ॥ ॥ तद्यथा ॥ निश्चयव्यवहारमोक्षमार्गसाधकध्यानाभ्यासं कु
रुत यूयमित्युपदिशति ॥ ॥ [illegible]
[illegible] ॥ दुविहं पि मोक्खहेउं झाणे पाउणदि जं मुणी णियमा ॥ द्विविधमपि मोक्षहेतुं ध्या
नेन मोक्षहेतुं प्राप्नोति ॥ यस्मान्मुनिर्नियमात् ॥ तद्यथा ॥ निश्चयरत्नत्रयात्मकं निश्चयमोक्षहेतुं निश्चयमो
क्षमार्गं ॥ तथैव व्यवहाररत्नत्रयात्मकं व्यवहारमोक्षहेतुं ॥ व्यवहारमोक्षमार्गं च यं साध्यसाधकभावेन क
थितवान् ॥ पूर्वं तद्द्विविधमपि ॥ निर्विकारस्वसंवित्त्यात्मकपरमध्यानेन मुनिः प्राप्नोति ॥ यस्मात्कारणात् ॥ त
म्हा पयत्तचित्ता जूयं झाणं समब्भसह ॥ तस्मात्प्रयत्नचित्ताः संतो हे भव्या यूयं ध्यानं सम्यगभ्यस्यत ॥ तथा

हि॥ तस्मात्कारणात् दृष्टश्रुतानुभूतनानामनोरथरूपसमस्तशुभाशुभरागादिविकल्पजालं त्यक्त्वा परमस्वा
स्थ्यसमुत्पन्नसहजानंदैकलक्षणसुखामृतरसास्वादानुभवस्थित्वा च ध्यानाभ्यासं कुरुत यूयमिति ॥४७॥
अथ ध्यातृपुरुषलक्षणं ध्यानसामग्रीं च कथयति ॥ मा मुज्झह मा रज्जह मा दुस्सह इट्ठणिट्ठअट्ठेसु ॥ थिरमिच्छहि जइ चित्तं वि
चित्तझाणप्पसिद्धीए ॥४८॥ मा मुह्यत मा रज्यत मा द्विष्ट ॥ समस्तमोहरागद्वेषजनितवि
कल्पजालरहितनिजपरमात्मतत्त्वभावनासमुत्पन्नपरमानंदैकलक्षणसुखामृतरसात्सकाशादुत्पन्ना सं
जाता ॥ तत्रैव परमात्मसुखास्वादे लीना तन्मया या तु परमकला परमसंवित्तिस्तत्रास्थित्वा हे भव्या मोहरागद्वे
षान्मा कुरुत केषु विषयेषु इष्टानिष्टपदार्थेषु ॥ स्रग्वनिताचंदनतांबूलादयः इष्टेंद्रियार्था अहिविषकंटकशत्रु
व्याधिप्रभृतयः पुनरनिष्टेंद्रियार्थाः ॥ तेषु यदि किं स्थिरमिच्छत यूयं चित्तं तत्रैव परमात्मानुभवे स्थिरं निश्चल
चित्तं ॥ यदि इच्छथ यूयं किमर्थं ॥ विचित्तध्यानप्रसिद्ध्यै ॥ विचित्रं नानाप्रकारं यद्ध्यानं तत्प्रसिद्ध्यै निमित्तं ॥ अथ
वा विगतं चित्तं चिंताजनितशुभाशुभसंकल्पजालं यत्र तद्विचित्रं ध्यानं तदर्थमिति ॥४८॥ इदानीं तस्यैव ध्याना

द्रव्यसं०
६०

स्यत्तावदार्त्तध्यानभेदाः कथ्यंते। तथाहि। अनिष्टवियोगेष्टसंयोगव्याधिप्रतीकारभोगनिदाने
षु वांछारूपं चतुर्विधमार्त्तध्यानं। तच्च मिथ्यादृष्ट्यादितारतम्येन षड्गुणस्थानवर्त्तिजीवसंभवं। यद्यपि मि
थ्यादृष्टीनां तिर्यग्गतिकारणं भवति तथापि बद्धायुष्कं विहाय सम्यग्दृष्टीनां न भवति। कस्मादिति चेत्। स्वशु
द्धात्मैवोपादेय इति विशिष्टभावनाबलेन तत्कारणभूतसंक्लेशाभावादिति। हिं
सानंद मृषानंद स्तेयानंद विषयसंरक्षणानंदप्रभवं रौद्रं चतुर्विधं। तारतम्येन मिथ्यादृष्ट्यादिपंचमगु
णस्थानवर्त्तिजीवसंभवं। तच्च मिथ्यादृष्टीनां नरकगतिकारणमपि। बद्धायुष्कं विहाय सम्यग्दृष्टीनां तत्का
रणं न भवति। तदपि कस्मादिति चेत्। निजशुद्धात्मतत्त्वमेवोपादेयमिति विशिष्टभेदज्ञानबलेन तत्कारणभूततो
व्रसंक्लेशाभावादिति। अतः परमार्त्तरौद्रपरित्यागलक्षणमाज्ञापायविपाकसंस्थानविचयसंज्ञचतुर्भेदभि
न्नं तारतम्यवृद्धिक्रमेणासंयतसम्यग्दृष्टिदेशविरतप्रमत्तसंयताभिधानचतुर्गुणस्थानवर्त्तिजीवसंभवं। मुख्यवृत्त्या पु
ण्यबंधकारणमपि परंपरया मुक्तिकारणं चेति। स्वयं मंदबुद्धित्वेऽपि विशिष्टो

पाध्यायाभावेपि ॥ शुद्धजीवादिपदार्थानां सूक्ष्मत्वे सति ॥ सूक्ष्मं जिनोदितं वाक्यं हेतुभिर्यन्न हन्यते ॥ आज्ञासिद्धं तु
तद्ग्राह्यं नान्यथावादिनो जिनाः ॥ [illegible]
तथैव भेदाभेदरत्नत्रयभावनाबलेनास्माकं परेषां वा कदा कर्मणामपायो विनाशो भविष्यतीति चिंतनमपायविचयं ज्ञात
व्यं ॥ शुद्धनिश्चयेन शुभाशुभकर्मविपाकरहितोप्ययं जीवः पश्चादनादिकर्मबंधवशेन पापस्योदयेन नरकादिदुःखवि
पाकफलमनुभवति ॥ पुन्योदयेन देवादिसुखविपाकमनुभवति ॥ इति विचारणं विपाकविचयं विज्ञेयं ॥ पूर्वोक्तलोकानु
प्रेक्षाचिंतनं संस्थानविचयमिति चतुर्विधं धर्मध्यानं भवतीति ॥ ४ ॥ [illegible]
[illegible]
पृथक्त्ववितर्कवीचारं तावत्कथ्यते ॥ द्रव्यगुणपर्यायाणां भिन्नत्वं पृथक्त्वं भण्यते ॥ स्वशुद्धात्मानुभूतिलक्षणं भा
वश्रुतं ॥ तद्वाचकमंतर्जल्पवचनं वा वितर्को भण्यते ॥ अनीहितवृत्त्यार्थादर्थांतरपरिणमनं ॥ वचनाद्वचनांत
मनं ॥ मनोवचनकाययोगेषु योगाद्योगांतरपरिणमनं विचारो भण्यते ॥ अयं प्रथमं आद्यं ॥ यद्यपि ध्याता पु

यः स्वशुद्धात्मस्वसंवेदनंविहायबहिश्चिंतांनकरोति तथापियावतांशेनस्वरूपेस्थिरतावतांशेनानीहितवृत्याविकल्पाः स्फुरंतितेनकारणेनपृथक्त्ववितर्कवीचारध्यानंभण्यते तच्चोपशमश्रेणीविवक्षायामपूर्वोपशमकानिवृत्युपशमकसूक्ष्मसांपरायोपशमकोपशांतकषायपर्यंतगुणस्थानचतुष्टयेभवति क्षपकश्रेण्यांपुनरपूर्वकरणक्षपकानिवृत्तिकरणक्षपकसूक्ष्मसांपरायक्षपकाभिधानगुणस्थानत्रयेचेतिप्रथमंशुक्लध्यानंव्याख्यानं ॥ निजशुद्धात्मद्रव्येवानिर्विकारात्मसुखसंवित्तिपर्यायेवानिरुपाधिस्वसंवेदनगुणेवायत्रैकस्मिन्प्रवृत्तं तत्रैववितर्कसंज्ञेनस्वसंवित्तिलक्षणभावश्रुतबलेनस्थिरीभूय वीचारंद्रव्यगुणपर्यायपरावर्त्तनंकरोतियत्तदेकत्ववितर्कावीचारसंज्ञंक्षीणकषायगुणस्थानसंभवंद्वितीयंशुक्लध्यानंभण्यते तेनैवकेवलज्ञानोत्पत्तिरिति ॥ अथसूक्ष्मकायक्रियाव्यापाररूपंचअप्रतिपातिच सूक्ष्मक्रियाप्रतिपातिसंज्ञंतृतीयंशुक्लध्यानं तच्चोपचारेणसयोगिकेवलिजिनेभवतीति ॥ विशेषेणोपरतानिवृत्ताक्रियायत्रतद्व्युपरतक्रियं व्युपरतक्रियंचतदनिवर्तिचअनिवर्त्तकंचतद्व्युपरतक्रियानिवर्त्तिसंज्ञंचतुर्थंशुक्लध्यानंतच्चोपचारेणायोगिकेवलिजिनेभवतीति

मानानां परकीयचेतोवृत्तिपरमाण्वादिसूक्ष्मपदार्थानामिव । अथवा जगत्त्रयवर्त्तिपुरुषाणामनुपल-
ब्धिस्तत्कथं ज्ञातं भवद्भिः । ज्ञाता चेत्तर्हि भवंत एव सर्वज्ञा इति पूर्वमेव भणितं । तिष्ठंतीत्यादि हेतुदूषणं ज्ञा-
तव्यं ॥ छ ॥ यच्चोक्तं खरविषाणवदिति दृष्टांतवचनं तदप्यनुचितं खरविषाणानास्तिवादे तिष्ठतीत्यभा-
वान भवति । यथा तथा सर्वज्ञस्यापि नियतदेशकालादिष्वभावेपि सर्वथा नास्तित्वं न भवतीति दृष्टांतदूष-
णमिति । अथ मतं । सर्वज्ञविषये बाधकप्रमाणं निराकृतं भवद्भिस्तर्हि सर्वज्ञसद्भावसाधकं प्रमाणं किमि-
ति । पृष्टे प्रत्युत्तरमाह ॥ छ ॥ कश्चित्पुरुषो धर्मी सर्वज्ञो भवतीति साध्यते धर्म ॥ एवं धर्मिधर्मसमुदाये-
न पक्षवचनं कस्मादिति चेत् । पूर्वोक्तप्रकारेण बाधकप्रमाणाभावादिति ॥ हेतुवचनं किंवत् । स्वयमनुभू-
यमानसुखदुःखादिवदिति दृष्टांतवचनं । एवं सर्वज्ञसद्भावे पक्षहेतुदृष्टांतरूपेण त्र्यंगमनुमानं विज्ञेयं
अथवा द्वितीयमनुमानं कथ्यते ॥ रामरावणादयः कालांतरिता मेर्वादयो देशांतरिताः भूतादयः स्वभा-
वांतरिताः परचेतोवृत्तयः परमाण्वादयश्च सूक्ष्मपदार्था धर्मिणः । कस्यापि पुरुषविशेषस्य प्रत्यक्षा-

द्रव्यसंग्र०
२५

भवतीति साध्यो धर्मः इति । धर्मिधर्मसमुदायेन पक्षवचनं कस्मादिति चेत् ॥ अनुमानविषयत्वादिति हेतुव
चनं किंवत् । यद्यदनुमानविषयं तत्तत्कस्यापि प्रत्यक्षं भवति यथाग्न्यादि ॥ इत्यन्वयदृष्टान्तवचनं ॥ अनुमाने
न विषयाश्चेति इत्युपनयवचनं तस्मात्कस्यापि प्रत्यक्षा भवन्तीति ॥ निगमवचनं ॥ इदानीं व्यतिरेकदृष्टान्तः
कथ्यते ॥ यन्न कस्यापि प्रत्यक्षं तदनुमानविषयमपि न भवति ॥ यथा खपुष्पादि ॥ इति व्यतिरेकदृष्टान्तवचनं
अनुमानविषयाश्चेति ॥ पुनरप्युपनयवचनं ॥ तस्मात्प्रत्यक्षा भवन्तीति ॥ पुनरपि निगमनवचनमिति ॥ किं
त्वनुमानविषयत्वादित्ययं हेतुः सर्वज्ञस्वरूपे साध्ये सर्वप्रकारेण संभवति ॥ यतस्ततः कारणात्स्वरूपा
दिसिद्धभावा ॥ सिद्धविशेषणासिद्धो न भवति ॥ तथैव सर्वज्ञस्वरूपं स्वपक्षं विहाय सर्वज्ञाभावं विपक्षं न
साधयति तेन कारणेन विरुद्धो न भवति ॥ तथैव च यथा सर्वज्ञसद्भावे स्वपक्षे वर्त्तते ॥ तथा सर्वज्ञाभावे
विपक्षेपि न वर्त्तते ॥ तेन कारणेनानैकान्तिको न भवति ॥ अनैकान्तिको व्यभिचारीति । तथैव प्र
त्यक्षादिप्रमाणाबाधितो न भवति तथैव च प्रतिवादिनां प्रत्यक्षसिद्धं सर्वज्ञसद्भावं साधयति ॥ तेन का

कत्वाच्च प्रणष्टचतुर्घातिकर्म्मा॥ दंसणसुहवीरियणाणमई॥ तत्रैव घातिकर्म्माभावेन लब्धानंतचतुष्ट
यत्वात्॥ सहजशुद्धाविनश्वरदर्शनज्ञानसुखवीर्यमयः शुद्धदेहस्था॥ निश्चयेनाशरीरोपि व्यवहारेण सप्त
धातुरहितदिवाकरसहस्रभासुरपरमौदारिकशरीरत्वाद्देहस्थः शुद्धो॥ क्षुधातृषाभयद्वेषा॥ रागो
मोहश्च चिंतनं॥ जरारुजा च मृत्युश्च॥ स्वेदखेदौ मदोरतिः॥१॥ विस्मयो जननं निद्रा॥ विषादोष्टादशस्मृ
ताः॥ एतैर्दोषैः विनिर्मुक्तः सोयमाप्तो निरंजनः॥२॥ इति श्लोकद्वयकथिताष्टादशदोषरहितत्वाच्छु
द्धः॥ अथ एवंगुणविशिष्टः आत्मा अरिहो॥ अरिशब्दवाच्यो मोहनीयस्य॥ रजःशब्दवाच्यज्ञानद
र्शनावरणद्वयस्य रहस्यशब्दवाच्यांतरायस्य च हननाद्विनाशात्सकाशादिंद्रादिविनिर्मितां गर्भाव
तारजन्माभिषेकनिःक्रमणकेवलज्ञानोत्पत्तिनिर्वाणाभिधानपंचमहाकल्याणरूपां पूजामर्हति
योग्यो भवति॥ ततः कारणादर्हन् भण्णए॥ विचिंतिज्जो॥ इत्युक्तविशेषणविशिष्टमात्मानमप्रभृतिग्र
न्थकथितवीतराग सर्वज्ञाद्यष्टोत्तरसहस्रनामानमर्हंतं जिनभट्टारकं पदस्थपिंडस्थरूपस्थध्याने

द्रव्यसं०
९४

स्थित्वा विशेषेणाचिंतयत ध्यायतेहमप्यायूपमिति ॥ ७ ॥ अत्रावसरे भट्टचार्वाकमतं गृहीत्वा शिष्यः पूर्वप
क्षं करोति ॥ ७ ॥ नास्ति सर्वज्ञोनुपलब्धेः खरविषाणवत् ॥ तत्र प्रत्युत्तरं ॥ किमत्र देशेत्र काले अनुपलब्धिः
सर्वदेशकाले वा ॥ यद्यत्र देशेत्र काले नास्ति तदा संमतमेव ॥ अथ सर्वदेशकाले नास्तीति भण्यते ॥ तज्ज
गत्रयं कालत्रयं सर्वज्ञरहितं कथं ज्ञातं भवता ज्ञातं चेत्तर्हि भवानेव सर्वज्ञः ॥ अथ न ज्ञातं तर्हि निषेधः कथं क्रि
यते ॥ तत्र दृष्टांतः ॥ यथा कोपि निषेधको घटस्याधारभूतं घटरहितं भूतलं चक्षुषा दृष्ट्वा पश्चाद्वदत्यत्र भू
तले घटो नास्तीति युक्तं ॥ यस्तु चक्षुरहितस्तस्य पुनर्विद्वचनं न युक्तं ॥ तथैव यस्तु जगत्त्रयं कालत्रयं सर्व
ज्ञरहितं जानाति तस्य जगत्त्रये कालत्रयेपि सर्वज्ञो नास्तीति वक्तुं युक्तं भवति ॥ यस्तु जगत्त्रयं कालत्रयं
न जानाति सर्वज्ञनिषेधं कथमपि न करोति ॥ कस्मादिति चेत् ॥ जगत्त्रयकालत्रयपरिज्ञानेन स्वयमेव सर्व
ज्ञत्वादिति ॥ यथोक्तमनुपलब्धेरिति हेतुवचनं तदप्ययुक्तं ॥ कस्मादिति चेत् ॥ किं भवतामनुपलब्धिः
किं जगत्त्रयवर्त्तिपुरुषाणां वा यदि भवतामनुपलब्धिस्तावता सर्वज्ञाभावो न सिद्ध्यति ॥ भवद्भिरनुपलभ्य

वस्तुयथास्थितंतएकाग्रचिंतनंध्यानं॥ फलंसंवरनिर्ज्जरौ॥ इतिश्लोककथितलक्षणानांध्यातृध्येयध्यानफलानां
संक्षेपव्याख्यानरूपेणगाथात्रयेणचूलिकासूत्रा॥धिकारेग्रंथसमाप्तंगतं॥ अंतःपरेरागादिविकल्पोपाधिरहि
तनिजपरमात्मपदार्थभावनोत्पन्नसदानंदैकलक्षणासुखामृतरसास्वादानुभवरूपस्यनिश्चयध्यानस्यपरंपराय
कारणभूतंयच्छुभोपयोगलक्षणंव्यवहारध्यानं॥ तद्ध्येयभूतानांपंचपरमेष्ठिनांमध्येतावदर्हत्स्वरूपंकथया
मीत्येकापातनिका॥ द्वितीयातुपूर्वसूत्रोदितसर्वपदनामपदादिपदानांवाचकभूतानांवाच्याःपंचपरमेष्ठि
नस्तद्व्याख्यानेक्रियमाणेप्रथमंतावज्जिनस्वरूपंनिरूपयामि॥ अथवात्तृतीयापातनिकापदस्थपिंडस्थरू
पस्थध्यानत्रयस्यध्येयभूतमर्हत्सर्वज्ञस्वरूपंदर्शयामीतिपातनिकात्रयंमनसिधृत्वाभगवानिदंसू
त्रंप्रतिपादयति॥ ॥ णट्ठचउघाइकम्मो॥ दंसणसुहणाणवीरियमईओ॥ सुहदेहत्थोअप्पासुद्धोअरिहो
विचिंतिज्जो॥५०॥ व्या॥ णट्ठचउघाइकम्मो॥ निश्चयरत्नत्रयात्मकशुद्धोपयोगध्यानेनपूर्वंघाति
कर्मप्रधानभूतमोहनीयस्यविनाशात्तदनंतरंज्ञानदर्शनावरणांतरायसंज्ञयुगपत्घातित्रयविनाशा

द्रव्यसं० ८४

स्थित्वा विशेषेणाचिंतयत ध्यायते हे भव्या यूयमिति ॥ ७ ॥ अत्रावसरे भट्टचार्वाकमतं गृहीत्वा शिष्यः पूर्वप
क्षं करोति ॥ ७ ॥ नास्ति सर्वज्ञोऽनुपलब्धेः खरविषाणवत् ॥ तत्र प्रत्युत्तरं ॥ किमत्र देशेऽत्र काले अनुपलब्धिः
सर्वदेशे काले वा ॥ यद्यत्र देशेऽत्र काले नास्ति तदा संमतमेव ॥ अथ सर्वदेशे काले नास्तीति भण्यते ॥ तज्ज
गत्त्रयं कालत्रयं सर्वज्ञरहितं कथं ज्ञातं भवता ज्ञातं चेत्तर्हि भवानेव सर्वज्ञः ॥ अथ न ज्ञातं तर्हि निषेधः कथं क्रि
यते ॥ तत्र दृष्टांतः ॥ यथा कोपि निषेधको घटस्याधारभूतं घटरहितं भूतलं चक्षुषा दृष्ट्वा पश्चाद्वदत्यत्र भू
तले घटो नास्तीति युक्तं ॥ यस्तु चक्षूरहितस्तस्य पुनरिदं वचनं न युक्तं ॥ तथैव यस्तु जगत्त्रयं कालत्रयं सर्व
ज्ञरहितं जानाति तस्य जगत्त्रये कालत्रयेऽपि सर्वज्ञो नास्तीति वक्तुं युक्तं भवति ॥ यस्तु जगत्त्रयं कालत्रयं
न जानाति स सर्वज्ञनिषेधं कथमपि न करोति ॥ कस्मादिति चेत् ॥ जगत्त्रयकालत्रयपरिज्ञानेन स्वयमेव सर्व
ज्ञत्वादिति ॥ यथोक्तमनुपलब्धेरिति हेतुवचनं तदप्ययुक्तं ॥ कस्मादिति चेत् ॥ किं भवतामनुपलब्धिः
किं जगत्त्रयवर्त्तिपुरुषाणां वा यदि भवतामनुपलब्धिस्तावता सर्वज्ञाभावो न सिद्ध्यति ॥ भवद्भिरनुपलभ्य

संक्षेपेणागमभाषयाविचित्रध्यानंव्याख्यातं ॥छ॥ अध्यात्मभाषयापुनःसहजशुद्धपरमचैतन्यशालिनिनिर्भ
रानंदमालिनिभगवतिनिजात्मन्युपादेयबुद्धिंकृत्वापश्चादनंतज्ञानोहमनंतसुखोहमित्यादिभावनारूपमभ्यं
तरं धर्मध्यानमुच्यते॥ पंचपरमेष्ठिभक्त्यादितदनुकूलशुभानुष्ठानंपुनर्बहिरंगधर्मध्यानंभवति॥छ॥ तथैव
वस्वशुद्धात्मनिनिर्विकल्पसमाधिलक्षणंशुक्लध्यानमिति॥छ॥ अथवा पदस्थंमंत्रवाक्यस्थं पिंडस्थंस्वा
त्मचिंतनं॥ रूपस्थंसर्वचिद्रूपं॥ रूपातीतंनिरंजनं॥छ॥ इतिश्लोककथितक्रमेणविचित्रध्यानंज्ञातव्यमिति
॥छ॥ अथध्यानप्रतिबंधकानांमोहरागद्वेषाणांस्वरूपंकथ्यते॥ शुद्धात्मादितत्त्वेषुविपरीताभिनिवेशजनकं
मोहोदर्शनमोहोमिथ्यात्वमिति॥ यावत्निर्विकारस्वसंवित्तिलक्षणवीतरागचारित्रप्रच्छादकचारित्रमोहोरागद्वे
षौभण्यते॥ चारित्रमोहशब्देनरागद्वेषौकथंभण्येते॥ इतिचेत्॥ कषायमध्येक्रोधमानद्वयंद्वेषांगं॥ मायालो
भद्वयंरागांगं॥ नोकषायमध्येतुस्त्रीपुंनपुंसकवेदत्रयहास्यरतिद्वयंचरागांगं॥ अरतिशोकद्वयंभयजुगुप्साद्व
यंद्वेषांगमितिज्ञातव्यं॥छ॥ अत्राहशिष्यः रागद्वेषादयः॥ किंकर्मजनिताः किंजीवजनिताइति॥छ॥ तत्रो

स्वउ ॥ अरहंत ॥ इदमक्षरचतुष्टयमर्हतो नामपदं ॥ उ ॥ सिद्ध ॥ इत्यक्षरद्वयस्य सिद्धस्य नामपदं ॥ राा च ॥ अ इत्येका
क्षरमर्हत आदिपदं ॥ अथवा ॥ उँ इत्येकाक्षरं पंचपरमेष्ठिनामानि पदं ॥ तत्कथमिति चेत् ॥ अरहंता ॥ असरीरा ॥ आइ
रिया तह उवज्झाया ॥ मुणिणो पढमक्खरनिप्पन्नो ॥ ॐकारो पंचपरमेट्ठी ॥ १ ॥ इति गाथोदितप्रथमाक्षराणां स
मानः सवर्णे दीर्घो भवति ॥ परश्च लोपं ॥ उवर्णे ओ ॥ इति स्वरसंधिविधानेन ॥ उँ शब्दो निष्पद्यते ॥ कस्मादिति ॥ जप
ऽसाराः ॥ एतेषां पदानां सर्वमंत्रवादपदेषु मध्ये सारभूतानामिहलोकपरलोकेष्टफलप्रदानामर्थं ज्ञात्वा पश्चा
दनंतज्ञानादिगुणस्मरणरूपेण वचनोच्चारणेन च जापं कुरुत ॥ तथैव शुभोपयोगरूपत्रिगुप्तावस्थायां मौनेन
ध्यायत ॥ पुनरपि कथंभूतानां ॥ परमेष्ठिवाचकानां ॥ अर्हं इति पदवाच्यं कं ॥ अनंतज्ञानादिगुणयुक्तोऽर्हन्वाच्यो
ऽभिधेयः ॥ इत्यादि रूपेण पंचपरमेष्ठिवाचकानां ॥ तथा च गुरूपदेशेन ॥ अन्यदपि द्वादशसहस्रप्रमितपंचनमस्का
रग्रंथकथितक्रमेण ॥ लघुसिद्धचक्रं बृहत्सिद्धचक्रमित्यादि देवार्चनाविधानं भेदाभेदरत्नत्रयाराधकगुरु
प्रसादेन ज्ञात्वा ध्यातव्यमिति पदस्य ध्यानस्वरूपं व्याख्यातं ॥ ४९ ॥ एवमनेन नमस्कारेण गुप्तेंद्रियमनो ध्याता ध्येय

द्रव्य०
६३

वस्तुयथास्थितंतथैकाग्रचिंतनंध्यानं॥ फलंसंवरनिर्जरौ॥ इतिश्लोककथितलक्षणानांध्यातृध्येयध्यानफलानां
संक्षेपव्याख्यानरूपेणगाथात्रयेणद्वितीयांतराधिकारेप्रथमस्थलंगतं॥ अतःपरंरागादिविकल्पोपाधिरहि
तनिजपरमात्मपदार्थभावनोत्पन्नसदानंदैकलक्षणसुखामृतरसास्वादरूपस्यनिश्चयध्यानस्यपरंपरा
कारणभूतंयच्छुभोपयोगलक्षणंव्यवहारध्यानं॥ तद्ध्येयभूतानांपंचपरमेष्ठिनांमध्येतावदर्हत्स्वरूपंकथया
मीत्येकापातनिका॥ द्वितीयातुपूर्वसूत्रोदितसर्वपदनाममंत्रादिपदानांवाचकभूतानांवाच्याःयेपंचपरमेष्ठि
नस्तद्व्याख्यानेक्रियमाणेप्रथमस्तावज्जिनस्वरूपंनिरूपयामि॥ अथवातृतीयापातनिकापदस्थपिंडस्थरू
पस्थध्यानत्रयस्यध्येयभूतमर्हत्सर्वज्ञस्वरूपंदर्शयामीतिपातनिकात्रयंमनसिधृत्वाभगवान्सूत्रमिदं
प्रतिपादयति॥ ॥ णट्ठचदुघाइकम्मो॥ दंसणसुहणाणवीरियमईओ॥ सुहदेहत्थोअप्पा सुद्धोअरिहोविचिंतिज्जो
॥५०॥ णट्ठचदुघाइकम्मो॥ निश्चयरत्नत्रयात्मकशुद्धोपयोगध्यानेनपूर्वंघाति
कर्मप्रधानभूतमोहनीयस्यविनाशात्तदनंतरंज्ञानदर्शनावरणांतरायसंज्ञयुगपत्घातित्रयविनाश

रणेनाकिंचित्कारोपिन भवति॥ एवमसिद्धानैकांतिकाकिंचित्करोपिन भवति॥ एवमसिद्धविरुद्धानैकांतिकाकिं
चित्करहेतुदोषरहितत्वात्॥ सर्वज्ञसद्भावसाध्यस्यैव॥ इत्युक्तप्रकारेणसर्वज्ञसद्भावेहेतुपक्षदृष्टांतोपनयनि
गमनरूपेणपंचांगानुमानंज्ञातव्यमिति॥ छ॥ किंच॥ यथालोचनहीनपुरुषस्यादर्शेविद्यमानेपिमुखप्रति
विंबानांपरिज्ञानंनभवति॥ यथालोचनस्थानीयसर्वज्ञतागुणरहितपुरुषस्यादर्शस्थानीयवेदशास्त्रे:कथि
तानांप्रतिविंबस्थानीयपरमाण्वाद्यनंतसूक्ष्मपदार्थानांक्वापिकालेपरिज्ञानंनभवति॥ तथाचोक्तं॥ यस्य
नास्तिस्वयंप्रज्ञा॥ शास्त्रंतस्यकरोतिकिं॥ लोचनाभ्यांविहीनस्य॥ दर्पण:किंकरिष्यति॥ छ॥ इतिसंक्षेपेण
सर्वज्ञसिद्धिरेववोद्धव्या॥ छ॥ एवंपदस्थपिंडस्थरूपस्थध्यानध्येयभूतस्यसकलात्मनोजिनभट्टारकस्यव्या
ख्यानरूपेणगाथागता॥ छ॥ अथसिद्धसदृशनिजपरमात्मतत्वपरमसमरसीभावलक्षणस्यरूपातीतनि
श्चयध्यानस्यपारंपर्येणकारणभूतंमुक्तिगतसिद्धभक्तिरूपंणमोसिद्धाणंइतिपदोच्चारणलक्षणंयत्पद
स्थंध्यानंतस्यध्येयभूतंसिद्धपरमेष्ठीस्वरूपंकथयति॥ छ॥ णट्ठट्ठकम्मदेहो॥ लोयालोयस्सजाणओदट्ठा।

दर्शनाचारः॥ तस्यैव शुद्धात्मनो निरुपाधिस्वसंवेदनलक्षणभेदज्ञानेन मिथ्यात्वरागादिपरभावेभ्यः पृथक्परिच्छे-
दनं सम्यग्ज्ञानं॥ तत्राचरणं परिणमनं निश्चयज्ञानाचारः॥ तत्रैव रागादिविकल्पोपाधिरहितस्वाभाविकसु-
खास्वादेन निश्चलचित्तं वीतरागचारित्रं॥ तत्राचरणं परिणमनं निश्चयचारित्राचारः समस्तपरद्रव्येच्छानि-
रोधेन तथैवानशनादिद्वादशतपश्चरणबहिरंगसहकारिणेन च स्वस्वरूपे प्रतपनं विजयनं निश्चयतपश्च-
रणं तत्राचरणं परिणमनं निश्चयतपश्चरणाचारः॥ तस्यैव निश्चयचतुर्विधाचारस्य रक्षणार्थं स्वशक्त्य-
नवगूहनं निश्चयवीर्याचारः इत्युक्तलक्षणनिश्चयपंचाचारे तथैव॥ छत्तीसगुणसमग्गे पंचविहाचा-
रकरणसंदरिसे॥ सिस्साणुग्गहकुसले धम्मायरिए सदा वंदे॥ इति गाथाकथितक्रमेणाचारा-
राधनादिचरणशास्त्रविस्तीर्णबहिरंगसहकारिकारणभूते व्यवहारपंचाचारे च स्वं परं च योजयत्यनुष्ठानेन सं-
बंधं करोति स आचार्यो भवति॥ स च पदस्थध्याने ध्यातव्यः॥ इत्याचार्यपरमेष्ठिव्याख्यानेन सूत्रं गतं॥५२॥
अथ स्वशुद्धात्मनि शोभनमध्यायोऽभ्यासो निश्चयस्वाध्यायस्तल्लक्षणनिश्चयध्यानस्य पारंपर्येण कारणभू-

शुभमनवचनकायनिरोधेकृतेसत्यात्मात्मनिस्थिरोभवति॥ तदेवपरमध्यानमित्युपदिशति॥ ७॥ [illegible]

पद॥ मा चिंतह किं वि जेण होइ [illegible] माचिंतहमाजंपहमा

चिंतह किं विनित्यनिरंजननिःक्रियनिजशुद्धात्मानुभूतिप्रतिबंधकंशुभाशुभमनोगतरूपंकायव्यापारं॥ तथैव

शुभाशुभांतर्बहिर्जल्परूपंवचनव्यापारंचकिमपिमाकुरुतहेविवेकिजनाः जेणपहोइथिरो येनापिनयोगत्रय

निरोधेनस्थिरो [illegible] भवति॥ सकः अप्पा आत्माकथंभूतःस्थिरोभवति॥ अप्पा अप्पम्मिरउ सह

जशुद्धज्ञानदर्शनस्वभावपरमात्मतत्वसम्यक्श्रद्धानज्ञानानुचरणरूपाभेदरत्नत्रयात्मकपरमसमाधि

समुद्भूतसर्वप्रदेशाह्लादजनकसुखास्वादपरिणतिसहितनिजात्मनिरतःपरिणतस्तल्लीयमानस्तच्चि

त्तस्तन्मयोभवति॥ इणमेवपरंहवेज्झाणं॥ इदमेवात्मसुखस्वरूपेतन्मयत्वंनिश्चयेनपरमंउत्कृष्टंध्यानं

भवति॥ ७॥ तस्मिन्ध्यानेस्थितानांयद्वीतरागपरमानंदसुखंप्रतिभातितदेवनिश्चयमोक्षमार्गस्व

रूपंतच्चपर्यायनामांतरेणकिंभण्यते॥ तदभिधीयते॥ तदेवशुद्धात्मस्वरूपं॥ तदेवपरमात्मस्वरूपं॥ त

देवैकदेशव्यक्तिरूपविवक्षितैकदेशशुद्धनिश्चयेनस्वशुद्धात्मसंवित्तिसमुत्पन्नसुखामृतजलसरोवरेरागा
दिमलरहितत्वेनपरमहंसस्वरूपं इदमेकदेशव्यक्तिरूपं शुद्धनयाव्याख्यानमत्रपरमात्मध्यानभावनाना
ममालायां यथासंभवं सर्वत्रयोजनीयमिति तदेवपरमब्रह्मस्वरूपं तदेवपरमविष्णुस्वरूपं तदेवपरमशि
वस्वरूपं तदेवपरमबुद्धस्वरूपं तदेवपरमजिनस्वरूपं तदेवस्वात्मोपलब्धिलक्षणसिद्धस्वरूपं तदेव
निरंजनस्वरूपं तदेवनिर्मलस्वरूपं तदेवस्वसंवेदनज्ञानं तदेवपरमतत्त्वज्ञानं तदेवशुद्धात्मदर्शनं
तदेवपरमावस्थास्वरूपं तदेवपरमात्मस्पर्शनं तदेवध्येयभूतशुद्धपारिणामिकभावरूपं तदेवशुद्ध
चारित्रं तदेवध्यानभावनास्वरूपं तदेवांतस्तत्त्वं तदेवपरमतत्त्वं तदेवशुद्धात्मद्रव्यं तदेवपरमज्योतिः
सैवशुद्धात्मानुभूतिः सैवात्मप्रतीतिः सैवात्मसंवित्तिः सैवस्वरूपोपलब्धिः सैवनित्योपलब्धिः सएव
परमसमाधिः सएवपरमानंदः सएवनित्यानंदः सएवसहजानंदः सएवसदानंदः सएवशुद्धात्मपदार्थ
ध्ययनरूपः सएवपरमस्वाध्यायः सएवनिश्चयमोक्षोपायः सएवैकाग्रचिंतानिरोधः सएवपरमबोधः

सएवशुद्धोपयोगः॥सएवपरमयोगः सएवभूतार्थः सएवपरमार्थः॥सएवनिश्चयपंचाचारः सएवसमय
सारः सएवाध्यात्मसारः तदेवसमतादिनिश्चयषडावश्यकस्वरूपं॥ तदेवाभेदरत्नत्रयस्वरूपं॥तदेव
वीतरागसामायिकं॥ तदेवपरमशरणोत्तममंगलं॥ तदेवकेवलज्ञानोत्पत्तिकारणं॥तदेवसकलकर्म
क्षयकारणं॥सैवनिश्चयचतुर्विधाराधना॥सैवपरमभावना॥सैवशुद्धात्मभावनोत्पन्नसुखानुभूति
रूपपरमकला॥सैवदिव्यकला॥तदेवपरमाद्वैतं॥ तदेवपरमामृतपरमधर्मध्यानं॥तदेवशुक्लध्यानं॥त
देवरागादिविकल्पशून्यध्यानं॥ तदेवनिष्कलध्यानं॥तदेवपरमस्वास्थ्यं॥तदेवपरमवीतरागत्वं॥तदेव
परमसाम्यं॥तदेवपरमैकत्वं॥ तदेवपरमभेदज्ञानं॥ सएवपरमसमरसीभावः इत्यादिसमस्तरागादिवि
कल्पोपाधिरहितपरमाह्लादैकसुखलक्षणध्यानरूपस्यनिश्चयमोक्षमार्गस्यवाचकान्यन्यान्य
पिपर्यायनामानिविज्ञेयानि भवंतिपरमात्मतत्त्वविद्भिरिति॥५९॥ ततःपरंयद्यपिपूर्वंबहुधाभणितंध्यानरू
पफलंतथाध्यानसामग्रीच॥ तथापिचूलिकोपसंहाररूपेणपुनरप्याख्याति॥ छ॥सव

द्रव्यसं०
२०२

णारः धुरंधरो जम्हा ॥ तवसुदवदवं चेदा झाणरहधुरंधरो ह
वे जम्हा ॥ तपःश्रुतव्रतवानात्मा चेतयिता ध्यानरथस्य धुरंधरः समर्थो भवति ॥ जम्हा यस्मात् ॥ तम्हा तत्तियणि
रदा तल्लद्धीए सदा होह ॥ तस्मात्कारणात्तपःश्रुतव्रतानां संबंधेन यत्त्रयं तत्त्रितये रताः सर्वकाले
भवतेह भव्याः ॥ किमर्थं तस्य ध्यानस्य लब्धिस्तल्लब्धिस्तदर्थमिति ॥ ५७ ॥ तथाहि ॥ अनशनावमोद
र्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशभेदेन बाह्यं षड्विधं ॥ तथैव प्रायश्चित्तवि
नयवैयावृत्यस्वाध्यायव्युत्सर्गध्यानभेदेनाभ्यंतरमपि षड्भेदं चेति द्वादशविधं तपः तेनैव साध्यं शुद्धा
त्मस्वरूपप्रतपनं विजयनिश्चयतपः ॥ तथैवाचाराराधनादिद्रव्यश्रुतेन तदाधारेणोत्पन्नं निर्विकार
स्वसंवेदनज्ञानरूपं भावश्रुतं ॥ तथैव च हिंसानृतस्तेयाब्रह्मपरिग्रहाणां द्रव्यभावरूपाणां परिहरणं व्र
तपंचकं चेति ॥ एवमुक्तलक्षणतपःश्रुतव्रतसहितो ध्याता पुरुषो भवति ॥ इयमेव ध्यानसामग्री च
ति ॥ तथा चोक्तं ॥ वैराग्यं तत्त्वविज्ञानं ॥ नैर्ग्रंथ्यं वशचित्तता ॥ परीषहजयश्चेति ॥ पंचैते ध्यानहेतवः

तभेदाभेदरत्नत्रयादितत्त्वोपदेशकं परमोपाध्यायभक्तिरूपं णमो उवज्झायाणं इति पदोच्चारणलक्षणं य॥
त्पदस्थध्यानं तस्य ध्येयभूतमुपाध्यायमुनीश्वरं कथयति॥ क [illegible]
[illegible] ॥ जो रयणत्तयजुत्तो । योसौ बाह्याभ्यंतररत्नत्र
यानुष्ठानेन युक्तः परिणतः। णिच्चं धम्मोवदेसणेणिरदो षड्द्रव्यपंचास्तिकायसप्ततत्त्वनवपदार्थेषु म
ध्ये स्वशुद्धात्मद्रव्यं स्वशुद्धजीवास्तिकायं स्वशुद्धात्मपदार्थमेवोपादेयं शेषं च हेयं॥ तथैवोत्तमक्षमादि
धर्मं च नित्यमुपदिशति। यासौ स नित्यधर्मोपदेशने निरतो भण्यते॥ सो उज्झाउ अप्पा। स चैवंभूत आ
त्मा उपाध्याय इति॥ पुनरपि किंविशिष्टः॥ जदिवरवसहो। पंचेंद्रियविषयजयेन निजशुद्धात्मनि यत्नपरा
यणा यतिवराणां मध्ये वृषभः प्रधानो यतिवरवृषभः। णमो तस्स॥ तस्मै द्रव्यभावरूपो नमो नमस्कारोऽस्तु
इत्युपाध्यायपरमेष्ठिव्याख्यानरूपेण गाथा गता॥ ५३॥ अथ निश्चयरत्नत्रयात्मकनिश्चयध्यानस्य प
रंपरया कारणभूतं बाह्याभ्यंतरमोक्षमार्गसाधकं परमसाधुभक्तिरूपं णमो लोए सव्वसाहूणं॥ इति पदोच्चे

रणात्मजपध्यानलक्षणंयत्तदस्यध्यानंतस्यध्येयभूतंसाधुपरमेष्ठिस्वरूपंप्रकाशयति॥ ॥ दंसणणाणसमग्गं
[illegible] साहूसमुणी॥ समुणीः
साधुर्भवति॥ यःकिंकरोति॥ जोहुसाधयदि यःकर्त्तास्फुटंसाधयति॥ किंचारित्तं॥ चारित्रंकथंभूतं॥ दंसण
णाणसमग्गं॥ वीतरागसम्यग्दर्शनज्ञानाभ्यांसमग्रपरिपूर्णं॥ पुनरपिकथंभूतं॥ मग्गंमोक्खस्स॥ मार्गभूतं
कस्यमोक्षस्य॥ पुनरपिकिंरूपं॥ णिच्चसुद्धं॥ नित्यंसर्वकालंशुद्धंरागादिरहितं॥ णमोतस्स॥ एवंगुणविशि
ष्टोयस्तस्मैसाधवेनमोनमस्कारोऽस्तुइति॥ ॥ तथाहि॥ उद्योतनमुद्योगो॥ निर्वहणंसाधनंचनिस्तरणं॥ दृग
वगमचरणतपसा॥ माख्याताराधनासद्भिः॥ ॥ इत्यार्याकथितबहिरंगचतुर्विधाराधनाबलेनतथैव॥ ॥
सम्मत्तंसण्णाणं॥ सच्चारित्तंहिसत्तवोचेव॥ चउरोचिट्ठहिआदे॥ तम्हाआदाहुमेसरणं॥ इतिगाथाकथि
ताभ्यंतरनिश्चयचतुर्विधाराधनाबलेनचबाह्याभ्यंतरमोक्षमार्गद्वितीयनामाभिधेयेनकृत्वायःकर्त्ता
वीतरागचारित्राविनाभूतंस्वशुद्धात्मानंसाधयतिससाधुर्भवति॥ तस्यैवसहजशुद्धसदानंदैकानुभूतिल

लणोभावनमस्कारस्तथाणमोलोएसव्वसाहूणंइत्यनमस्कारश्चभवतीति॥ छ॥ एवमुक्तप्रकारेणाप्याप
चकेनमध्यमप्रतिपत्त्यापंचपरमेष्ठिस्वरूपंज्ञातव्यं॥ अथवानिश्चयेन॥ छ॥ अरहासिद्धाआयरिया उवज्झायासा
हुपरमेट्ठि॥ तेविहुचिट्ठहिआदे॥ तम्हाआदाहुमेसरणं॥ छ॥ इतिगाथाकथितक्रमेणसंक्षेपेणतथैव
विस्तरेणपंचपरमेष्ठिकथितक्रमेण॥ अतिविस्तरेणतुसिद्धचक्रादिदेवार्चनाविधिरूपमंत्रवादसंबंधिपं
चनमस्कारग्रंथेचेति॥ छ॥ एवंगाथापंचकेनद्वितीयस्थलंगतं॥ छ॥ अथतदेवध्यानंविकल्पित॥ निश्च
येनअविकल्पितनिश्चयेनप्रकारांतरेणोपसंहाररूपेणपुनराख्याति॥ तत्रतावत्प्रथमपादेध्येयलक्षणं
द्वितीयपादेध्यातृलक्षणं॥ तृतीयपादेध्यानलक्षणं॥ चतुर्थपादेनविभागंकथयामीत्यभिप्रायंमनसिधृ॥
त्वाभगवानसूत्रमिदंप्रतिपादयति॥ छ॥ जंकिंचिविचिंततो णिरीहवित्तीहवेजदासाहू॥ लद्धूणयएयत्तं
तदाहुतंतस्सणिच्छयंझाणं॥ २७॥ तदाहुतंतस्सणिच्छयंझाणं तदातस्मिन्कालेआहुर्ब्रुवंति॥ तत
स्सणिच्छयंझाणं॥ ततस्यनिश्चयध्यानमिति॥ यदाकिंनिरीहवित्तीहवेजदासाहू॥ निरीहवृत्तिनिस्पृहवृत्ति

द्रव्यसं०
९९

यदाभवतिसाधुःकिंकुर्वन॥जंकिंचिविचिंततो॥यत्किमपिध्येयवस्तुरूपेणाविचिंतयन्निति॥किंकृत्वापूर्व
लद्धूणयएयत्तं॥तस्मिन्ध्येयेलब्ध्वा॥किंएकत्वं॥एकाग्रचिंतानिरोधनमिति॥५५॥अथविस्तरः॥य
त्किंचित्ध्येयमित्यनेनकिंमुक्तंभवति॥प्राथमिकापेक्षयासविकल्पावस्थायांविषयकषायवंचनार्थंचि
त्तस्थिरीकरणार्थंपंचपरमेष्ठ्यादिपरद्रव्यमपिध्येयंभवति॥पश्चादभ्यासवशेनचित्तेस्थिरीभूतेसतिशुद्धबुद्धैक
स्वभावनिजशुद्धात्मस्वरूपमेवध्येयमित्युक्तंभवति॥निस्पृहवचनेनपुनर्मिथ्यात्ववेदत्रयहास्यादिषट्कक्रो
धादिचतुष्करूपचतुर्दशाभ्यंतरपरिग्रहेण॥तथैवक्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यभांडा
भिधानदशविधबहिरंगपरिग्रहेणचरहितंध्यातृस्वरूपमुक्तंभवति॥एकाग्रचिंतानिरोधनचपूर्वोक्तद्वि
विधध्येयवस्तुनिस्थिरत्वंनिश्चलत्वंध्यानलक्षणंभणितमिति॥निश्चयशब्देनतुप्राथमिकापेक्षया
व्यवहाररत्नत्रयानुकूलनिश्चयोग्राह्यः॥निष्पन्नयोगिनिश्चलपुरुषापेक्षयाशुद्धोपयोगलक्षणवि
वक्षितैकदेशशुद्धनिश्चयोग्राह्यो॥विशेषनिश्चयः॥पुनरग्रेवक्ष्यमाणस्तिष्ठतीतिसूत्रार्थः॥अथशुभा

१॥ हे भगवान् ध्यानेनाभव्योत्तमार्गभूतं॥ मोक्षार्थिनां पुण्यबंधपापबंधकारणत्वाद्व्रतानि त्याज्यानि भ
वंति॥ भवद्भिः पुनर्ध्यानसामग्रीकारणानि तपःश्रुतव्रतानि व्याख्यानानि तत्कथं घटत इति॥ तत्रोत्तरं
दीयते॥ व्रतान्येव केवलानि त्याज्यानि न चैवं॥ किंतु पापबंधकारणानि हिंसादिविकल्परूपाणि यान्य
व्रतानि तान्यपि त्याज्यानि॥ तथा चोक्तं पूज्यपादस्वामिभिः॥ श्लो॥ अपुण्यमव्रतैः पुण्यं व्रतैर्मोक्षस्तयोर्व्य
यः॥ अव्रतानीव मोक्षार्थी॥ व्रतान्यपि ततस्त्यजेत्॥ १॥ किंत्वव्रतानि पूर्वं परित्यज्य ततश्च व्रतेषु त
न्निष्ठो भूत्वा निर्विकल्पसमाधिरूपं परमात्मपदं प्राप्य पश्चादेकदेशव्रतान्यपि त्यजति॥ श्लो॥ तदप्यु
क्तं तैरेव॥ अव्रतानि परित्यज्य॥ व्रतेषु परिनिष्ठितः॥ त्यजेत्तान्यपि संप्राप्य परमं पदमात्मनः॥ श्लो॥ अ
यं तु विशेषः॥ व्यवहाररूपाणि यानि प्रसिद्धान्येकदेशव्रतानि त्यक्तानि॥ यानि पुनः सर्वशुभाशुभनि
वृत्तिरूपाणि निश्चयव्रतानि तानि त्रिगुप्तिलक्षणस्वशुद्धात्मसंवित्तिरूपनिर्विकल्पध्याने स्वीकृता
नि न च त्यक्तानि प्रसिद्धमहाव्रतानि कथमेकदेशरूपाणि जातानि चेदिति तदुच्यते॥ जीवघातनि

यत्तिसत्यामपिजीवरक्षणेप्रवृत्तिरस्ति॥तथैवासत्यवचनपरिहारेपिसत्यवचनप्रवृत्तिरस्ति॥तथैवचादत्ता
दानपरिहारेपिदत्तादानप्रवृत्तिरस्तीत्येकदेशप्रवृत्त्यपेक्षयादेशव्रतानि॥तेषामेकदेशव्रतानांत्रिगु
प्तानिर्विकल्पसमाधिकालेत्यागः॥नचसमस्तशुभाशुभनिवृत्तिलक्षणस्यनिश्चयव्रतस्येति॥त्यागःकोर्थः
: यथैवहिंसादिरूपाव्रतेषुनिवृत्तिस्तथैकदेशव्रतेष्वपि॥कस्मादितिचेत॥त्रिगुप्तावस्थायांप्रवृत्तिनिवृ
त्तिरूपविकल्पस्यस्वयमेवावकाशोनास्ति॥अथवावस्तुतस्तदेवनिश्चयव्रतं॥कस्मात्सर्वनिवृत्तित्वादि
ति॥योपिघटिकाद्वयेनमोक्षंगतो॥भरतचक्रीसोपिजिनदीक्षांगृहीत्वाविषयकषायनिवृत्तिरूपंव्रत
मात्रव्रतपरिणामंकृत्वापश्चाच्छुद्धोपयोगरूपरत्नत्रयात्मकेनिश्चयव्रताभिधानेनवीतरागसामायि
कसंज्ञेनिर्विकल्पसमाधौस्थित्वाकेवलज्ञानंलब्धवानिति॥परंकिंतुतस्यस्तोककालत्वाल्लोका
व्रतपरिणामंनजानंतीति॥तदेवभरतस्यदीक्षाविधानंकथ्यते॥हेभगवन्जिनदीक्षादानानंतरंभरत
चक्रिणःकियतिकालेकेवलज्ञानंजातमिति॥श्रीवीरवर्द्धमानस्वामितीर्थंकरपरमदेवसमवशर

मध्ये श्रेणिकमहाराजेन पृष्टे सति गौतमस्वामी आह ॥ ॐ ॥ पंचमुष्टिभिरुत्पाट्य त्रोट्यन् बंधस्थितीन् कचान्
लोचानंतरमेवापराजन् ॥ श्रेणिक केवलं प्रपन्नस्तीर्थ्यः ॥ अद्यकाले ध्यानं नास्ति कस्मादिति चेत् ॥ उत्त
मसंहननाभावात् दशचतुर्दशपूर्वगतश्रुतज्ञानाभावात् ॥ अत्र परिहारः शुक्लध्यानं नास्ति ॥ धर्मध्यानमस्ती
ति ॥ तथा चोक्तं मोक्षप्राभृते श्रीकुंदकुंदाचार्यदेवैः ॥ भरहे दुस्समकाले ॥ धम्मज्झाणं हवेइ णाणिस्स ॥ तं अ
प्पसहावठिए ॥ णहु मण्णइ सो दु अण्णाणी ॥ १ ॥ अज्जवि तिरयणसुद्धा ॥ अप्पा झाऊण लहहि इंदत्तं ॥ लोयं
तियदेवत्तं ॥ तत्थ चुआ णिव्वुदिं जंति ॥ २ ॥ तथैव तत्वानुशासनग्रंथे चोक्तं ॥ अत्रेदानीं निषेधंति ॥ शुक्लं
ध्यानं जिनोत्तमाः ॥ धर्मध्यानं पुनः प्राहुः श्रेणीभ्यां प्राग्विवर्तिनां ॥ यच्चोक्तं उत्तमसंहननाभावात्तदु
त्सर्गवचनं ॥ अपवादव्याख्यानेन पुनरुपशमक्षपकश्रेण्योः शुक्लध्यानं भवति ॥ तच्चोत्तमसंहननेनैव अ
पूर्वगुणस्थानादधस्तनेषु गुणस्थानेषु धर्मध्यानं ॥ तच्चादिमत्रिकोत्तमसंहननाभावेप्यंतिमत्रिकसं
हननेनापि भवति तदप्युक्तं ॥ तत्रैव तत्वानुशासने ॥ ॐ ॥ यत्पुनर्वज्रकायस्य ॥ ध्यानमित्यागमे वचः ॥ श्रे

णयोध्यानंप्रतीत्योक्तं॥ ननुतोधस्तान्निषेधकं॥ यच्चोक्तंदशचतुर्दशपूर्वगतश्रुतज्ञानेनध्यानंभवति। तदप्यु
त्सर्गवचनं॥ अपवादव्याख्यानेनपुनः पंचसमितित्रिगुप्तिप्रतिपालकसारभूतश्रुतेनापिध्यानंभवति
केवलज्ञानंच॥ यद्येवमपवादव्याख्यानंनास्तितर्हितुषमासंघोषंतोशिवभूतिःकेवलीजातः। इत्यादिगं
धर्वाराधनादिभणितंव्याख्यानंकथंघटते॥ अथमतं पंचसमितित्रिगुप्तिप्रतिपादकंद्रव्यश्रुतमि
तिजानातीदंभावश्रुतंपुनःसर्वमस्ति॥ नैवंवक्तव्यं॥ यदिपंचसमितित्रिगुप्तिप्रतिपादकंद्रव्यश्रुतंजा
नातितर्हिमारुषमातुषइत्येकंपदंकिंनजानाति॥ ततएवज्ञायते। अष्टप्रवचनमातृप्रमाणमेवभा
वश्रुतंद्रव्यश्रुतंपुनःकिमपिनास्ति॥ इदंतुव्याख्यानमस्माभिर्नकल्पितमेव॥ तच्चारित्रसारादिग्रंथेष्व
पिभणितमास्ते॥ तथाहि॥ अंतर्मुहूर्तादूर्ध्वंयेकेवलज्ञानमुत्पादयंतितेक्षीणकषायगुणस्थान
वर्तिनोनिर्ग्रंथसंज्ञाऋषयोभवंतितेषांचोत्कर्षेणचतुर्दशपूर्वादिश्रुतंभवति॥ जघन्येनपुनः
त्रिगुप्तिमात्रंभवति॥ अथमतं॥ मोक्षार्थंध्यानंक्रियतेनचाद्यकालेमोक्षोस्तिध्यानेनकिंप्रयोजनं॥

यमयकालेपिपरंपरयामोक्षोस्ति॥ येकेमितिचेत॥ स्वमुद्रात्मभवनाकेलनसंसारस्थितिंस्तोकांकत्वादेवलोके
गछंति॥ तस्मादागत्यमनुष्यभवेरत्नत्रयभावनालब्ध्वाशीघ्रंमोक्षंगछंतीति॥ येपिभरतसगररामपांडवा
दयोमोक्षंगतास्तेपिपूर्वभवेरत्नत्रयभावनयासंसारस्थितिंस्तोकांकृत्वापश्चान्मोक्षंगता॥ स्तद्भवेसर्वे
षांमोक्षोभवतीति॥ नियमोनास्ति॥ एवमुक्तप्रकारेणाल्पश्रुतेनाल्पध्यानंभवतीतिज्ञात्वाकिंकर्तव्यं॥ व
धबंधच्छेदद्वेषाद्रागाच्चपरकलत्रादेः॥ आर्ताध्यानमपध्यानं॥ शासतिजिनशासनेविशदाः॥२॥ सं
कल्पकल्पतरुसंश्रयणात्वदीयंचेतोनिमज्जतिमनोरथसागरेस्मिन्॥ तत्रार्थतस्तवचकास्तिनकिंच
नापिपक्षेपरं॥ भवतिकल्मषसंश्रयस्य॥३॥ दैविध्यदग्धमनसोंतरुपात्तभुक्ते॥ चित्तंयथोल्लसतिते
स्फुरितोत्तरेण॥ धाम्निस्फुरद्यदितथापरमात्मसंज्ञे॥ कौतस्कुतीतवभवेद्विफलाप्रसूतिः॥४॥ कं चिद
कलुषिदभूत॥ सुकामभोगाहिमुक्तिस्तेजोरु॥ रागभुंजंतेभोगा॥ बंधतिभावेणकम्माणि॥५॥ इत्याद्यप
ध्यानंत्यक्त्वाममत्तिंपरिवज्जामिणिम्ममत्तिमुवट्ठिदो॥ आलंवणंचमेआदा॥ अवसेसाइंवोसरे॥ आदा खु

मज्ञाणाणो॥ आदामेदंसणेचरित्तेय॥ आदापच्चक्खाणे॥ आदामेसंवरेयोगे॥ ॥ एगोमेसस्सदेअप्पा॥ णा
णदंसणलक्खणो॥ सेसामेवाहिराभावा॥ सव्वेसंजोगलक्खणा॥ ॥ इत्यादिसारपदानिगृहीत्वाचध्यानं
कर्त्तव्यमिति॥ अथमोक्षविषयेपुनरपिनयविचारःकथ्यते॥ तथाहि॥ मोक्षस्तावद्बंधपूर्वकः॥ ॥ तथाचो
क्तं॥ मुक्तश्चेत्प्राग्भवेद्बंधो॥ नोबंधोमोचनंकथं॥ अबंधेमोचनंनैव॥ मुंचेरर्थोनिरर्थकः॥ ॥ बंधश्चशु
द्धनिश्चयनयेननास्ति॥ तथाबंधपूर्वकमोक्षोपि॥ यदिपुनःशुद्धनिश्चयेनबंधोभवतितदासर्वदैवबंधो
एवमोक्षोनास्ति॥ किंच॥ यथाशृंखलाबद्धपुरुषस्यबंधच्छेदकारणभूतभावमोक्षस्थानीयंबंधच्छेदकारण
भूतंपौरुषंपुरुषस्वरूपंनभवति॥ तथैवशृंखलापुरुषयोर्यद्द्रव्यमोक्षस्थानीयंपृथक्करणंतदपिपुरुष
स्वरूपंनभवति॥ किंतुताभ्यांभिन्नंयद्दृष्टंहस्तपादादिरूपंतदेवपुरुषस्वरूपं॥ तथैवशुद्धोपयोगलक्षणंभाव
भवति॥ तथैवतेनैवबंधनसाध्य॥ यज्जीवकर्मणोर्मोक्षयोः
रणंद्रव्यमोक्षरूपंतदपिजीवस्वभावोनभवति॥ किंतुताभ्यांभिन्नं॥ यदनंतज्ञानादिगुणास्वभावफलभूतंत

द्रव्यशुद्धजीवस्वरूपमिति॥ अयमत्रार्थः॥ यथाविवक्षितैकदेशशुद्धनिश्चयेनपूर्वंमोक्षमार्गोव्याख्यातः॥ तथा
पर्यायमोक्षरूपोमोक्षोपि न च शुद्धनिश्चयेनेति॥ यस्तु शुद्धद्रव्यशक्तिरूपः शुद्धपारिणामिकपरमभावलक्ष
णापरमनिश्चयमोक्षः स च पूर्वमेव जीवे तिष्ठतीदानीं भविष्यतीत्येवं न। स एव रागादिविकल्परहितमोक्षकारण
भूते ध्यानभावनापर्याये ध्येयो भवति न च ध्यानभावनापर्यायरूपः॥ यदि पुनरेकांतेन द्रव्यार्थिकनयेनापि
स एव मोक्षकारणभूतो ध्यानभावनापर्यायो भण्यते॥ तर्हि द्रव्यपर्यायरूपधर्मद्वयाधारभूतस्य जीवधर्मि
णो मोक्षपर्याये जाते सति॥ यथा ध्यानभावनापर्यायरूपेण विनाशो भवति॥ तथा ध्येयभूतस्य जीवस्य
शुद्धपारिणामिकभावलक्षणद्रव्यरूपेणापि विनाशः प्राप्नोति॥ न च द्रव्यरूपेण विनाशोस्ति॥ ततः स्थि
तं शुद्धपारिणामिकभावेन बंधमोक्षौ न भवत इति॥ अत्रात्मशब्दार्थः कथ्यते॥ अत धातुः सातत्यगम
नेर्थे वर्त्तते॥ गमनशब्देनात्र ज्ञानं भण्यते॥ सर्वे गत्यर्था ज्ञानार्था इति वचनात्॥ तेन कारणेन यथासंभ
वं ज्ञानसुखादिगुणेषु आसमंतात्॥ अतति वर्त्तते यः स आत्मा भण्यते॥ अथवा शुभाशुभमनोवचनकाय

भवंतोऽसंख्यादिरूपेण आसमंतादततिवर्त्तते यः स आत्मा ॥ अथवा स्याद्व्ययध्रौव्यैरासमं
तादत्तीति यः स आत्मेति ॥ किंच ॥ यथैकोपि चंद्रमा नानाजलघटेषु दृश्यते ॥ तथैकोपि जीवो नानाशरीरेषु ति
ष्ठतीति यद्वदंति तन्न घटते ॥ कस्मादिति चेत् ॥ चंद्रकिरणोपाधिवशेन घटस्थजलपुद्गला एव नानाचंद्रा
कारेण परिणता न चैकश्चंद्रः ॥ तत्र दृष्टांतमाह ॥ यथा देवदत्तमुखोपाधिवशेन नानादर्पणस्थपुद्ग
ला एव नानामुखाकारेण परिणता न चैको देवदत्तमुखं नानारूपेण परिणतं ॥ परिणमतीति चेत् ॥ तर्हि दर्प
णस्थप्रतिबिंबं चेतनत्वं प्राप्नोति न च तथा किंतु यद्येक एव जीवो भवति ॥ तदा एकजीवस्य सुखदुः
खजीवितमरणादिके प्राप्ते तस्मिन्नेव क्षणे सर्वेषां जीवितमरणादिकं प्राप्नोति ॥ न च तथा दृश्यते ॥
यच्चैकमेव वदंति ॥ यथैकोपि समुद्रः क्वापि क्षारजलः क्वापि मिष्टजल ॥ तथैकोपि जीवः सर्वदेहेषु तिष्ठति ॥
तदपि न घटते ॥ कथमिति चेत् ॥ जलराश्यपेक्षया तत्रैकत्वं न च जलपुद्गलापेक्षया तत्रैकत्वं ॥ यदि जलपुद्ग
लापेक्षया भवत्येकत्वं तदा स्तोकजले गृहीते शेषजले सैकत्वं किं नायाति ॥ ततः स्थितं षोडशवर्णिकासु

द्रव्यसं०
१०६

तेन ॥ श्रीनेमिचंद्रसैद्धांतदेवाभिधानेन गणिना ॥ सम्यग्दर्शनादिनिश्चयव्यवहाररूपपंचाचारोपेताचार्येण
कथंभूतेन ॥ तणुसुत्तधरेण ॥ तनुश्रुतधरेण ॥ तनुः स्तोकं श्रुतं तद्धरतीति ॥ तनुश्रुतधरस्तेनेति क्रिया
कारकसंबंधः ॥ ५८ ॥ एवं ध्यानोपसंहारगाथात्रयेण औद्धत्यपरिहारार्थं प्राकृतवृत्तेन च द्वितीयांतराधि
कारेऽस्तीति यस्य लगने ॥ ४ ॥ इत्युक्त [illegible]
[illegible] ॥ अत्र ग्रंथे विवक्षितस्य संधिर्भवतीति वचनात्पदानां संधिनियमो नास्ति ॥ वाक्यानि च स्तो
कस्तोकानि कृतानि सुखबोधार्थं ॥ तथैव लिंगवचनक्रियाकारकसंबंधसमासविशेषणवाक्यसमा
प्त्यादिदूषणं ॥ तथा च शुद्धात्मादि ॥ तत्त्वप्रतिपादनविषये विस्मृतदूषणं च विद्वद्भिर्न ग्राह्यमिति ॥ ५ ॥ एवं पूर्वो
क्तप्रकारेण जीवमजीवं दव्वं इत्यादि सप्तविंशतिगाथाभिः षड्द्रव्यपंचास्तिकायप्रतिपादकनामा प्रथमा
तराधिकार ॥ तदनंतरं आसवबंधण इत्याद्येकादशगाथाभिः सप्ततत्त्वनवपदार्थप्रतिपादकनामा द्वितो
याधिकार ॥ ततः परं सम्मद्दंसण इत्यादि विंशतिगाथाभिर्मोक्षमार्गप्रतिपादकनामा तृतीयाधिकारः ३

ज्ञेयत्वमि स्य

कोपरितोषः॥अथात्मनो ज्ञत्वं स्वत एवमासिध्यदिति ज्ञानत्वस्याप्युक्तज्ञानत्वमस्तितस्यै
प्यन्यदित्यनवस्था॥अथानवस्था मा भूदिति स्वत एव ज्ञानत्वस्य ज्ञानत्वमिष्यते नु प्रति
ज्ञाहानिरर्थान्तरात्संप्रत्यय इति॥ किंच तत्परिणामाभावाद्यथा दंडसंबंधापि दंडिनो न दं
डपरिणामः॥ दंडीव्यपदेशमात्रप्रतिलंभात्तथा उष्णगुणस्योष्णत्वसामान्यविशेषसं
बंधेनोष्णत्वं॥ गुणसामान्यविशेषपदार्थभेदादत उष्णत्वं वा नु उष्णगुणस्यासक्तेन तु
ष्ण इति। तथोष्णगुणसंबंधापेक्षानन्योष्णत्वं द्रव्यगुणपदार्थभेदादतोष्ण उ वानाग्निरि
त्यासक्तेन तु स्वयमुष्ण इति। समवायादिति चेन्न॥ प्रतिनियमाभावात्॥ स्यान्मतं समवा
योनामायुतसिद्धलक्षणः संबंधः॥ इहेदंबुद्ध्यभिधानप्रवृत्तिहेतुस्तेनैकत्वमिवनीता
नो व्यपदेशो भवति को उत्वसमवायादुष्णो गुणः॥ उष्णगुणसमवायाच्चाग्निरुष्ण इ
ति तन्न॥ कुतः॥ प्रतिनियमाभावादुष्णत्वोष्णगुणयोरन्यत्वात्स्वान्यत्वेकार्ये प्रति

विशेषोनियमः॥ यउष्णगुणस्याग्नावेवसमवायेनाप्सुशीतगुणस्यचाप्स्वेवसमवायो
नाग्नौउष्णत्वस्यचोष्णगुणेनैवसमवायेनशीतादिगुणेष्विति॥ तस्माद्येनविशेषे
णायंप्रतिनियमइष्यतेनतंपश्यामः॥ अतएवद्रव्यपरिणामएवोष्णमितिसिद्धं नान्यस्त
त्रातिनियमहेतुरस्तिस्वभावोहेतुरितिचेत्तर्हिएवतत्परिणामसिद्धिः॥ किंच॥ समवायभावो
वृत्त्यंतराभावान्नास्तितत्परिकल्पितः समवायः॥ कुतः वृत्त्यंतराभावात् यथागुणानां
पदार्थानांद्रव्येणसमवायसंबंधाद्वृत्तिरेवंतस्यासमवायः॥ पदार्थांतरंभूत्वाकेनसं
बंधेनद्रव्यादिषुवर्त्स्यतिसमवायांतराभावादेकएवहिसमवायत्वं॥ नचैतच्चाख्यातमिति
वचनात्॥ नचसंयोगेनवृत्तियुतसिद्ध्यभावाद्युतसिद्धानामप्राप्तिपूर्विकाप्राप्तिसंयो
गः॥ नचान्यः॥ संबंधः॥ संयोगसमवायविलक्षणोस्तियेनसमवायस्यद्रव्यादिषुवृ
त्तिः॥ स्यादतः॥ समवायिभिरनभिसंबंधान्नास्तिखरविषाणवत्समवायः॥ प्राप्तित्वा

व्याप्त्यंतराभावइतिचेत्॥ नव्यभिचारात्॥स्यान्मतं॥द्रव्यादीनिप्राप्तिमंतिप्रवर्त्ते
कयाचित्प्राप्त्यानवीतिचेत्समवायस्तुप्राप्तिर्न्नेप्राप्तिमानतः॥प्राप्त्यंतराभावेपिस्वतएवप्रा
प्नोतीतिनत्वेवंकस्माद्व्यभिचाराद्यथासंयोगः प्राप्तिरपिसन्प्राप्त्यंतरेणसमवायेनवर्त्तते
तथासमवायस्यापिस्यादितिप्रदीपवदिति॥ चेन्नतत्परिणामादनन्यत्वासिद्धेः॥स्यादे
तद्यथाप्रदीपः॥प्रदीपांतरमनपेक्षमाणः स्वात्मानंप्रकाशयतिघटादींश्च॥तथासमवा
यः संबंधांतरापेक्षामंतरेणात्मनश्चद्रव्यादिषुवृत्तिहेतुः॥द्रव्यादीनांचपरस्परतः इति त
न्न॥कुतस्तत्परिणामादनन्यत्वासिद्धेर्यथाप्रदीपः॥ स्वयंप्रकाशपरिणामात्प्रकाशात्म
नोनन्यःप्रकाशांतरंनापेक्षते॥ अन्यथाप्रकाशात्मनोन्यत्वेप्रदीपस्याप्रदीपत्वप्रसंगः यतो
नप्रकाशात्मानं॥सोन्यान्यः॥प्रदीपोस्तितथानद्रव्यादेरन्यागुणकर्मसामान्यविशेषसम
वायासंति॥द्रव्यस्यैवोभयपरिणामकारणापेक्षस्यगुणः॥ कर्मसामान्यविशेषः॥सम

वायइत्येवमादिपर्यायांतरेणपरिणामः॥यथाप्रदीपः॥स्वलक्षणप्रसिद्धोघटादिभ्योन्य
नैवंसमवायः स्वलक्षणप्रसिद्धः द्रव्यादन्योस्तिद्रव्यस्यैवगुणादिपर्यायपरिणामात्तस्मा
न्नप्रदीपवत्समवायसिद्धिः॥अन्यथाचद्रव्यादन्यत्वेगुणादीनांद्रव्यस्याद्रव्यत्वप्रसं
तेनगुणादिपर्यायोनप्रोक्तान्यद्रव्यमस्तियदिवागुणादीनप्यसंबद्धं॥केनचिद
सविशेषणप्रसिद्धयगुणादिभिः॥संबध्यते॥सविशेषउच्यते॥यतोनगुणा
गनान्याद्रव्यस्यविशेषः॥स्वतः प्रसिद्धोस्तिअतोद्रव्यपरिणामास्वगुणादयइतिसि
द्धं॥किंचविशेषपरिज्ञानाभावाद्यस्ययुतायुतसिद्धाप्याहकेविज्ञानमेकमस्ति
युतसिद्धानांसमवायः॥युतसिद्धानांसंयोगइति॥स्याद्विशेषविज्ञानंभवतस्तज्ज्ञाण
केकार्येविरुद्धत्वात्ज्ञानानां॥तद्विशेषविज्ञानाभावस्तदभावाच्चतद्विवेकाभावः॥
संस्कारादितिचेन्न॥तस्यापितादात्म्यापयादेतत॥ज्ञानजोज्ञानहेतुश्चसंस्कारोस्ति॥

तस्याद्वः॥ सामर्थ्यमितितन्नकुतस्तस्यापिस्तादात्म्यादेकार्थग्राहिज्ञानस्यसंस्कारस्यच
कोगर्थग्राहिज्ञानहेतुत्वात्॥ अनेकार्थग्राहिज्ञानाभावाच्चानेकार्थग्राहिज्ञानसंस्का
राभावस्तस्मात्पूर्वोक्तोदोषस्तदवस्थएव॥ अथवायमर्थः॥ कर्तृकरणयोरन्यत्वाद
न्यत्वमात्मज्ञानादीनांपरश्वादिवदितिचेन्न॥ तत्परिणामादग्निवदिति॥ यथाग्निर
ग्निस्वभावादन्योदहनदाहक्रियायाः॥ कर्त्ताकिंकरणेनदहतितत्परिणामादनन्या।
तथैवकरणं॥ तथात्माज्ञस्वभावत्वात्ज्ञानादन्यस्तत्परिणामादर्थान्जानन्ज्ञान
क्रियायाः॥ कर्त्ताकिंकरणेनज्ञानातितत्परिणामात्तदेवज्ञानंकरणत्वेनविवक्ष्यते
अन्यथावातत्स्वाभाव्यनवधारणप्रसंगाग्निवदित्येवमादिवाक्यार्थविवरणादहा
नस्वभावापत्त्या॥ योज्यंकिंच॥ अनेकांतात्पर्यायपर्यायिणोरर्थांतरभावस्यघटा
दिवत्तथाघटकपालशकलशर्करादीनानयद्रव्यार्पणाभेदात्स्यादेकत्वंस्यादन्य

त्वंकथमिह॥पर्य्यायार्थिकगुणभावेद्रव्यार्थिकप्राधान्यात्पर्य्यायार्थानर्पणान्मृद्रूप
द्रव्याजीवानुपयोगादिद्रव्यार्थार्पणात्स्यादेकत्वं॥ ९
नत्वइति॥तेषामेवद्रव्यार्थिकगुणभावेपर्य्यायार्थिकप्रधान्याद्द्रव्यार्थानर्पणात्कार
णविशेषायादितभेदपर्य्यायार्थार्पणात्स्यादन्यत्वं॥यतोन्योघटपर्य्यायोन्यश्चकपा
लादिपर्यायस्तथामृदोघटादिपर्य्यायाणांचस्यादेकत्वंस्यादन्य ९
त्स्यादेकत्वंयतोमृद्रूपमेवउभयपरिणामकारणवशा
ततव्यपदेशोभाग्भवति॥नान्येघटादयोमृद्रूपव्यतिरिक्तघटादिपर्यायाभावात्पर्यायि
पर्य्यायभेदाच्चस्यादन्यत्वं॥यतः॥पर्य्यायिमृद्द्रव्यंपर्य्यायाघटादयस्तथा
दिपर्य्यायाणांचस्यादेकत्वं॥स्यान्नानात्वंकथंपर्य्यायार्थिकगुण
न्यात्पर्यायार्थानर्पणादनादिपारिणामिकचैतन्यजीवद्रव्यार्थार्पणात्स्यादेकत्वंप

तोज्ञानादयोनादिपारिणामिकचैतन्यजीवद्रव्यादिद्रव्यार्थंनजहतितेषामेवद्रव्यार्थि
कगुणभावेपर्यायार्थिकप्रधान्याद्व्याप्तीनर्पणात्कारणविरोधापादितभेदपर्या
यार्थार्पणात्स्यादन्यत्वंयतोन्योज्ञानपर्यायोऽन्यश्चदर्शनादिपर्यायास्तथात्मनोज्ञा
नादिपर्यायाणांचस्यादेकत्वंस्यादन्यत्वं॥कथंतत्परिणामादेशात्स्यादेकत्वंयत
आत्मैवोभयपरिणामकारणत्वात्ज्ञानादिपर्यायपरिणतः॥ज्ञानादिव्यपदेशभा
ग्भवतिनान्यआत्मानान्येज्ञानादयः॥आत्मद्रव्यव्यतिरिक्तज्ञानादिपर्यायाभावा
त्पर्यायिपर्यायभेदाच्चस्यादन्यत्वं॥यतःपर्यायीआत्मापर्यायाःज्ञानादयस्तस्मादे
कत्वान्यत्वप्रत्यनेकांतोपपत्तेः॥तत्परिणामत्वेपिकरणभावोयुक्तः॥इतरथाहि
कार्यपर्यायादन्यत्वप्राप्तिरेवनवद्यस्यैकांतिकंकर्तृकरणयोरन्यत्वंतस्यकार्यपर्याया
यादन्यत्वंप्राप्तं॥कथंवृक्षवद्व्यापामासादंकरोतिपरश्वादिभिरित्यत्रकर्तृकरणयोर

राज०टी०
२२

न्यत्वंतथाभज्यते। वृक्षः शाखाभारणादित्येकस्य वृक्षस्य शाखाभारार्थपर्यायादन्यत्वं।
मासनवादोस्तीत्युक्ते न साखाभाराद्दृतेन्योवृक्षो न च शाखाभारादन्योवृक्षो न भवती
ति भज्यते वृक्षः। शाखाभारेणेति। एकार्थपर्यायात्मकः। करणनिर्देशो न भवति।
नात्मद्रव्याद्दृतेऽन्यज्ज्ञानं न चात्मद्रव्याद्दृतेनान्यज्ज्ञानमितिजानात्यनेनात्मेनात्मेति
एकार्थपर्यायात्मकं करणं न भवति। किंच। करणस्योभयथोपपत्तेर्द्रव्यस्य मूर्त्तिमदमू
र्त्तिभेदवद्यथाद्रव्यस्य मूर्त्तिमदमूर्त्तिभेदादेकांतपरिग्रहो नास्ति.
मीकारः कालाऽमूर्त्तयः। आत्मा चामूर्त्तः। द्रव्यार्थादेशान्नपर्यायार्थादेशात्तस्याना
दिकार्म्मणशरीरसंबंधात्तथाकारणाद्द्वेधाविभक्ताविभक्तकर्तृकभेदात्कर्तुरन्य
त्वकर्तृत्वं। यथापरशुनाछिनत्ति देवदत्त इति कर्तुरनन्यदविभक्तकर्तृकं यथाग्निरिं
धनं दहत्यौष्ण्येनेति तथात्मा ज्ञानेनात्मानं जानातीत्यविभक्तकर्तृकं करणं। किंच

दृष्टांताद्धि कुसूलस्वात्मव्यवच्छ्याभिनत्ति ॥ कुसूलं स्वेदन्त इत्यत्र कुशूलायदाभिदिक्रि
याया: सुकरतमास्वातंत्र्येणविवक्षित: ॥ स्वयमेवात्मानंभिनत्तीतितदाकिंकरणे
सावात्मानंभिनत्तीतिविवक्षायांकुसूलात्मैवकरणस्यनोपादीयतेतथात्मैवकर्त्ता
ताकरणत्वंभवति ॥ किंच ॥ एकार्थपर्यायविरोधोपपत्तेरिंद्रादिव्यपदेशवत् ॥ इहैक
स्यार्थस्यानेकपर्यायविरोधोपपत्तिर्दृष्टानचास्यतेभ्य: ॥ पर्यायेभ्योन्यत्वंकथमिंद्रादि
व्यपदेशवत्तयथैकस्यदेवराजार्थस्येंद्रशक्रपुरंदराद्यनेकव्यंजनपर्यायविरोधो
पपत्ति: ॥ नचदेवराजस्येंद्रशक्रपुरंदरादिपर्यायेभ्योऽन्यत्वंनचानन्यत्वाद्येनायामं
इंद्रस्तेनैवशक्र: ॥ पुरंदरोवायेनवाशक्रस्तेनैवेंद्र: ॥ शक्रोवाकथमिहयत ॥ इंद्रादीनां
प्रतिनियतव्यंजनपर्यायोपपत्ति ॥ इंदनादिंद्र: ॥ शकनाच्छक्र: ॥ पूर्दारणात्पुरंदर इति
नचेंदनशकनपूर्दारणव्यंजनपर्यायभेदान्नदेवराजोऽस्ति: शक्र: पुरंदरोवानभवति

भवत्येव। तथैकस्यात्मनो ज्ञानादिपर्यायविशेषोपपत्तिः। तस्मादेकार्थपर्यायविशेषोपप
त्तेर्नान्यत्वमात्मज्ञानादीनां। कर्तृसाधनत्वाद्वा दोषाभावः। अथवा नैमे ज्ञा
नदर्शनशब्दाः करणसाधनाः। किं तर्हि कर्तृसाधनाः। तथा चारित्रशब्दोपि न कर्मसाधनः।
किं तर्हि कर्तृसाधनः। कथमेवंभूतनयवशात्। ज्ञानदर्शनचारित्रपरिणत आत्मैव। अत
स्तत्परिणामात् ज्ञानादिपरिणत आत्मैव जानातीति ज्ञानं पश्यतीति दर्शनं चरतीति चा
रित्रमिति। यदुक्तं कर्तृकरणयोरन्यत्वादन्यत्वमात्मज्ञानादीनामिति दोषः। स न भवति। ल
क्षणाभाव इति चेन्न बाहुलकात्। स्यादेतन्न लक्षणमस्ति कर्तरि युटो विधायकमिति तन्न।
कृत्यल्युटो बहुलमिति कर्तरि युट्। कृत्याश्च ल्युट् च अन्यत्र विहितास्ततोऽन्यत्रापि
दृश्यन्ते। यथा भावकर्मणोर्विहिताः करणादिष्वपि भवन्ति स्नात्यनेनेति स्नानीयं चूर्णं। द
दात्यस्मै इति दानीयोऽतिथिः। समावर्तते तस्मादिति समावर्तनीयो गुरुः। करणाधिक

रणाधिकरणयोर्युक्तः॥ कर्मादिष्वपिदृश्यतेनिरदंतीतिनिरदनंप्रस्कंदंतितस्मा
दितिप्रस्कंदनं॥ अप्यत्राभावसाधनाज्ञानादिशब्दास्तत्त्वकथनाद्विवक्षस्यकरणव्यपदेशाव
ध्येयोदासीन्येनावस्थितमात्रंदत्तणादिदानंकरणमितिव्यपदिश्यतेतथौदासीन्येने
वास्थितानिज्ञानदर्शनचारित्राणीतिनियतज्ञानदर्शनचरणक्रियाव्यापारंप्रतिनिव
त्तौत्सुक्यानिकथ्यंतेकोसौमोक्षमार्गः॥ ज्ञानदर्शनचारित्राणिज्ञातिर्ज्ञानंदृष्टिर्दर्श
नंचरणंचारित्रमितिक्रियाव्यापृतानांतुज्ञानादीनांकर्त्रादिकारकव्यवहारः॥ व्यक्ति
भेदादयुक्तमितिचेन्नैकार्थशब्दान्यत्वाद्व्यक्तिभेदगतेः॥ स्यादेतत्॥ ज्ञानमात्मेति अयु
क्तंकस्माद्व्यक्तिभेदादभिधेयवल्लिंगसंख्याभवंतोभिधानस्यतिज्ञानआत्मेतिप्राप्नोती
तितन्नकिंकारणंएकार्थेसव्दान्यत्वाद्व्यक्तिभेदगतेः॥ एकस्मिन्नप्यर्थेशब्दभेदाद्व्यक्ति
भेदाश्रयतेयथागेहंकुटीमठः॥ पुष्यःतारकानक्षत्रमितितथैवज्ञानमात्मेत्यपिस्यात्।

राज॰टी॰
२३

ज्ञानग्रहणमादौन्याय्यं। तत्पूर्वकत्वाद्दर्शनस्य। आह। ज्ञानग्रहणमादौन्याय्यं। कुतस्तत्पूर्व
कत्वाद्दर्शनस्य यतः। पदार्थतत्त्वोपलब्धिपूर्वकं श्रद्धानं। अल्पाच्तरं अतः अतिस्वरस्य सं
ज्ञारत्वाच्च दर्शनात् ज्ञानमल्पाच्तरं अतश्च पूर्ववाच्यं। नोभयोर्युगपत्प्रवृत्तेः प्रतापप्रकाश
वत्तेषदोषः कुतः। उभयोर्युगपत्प्रवृत्तेः कथं प्रकाशप्रतापवत् यथा सवितुर्घनपटला
वरणविगमे प्रतापप्रकाशाभिव्यक्ति युगपद्भवति तथा ज्ञानदर्शनयोर्युगपदात्मलाभस्तद्य
था। यदा दर्शनमोहस्योपशमात्क्षयोपशमात्क्षयाद्वा आत्मा सम्यग्दर्शनपर्यायेणाविर्भ
वति। तदैव तस्य मतिज्ञानश्रुताज्ञान। निवृत्तिपूर्वकं मतिज्ञानं श्रुतज्ञानं चाविर्भवति। दर्शन
स्यैवाभ्यर्हितत्वाद्वदल्पकम् अल्पाच्तरत्वात ज्ञानस्य पूर्वनिपात इति। तदसत्। कस्माद्दर्श
नस्यैवाभ्यर्हितत्वात्। ज्ञानाद्दर्शनमेवाभ्यर्हितं दर्शनसंनिधाने सति। अज्ञानस्यापि
ज्ञानभावात्। ज्ञात्वाप्यश्रद्धतस्तदभावात् मध्ये ज्ञानवचनं ज्ञानपूर्वकत्वाच्चारित्रस्य

यतोजीवादिपदार्थेतत्वज्ञानसन्निधानेसतिचारित्रमोहस्योपशमात्क्षयोपशमात्क्षयाद्वा
मोदानहेतुक्रियाविशेषोपरमरूपश्चारित्रपरिणामोभवतिततश्चारित्रस्यज्ञानपूर्वकत्वात्ज्ञा
नपूर्वंप्रयुक्तं इतरेतरयोगेद्वंद्वोमार्गंप्रतिपरस्परापेक्षाणांप्राधान्यात्॥ अयमितरेतरयोग
द्वंद्वः॥ दर्शनंचज्ञानंचचारित्रंचदर्शनज्ञानचारित्राणीति॥ कुतः॥ मार्गंप्रतिपरस्परापेक्षा
णांप्राधान्यात्यथाप्लक्षन्यग्रोधपलाशाइति॥ अस्त्यादिसमानकालक्रियाणांप्लक्षादी
नांपरस्परापेक्षाणामितरेतरयोगेद्वंद्वः॥ सर्वपदार्थप्रधानत्वाद्बहुवचनांत॥ तथाद
र्शनज्ञानचारित्राणामस्त्यादिसमानकालक्रियाणांपरस्परापेक्षाणामितरेतरयो
गेद्वंद्वः॥ सर्वपदार्थप्रधानत्वाद्बहुवचनांत॥ यतस्त्रयाणामपिदर्शनादीनांसहिता
नांपरस्परापेक्षाणांमोक्षमार्गत्वंप्रतिप्राधान्यंनैकस्यनद्वयोः प्रत्येकंसम्यग्विशेष
णपरिसमाप्तिर्भुजिवद्यथादेवदत्तजिनदत्तगुरुदत्ताभोज्यंतामितिभुजिः प्रत्येकंप

रिसमाप्यतेतस्याप्रशंसावचनस्यसम्यक्शब्दस्यप्रत्येकमभिसंबंधाद्दर्शनादिभिःसम्यग्दर्श
नंसम्यग्ज्ञानंसम्यक्चारित्रमितिपूर्वपदसामानाधिकरण्यात्तद्व्यक्तिवचनप्रसंगइतिचेन्न
मोक्षोपायस्यात्मप्रधानत्वात्॥स्यादेतद्दर्शनादिभिः॥सामानाधिकरण्यात्तद्व्यक्तिवच
नेमोक्षमार्गस्यप्राप्नुतइतितन्नाकिंकारणं॥मोक्षोपायस्यात्मप्रधानत्वाद्योमार्गोमोक्षोपा
य॥तस्यात्मास्वभावः॥येनात्मायेनस्वभावेनसमोक्षमार्गउच्यते॥सदर्शनज्ञानचारित्रा
णांसर्वेषामविशिष्टएकःपुल्लिंगश्च॥तस्यप्राधान्यात्सत्यपिसामानाधिकरण्येनत
द्व्यक्तिवचनप्राप्तिः॥यथासाधवः॥प्रमाणमिति॥आत्यंतिकः॥सर्वकर्मनिक्षेपोमोक्ष
ःमोक्षअसनेइत्यं तस्यघञ्॥भावसाधनोमोक्षणंमोक्षः॥असनंक्षेपणमित्यर्थः॥स
आत्यंतिकःसर्वकर्मनिक्षेपोमोक्षइत्युच्यतेप्रज्ञासशुद्धिकर्मणोमार्गइवार्थाभ्यंतरी
करणान्मष्टःशुद्धासावितिमार्गः।मार्गइवमार्गः॥कण्टकापायाद्यथास्थाणुकंटकोप

लशर्करादिदोषरहितेनमार्गेणमार्गगाः॥ सुखमभिमतस्थानंगच्छंति। तथामिथ्याद
र्शनासंयमादिदोषरहितेनत्र्यंशेन॥ श्रेयोमार्गेणसुखंमोक्षंगच्छंति॥ अन्वेषणक्रिय
स्यवाकरणत्वोपपत्तेः॥ अथवामार्गोऽन्वेषणोऽत्यस्यमार्गः॥ सिध्यति॥ कुतः सम्यग्द
र्शनादीनांकरणत्वोपपत्तेः॥ मोक्षोयेनमार्ग्यतेसमोक्षमार्गइतियुक्त्यनभिधानादमा
र्गइतिचेन्न॥ मिथ्यादर्शनाज्ञानासंयमानांप्रत्यनीकत्वादौषधवत्॥ स्यादेतन्नात्रयु
क्तिरुक्तासम्यग्दर्शनादित्रयमेवमोक्षमार्गइति॥ ततोऽस्यमार्गत्वंनोपपद्यतइति
तन्नकिंकारणं॥ मिथ्यादर्शनाज्ञानासंयमानांप्रत्यनीकत्वात्कथमौषधवद्यथावा
ताद्दिविकाररोगाणांनिदानप्रत्यनीकंस्निग्धरूक्षाद्यौषधमुच्छेदकारणं॥ तथा।
मिथ्यादर्शनाज्ञानासंयमादीनांनिदानप्रत्यनीकंसम्यग्दर्शनाद्यौषधमुच्छेदकारणं
इतितत्त्वार्थवार्तिकेव्याख्यानालंकारेप्रथमाध्यायेप्र[illegible]भाष्यं॥ ॥२॥ [illegible] विपर्य।

याद्बंधस्यात्मलाभः सति ज्ञानादेव तद्विनिवृत्तौ त्रित्वानुपपत्तिः॥ अत्र [illegible]दाह॥
विपर्ययाद्बंधस्यात्मलाभो॥ भवति तदभावात्तत्वज्ञाने सति बंधनिवृत्तिर्भवति कारणाभा
वाद्धि कार्याभाव इति बंधनिवृत्तेरेव च मोक्षः॥ अतो मोक्षमार्गस्य त्रित्वं नोपपद्यते प्रति
ज्ञामात्रमिति चेन्न सर्वेषामविसंवादात्॥ स्यादेतत्प्रतिज्ञामात्रमेतद्विपर्ययाद्बंधो भ
वतीति तन्न॥ किं कारणं सर्वेषामविसंवादान्नाच प्रतिवादिनो विसंवदंते॥ तद्यथा॥ ध
र्मेण गमनमित्यादि वचनमेकेषां धर्मेण गमनमूर्ध्वं भवति अष्टसु ब्राह्मसौम्यप्राजापत्यैंद्र
गांधर्वयक्षराक्षसपिशाचेषु गमनमधस्ताद्भवत्यधर्मेण॥ अधर्मेण खलु षट्सु स्थाने
षु मानुषपशुमृगपक्षिसरीसृपस्थावरेषु गमनं ज्ञानेन चापवर्गः॥ यदास्य रजस्तमसोर्गुण
भावात्सत्वस्य प्राधान्यात्प्रकृतिपुरुषांतरपरिज्ञानमाविर्भवति तेनापवर्गः॥ विपर्यया
दिष्यते बंधः॥ योस्याव्यक्तमहदहंकारतन्मात्रसंज्ञास्वष्टासु प्रकृतिष्वनात्मस्वात्माहं

कारिकेषुवैकारिकेषुचेंद्रियेष्वात्मत्वाभिमानः॥अविपर्ययस्तस्माद्विध इत्येकेषांवचनं त
थानात्मीयेष्वात्माभिमानविपर्ययात्तस्यशब्दाद्युपलब्धिरादिगुणपुरुषे॥ तेनोपल
ब्धिरं तथैवदस्याविभक्तः प्रत्ययः अज्ञानादीन्द्रियवृत्तिषु श्रवणादिषु॥ अतित्येवमा
दिः पांचभौतिकेचाश्रीरः॥ पाष्याणादिसमूहेशरीरे हं पुरुष इति प्रत्ययो भवति॥ तावद
प्रतिबुद्धत्वात्संसारः गुणपुरुषांतरोपलब्धिरतः॥ यथैदोस्तषवर्जं सर्वप्रकृतिकृतं वि
गुणमचेतनं भोग्यमितिजानाति॥ भोक्तारमकर्त्तारचेतनंचपुरुषमन्यंप्राधानाद
वैति॥ अचेतनस्यगुणास्तदातस्यगुणपुरुषांतरोपलब्धिरतः संसारस्येतिज्ञानान्मो
क्षोविपर्ययाद्विध इत्येकेषां॥ इच्छाद्वेषाभ्यामपरेषां॥ इच्छाद्वेषपूर्विकाधर्माधर्मप्रवृत्तिस्ते
भ्यांसुखदुःखंततः इच्छाद्वेषौनचविमोहस्यतामिथ्यादर्शनाभावात् मोहश्चाज्ञानंवि
मोहस्ययतेः॥ षट्पदाप्यतत्वज्ञस्यवैराग्यवतः सुखदुःखेच्छाद्वेषाभावः॥ इच्छाद्वेषाभा

राज॰टी॰
९६

वाद्धर्म्माधर्म्माभावः॥ तदभावसंयोगाभावो॥ भाष्ये उभीवस्त्रसमोक्षस्तयोद्धर्म्माधर्म्मयोरभावे
भवत्यपवर्गः॥ कथंप्रदीपोपरमप्रकाशाभाववत्॥ यद्वियज्ञावप्रतीत्यात्मानंप्रतिलभेत तत्र
स्यापरमातिरोभावंयाति॥ तद्यथा॥ प्रदीपोपरमात्प्रकाशाभावः वेधस्मादृष्टाद्भवतिकथ
मधर्म्मसंज्ञाददृष्टादज्ञानंभवति॥ अज्ञानाच्चमोहोमोहस्ततः॥ इच्छाद्वेषौजायेते इच्छाद्वे
षाभ्यांधर्म्माधर्म्मोसरणबंध॥ अतसंसारस्यप्रसृतिस्तस्माद्भवत्यदृष्टाभावसंयोगाभा
वः॥ कर्त्तरस्यसंयोगस्याभावः॥ जीवनसंज्ञकस्यधर्म्माधर्म्मापेक्षः॥ सदेहस्यात्मनोम
नसासंयोगाज्जीवनंतस्यधर्माधर्मयोरभावादभावात्प्राउभीयस्त्वप्रत्ययशरीरस्यात्मो॥
त्तमभावः॥ समोक्षः कथमभावोधर्माधर्मयोरनागतानुत्पत्तिसंचितानिरोधाभ्याम
नागतानुत्पत्तिः॥ संचितनिरोधश्चद्विविधोभावस्तत्रानागतानुत्पत्तिस्तावद्धर्म्माध
र्मयोः॥ शरीरेंद्रियमनोव्यतिरिक्तात्मदर्शनादकुशलस्या

नानोपरिवर्जनाद्धर्मस्यापितत्साधनानामनभिसंबंधान्नानभिसंहितकर्मबन्धाती
तिसंचित्तनिरोधापित्तउद्वेगपरिखेदफलाद्धर्मनास्तस्मात्संसाराउद्वेगः॥शारीरत्वाक्ले
कलाछीत॥जराशोकादिनिमित्तशरीरपरिखेदप्रदायाधर्मातिरिच्यते॥भोगदोषदर्शनात्त
स्मासाच्चपदार्थानांतत्वविनिर्णयात्क्षीतिमारभ्यधर्मस्यविनाश॥अतोमोक्षइत्यपरेषाद
र्शनं दुःखादिनिवृत्तिरित्यन्येषां दुः॥खजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तराप
यतदनंतराभावान्निः॥अपसाधिगमइत्यन्येषांदर्शनंशोदप्रत्पत्तेरामिथ्याज्ञानंस
र्वेषामुत्तरस्यतत्वज्ञानान्निवृत्तोपरस्तदनंतरापायस्तस्यनिवृत्ति॥कश्चासौदोषःसहि
मिथ्याज्ञानादनंतरस्तत्कार्यत्वात्सचोत्तरःप्रवृत्तेः॥प्रवृत्तिश्चानंतरा॥तत्कार्यत्वा
न्निवृत्तोदोषा॥भावेप्रवृत्त्यभाव॥प्रवृत्तिरप्युत्तराजन्मनः॥प्रवृत्तेरभावाज्जन्माभावस्तत्का
र्यत्वाज्जन्मोत्तरंदुःखादत्तोजन्माभावाद्दुःखनिवृत्तिस्तन्निवृत्तौवात्यंतिकः॥सुख

राज०टी०
१७

ङ्खानुपभोगोनिःश्रेयसमिति॥ अविद्याप्रत्ययाः संस्काराइत्यादिवचनंकेषांचिदविद्याविप
र्य्यायात्मिकासर्वेभावाश्चानित्यानात्माशुचिदुःखेषुनित्यसात्मकशुचिसुखाभिमानरूपातत्प्र
त्ययाः॥संस्काराइत्यादिवचनंकेषांचित्॥केपुनस्तेसंस्कारारागादयस्तेचत्रिधाः॥पुण्यापु
ण्यानेञ्जपसंस्काराः॥ तत्रपुण्यापगानांसंस्काराणांपुण्योपगमेचविज्ञानंभवति॥यतइद
मुच्यते॥ अविद्याप्रत्ययाः॥संस्कारावस्तुपत्तिविज्ञप्तिर्विज्ञानमिति॥ अपुण्यापगानांसं
स्काराणामपुण्योपगमेचविज्ञानंभवति॥ यदेतदुच्यते॥संस्कारप्रत्ययंविज्ञानं॥विज्ञा
नसंभूतास्त्वत्वारः॥स्कंधानामचत्वारिमहाभूतानिरूपंनामचरूपंनामचरूपंचनामरूप
मिति॥आनेञ्ज्यापगानांसंस्काराणामानेञ्जोपगमेचविज्ञानंभवतियतइदमुच्यतेविज्ञानप्र
त्ययंनामरूपंनामरूपसंनिहितानींद्रियाणिषडायतनमितिमानरूपवृध्याषड्भिराय
तनद्वारैःकृत्यक्रियाःप्रजायंतइतिनामरूपप्रत्ययंषडायतनमुच्यते॥त्रयाणांध

मेगणांसंनिपातः॥स्पर्शः॥केषांत्रयाणांविषयेंद्रियविज्ञानानांसंगतिः॥स्पर्शः॥षड्भ्यआयतने
भ्यः॥षट्स्पर्शकायाः॥प्रवर्त्तंतइतिषडायतनप्रत्ययः॥स्पर्शः॥स्पर्शानुभवनंवेदनायज्जाती
यः॥स्पर्शोभवतितज्जातीयावेदनाप्रवर्त्ततइतीदमुच्यतेस्पर्शप्रत्ययावेदनेति॥वेदनाध्य
वसानात्तृष्णायत्तस्मात्वेदनाविशेषानास्वादयत्यभिनंदयत्यध्यवस्यतितिष्ठतीतिसावेदना
प्रत्यया तृष्णोच्यतेतृष्णावैपुल्यमुपादानंसोमप्रियासातुरागतिभेदेत॥नित्यमपरित्या
गोभूयोभूयश्चप्रार्थना॥तदुच्यते॥तृष्णाप्रत्ययमुपादानमिति॥उपादाननिमित्तंपुनर्भ
वजनकंकर्मभवः॥एवंप्रार्थ्यमानः॥पुनर्भवजनकंकर्मसमुत्थापयति॥कायेनमनसा
वाचातद्धेतुकः॥स्कंधप्रादुर्भावोजातिर्जातिस्कंधपरिपाकोजरा॥जात्यभिनिर्वृत्तानां
स्कंधानामपचयः॥परिपाकः॥परिपाकाद्विनाशोभवतितन्मरणं॥तदेवंजातिप्रत्ययंजराम
रणमुच्यते॥एवमयंद्वादशांगः प्रतीत्यसमुत्पादः॥अन्योन्यहेतुकस्तत्रसर्वभावेष्वविपरी

तद्दर्शनं विद्या॥ यत्सर्वभावेष्वनित्यानात्मकाशुचि॥ दुःखेष्वनित्यानात्मकाशुचिदुःखद
र्शनं सा विद्या ततो मोक्षः॥ कथमविद्यायां विद्यातो निवृत्तिः॥ अविद्यानिवृत्तेः संस्कारनि
रोधः संस्कारनिरोधाद्विज्ञाननिरोधः॥ एवमुत्तरेष्वपीति॥ तदेवमविद्यातो बंधो भवति
विद्यातश्च मोक्ष इति मिथ्यादर्शनादीति मतं॥ भवतां मिथ्यादर्शनाविरतिप्रमादकषा
ययोगा बंधहेतव इति भवतामार्हतानामपि मतं॥ पदार्थविपरीताभिनिवेशाश्रद्धानं मि
थ्यादर्शनं विपरीताभिनिवेशश्च मोहात् मोहश्चाज्ञानमिति॥ अज्ञानाद्बंधः॥ अतो
मिथ्यादर्शनमादिर्बंधस्य सामायिकमात्रप्रतिपत्तेश्चानंता॥ सामायिकमात्रासिद्धा इति
वचनात्॥ सामायिकं च ज्ञानमतः आर्हतानामपि ज्ञानान्मोक्ष इत्यविसंवादात्त्रितय
मोक्षमार्गकल्पनानयुक्ता॥ किंच॥ दृष्टांतसामर्थ्याद्दारीकस्य प्रियैकपुत्रवत्तद्यथा॥
वणिकस्य प्रियैकपुत्रं सर्पाविग्रहाजेनावमृद्यमानं बालमुपलभ्य तिदुःखाभिभवमूर्छ

यागतमार्गा इवाभवद्भिर्निवृत्तकायादिक्रियस्य चास्य कुशलमुद्दिश्य स्त्यायपूर्वकं प्रा
त्याहितमार्गवृत्तेः॥ स्वपुत्रगणदर्शनविषयमुपनीतेः अयं मम पुत्र इत्याविर्भूततत्त्वज्ञा
नस्य स्वपुत्रस्य स्वपुत्रसादृश्येनोद्भूतमिथ्याज्ञानजनितः स्वं तद्भूतपूर्वमिवाभवदेवमज्ञा
नाद्बंधः॥ केवलाच्च ज्ञानान्मोक्ष इति न वा नांतरीयकत्वाद्रसायनवत्॥ न वा एष दोषः॥
किं कारणं नांतरीयकत्वान्नहि त्रितयमंतरेण मोक्षप्राप्तिरस्ति॥ कथं रसायनवत् यथा
न रसायनज्ञानादेव रसायनफलेनाभिसंबंधः॥ रसायनश्रद्धानक्रियाभावाच्च यदि वा र
सायनज्ञानमात्रादेव रसायनफलसंबंधः कस्यचिद्दृष्टः सोऽभिधीयतां॥ न चासावस्ति न
च रसायनक्रियामात्रादेव॥ ज्ञानश्रद्धानाभावान्न च रसायनश्रद्धानमात्रादेव रसायन
ज्ञानपूर्वक्रियासेवनाभावात्॥ अतो रसायनज्ञानश्रद्धाक्रियासेवनोपेतस्य तत्फलेनाभि
संबंध इति निःप्रतिद्वंद्वमेतत्तथा न मोक्षमार्गज्ञानादेव मोक्षेणाभिसंबंधः दर्शनचा

रा०टी०
२९

रित्राभावान्नचश्रद्धानाद्वा॥मोक्षमार्गोज्ञानपूर्वक्रियानुष्ठानाभावान्नचक्रियामात्रादेव
ज्ञानश्रद्धानाभावाद्यतः॥क्रियाज्ञानश्रद्धानरहिता निःफलेति यदि चज्ञानमात्रादेव क्वचि
दर्थसिद्धिर्दृष्टासाभिधीयतां॥नचासावस्त्यतोमोक्षमार्गस्त्रितयकल्पनाज्यायसीति॥अनंताः
सामायिकसिद्धा इत्येतदपित्रितयमेवसाधयति॥कथंज्ञस्वभावस्यात्मनस्तत्त्वश्रद्धानस्य
सामायिकचारित्रोपपत्तेः॥समयएकत्वमभेद इत्यनर्थांतरं॥समयएवसामायिकंचारित्रं
सर्वसावद्यनिवृत्तिरितिअभेदेनसंग्रहादिति॥उक्तंच॥ हतंज्ञानंक्रियाहीनंहतंचाज्ञानिनां
क्रिया॥धावनकिलांधकोदग्धः॥पश्यन्नपिचपंगुलः॥१॥संयोगमेवेहवदंतिफलंनह्ये
कचक्रेणरथःप्रयाति॥अंधश्चपंगुश्चवनेप्रविष्टौतौसंप्रयुक्तौनगरंप्रविष्टाविति॥
देवमोक्ष इतिचेदनवस्थानादुपदेशाभावः॥यस्यज्ञानादेवमोक्षस्तस्यानवस्थानादुपदे
शाभावः॥यथाप्रदीपस्यतमोनिवृत्तिहेतुत्वात्प्रदीपसंततेर्मुहूर्तमपितमोवतिष्ठते॥न

ह्येतदुक्तं प्रदीपस्यनामज्वलतस्तमस्यावतिष्ठतइति । तथात्मस्वरूपावबोधाविर्भावा
नंतरमेवास्यमोक्षः । स्यान्नह्येतच्छक्तिमज्ज्ञानंचनाममोक्षस्यकारणमस्तिनचमोक्षइति
ततोज्ञानानंतरमेवास्यशरीरेंद्रियहत्यादिनिवृत्तेः । प्रवचनोपदेशाभावः संस्कारक्षयाद
वस्थानादुपदेशइतिचेन्न । प्रतिज्ञातविरोधात्स्यादेतद्यावदस्यसंस्कारानक्षीयंतेता
वदवस्थानमित्युपदेशः । उपपन्नइतितन्न । किंकारणंप्रतिज्ञातविरोधाद्यद्युत्प
न्नज्ञानोपिसंस्कारक्षयापेक्षत्वादवतिष्ठतेनमुच्यतेनतर्हिज्ञानादेवमोक्षः कु
तःसंस्कारक्षयादितियत्प्रतिज्ञातंज्ञानेनचापवर्गइति । तद्विरोधः । किंच । उभय
थादोषोपपत्तेः । इदमिहसंप्रधार्यं । संस्कारक्षयस्यज्ञानंवाहेतुः । स्यादन्योवेति । य
दिज्ञानंननुज्ञानादेवसंस्कारनिरोधइति । प्रवचनोपदेशाभावः । अथान्यः संकोन्यो
भवितुमर्हति । अन्यतश्चारित्रादितिपुनरपिप्रतिज्ञातविरोधइति । किंचप्रव्रज्या

घनुष्ठानाभावप्रसंगश्च॥ यदि ज्ञानादेवमोक्षः। ननु ज्ञानएवयत्नकार्यः॥ शिरस्तुं
डगुडनकाषायांबरधारणादिलक्षणाप्रव्रज्यायमनियमभावनाद्यभावप्रसंगः
स्यात्॥ ज्ञानवैराग्यकल्पनायामपि॥ किमेवंस्थानाभावादुपदेशा
र्थेपरिज्ञानेसतिविषयानभिष्वंगलक्षणेचवैराग्येज्ञानस्यतत्क्षणएवमोक्षोपप
त्तेः॥ किंच॥ नित्यानित्यैकांतावधारणेतत्कारणासंभवः॥ नित्यएवार्थोऽनि
त्यएवेति॥ एकांतावधारणेतत्कारणासंभव॥ तत्कारणस्यज्ञानवैराग्यस्यसंभव
स्तद्यथानित्यत्वैकांतेविक्रियाभावात्ज्ञानवैराग्यभावः॥ विक्रियाहिद्विविधा॥ ज्ञा
नादिविपरिणामलक्षणादेशांतरसंक्रमरूपाच॥ येषांनित्यएवात्मासर्वगतश्चे
तिदर्शनंतेषामुभयथापिसानास्तिततश्चतुष्टयत्रयद्वयसंनिकर्षज्ञानाभावाद्वैरा
ल्पवृत्तेरात्मनःआकाशस्येवमोक्षाभावः॥ स

मवायादितिचेन्न।तस्यप्रत्याख्यातत्वात्क्षणिकैकांतेप्यवस्थानाभावात्॥ज्ञानवै
राग्यभावनाभावः॥येषांमतंक्षणिकाःसर्वसंस्काराइतितेषामप्युत्पत्त्यनंतरंवि
नाशोस्तिज्ञानादीनामवस्थानंनास्तिनचतेभ्योऽन्यदवस्थास्नुवस्तुविद्यतेततस्तद
भावात्ज्ञानवैराग्यभावनाभावस्ततएवोत्पत्त्यनंतरंनिरन्वयविनाशाभ्युपगमात्प
रस्परसंश्लेषाभावेनिमित्तनैमित्तिकव्यवहारापन्हवादविद्याप्रत्ययाःसंस्कार
इत्येवमादिविरुध्यते॥संतानादिकल्पनायांवान्यत्वानन्यत्वयोरनेकदोषानुषं
गः॥विपर्ययाभावः प्रागुपलब्धौवाबंधाभावः॥इहलोकेप्रागनुभूतस्यापु
रुषविशेषस्यप्रकाशाभावादभिभवात्करणात्क्रमाद्वाविशेषानुपलब्धौविपर्ययोद
ष्टः॥नचावनितलभवनसंभूतस्यप्रागप्रतीतदंतस्यविपर्ययप्रत्ययोभवतिनचतथा
नादौसंसारेनभिव्यक्तशक्तेः पुरुषस्यतत्पुरुषांतरोपलब्धिरस्ति॥अतः॥प्रा

गनुपलब्धेर्नास्तिविपर्ययस्तथासर्वभावेष्वनित्यानात्मकाशुचिदुःखेषुनित्यसात्म
कशुचिसुखरूपेणविपर्ययोनास्तिप्रागनुभूतविशेषत्वात्॥यदिवाक्कचित्प्रसि
द्धसामान्यविशेषस्यकस्यचिद्विपर्ययोदृष्टः॥सोभिधीयतांनचोच्यतेतोविपर्ययाभा
भावाद्बंधाभावः नत्रयदुक्तंविपर्ययाद्बंधइतितद्व्याहन्यतेऽथप्राक्तनहिशेषोप
लब्धिरभ्युपगम्यतेननुतदेवतद्धेतुकेनमोक्षेणाभवितव्यमितिबंधाभावः॥स्या
चप्रत्यर्थवशवर्तित्वाच्चविपर्ययाभावइत्यनुवर्त्तते॥येषांदर्शनंप्रत्यर्थवशवर्तिवि
ज्ञानमितितेषांपुरुषविषयंविज्ञानंनस्थाणुमगच्छतिस्थाणुविषयंचयद्विज्ञानं
नतत्पुरुषमवबुध्यते॥अतः॥परस्परविषयसंक्रमाभावान्नसंशयोनविपर्ययस्त
थासर्वेषुपदार्थेष्वनेकार्थग्रहणैकविज्ञानाभावादसतिविपर्ययेबंधाभावस्तत्तश्च
वपदार्थविशेषानुपलब्धेर्मोक्षाभावः॥नह्येकार्थग्राहिविज्ञानंतदंतरमवाप्नोति

ज्ञानदर्शनयोरेकत्वं कुतः युगपत्प्रवृत्तेरिति॥ नन्न किंकारणं। तत्त्वावायश्रद्धानभेदा
त्कथं तापप्रकाशवद्यथा तापप्रकाशयोर्युगपदात्मलाभेपि दाहद्योतनसामर्थ्यभेदान्नैक
त्वं तथा ज्ञानदर्शनयोस्तत्त्वावायश्रद्धानभेदान्नैकत्वं तत्त्वस्य ह्यवगमो ज्ञानं श्रद्धानं दर्श
नमिति॥ दृष्टविरोधाच्च यस्य मतं युगपदात्मलाभः। एकत्वे हेतुरिति तस्य दृष्टविरोध
श्चापद्यते दृष्टं हि गोविषाणादीनां युगपदुत्पद्यमानानामपि नानात्वं उभयनयसद्भावेऽन्य
तरस्याश्रितत्वाद्धानं रूपादिपरिणामवत्॥ इति सूत्रं। उभयनयसद्भावेऽन्यतरस्याश्रितत्वा
द्धानदोषः॥ कथं रूपादिपरिणामवद्यथा परमाण्वादिपुद्गलद्रव्याणां वाह्याभ्यंतरप
रिणामकारणायादितेयुगपद्रूपादिपरिणामेपि रूपादीनामेकत्वं॥ तथा ज्ञानद
र्शनयोरपि॥ अथवा उभयनय। सद्भावेऽन्यतरस्याश्रितत्वाद्यथा रूपादिपरिणामा
नां द्रव्यार्थिकापर्यायार्थिकयोरन्यतरगुणप्रधानभावोर्पणात्स्यादेकत्वं स्यान्नाना
त्वं कथमिह पर्यायार्थिकगुणभावे द्रव्यार्थिकप्राधान्यात्पर्यायार्थनर्पणादेनादिपा

रिणामिकपुद्गलद्रव्यार्थादेशात्स्यादेकत्वंयथारूपपर्यायः॥पुद्गलद्रव्यंतथारसादयो
पिद्रव्यार्थादेशात्पुद्गलद्रव्यंतेषामेवद्रव्यार्थिकगुणभावेपर्यायार्थिकप्राधान्याद्र
व्यगुणात्प्रतिनियतरूपादिपर्यायार्थेनार्पितानांस्यादन्यत्वं॥यतोन्योरूपपर्यायः
अन्येचरसादयस्तथाज्ञानदर्शनयोरनेनविधिनानादिपारिणामिकचैतन्यजीवद्र
व्यार्थादेशात्स्यादेकत्वं॥यतोद्रव्यार्थादेशाद्यथाज्ञानपर्यायआत्मद्रव्यंतथादर्शन
मर्पितयोरेवप्रतिनियतज्ञानदर्शनपर्यायार्थार्पणात्स्यादन्यत्वं॥यस्मादन्योज्ञान
पर्यायः॥अन्यश्चदर्शनपर्यायः॥ज्ञानचारित्रयोरकालभेदादेकत्वमगम्यावबोध
वदितिचेन्नाशूत्यन्तोसूक्ष्मकालाप्रतिपत्तेःउत्पलपत्रशतव्यधनवत्स्यादेतत्ज्ञानचा
रित्रयोरेकत्वं॥कस्मादकालभेदात्कथमगम्यावबोधवद्यथाकेनचित्स्त्री
तान्यानाभिसरणोत्सुकः॥मतिनाप्रसामेघोदयोद्भूतबहलांधकारायांरात्री
लेमात्सुअश्वलीसांभिलषितेतिस्पृष्ट्वातदैवविरक्तताचविघातितंतेनस्त्री
ज्ञानंयदोत्पन्नंतथादेवागम्यावबोधादगम्यागमननिवृत्तिः॥नागम्याव

वोधागम्यागमननिवृत्त्योः॥ कालभेदोस्ति॥ तथाय देवदत्तानावरणक्षयोपशमाज्जीवे

षु ज्ञानजीवादृत्याविर्भवति तदैव तेन हिंस्यादिति जीवे हिंसा इति जीवे हिंसाप्रत्यस्य

निवृत्तिः निवृत्तिश्च चारित्रं न च ज्ञानहिंसानिवृत्त्योः॥ कालभेदोस्तीति तन्न किंका

रणमाश्रुत्यन्तो सूक्ष्मकालाप्रतिपत्तेस्तत्राप्यस्त्येव कालभेदः॥ सौक्ष्म्यात्तु न प्रतीय

ते॥ कथमुत्पलपत्रशतव्यधनवद्यथोत्पलपत्रशतव्यधनक्रमः॥ असंख्येयसम

यिकः सर्वज्ञप्रत्यक्षोऽतिसूक्ष्मोस्ति न तु विभाव्यते अस्य स्थैर्ये तो यावदेकमुत्पल

पत्रं मसि छित्वा द्वितीयं छिनत्ति तावदसंख्येयाः॥ समया अतीता इति कालसूक्ष्मो

पदेशस्तथा न्योगम्यावबोधकालः॥ अन्यश्च निवृत्तिकालः॥ अर्थभेदाच्चाकिं नैक

त्वमिति वर्त्तते॥ ज्ञानस्य तत्वाववोधोर्थः॥ चारित्रस्य कर्मादानहेतुक्रियाविशेषोपर

मोर्थ इति॥ अतो नानात्वं॥ कालभेदाभावो नार्थभेदहेतुर्गतिजात्यादिवत्॥ न काल

भेदाभावः॥ अर्थभेदहेतुत्व्योप्यः कथं गतिजात्यादिवद्यथा॥ यदैव देवदत्तजन्म

तदैव मनुष्यगतिपंचेंद्रियजातिशरीरवर्णगंधादीनां जन्म नान्यो देवदत्तजन्मका

लः॥अन्यश्चमनुष्यगत्यादिपर्यायजन्मकालः॥नचैककालत्वान्मनुष्यगत्यादीना
कत्वंयस्यपुनः॥कालभेदाभावएकत्वहेतुरिष्टस्तस्यमनुष्यगत्यादिपर्यायाणामे
कत्वप्रसंगोनचेष्यतेऽतोनकालभेदाभावात्ज्ञानचारित्रयोरेकत्वं॥ उक्तंच॥किं
क्तमुभयनयसद्भावाश्रयादेकत्वंस्यान्नानात्वमितिलक्षणभेदात्तेषामे
पपत्तिरितिचेन्न॥परस्परसंसर्गेसत्येकत्वंप्रदीपवत्स्यादेतत्तेषांसम्यग्दर्शनादी
नामेकमार्गत्वंनोपपद्यते॥कुतः लक्षणभेदान्नहिभिन्नलक्षणानामेकत्वंयुज्य
ते॥नतस्त्रयोमीमोक्षमार्गः॥प्रसक्ताइतितन्नकिंकारणंपरस्परसंसर्गेसत्येक
ः॥यवद्यथापरस्परविलक्षणवर्तिस्नेहानलार्थानांवाह्याभ्यंतरपरिणा
मकारणापादितसंयोगपर्यायाणांसमुदयेभवत्येकः॥प्रदीपोनत्रयः॥
रविलक्षणासम्यग्दर्शनादित्रयसमुदयेभवत्येकोमोक्षमार्गोनत्रयः॥किं
नामेकत्वावाभीनप्रतिपादिनोविसंवदेते॥केचित्ताक्दाहुः
दिभिन्नलक्षणानांसत्वरजस्तमसांसाम्ये

प्रधानमेकंनतेषांत्रित्वात्प्रधानस्यत्रैविध्यमिति॥अपरआहुः॥काकवडनादीनां
चतुर्णांभूतानांभौतिकानांचवर्णादीनांविलक्षणानांसमुदयएकोरूपपरमाणुर्न
तेषांभेदात्परमाणोरनेकत्वंतथारागादीनांधर्माणांप्रमाणाप्रमेयाधिगमरूपाणां
चविलक्षणानांसमुदयएकंविज्ञानंनतेषांभेदाद्विज्ञानभेदइति॥इतरआहुःश्चि
त्राणांतंतूनांसमुदयश्चित्रपटएकः॥नतेषांभेदात्पटस्यभेदइति॥तद्वदिहापि
सम्यग्दर्शनादीनांभिन्नलक्षणानांसमुदयएकोमोक्षमार्गइतिकोविरोधः एषां
पूर्वस्यलाभेभजनीयमुत्तरंएषांसम्यग्दर्शनादीनांपूर्वस्यलाभेभजनीयमुत्तरं
वेदितव्यंउत्तरलाभेतुनियतः॥पूर्वलाभः॥उत्तरस्यतुलाभेनियतः॥पूर्वलाभेद्र
ष्टव्यः सम्यग्दर्शनज्ञानचारित्राणांपाठंप्रतिपूर्वत्वमुत्तरत्वंच॥पूर्वस्यसम्यग्दर्श
नस्यलाभेज्ञानमुत्तरंभजनीयं॥उत्तरज्ञानलाभेतुनियतः॥पूर्वसम्यग्दर्शनलाभः
तथापूर्वज्ञानलाभेउत्तरंचारित्रंभजनीयं॥उत्तरचारित्रलाभेतुनियतः॥सम्यग्द
र्शनज्ञानलाभः॥तदनुपपत्तिर्ज्ञानपूर्वकश्रद्धानप्रसंगात्पूर्वस्यलाभेभजनी

यमुत्तरमित्येतस्यानुपपत्तिः॥ कुतः॥ अज्ञानपूर्वकश्रद्धानप्रसंगात् यदिपूर्वस
म्यग्दर्शनलाभेउत्तरज्ञानलाभोभजनीयः॥ ननुज्ञानाभावादज्ञानपूर्वश्रद्धा
नप्रसंगाकिंच॥ अनुपलब्धस्वतत्वेर्थेश्रद्धानानुपपत्तिरविज्ञानफलरसोपयोग
वत॥ यथानाविज्ञातेफलेतद्रसोपयोगोमुष्यफलस्यरसंसंपादयतेतिश्रद्धानमस्ति
तथानाविज्ञानेषु॥ जीवादिषुश्रद्धानाभावः स्यात॥ किंच॥ आत्मस्वरूपाभावप्र
संगात॥ यदिसम्यग्दर्शनलाभेज्ञानंभजनीयत्वादसद्विरोधान्मिथ्याज्ञाननिवृत्तौ
सम्यग्ज्ञानस्यचाभावात॥ ज्ञानोपयोगाभावः॥ आत्मनः॥ प्रसक्तः॥ नतश्चलक्ष
णाभावाल्लक्ष्यस्यात्मनोप्यभावः॥ स्यात्तदभावाच्च॥ मोक्षमार्गपरीक्षाव्यर्थेति न
वायावतिज्ञानमित्येतत्परिसमाप्यतेतावतासंभवाल्लयापेक्षंवचनंनवाएषादोषः
किंकारणंयावतिज्ञानमित्येतत्परिसमाप्यतेतावतोऽसंभवाल्लयापेक्षमिदंवचनं
भजनीयमुत्तरमिति॥ क्वचनज्ञानमित्येतत्परिसमाप्यते॥ श्रुतकेवलयोर्यतः॥ श्रु
तकेवलज्ञानग्राहीशब्दनयः॥ श्रुतकेवलेएवेद्यतिनान्यत्रज्ञानमपरिपूर्णत्वात्

दितितदपेक्षंसंपूर्णेद्वादशांगंचतुर्द्दशपूर्वलक्षणंश्रुतं॥ केवलंचभजनीयमुक्तं
तथापूर्वंसम्यग्दर्शनलाभेदेशचारित्रंसंयतासंयतस्यसर्वचारित्रंप्रमत्तादारभ्य
सूक्ष्मसंपरायांतानांयत्त्वयावच्चनियमादस्तिसंपूर्णंयथाख्यातचारित्रंतुभजनी
यंपूर्वसम्यग्दर्शनज्ञानलाभेभजनीयमुत्तरमितिचेन्ननिर्देशस्यागमकत्वाद्यथादे
तन्नाज्ञानपूर्वकश्श्रद्धानप्रसंगोस्तिकुतः॥ पूर्वसम्यग्दर्शनज्ञानलाभेचारित्रमुत्त
रंभजनीयमित्यभिसंबंधादिति॥ तन्नकिंकारणंनिर्देशस्यागमकत्वादुक्तोयम
र्थोननुतस्यनिर्देशोगमकः॥ पूर्वस्यलाभइतिपूर्वयोरितिहिवक्तव्यंस्यादर्थसामा
न्यनिर्देशादुभयगतिकल्पतेनैवंशक्यंव्यवस्थाविशेषस्याविवक्षितत्वादितरथा
हिउत्तरेपितथाप्रसक्तेनतद्दोषाननिवृत्तिः॥ स्यात्तस्मात्पूर्वोक्तएवार्थोनयापेक्षंव
चनमिति॥ अथवाक्षायिकसम्यग्दर्शनलाभेक्षायिकंसम्यग्ज्ञानंभजनीयं॥ अथ
वयुगपदात्मलाभेसाहचर्य्यादुभयोरपिपूर्वत्वं॥ यथासाहचर्यात्पर्वतनारदयोः
पर्वतग्रहणेननारदस्यग्रहणंनारदग्रहणेनवापर्वतस्यग्रहणंतथासम्यग्दर्श

नस्यसम्यक्ज्ञानस्यान्यतरस्यात्मलाभेचारित्रमुत्तरंभजनीयं॥ इतितत्त्वार्थवा
र्तिकेव्याख्यानालंकारेप्रथमेध्यायेद्वितीयमान्हिकं॥ २॥ अमीषांमोक्षकार
णानांसामान्येसत्यविशिष्टानांविशेषप्रतिपत्त्यर्थमिदमाह॥ तत्त्वार्थश्रद्धानं
सम्यग्दर्शनं॥ सम्यगितिकोयंशब्दः॥ सम्यगितिप्रशंसार्थोनिपातः क्वंतोवासम्य
गित्ययंनिपातः प्रशंसार्थोवेदितव्यः॥ सर्वेषांप्रशस्तरूपगतिजातिकुलायुर्वि
ज्ञानादीनामाभ्युदयिकानांमोक्षस्यचप्रधानकारणत्वात्प्रशस्तंदर्शनंसम्यग्दर्श
नं॥ ननुचसम्यगिष्टार्थतत्त्वयोरितिवचनात्प्रशंसार्थोभावइति॥ नत्वानेकार्थ
त्वान्निपातानां॥ अथवासम्यगितितत्त्वार्थोनिपातस्तत्त्वंदर्शनंसम्यग्दर्शनं अवि
परीतार्थविषयंतत्त्वमित्युच्यते अथवाक्वंतोयंशब्दः समंचतीतिसम्यक् यथा
र्थोवस्थितस्तथैवावगच्छतीत्यर्थः॥ अथकिमिदंदर्शनमितिकरणादिसाधनो
दर्शनशब्दउक्तः दृशेः करणादिसाधनेयुटिदर्शनशब्दोव्याख्यातः॥ दृशेरालो
कार्थत्वादभिप्रेतार्थासंप्रत्ययइतिचेन्नानेकार्थत्वात्॥ एवंतर्हिदृशिरयमालो

थैवर्त्तते॥आलोकश्चेंद्रियानिंद्रियार्थप्राप्तिर्नचासाविहाभिप्रेतः॥श्रद्धानमिष्टंनत
स्यार्थस्यसंप्रत्ययोस्तीतितन्न॥किंकारणमनेकार्थत्वादिहश्रद्धानमिष्टमभिसंव
ध्यते॥कथंपुनर्ज्ञायतेआलोकइहनेष्टः॥श्रद्धानमिष्टमिति॥अतउत्तरंपठतिमोक्ष
कारणप्रकरणाछ्रद्धानगतिः॥मोक्षकारणंप्रकृतंतत्त्वार्थविषयंश्रद्धानंमोक्ष
स्यकारणंनालोकइत्यतः॥प्रकरणाछ्रद्धानगतिर्भवति॥अथतत्त्वमित्यनेनकिं
प्रत्याय्यतेप्रकृत्यपेक्षत्वात्प्रत्ययस्यभावसामान्यसंप्रत्ययस्तत्त्ववचनात्तदिति
यप्रकृतिः॥सामान्याभिधायिनीसर्वनामत्वात्प्रत्ययश्चभावेउत्पद्यतेकस्यभावेत
दित्यनेनयोर्थउच्यते॥कश्चासौसर्वोर्थः॥अतस्तदपेक्षत्वाद्भावस्यभावसामान्य
मुच्यतेतत्त्वशब्देनयोर्थोयथावस्थितस्तथातस्यभवनमित्यर्थः॥तत्त्वेनार्थतइतित
त्त्वार्थः॥अर्यतेगम्यतेज्ञायतइत्यर्थः॥तत्त्वेनार्थस्तत्त्वार्थः॥येनभावेनार्थोव्यवस्थि
तस्तेनभावेनार्थस्यग्रहणायश्रानिधानञ्चवतितत्सम्यग्दर्शनं॥श्रद्धानशब्दस्यकर
णादिसाधनत्वंपूर्ववद्यथादर्शनशब्दस्यकरणादिसाधनत्वंव्याख्यातं॥तथाश्र

द्धानशब्दस्यापिवेदितव्यं सत्वात्मपरिणाम स्तत्त्वश्रद्धानशब्दवाच्योर्थः करणा
दिव्यपदेशभागात्मपरिणामोवेदितव्यः वक्ष्यमाणनिर्देशादिसूत्रविवरणात्पु
द्गलद्रव्यसंप्रत्ययइतिचेन्नात्मपरिणामेपितदुपपत्तेः स्यादेतद्वक्ष्यमाणनिर्दे
शादिसूत्रविवरणात्पुद्गलद्रव्यस्यसंप्रत्ययः प्राप्नोतितन्न किंकारणमात्मप
रिणामेपितदुपपत्तेः किंतत्वार्थश्रद्धानमात्मपरिणामः कस्य आत्मनइत्ये
वमादिकर्माभिधायित्वेप्यदोषइतिचेन्नमोक्षकारणत्वेनस्वपरिणामस्यविवक्षि
तत्वात्स्यादेतत्सम्यक्त्वकर्मपुद्गलाभिधायित्वेप्यदोषइतितन्न किंकारणंमोक्षका
रणमस्यविवक्षितत्वादौपशमिकादिसम्यग्दर्शनमात्मपरिणामत्वान्मोक्षकार
णत्वेनविवक्ष्यतेनचसम्यक्त्वकर्मपर्यायः पौद्गलिकत्वेऽस्यपरपर्यायत्वात्स्व
परनिमित्तत्वादुत्पादस्येतिचेन्नोपकरणमात्रत्वात् स्यादेतत्स्वपरनिमित्तउत्पा
दोदृष्टः यथाघटस्योत्पादोमृन्निमित्तोदण्डादिनिमित्तश्च तथासम्यग्दर्शनोत्पा
द आत्मनिमित्तः सम्यक्त्वपुद्गलनिमित्तश्चतस्मात्तस्यापिमोक्षकारणत्वमुप

सं

करणमात्रत्वादुपकरणमात्रं हि वाह्यसाधनं किंच। आत्मपरिणामादेव तद्द्रव्य
घाताद्यादिदर्शनमोहाख्यं कर्म्म न तदात्मगुणघाति। नाप्यात्मपरिणामादेवा
पक्षीणशक्तिकं सम्यक्त्वाख्यं लभते। अतो न तदात्मपरिणामस्य प्रधानं का
रणमात्मैव स्वशक्त्या दर्शनपर्यायेणोत्पद्यत इति तस्यैव मोक्षकारणत्वं युक्तं
किंच। अहेयत्वात्स्वधर्म्मस्य। न ही पतेपरित्यज्यत इत्यहेयोयमभ्यंतर आत्मनः
सम्यक्त्वपरिणामः। यतः सत्याभ्यंतरे आत्मनः सम्यक्त्वपरिणामे नियमेनात्मा
सम्यग्दर्शनपर्यायेणाविर्भवति वाह्यस्तु हेयः कर्म्मपुद्गलः। न मंतरेणापि क्षायि
कसम्यक्त्वपरिणामः। किंच प्रधानत्वादाभ्यंतर आत्मीयः सम्यग्दर्शनपरिणामः
प्रधानं सति। तस्मिन्वाह्यस्योपग्राहकत्वादतो वाह्य आभ्यंतरस्योपग्राहकः। प
रोक्षेनवर्त्तत इति अप्रधानं। किंच। प्रत्यासत्तेः प्रत्यासन्नं हि कारणं आत्मपरिणा
मो मोक्षस्य तादात्म्येनाविर्भावात् न तु सम्यक्त्व कर्म्म विप्रकृष्टांतरत्वात्तादात्म्येनैवा
परिणामाच्च तस्मादहेयत्वात्प्रधानत्वात्प्रत्यासत्तेश्च मोक्षस्य कारणमात्मपरि

रजवा॰
२८

णामोपयुक्तानकर्मेति॰अल्पबहुत्वकल्पनाविरोधइतिचेन्नोपशमाद्यपेक्षस्यसम्य
ग्दर्शनत्रयस्यैवतदुपपत्तेः॥स्यादेतत्सम्यग्दर्शनस्यात्मपरिणामत्वे॰अल्पबहुत्व
कल्पनाविरोधइतितन्नकिंकारणंउपशमाद्यपेक्षस्यसम्यग्दर्शनत्रयस्यैवतदु
पपत्तेः सर्वेभ्यस्तोकाः॥ उपशमसम्यग्दृष्टयः॥ संसारिणःक्षायि
योसंख्येयगुणाः॥क्षायोपशमिकसम्यग्दृष्टयोसंख्येयगुणाः॥सिद्धाःक्षायि
सम्यग्दृष्टयोनंतगुणाइति॥तस्मात्सम्यग्दर्शनमात्मपरिणामःश्रेयोभिमुखम
ध्यात्मः॥तत्वार्थग्रहणमर्थश्रद्धानमितिचेत्सर्वलघुत्वात्॥कश्चिदाह
णामनर्थकं॰अर्थश्रद्धानमित्येवास्तुकुतोलघुत्वादितिनसर्वार्थप्रसंगात्॥नैतद
युक्तंकुतः सर्वार्थप्रसंगात्तत्वग्रहणाद्धीनोमिथ्यात्वादिषुपणीतेषुसर्वा
र्थसम्यग्दर्शनंप्राप्नोतिसंदेहाच्चार्थशब्दस्यानेकार्थत्वादर्थशब्दोयमनेकार्थः
क्वचिद्द्रव्यगुणकर्मसुवर्ततेर्थइतिद्रव्यगुणकर्मस्वितिवचनात्क्वचित्प्रयोजने
वर्ततेकिमर्थमिहागमनंवर्ततेकिमर्थमिहागमनंभवतः॥किंप्रयोजनमितिक

चिह्नेवर्त्तते॥अर्थवानयंदेवदत्तः॥धनवानितिक्कचिदभिधेयेवर्त्तते॥शब्दार्थसंबंध
इतिएवमर्थशब्दस्यानेकार्थाभिधायित्वेसंदेहः॥कस्यार्थस्यश्रद्धानंसम्यग्दर्शनमिति
सर्वानुग्रहाद्दोषइति॥चेन्नासदर्थविषयत्वाश्रद्धादेत्तन्नायंदोषः॥सर्वार्थप्रसंगइति
सत्सुसर्वार्थविषयंश्रद्धानंसम्यग्दर्शनं॥तथासतिसर्वानुग्रहः॥कृतोभवति॥कश्चिद्
नीभवतोमशारः॥सर्वोलोकोभ्युदयेनयुज्यतामितितन्न॥किंकारणमसदर्थविषय
त्वान्नखलुकश्चिन्नोमशारः॥असदर्थविषयंहितच्छ्रद्धानंसंसारकारणमिति॥अ
तःसर्वानुग्रहार्थमेवतत्वेनविशिष्यते॥अर्थग्रहणादेवतत्सिद्धिरितिचेन्नविपरीत
ग्रहणादर्शनास्यादेतत्॥अर्यतइत्यर्थोनिश्चीयतइत्यर्थः॥नचमिथ्यावादिप्रणीता
अर्थाः॥असत्वात्तस्मादर्थग्रहणादेवतत्वसंप्रत्ययान्नार्थस्तत्वग्रहणेनेति॥तन्न
किंकारणंविपरीतग्रहणादर्शनाद्यथा॥पित्तोदयाकुलितकरणः॥प्रमानमधुर
संकटुकंमन्यतेतथात्मामिथ्याकर्मोदयदोषादस्तित्वनास्तित्वनित्यत्वानित्यत्वाऽ
नन्यत्वाद्येकांतरूपेणमिथ्याध्यवस्यत्यतस्तन्निराकरणार्थंतत्वग्रहणमित्य

र्थग्रहणंकिमर्थं॥ननुतत्त्वान्येवार्थाइतिअर्थानांतत्त्वसामानाधिकरण्यात्तत्त्व
वचनेनैवसंप्रत्ययः॥सिद्धः उच्यतेर्थग्रहणमव्यभिचारार्थं अर्थग्रहणंक्रियते॥
व्यभिचारार्थंतत्त्वमितिश्रद्धानमितिचेदेकांतनिश्चितेपिप्रसंगः॥
ज्ञानेनयच्छ्रद्धानमित्युच्यतेएकांतनिश्चितेपिप्राप्नोतिएकांतवादिनोपिहिनास्त्या
त्मेत्येवमादितत्त्वमितिश्रद्दधाति॥तत्त्वस्यश्रद्धानमितिचेत्भावमात्रप्रसंगः॥यदित
त्त्वस्यश्रद्धानंतत्त्वश्रद्धानमित्युच्यते॥भावमात्रप्रसंगः॥स्यात्तत्त्वंभावः॥सामान्यमि
तिकेचित्कथयंतिद्रव्यत्वगुणत्वकर्मत्वादिसामान्यंद्रव्यादिभ्योऽर्थांतरंतस्यश्रद्धा
म्यग्दर्शनंप्राप्नोतिनहिद्रव्यादिभ्योऽन्यत्सामान्यंयुक्तिमदिति॥परी
वातत्त्वमेकत्वमित्यर्थः॥पुरुषएवेदंसर्वमित्यादितत्त्वश्रद्धानंसम्यग्दर्शनंप्राप्नोतिन
चायुक्तंक्रियाकारकभेदलोपप्रसंगादितितत्त्वेनश्रद्धानमितिचेत्कस्यकस्मि
प्रश्नानिवृत्तिः॥यदितत्त्वेनश्रद्धानमित्युच्यतेकस्यकस्मिन्वेतिप्रश्नोनविनिवर्तते
तस्मात्सूक्तमर्थग्रहणमव्यभिचारार्थमिति॥इच्छाश्रद्धानमित्यपरेवर्णयंति॥तद

युक्तं मिथ्यादृष्टेरपि प्रसंगात् यतो मिथ्यादृष्टय । यो वा हुस्तुत्यप्रवृत्तिः ख्यापपूजया अर्हन्मत
विजिगीषया वा आर्हतमतमधीयंते न च ते षामंतरेणाध्ययनमस्ति अतस्तेषामपि सम्य
ग्दर्शनं प्राप्नोतीत्ययुक्तमुक्तं इच्छाश्रद्धानमिति केवलिनि सम्यक्त्वाभावप्रसंगाच्च यदि
चेच्छा सम्यक्त्वं इच्छा च लोभपर्यायः । न च क्षीणमोहकेवलिनि लोभोस्ति तदभावादिच्छा
भाव इति सम्यक्त्वाभावः स्यात् । तस्मात् स्वद्भावाद्यथाभूतमर्थोपलब्ध्यात्मतत्त्वसम्यग्दर्श
नमिति प्रत्येतव्यं । तद्द्विविधं सरागवीतरागविकल्पात् तदेतत्सम्यग्दर्शनं द्विविधं
कुतः । सरागवीतरागविकल्पात् प्रशमसंवेगानुकंपास्तिक्याभिव्यक्तलक्षणं प्रथ
मं रागादीनामनुद्रेकः । प्रशमः । संसाराद्भीरुता संवेगः सर्वप्राणिषु मैत्री अनुकंपा
जीवादयोर्था । यथा स्वं भावैः । संतीति मतिः आस्तिक्यं एतैरभिव्यक्तलक्षणं प्रथमं सरा
गसम्यक्त्वमित्युच्यते आत्मविशुद्धिमात्रमितरत्र । सप्तानां कर्मप्रकृतीनां आत्यंति
केपगमे सत्यात्मविशुद्धिमात्रमितरद्वीतरागसम्यक्त्वमित्युच्यते । पूर्वं साधनं भवति उ
त्तरं साधनं साध्यं च । अथैतत्सम्यग्दर्शनं जीवादिपदार्थविषयं कथमुत्पद्यत इत्यत

राजवा·
२०

इत्यतश्चाह॥तन्निसर्गादधिगमाद्वा॥निसर्गइतिकोयंशब्दः॥निपूर्वात्सृजेर्भावसाध
नोघञ्॥निसर्जनंनिसर्गः॥स्वभावइत्यर्थः॥अथाधिगमइतिकः॥अधिपू
धनः अथवाधिगमनमधिगमस्तयोर्हेतुत्वेननिर्देशः निसर्गादधिगमादिति॥
यायाकाचक्रियाउत्पद्यतइत्यध्याह्रियते॥सोपस्कारत्वात्सूत्राणांतदेतत्सम्यग्दर्शनं
निसर्गादधिगमाद्वाउत्पद्यतइति॥कश्चिदाहसम्यग्दर्शनद्वैविध्यकल्पनानुपपत्तिरनु
पलब्धतत्त्वस्यश्रद्धानाभावाद्रसायनवत्॥द्विविधंसम्यग्दर्शनमितिकल्पनानोपपद्यतेकु
तोनुपलब्धतत्त्वस्यश्रद्धानाभावात्कथंरसायनवत्॥यथात्यंतपरोक्षरसायनतत्त्वफल
स्यनरस्यायनेश्रद्धानंदृष्टंतथानाधिगतजीवादितत्त्वस्यनतत्रश्रद्धानमितिनैसर्गिकस
म्यग्दर्शनाभावः॥स्याद्वेदभक्तिवदितिचेन्न वैषम्यात्स्यादेतद्यथाशूद्रस्यानधिगतवेदा
र्थस्यवेदार्थेआत्यंतिकभक्तिस्तथानुपलब्धजीवादितत्त्वस्यश्रद्धानमितितन्नकिंका
रणंवैषम्यात्शूद्रस्यभारतादिश्रवणात्प्रवचनानुवृत्त्यादिभिश्चवेदार्थभ
क्तिः॥नासौनैसर्गिकी इहतुनैसर्गिकीरुचिरिष्टेतिवैषम्यं॥अथवासम्यक्त्वाधि·

जीवादिपदार्थभक्तिः।नासौनैसर्गिकीरुचिरिष्टेतिवैषम्यं।अथवासम्यक्ताधिकाराज्जी
वादिपदार्थतत्वोपलब्धिपूर्वकेणसम्यग्दर्शनेनमोक्षकारणेनेहभवितव्यंनचश्रद्द
स्यतादृशंश्रद्धानमितिवैषम्यं।मणिग्रहणवदितिचेन्नप्रत्यक्षेणोपलब्धिसद्भावात्
स्यादेतद्यथानधिगतमणिविशेषस्यापितस्मैमणिग्रहणंभवतितस्यचफलंदृष्टंतथा
नाधिगतजीवादितत्वस्यापितत्त्वग्रहणंभवति।तस्यचफलंभवतीतितन्नैसर्गिकंदर्शन
मितितन्न।किंकारणंप्रत्यक्षोपलब्धिसद्भावान्नात्यंतपरोक्षंमणिग्रहणंहि।किंतुप्रत्य
क्षतउपलभ्यग्रहणाहिविपर्ययविशेषंतुनप्रतिपद्यते।अतोस्यानुपलब्धमणिविशे
षस्यापिप्रत्यक्षदर्शनाद्ग्रहणंन्याय्यं।अत्यंतपरोक्षेतुजीवादितत्वेकथमस्यनिसर्ग
जसम्यग्दर्शनसिद्धिः।सामान्याधिगमेतुअधिगमसम्यग्दर्शनमेवेति।तापप्रकाश
युगपदुत्पत्तेरभ्युपगमाच्च।किंनिसर्गजसम्यग्दर्शनाभावइत्यनुवर्त्तते।यत्रास्यसम्य
ग्दर्शनमुत्पद्यतेतदैवज्ञानकेनमत्यज्ञानेनसम्यक्केनपरिणामतीत्यधिगमजमेवतद्भव
तियस्यज्ञानाद्विनाग्दर्शनंस्यात्तस्यनैसर्गिकंस्यात्तच्चानिष्टमिष्यते।उभयत्रतुल्ये

तरंगहेतौवाह्योपदेशापेक्षात्तुपेक्षभेदाद्भेदः॥उभयत्रदर्शनेतरंगोहेतुस्तुल्यः॥
मोहस्योपशमःक्षयः॥क्षयोपशमोवातस्मिन्सतियद्वाह्योपदेशादृतेप्रादुर्भवति
सर्गिकं॥यत्परोपदेशपूर्वकंजीवाद्यधिगमनिमित्तंतदुत्तरमित्यनयोरयंभेदः॥
पूर्वकेनिसर्गाभिप्रायोलोकवद्यथालोकेहरिशार्दूलवृकभुजगादयोनिसर्गतः॥क्रौ
र्यशौर्याहारादिसंप्रतिपत्तौवर्त्ततइत्युच्यते॥नचासावाकस्मिकीकर्म्मनिमित्तत्वादनाक
स्मिक्यपिसतीनैसर्गिकीभवतिपरोपदेशाभावात्तथेहाप्यपरोपदेशपूर्वकेनिसर्गाभिप्रा
यः॥अपरआह॥भव्यस्यकालेननिःश्रेयसोपपत्तेरधिगमसम्यक्त्वाभावः॥यद्यवधृत
मोक्षकालात्प्रागधिगमसम्यक्त्ववलान्मोक्षः॥स्यात्स्यादधिगमसम्यग्दर्शनस्यसाफल्यं॥
नचादोस्त्यतः॥कालेनयोस्यमोक्षोसौसनिसर्गजसम्यक्त्वादेवसिद्धइतिनविवक्षितापरि
ज्ञानान्नैतद्युक्तंकुतः॥विवक्षितापरिज्ञानात्सम्यग्दर्शनादित्रयान्मोक्षउक्तः॥तत्रय
प्रथमंतत्कुतउत्पद्यतइत्युक्तेनिसर्गादधिगमाद्वेत्ययमर्थोत्रविवक्षितः॥यदिसम्यग्दर्शना
देवकेवलान्निसर्गजादधिगमजाद्वाज्ञानचारित्ररहितान्मोक्षइष्टः॥स्यात्तन्नद्वैयर्थ्यंस्या

भव्यस्यकालेननिःश्रेयसोपपत्तेरितिनचायमर्थोत्रविवक्षितः॥ अथवायथाकुरुक्षेत्रे
क्वचित्कनकंवाह्यपौरुषेयप्रयत्नाभावाज्जायतेतथावाह्यपुरुषोपदेशपूर्वकजीवाद्य
धिगममंतरेणापजायतेतन्निसर्गजं॥ यथाकनकाश्मा विध्युपायज्ञपुरुषप्रयोगापेक्षः
कनकभावमापद्यते॥ तथायंसम्यग्दर्शनंविध्युपायज्ञमनुष्यसंपर्कोजीवादिपदार्थ
तत्वाधिगमापेक्षमुत्पद्यते॥ तदधिगमजंसम्यग्दर्शनमित्ययमर्थोविवक्षितः॥ नचान्यत
रस्याभावइति॥ अतोविवक्षितापरिज्ञानात्सम्यगुक्तमधिगमाभावइति॥ कालनिय
माच्चनिर्जरायाः॥ यतोनभव्यानांकृत्स्नकर्मनिर्जरापूर्वकमोक्षकालस्यनियमोस्ति
केचिद्भव्याः॥ संख्येयेनकालेनसेत्स्यंतिकेचिदसंख्येयेनकेचिदनंतेन॥ अपरे अनंतानंते
नापिनसेत्स्यंतीतिततश्चनयुक्तंभव्यस्यकालेननिःश्रेयसोपपत्तेरितिचोदनानुपपत्ते
श्च॥ सर्वस्येयंचोदनानोपपद्यते ज्ञानक्रियाद्वयात्त्रितयाच्चमोक्षमाचक्षाणस्यसर्वस्य
नेदंयुक्तंभव्यस्यकालेनमोक्षइति॥ यदिहिसर्वस्यकालोहेतुरिष्टः स्यात्वाह्याभ्यंतरका
रणनियमस्यदृष्टस्येष्टस्यवाविरोधः स्यात्तदित्यनंतरनिर्देशार्थेतदित्येतदनंतरस्यग्र

म्यग्दर्शनस्य निर्देशार्थं क्रियते। ननु तत्प्रकृतमंतरेणापि तद्वचनं सिद्धं इतरथा हि मार्गसं
बंधप्रसंगः। अक्रियमाणे हि तद्वचने मोक्षमार्गोऽपि प्रकृतः। तेनाभिसंबंधः प्रस
ज्येत। निसर्गमात्रेणापि मोक्षमार्गलाभ उक्तः स्यात्। तद्युक्तं। तत्र बहुश्रुतस्यापि चारित्रवतो मोक्ष
मार्गाधिगममात्रादेव मिथ्यादृष्टीनामपि मोक्षः स्यात्। ननु चानंतरस्य विधिर्वा भवति
प्रतिषेधो चेत्यनंतरत्वात् सम्यग्दर्शनेनैव संबंधो न्याय्यः। प्रत्यासत्तेः प्रधानं बलीय इति
मार्गेणैव संबध्येत तस्मात्तद्वचनं क्रियते विस्पष्टार्थं। इति तत्वार्थवार्तिके व्याख्याना
लंकारे प्रथमोऽध्याये तृतीयमाह्निकं। ३। तत्वार्थश्रद्धानं सम्यग्दर्शनमित्युक्तं
अथ किं तत्वमित्यत इदमाह। ॥ जीवाजीवास्रवबंधसंवरनिर्जरामोक्षास्तत्वं
किमर्थमेषामुपादानं। ननु द्रव्यमित्येवं वक्तव्यं तद्भेदा हि सर्वे पदार्था भवंतीति अत उत्तरं
पठति। एकाद्यनंतविकल्पोपपत्तौ विनेयाशयवशान्मध्यमाभिधानं। एकः द्वौ त्रयः सं
ख्येयाः असंख्येयाः अनंता इति पदार्था भिद्यंते। तत्रैकः पदार्थो भवति एकं द्रव्यमनं
तपर्यायमिति वचनात्। द्वौ पदार्थौ जीवाजीवभेदात्। त्रयः पदार्था अर्था

यभेदात्॥एवमुत्तरेष्ववचनविकल्पापेक्षया संख्येयाज्ञानयैर्थज्ञेयाविकल्पापेक्षया
असंख्येयाअनंताश्चभवंतितत्रविनेयाशयवशात्सप्तधानिरूपणाभेदइतिमध्यमे
नक्रमेणाभिधानंकृतं इतिसंक्षेपेसुमेधसामेवप्रतिपत्तिः स्यादतिप्रपंचेचातिचिरेण
संप्रतिपत्तिर्लस्यादिति कश्चिदाह॥जीवाजीवयोरन्यतरत्वैषांतर्भावादास्रवादीनाम
नुपदेशः॥आस्रवोहिजीवोवास्यादजीवोवायदिजीवोजीवेंतर्भवति अथाजीवेएवंसं
वरादयोपितस्मादेषामनुपदेशोनर्थकउपदेशःअनुपदेशः॥नवापरस्परोपश्लेषेसं
सारप्रवृत्तिस्तत्परमप्रधानकारणप्रतिपादनार्थत्वान्नवानर्थकउपदेश कुतःजी
वाजीवयोः॥परस्परोपश्लेषेसतिसंसारप्रवृत्तिस्तत्परमप्रधानकारणप्रतिपादनार्थ
त्वादिहमोक्षमार्गः॥प्रकृतः तस्यफलमवश्यंमोक्षोनिर्देष्टव्यः॥सकस्येतिजीवउपा
त्तः॥सचसंसारपूर्वकः॥संचसत्यजीवेजीवस्यभवतीत्यजीवउपात्तः॥तयोश्चप
रस्परोपश्लेषः॥संसारस्तत्प्रधानहेतुरास्रवोबंधश्चउपात्तौतत्परमस्यमोक्ष
स्यप्रधानहेतूसंवरनिर्जरेउपादानेतयोरेवमेषांनिर्देशेसतिप्रयोग्यस्यमोक्ष

स्यप्रधानहेतुसंवरनिर्जरेद्रुपादानंतयोरेवमेषांनिर्ज्ञानेसतिप्राप्यस्यमोक्षस्यनि
र्ज्ञानंभवतीतिहृष्यतेसामान्येनभूतस्यापिविशेषस्यपृथगुपादानंप्रयोजनार्थंक्षत्रि
याआयाताः सूरवर्मापीतिउभयथापिचोदनानुपपत्तिः॥ योजीवाजीवयोरंतर्भावा
दास्रवादीनामनुपदेशं चोदयतितस्योभयथापिचोदनानोपपद्यते
निजीवाजीवाभ्यांपृथगुपलभ्यवाचोदयेदनुपलभ्यवायदिपृथगुपलभ्यातएवत
तोर्थांतरत्वंसिद्धं अथानुपलभ्यात्अनुपलंभादेवचोदनाभावः॥ किंचजीवाजीवा
घा सिद्धान्वाचोदयेदसिद्धान्वा॥ यदिसिद्धांश्चोदयेत्तत एवार्थांतरभावः॥ अथासिद्धां
श्चोदयतिकथमत्रांतर्भावश्चोद्यते॥ नहिखरविषाणादीनामंतर्भावश्चोदनार्हः॥ अ
नेकांताच्चचोदनानुपपत्तिरितिवर्त्ततेकथंद्रव्यार्थिकपर्यायार्थिकयोर्गुणप्रधान
भावेनार्पणानर्पणाभेदाज्जीवाजीवयोरास्रवादीनांस्यादंतर्भावः स्यादनंतर्भावः प
र्यायार्थिकगुणभावेद्रव्यार्थिकप्रधान्यादास्रवादिप्रतिनियतपर्या
नादिपारिणामिकचैतन्याचैतन्यादिद्रव्यार्पणादास्रवादीनांस्याज्जीवेऽजीवे

वांतर्भावः॥ तथा द्रव्यार्थिकत्वाभावपर्यायार्थिकप्राधान्यादास्रवादिप्रतिनियतपर्या
यार्थार्पणात्तु नादिपारिणामिकचैतन्याचैतन्यादिद्रव्यार्थार्पणादास्रवादीनां
जीवाजीवयोः स्यादनंतर्भावः॥ तदपेक्षयास्यादुपदेशोर्थवांस्तेषां निर्वचनलक्षणा
क्रमहेत्वभिधानं तेषां जीवादीनां यथोपदेशं प्रयोजनमुक्तं इदानीं निर्वचनलक्षणा
क्रमहेत्वभिधानं कर्तव्यं तदुच्यते॥ त्रिकालविषयजीवनानुभवनाज्जीव दशसु प्रा
णेषु यथोपात्तप्राणपर्यायेण त्रिषु कालेषु जीवनानुभवनाज्जीवत्यजीवीज्जीविष्य
तीति वा जीवः॥ तथा सति सिद्धानामपि जीवत्वं सिद्धं॥ जीवितपूर्वत्वात्संप्रति न जी
वंति सिद्धा भूतपूर्वगत्या जीवत्वमेषामित्यौपचारिकत्वं स्यान्मुख्यं चेष्यते नैष दोषः
भावः प्राणज्ञानदर्शनानुभवनात्सांप्रतिकमपि जीवत्वमस्ति ॥ अथवा रूढिशब्दो
यं रूढौ च क्रियाव्युत्पत्त्यर्थैवेति कादाचित्कं जीवनमपेक्ष्य सर्वपदार्थवर्तते गोशब्दव
त्॥ न हि पर्ययो जीवः॥ यस्य जीवनमुक्तलक्षणं नासौ न हि पर्ययादजीवत्युच्य
ते॥ आस्रवत्यनेनास्रवणमात्रं वास्रवः॥ येन कर्मास्रवति यद्वास्रवणमास्रवः

॰त्यनेनास्रवणमात्रं वास्रवः॥येन कर्मास्रवति॥यद्वास्रवणमास्रवः वध्यतेनेनवंध
नमात्रं वा वंधः वध्यते येनास्वतंत्री क्रियते येनो स्वतंत्रीकरणमात्रं वा वंधः संव्रि
तेनेन संवरणमात्रं वा संवरः येन संव्रियते येन संरुध्यते संरोधनमात्रं वा संवरः नि
र्जीर्यते यया निर्ज्जरणमात्रं वा निर्ज्जरा निर्ज्जीर्यते निरस्यते यया निरसनमात्रं वा
निर्ज्जरा मोक्ष्यते येन मोक्षणमात्रं वा मोक्षः॥मोक्ष्यते स्यते येनासनमात्रं वा मोक्षः
एतेषामितरेतरयोगे द्वंद्वः॥उक्तं निर्वचनमिदानीं लक्षणमुच्यते॥
चान्ताद्विकल्पलक्षणो जीवः जीवस्वभावश्चेतना यतस्तदितरेभ्यो द्रव्येभ्यो भिद्यते
तद्विकल्पा ज्ञानादयो यसंनिधानादात्मा ज्ञाता द्रष्टा कर्त्ता भोक्ता च भवति तल्लक्ष
णो जीवस्तद्विपरीतत्वादजीवस्तदभावलक्षणस्तद्विपरीतत्वा
त् ज्ञानादीनामभावो यस्य लक्षणं सो जीवः कथमभावो निरुपाख्यो
लक्षणं भवति॥अभावोपि वस्तुधर्मो हि हेत्वंगत्वादेर्भाववत्॥अतोसौ लक्षणमुज्यते
सहि यदि वस्तुनो लक्षणं न स्यात्सर्वसंकरः स्यात् यद्येवं वनस्पत्यादीनामजीवत्वं

प्राप्नोतितदभावात॥ स्नानादीनांहिप्रवृत्तिस्तउपलब्धिर्नचतेषांतत्पूर्विकाप्रवृत्तिरस्ति
हिताहितप्राप्तिपरिवर्जनाभावादुक्तंच॥ बुद्धिपूर्वांक्रियांदृष्ट्वास्वदेहेन्यत्रतद्ग्रहात
मन्यतेबुद्धिसद्भावंसानयेषुनतेषुधीरिति॥ नैषदोषस्तेषामपिस्नानादयः॥ संति॥ स
र्वज्ञप्रत्यक्षादितरेषामागमगम्याः॥ आहारलाभालाभयोः॥ पुष्टिम्लान्यादिदर्शनेनयुक्ति
गम्याश्चांडगर्भस्थमूर्छितादिषुसत्यपिजीवत्वेतत्पूर्वकप्रवृत्त्यभावाद्धेतुव्यभिचारः पु
ण्यपापागमद्वारलक्षणआस्रवः पुण्यपापलक्षणस्यकर्मणआगमनद्वारमास्र
वइत्यास्रवः॥ कउपमार्थः॥ यथामहोदधेःसलिलमापगामुखैरहरहःपूर्यतेतथामिथ्या
दर्शनादिद्वारानुप्रविष्टैः॥ कर्मभिरनिशमात्मासमापूर्यतइतिमिथ्यादर्शनादिद्वारमा
स्रव॥ आत्मकर्मणोरन्योन्यप्रदेशानुप्रवेशलक्षणोबंधमिथ्यादर्शनादिप्रत्ययोपनी
तानांकर्मप्रदेशानामात्मप्रदेशानांचपरस्परानुप्रवेशलक्षणोबंधः॥ बंधइवबंधः
कउपमार्थः॥ यथानिगडादिद्रव्यबंधनबद्धोदेवदत्तोस्वतंत्रत्वादभिप्रेतदेशगमनाद्य
भावादतिदुःखीभवति॥ तथात्माकर्मबंधनबद्धः॥ पारतंत्र्याच्छारीरमानसदुःखाभ्य

द्दितोभवति॥ आस्रवनिरोधलक्षणः संवरः॥ पूर्वोक्तानामास्रवद्वाराणां शुभपरिणा
मवशान्निरोधः संवरः॥ संवरइवसंवरः॥ कउपमार्थः॥ यथासुगुप्तसुसंवृतद्वारक
वाटपुरंसुरक्षितंदुरासदमरातिभिर्भवतितथासुगुप्तिसमितिधर्मानुप्रेक्षापरीषह
जयचारित्रात्मनः सुसंवृतेंद्रियकषाययोगस्याभिनवकर्मागमद्वारसंवरणात्संवरः
एकदेशकर्मसंक्षयलक्षणानिर्जरा॥ उपात्तस्यकर्मणस्तपो
एकदेशसंक्षयलक्षणानिर्जरा॥ निर्जरेवनिर्जरा॥ कउपमार्थः॥ यथामंत्रौषधबला
न्निर्जीर्णवीर्यविपाकंविषंनदोषप्रदंतथासविपाकाविपाकनिर्जराप्रत्ययतपोवि
शेषेणनिर्जीर्णरसंकर्मनसंसारफलप्रदं॥ कृत्स्नकर्मवियोगलक्षणोमो
र्शनादिहेतुप्रयोगप्रकर्षेसतिकृत्स्नस्यकर्मणः॥ श्चतुर्विधबंधवियोगोमोक्षः॥ मो
क्षइवमोक्षः कउपमार्थः यथानिगडादिद्रव्यमोक्षात्सतिस्वातंत्र्येऽभिप्रेतप्रदेशगमनादे
शगमनादेपुमान्सुखीभवतितथाकृत्स्नकर्मवियोगेसतिस्वाधीनात्यंतिकज्ञानदर्श
नानुपमसुखमात्माभवतिलक्षणमुक्तमिदानींक्रमहेतुरुच्यते॥ तादर्थ्यात्सारिस्यं

दृस्यादौ जीवग्रहणं यो यं मोक्षमार्गस्तत्वाविष्करणपरिस्पंदः ॥ स आत्मार्थस्तस्य मोक्षप
र्यायपरिणामाश्चोवाजीवाद्युपदेशपरिस्पंदः ॥ स आत्मार्थस्तस्योपयोगस्वाभाव्ये सति
ग्राहकत्वादतस्तादौ जीवग्रहणं तदनुग्रहार्थत्वात्तदनंतरमजीवाभिधानं यतः ॥ शरी
रवाङ्मनः प्राणापानादिनोपकारेण जीवमात्मानमनुगृह्णाति अतस्तदनंतरमजी
वाभिधानं ॥ तदुभयाभिधानत्वात्तत्समीपे आस्रवग्रहणं ॥ यतः आत्मकर्मणोः परस्प
राश्लेषे सत्यास्रवप्रसिद्धिर्भवति ॥ अतस्तत्समीपे आस्रवग्रहणं तत्पूर्वकत्वाद्बंधस्य
ततः परं बंधवचनं यतः आस्रवपूर्वको बंधस्ततः परं वचनं तस्याक्रियते संवृतस्य बंधा
भावात्तत्प्रत्यनीकप्रतिपत्यर्थं संवरवचनं ॥ यतः संवृतस्यात्मनो बंधो नास्ति ततस्तत्प्र
नीकप्रतिपत्त्यर्थं तदनंतरं संवरवचनं संवरे सति निर्जरोपपत्तेस्तदनंतरे निर्जरावचनं
यतः ॥ संवरपूर्विका निर्जरा ततस्तदंतिके निर्जरावचनं ॥ अंते प्राप्तत्वान्मोक्षस्यांते वचनं
निर्जीर्णाष्टकर्मत्वं तेमोक्षः ॥ प्राप्यत इत्यंते वचनं पुण्यपापपदार्थोपसंख्यानमिति चेन्ना
स्रवे बंधे वांतर्भावात् ॥ यद्येवं पुण्यपापपदार्थयोरुपसंख्यानं कर्त्तव्यं ॥ अन्येरप्युक्तत्वादिति

तन्न किं कारणं। आस्रवे बंधे वा तद्भावाद्य। तस्यास्रवो बंधस्य पुण्यपापात्मकस्तत्त्वशब्द
स्य भाववाचित्वात् जीवादिभिस्सामानाधिकरण्यानुपपत्तिस्तत्त्वशब्दो भाववाचीति व्या
ख्यातमेतत्। अतस्तस्य जीवादिभिर्द्रव्यवचनैः सामानाधिकरण्यं नोपपद्यते। न वाव्य
तिरेकात्तद्भावसिद्धेर्नैवानदोषः किं कारणम् अव्यतिरेकात्तद्भावसिद्धेर्न हि द्रव्याद्यति
रिक्तो भावोस्ति। अतस्तद्भावेनाध्यारोप्यते। यथा ज्ञानमेवात्मेति यदि तद्भावोध्यारोप्य
ते तल्लिंगसंख्यानुवृत्तिः। आमोति तल्लिंगसंख्यानुवृत्तौ चोक्तं किमुक्तं नोपात्तव्यक्ति
वचनत्वादिति। इति तत्वार्थवार्तिके व्याख्यानालंकारे प्रथमेध्याये चतुर्थमाह्निकं॥
४॥ एवं संज्ञाख्यालक्षणादिभिरुद्दिष्टानां जीवादीनां संव्यवहारविशेषव्यभिचारनिवृ
त्यर्थमाह॥ सू॥ नामस्थापनाद्रव्यभावतस्तन्न्यासः॥ नीयते गम्यतेऽनेनार्थो नमतिवा
र्थमभिमुखीकरोतीति नाम स्थाप्यते प्रतिनिधीयते सावितिस्थापना। द्रोष्यते गम्यते गु
णैर्द्रोष्यति गमिष्यति गुणानिति वा द्रव्यं भवनं भवतीति भावः नामादीनामितरेतरयोग
लक्षणो द्वंद्वः। नामस्थापनाद्रव्यभावैर्नामस्थापनाद्रव्यभावतः। आद्यादित्वात्तस्प्रत्ययेनन्य

तोपीतिवा न्नसिः॥ न्यसनंन्यस्यतइतिवान्यासोनिक्षेपइत्यर्थः॥ तेषांन्यासस्तन्न्या
सः॥ एतेषांनामादीनांकिंलक्षणमित्यत्रोच्यते॥ निमित्तांतरानपेक्षंसंज्ञाकर्मनामनि
मित्तादन्यन्निमित्तांतरंतदनपेक्ष्यक्रियमाणासंज्ञानामेत्युच्यते॥ यथापरमैश्वर्यल
क्षणेंदनक्रियानिमित्तांतरानपेक्षंकस्यचिदिंद्रइतिनामतथाजीवनक्रियानपेक्षंप्र
ह्वानक्रियानपेक्षंवाकस्यचिज्जीवः सम्यग्दर्शनमितिवानामसोयमित्यभिसंबंधत्वे
नान्यस्यव्यवस्थापनीमात्रंस्थापनायथापरमैश्वर्यलक्षणोयः॥ शचीपतिरिंद्रः सोय
मित्यन्यवस्तुप्रतिनिधीयमानंस्थापनाभवति॥ एवंजीवइतिवासम्यग्दर्शनमितिअक्ष
निक्षेपादिषुसोयमितिव्यवस्थापनामात्रंस्थापना॥ अनागतपरिणामविशेषंप्रतिगृ
हीताभिमुख्यंद्रव्यंयद्भाविपरिणामप्राप्तिंप्रतियोग्यतामादधानंतद्द्रव्यमित्युच्यते॥ अत
द्भावंवा॥ अथवातद्भावंवाद्रव्यमित्युच्यते॥ यथेंद्रार्थमानीतंकाष्ठमिंद्रप्रतिमापर्यायप्रा
प्तिंप्रत्यभिमुखमिंद्रइत्युच्यते॥ तथाजीवसम्यग्दर्शनपर्यायप्राप्तिंप्रतिगृहीताभिमु
ख्यंद्रव्यंद्रव्यजीवद्रव्यसम्यग्दर्शनमितिचोच्यते॥ उक्तंतावत्सम्यग्दर्शनप्राप्तिंप्रति

गृहीताभिमुख्यमिति अनन्यपरिणामस्य जीवस्यासंभवादिदं त्वयुक्तं जीवनपर्याय
प्राप्तिं प्रति गृहीताभिमुख्यमिति कुतः ॥ सदा तत्परिणामोद्यादिर्न स्यादागजीवः
प्रीति नैष दोषः ॥ मनुष्यजीवादिविशेषापेक्षया सव्यपदेशो वेदितव्यः ॥
धमागमनोआगमभेदात्तदेतद्द्रव्यं द्विविधं कुतः आगमनोआगमभेदादागमद्रव्य
जीवः ॥ नोआगमद्रव्यजीव आगमद्रव्यसम्यग्दर्शनमिति च अनुपयुक्तः
प्या आगम अनुपयुक्तः ॥ प्राभृतज्ञायागमद्रव्यमित्युच्यते ॥ इतरस्त्रिविधो ज्ञायक
शरीरभावितद्व्यतिरिक्तभेदादितरन्नोआगमद्रव्यं त्रैविध्यमारूकंदति कुतः ॥
शरीरभाविनद्यातिरिक्तभेदात् ॥ ज्ञातुर्यच्छरीरं त्रिकालगोचरं तत् ज्ञायकशरीरं जी
नसम्यग्दर्शनपरिणामप्राप्तिं प्रत्यभिमुखं द्रव्यं भावीत्युच्यते तद्व्यतिरिक्तं कर्मनो
कर्मविकल्पं वर्तमानतत्पर्यायोपलक्षितं द्रव्यं भावः ॥ वर्तमानेन तेन जीवनसम्य
ग्दर्शनपर्यायेणोपलक्षितं द्रव्यं भावजीवो भावसम्यग्दर्शनमिति चोच्यते यथेद्भना
मकर्मोदयापादितेन्दनक्रियापर्यायपरिणत आत्मा भावेन्द्रः ॥ स द्विविधः पूर्वव

सएषभावोद्विविधोवेदितव्यः ।। पूर्ववदागमनोआगमभेदात्तत्रागमतविषयोपयोगावि
विष्टआत्मागमजीवादिप्राभृतविषयेणोपयोगेनाविष्टआत्मागमतोभावजीवो
भावसम्यग्दर्शनमितिचोच्यते ।। जीवनादिपर्यायाविष्टोन्यजीवनादिपर्यायेणावि
ष्टआत्माऽन्योनोआगमतोभावइत्युच्यते नामस्थापनयोरेकत्वंसंज्ञाकर्माविवि
शेषादितिचेन्नादरानुग्रहाकांक्षित्वात्स्थापनायांस्यान्मतंनामस्थाप्यमत्तइति
तच्चनकुतआदरानुग्रहाकांक्षित्वात्स्थापनायांयथार्हदिन्द्रस्कंदेश्वरादिप्रति
मास्वादरानुग्रहाकांक्षित्वंजनस्यतथापरिभाषितेचत्ततोन्यत्वमनयोर्द्रव्यभाव
योरेकत्वमव्यतिरेकादितिचेन्नकथंचित्संज्ञास्वालक्षण्यादिभेदसिद्धेः स्यादेत
द्द्रव्यभावयोस्तर्हिएकत्वंप्रसज्यतेकुतस्तदव्यतिरेकान्नहिद्रव्यव्यतिरेकेणभा
वउपलभ्यतेभावव्यतिरेकेणवाद्रव्यमतोनयोरेकत्वमिति तच्चनकुतःसंज्ञास्वाल
क्षण्यादिभेदात्तद्भेदसिद्धेरिहययोःसंज्ञास्वालक्षण्यादिभूतोभेदस्तयोर्न्नानात्व
मुपलभ्यतेतथाद्रव्यभावयोरपीति कश्चिदाहद्रव्यस्यादौवचनंन्याय्यंतत्पूर्वक

त्वान्नामादीनां सतो हि संज्ञिनो नामादिभिर्भवितव्यमिति नैष दोषः संव्यवहारहेतुत्वा
त्संज्ञायाः। पूर्ववचनं संव्यवहारहेतुत्वात्संज्ञायाः। पूर्ववचनं क्रियते सर्वो हि लोक
संव्यवहारः। संज्ञापूर्वकस्तदात्मकत्वात्तदनात्मकत्वे वस्तुव्यवहारविच्छेदः नद्या
त्मकत्वाद्वस्तुनि निंदयो रागद्वेषप्रवृत्तिः। सिद्धान्ततः। स्थापनावचनमाहितनाम
कस्य स्थापनोपपत्तेः ततः परस्थापना विधीयते कुतः। आहितनामक
पनोपपत्तेः आहितनामकस्य सोयमिति किंचित्प्रतिनिधीयते द्रव्यभावयोः पूर्व
परन्यासः पूर्वोत्तरकालवृत्तित्वाद्द्रव्यभावयोः। पूर्वापरन्यासः क्रियते किं
रयोः पूर्वोत्तरकालवृत्तित्वात्पूर्वकालविषयं हि द्रव्यं उत्तरकालभावी भाव इति
त्वप्रत्यासत्तिप्रकर्षाप्रकर्षभेदाद्व्युत्क्रमः। अथवानल्पप्रत्यासत्तेः प्रकर्षाप्रक
र्षभेदात्तेषां नामादीनां निर्दिष्टः क्रमो वेदितव्यः। तत्त्वभावः प्रधानं तदर्थीनील
ययोस्तत्र प्रत्यासत्तेस्तत्समीपे द्रव्यं प्रयुक्तं तद्भावापत्तेस्ततः पूर्वं स्थापनोपादा
नं तद्भावेऽपि तद्भावप्रतिप्रधानहेतुत्वात्ततः। पूर्वं नामोपादानं भावं प्रति विप्रकृ

ष्टत्वान्नामादिचतुष्टयाभावो विरोधात्। अत्राह नामादिचतुष्टयस्याभावः। कुतो विरो
धादेकस्य शब्दार्थस्य नामादिचतुष्टयं विरुध्यते यथा नामैकं नामैव न स्थापना। अ
थ नामस्थापना द्रव्यं तेन नामेदं नाम स्थापना नहि। न चेयं स्थापना नामेदं मन्नो नामार्थ
एको विरोधात् स्थापना तथैकस्य जीवादेरर्थस्य सम्यग्दर्शनादेर्वा विरोधान्नामाद्यभाव
इति। न वा सर्वेषां संव्यवहारं प्रत्यविरोधात् नवायं दोषः। किं कारणं सर्वेषां संव्यवहा
रं प्रत्यविरोधात् लोके हि सर्वैर्नामादिभिर्दृष्टः संव्यवहारः इन्द्रो देवदत्त इति नाम। प्रति
मादिषु चेन्द्र इति स्थापना। इन्द्रार्थं च काष्ठद्रव्ये इन्द्रसंव्यवहारः। इन्द्रमानीन इति वचना
दनागतपरिणामे वार्थे द्रव्यसंव्यवहारो लोके दृष्टः द्रव्यमयं माणवकः आचार्यः
श्रेष्ठी वैयाकरणो राजा वा भविष्यतीति व्यवहारदर्शनात् शचीपतौ च भावे इन्द्र इति न च
विरोधः। किं च। अभिहितानवबोधात् यथा नामैकं नामैवेष्यते न स्थापनेति। आचक्ष्म
णेन त्वया अभिहितानवबोधः। प्रकटीक्रियते यतो नैवमाचक्ष्महे नामैव स्थापनेति
किं त्वेकस्यार्थस्य नामस्थापनाद्रव्यभावैर्न्यास इत्याचक्ष्महे। अनेकान्तश्च नैतदेव·

नेनप्रतिजानीमहे नामैवस्थापनाभवतीतिनवास्थापनावानामभवतिनेतिचेत्क
थंमनुष्यब्राह्मणवद्यथाब्राह्मणः स्यान्मनुष्यः ब्राह्मणस्यमनुष्यजात्यात्मक
त्वमनष्यस्तुब्राह्मणः स्यान्नवामनुष्यस्यब्राह्मणजात्यादिपर्यायात्मकत्वादर्शना
त्तथास्थापनास्यान्नामान्कतनाम्नः स्थापनानुपपत्तेर्नामतुस्थापनास्यान्नवोभ
यथादर्शनात्तथाद्रव्यंस्याद्भावः भावद्रव्यार्थादेशान्नभावपर्यायार्थादेशा
त्तुद्रव्यंस्यान्नवानुभयथादर्शनात्किंच अतएवासिद्देर्यतएवनामादिचतुष्टयस्यवि
रोधंभवानाचष्टेऽतएवनाभावः कथमिहयोयंसहानवस्थानलक्षणोविरोधोव
ध्यघातकवच्चसतामर्थानांभवतिनासतांकाकोलूकवच्छायातपवत् नकाकदंत
खरविषाणयोर्विरोधोस्त्यार्किंचनामाद्यात्मकवानात्मकत्वेचविरोधस्याविरोधकत्व
योनामादिचतुष्टयस्यविरोधः सनामाद्यात्मकोवास्यान्नवानुभयथाचविरोधाभा
वः यदिनामाद्यात्मकः नासौविरोधको
दीनांविरोधकः नामाद्यात्मापिविरोधकः स्यात्ततोनामादीनामभावद्विरोधएवन॰

स्यादेंधननामाद्यात्मकः॥एवमपिनामादीनांनासौविरोधकोर्थांतरत्वादर्थांतरभावेपि
विरोधकत्वमिष्यतेसर्वेषांपदार्थानांपरस्परतोनित्यंविरोधःस्यान्नचासौवर्त्ततीतिश्च
तोविरोधाभावः॥तद्गुणाद्भावस्यप्रामाण्यमितिचेन्नेतरव्यवहारनिवृत्तेः स्यादेतत्ता
द्गुण्याद्भावएवप्रमाणंननामादिः॥सजीवनादिर्गुणोयस्यसतद्गुणस्तस्यभावस्ताद्गुण्यं
अतोभावएवप्रमाणंननामादिस्ताद्गुण्याभावादितितन्नकिंकारणमितरव्यवहारनि
वृत्तेः॥एवंहिसतिनामाद्याश्रयोव्यवहारोनिवर्त्तेतसचास्तीत्यतोनभावस्यैवप्रामाण्य
मुपचारादितिचेन्नतद्गुणाभावात्स्यादेतद्यद्यपिभावस्यैवप्रमाणंतथापिनामादिव्यव
हारोननिवर्त्ततेकुतउपचारान्माणवकेसिंहशब्दव्यवहारवदितितन्नकिंकारणंतद्
गुणाभावाद्युज्यतेमाणवकेसिंहशब्दव्यवहारः॥क्रौर्यशौर्यादिगुणैकदेशयोगादिह
तुनामादिषुजीवनादिगुणैकदेशोनकश्चिदप्यस्तीत्युपचाराभावाद्व्यवहारनिवृत्ति
स्यादेवमुख्यसंप्रत्ययप्रसंगाच्चयद्युपचारान्नामादिव्यवहारः स्याद्गौणमुख्ययोर्मुख्ये
संप्रत्ययइतिमुख्यस्यैवसंप्रत्ययः स्यान्ननामादीनांयतस्त्वर्थप्रकरणादिविशेषलिंगा

भावेसर्वत्रसंप्रत्ययःप्रविशिष्यःकृतसंगतेर्भवत्यतोननामादिषूपचाराद्व्यवहारः कृ-
कृत्रिमयोः। कृत्रिमेसंप्रत्ययोभवतीतिलोकेतद्यथागोपालकमानयकटजकमानये
तियस्यैषासंज्ञाभवतिसञ्जानीयतेनयोगाः। पालयतियोवाकटेजातः। एवमिहापि
यस्यैषाजीवादिरितिसंज्ञाकृतातस्यैवसंप्रत्ययः स्यान्नेतरेषामितितन्न। किंकारणमु
भयगतिदर्शनात। लोकेह्यर्थात्प्रकरणाद्वाकृत्रिमेसंप्रत्ययः स्यात्स्थौवाप्रस्यैवंसंज्ञ
केनभवति। प्रकृतत्वात्तत्रभवतीदमेवंसंज्ञकेनकर्त्तव्यमित्यतश्चार्थात्प्रकरणाद्वा
केसंप्रत्ययोभवति। अंगहिभवान्ग्राम्यपांशुलंपुरपादकमप्रकरणसमागतंब्रवी
पालकमानयकटेकजमानयेतिउभयगतिरत्तस्यभविष्यतिकिंच। अनेकान्ता
कोन्तः कृत्रिममेवेदंनकृत्रिममेवेतिकिंतर्ह्यनेकान्तोनामसामान्यापेक्षयास्यादकृत्रि
मंविशेषापेक्षयाकृत्रिमं। एवंस्थापनादयेश्चेति। ततः। किंकृत्रिमाकृत्रिमयोःकृत्रि
मेसंप्रत्ययइत्यस्याभावः। किंच। नयद्वयविषयत्वा। द्वौनयौद्रव्यार्थिकः। पर्यायार्थि
कः पर्यायार्थिकश्चतयोर्विषयोनामादिन्यासस्त-

सामान्यात्मकत्वात्तयोश्चात्यस्याभावः॥ परिणतिप्रधानत्वात्ततः॥ किं गौणमुख्ययोर्मुख्ये सं
प्रत्ययः॥ कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्यय इति च न भवति प्रतिविषयं नयभेदात् द्रव्यार्थि
पर्यायार्थिकांतर्भावान्नामादीनां तयोश्च नयशब्दाभिधेयत्वात्पौनरुक्त्यप्रसंगः॥ यतो
नामस्थापनाद्रव्याणि द्रव्यार्थिकस्याभावः॥ पर्यायार्थिकस्येत्युक्तं ततो नामादीनां नयां
तर्भावान्नयविकल्पानां च वक्ष्यमाणत्वात्पौनरुक्त्यं प्राप्नोति नवा विनेयमतिभेदाधीनत्वा
द्व्यादिनयविकल्पनिरूपणस्य नवा एष दोषः किं कारणं विनेयमतिभेदाधीनत्वाद्व्यादि
नयविकल्पनिरूपणस्य ये सुमेधसो विनेयास्तेषां द्वाभ्यामेव द्रव्यार्थिकपर्यायार्थिका
भ्यां सर्वनयवक्तव्यार्थप्रतिपत्तिस्तदंतर्भावात् ये तु मंदमेधसस्तेषां त्र्यादिनयविकल्प
निरूपणा मतो विशेषोपपत्तेर्नामादीनामपुनरुक्तत्वं॥ तच्छब्दाग्रहणं प्रकृतत्वात्सम्य
ग्दर्शनादित्रयस्य प्रकृतत्वादेव नामादिन्यासाभिसंबंधस्तच्छब्दस्याग्रहणमनर्थकं प्र
त्यासन्नत्वाज्जीवादिषु प्रसंग इति चेन्न सम्यग्दर्शनविषयत्वात्॥ स्यादेतत्तच्छब्दादि
नाप्रत्यासन्नाजीवादयस्तेषामेव न्यासाभिसंबंधो भवेन्न सम्यग्दर्शनादीनां कुतः

अनंतरस्यविधिर्वाभवतिप्रतिषेधोवेतितन्नकिंकारणंसम्यग्दर्शनंविषयत्वात्सम्यग्दर्श
नादित्रयस्यप्राधान्येनोपदेशस्तदर्थत्वाच्छास्त्रारंभस्यसम्यग्दर्शनादिविषयत्वेनतुजी
वादीनांतगुणभूतत्वेनोपदेशः॥ अतः तच्छब्दाहृतेपिसम्यग्दर्शनादित्रयस्यप्राधान्यान्ना
मादिन्यासेनाभिसंबंधोयुक्तः विशेषातिदिष्टत्वाच्च॥ जीवादयसम्यग्दर्शनविषयत्वेन
विशेषेणातिदिष्टाः प्रकृतंसम्यग्दर्शनादित्रयंनवाधिष्यंते॥ विशेषातिदिष्टाः प्रकृ
तंनवाधंतइति॥ सर्वभावाधिगमार्थेतुसर्वेषांभावानांजीवादीनामप्रधानानांप्रधानानां
चसम्यग्दर्शनादीनामंधिगमार्थंतर्हितच्छब्दग्रहणमितरथाहिप्रधानाभिसंबंधएवः
त एवमजीवादिषुज्ञानचारित्रयोश्चनामादिन्यासविकल्पोयोजयितव्यः॥ अधिकृता
नामेचसम्यग्दर्शनादिजीवादीनांपदार्थानामभिधानाभिधेयसंव्यवहाराव्यभिचाराय
नामादिभिर्निक्षिप्तानांतत्त्वाधिगमहेतुर्वक्तव्यइत्यतआह॥ प्रमाणनयैरधिगमः॥१०
प्रमाणनयाः तैरधिगमोभवतिसम्यग्दर्शनादीनांजीवादीनांप्रमाणनयावक्ष्यमाणल
क्षणाः ननुचनयशब्दस्याल्पाच्त्वात्पूर्वनिपातेनभवितव्यं अभ्यर्हितत्वात्प्रमाणश

णस्य पूर्वनिपातो वेदितव्यः कथमभ्यर्हितत्वं प्रमाणप्रकाशितेष्वर्थेषु नयप्रवृत्तेर्व्यव
हारहेतुत्वादभ्यर्हं ॥ यतः प्रमाणप्रकाशितेष्वर्थेषु नयप्रवृत्तिर्व्यवहारहेतुर्भवति नान्य
थातोऽस्याभ्यर्हितत्वं समुदायावयवविषयत्वाद्वा अथवा समुदायावयवत्वाद्वा अथवा समु
दायविषयं प्रमाणमवयवविषया नया इति प्रमाणस्याभ्यर्हितत्वं ॥ तथा चोक्तं ॥ सकलादे
शः प्रमाणाधीनो विकलादेशो नयाधीन इति अधिगमहेतुर्द्विविधः स्वाधिगमहेतुः
पराधिगमहेतुश्च स्वाधिगमहेतुर्ज्ञानात्मकः प्रमाणनयविकल्पः ॥ पराधिगमहेतु
र्वचनात्मकस्तेन श्रुताख्येन प्रमाणेन स्याद्वादनयसंस्कृतेन प्रतिपर्याय सप्तभंगीमतो
जीवादयः पदार्था अधिगमयितव्याः ॥ अत्राह केयं सप्तभंगीत्यत्रोच्यते ॥ प्रश्नवशा
देकस्मिन्वस्तुन्यविरोधेन विधिप्रतिषेधविकल्पना सप्तभंगी ॥ एकस्मिन्वस्तुन्यविरोधे
न प्रश्नवशाद्दृष्टेनेष्टेन च प्रमाणेनाविरुद्धा विधिप्रतिषेधकल्पना सप्तभंगी विज्ञेया त
द्यथा ॥ स्यात् घटः स्यादघटः स्यात् घटश्चाघटश्च स्यादवक्तव्यः ॥ स्याद्घटश्चावक्तव्यश्च
स्यात् घटश्चावक्तव्यश्चेत्यर्पितानर्पितनयसिद्धं निरूपयितव्या तत्र स्वात्मना स्याद्घ

टः॥परमात्मनास्याद्घटः॥कोवाघटस्यस्वात्माकोवापरात्मा॥घटबुद्ध्यभिधानप्रवृत्तिलिं
गः॥स्वात्मायत्रतयोरप्रवृत्तिः॥सपरात्मापटादिः स्वपरात्मोपादानापोहनव्यवस्थापा
द्यंहिवस्तुनोवस्तुत्वंयदिस्वस्मिन्पटाद्यात्मव्यावृत्तिविपरिणतिर्नस्यात्सर्वात्मनाघटइ
तिव्यपदिश्येत अथपरात्मनाव्यावृत्तावपिस्वा॰
णावद्वरस्लेवस्याद्थवानामस्थापनाद्रव्यभावेषुयोविवक्षितः सस्वात्मातदितरः परा
त्मातत्रविवक्षितात्मनाघटोनेतरात्मनायदीतरात्मनापिघटः स्याहिविवक्षिता
घटः॥नामादिव्यवहारोच्छेदः॥स्यादथवातत्रविवक्षितघटशब्दवाच्यसादृश्य
संबंधिषुकस्मिंश्चिद्घटविशेषपरिगृहीतेप्रतिनियतोयः॥संस्थानादिः सः स्वात्माइ
तरः॥परात्मातत्रप्रतिनियतेनरूपेणघटोनेतरेणयदीतरात्मकः स्यादेकघटमात्र
प्रसंगः सामान्याश्रयोव्यवहारोविनश्येदथवातस्मिन्नेवघटविशेषेकालांतरावस्था
यिनिपूर्वोत्तरकुशूलांतकपालाद्यवस्थाकलापः॥परात्मातदंतरालवर्त्तीस्वात्मास्ते
नैवघटः॥तत्कर्मगुणाव्यपदेशादर्शनान्नेतरात्मानायदिहिकुशूलांतकपालाद्यात्म

नापिघटः। स्यादुपरतावस्थायामपितदुपलब्धिर्भवेदुत्पत्तिविनाशार्थंपुरुषप्रय
त्नफलाभावश्चानुषज्येत। अथांतरालवर्तिपर्यायात्मनाप्यघटः। स्याद्घटकृत्येक
लेनोपलभ्येत। अथवाप्रतिक्षणंद्रव्यपरिणामोपचयापचयभेदादर्थांतरोपपत्तेः
ऋजुसूत्रनयापेक्षयाप्रत्युत्पन्नघटस्वभावः। स्वात्मा घटपर्यायएवातीतोनागतश्च
परात्मातेनप्रत्युत्पन्नस्वभावेनसत्तासघटोनेतरेणासत्ता। तथोपलब्ध्यनुपलब्धिस
द्भावादितरथाहिप्रत्युत्पन्नवदतीतानागतात्मनापिघटत्वेएकसमयमात्रंसर्वंस्यादती
तानागतवद्वाप्रत्युत्पन्नाभावेघटाश्रयव्यवहाराभावश्चापद्येतविनष्टानुत्पन्नघटव्य
वहाराभाववदथवातस्मिन्प्रत्युत्पन्नविषयेरूपादिसमुदायेपरस्परोपकारवर्तिनिपृ
थुबुध्नाद्याकारः। स्वात्मा इतरः। परात्मातेनपृथुबुध्नाद्याकारेणसघटोस्तिनेतरेण
घटव्यवहारस्यतद्भावेभावात्तदभावेभावाद्यदिहिपृथुबुध्नाद्यात्मनापिघटोनस्यान्न
एवनस्यादथेतरात्मनापिघटः स्यात्तदाकारशून्येपिघटव्यवहारः प्राप्नुयादथवा
रूपादिसंनिवेशविशेषः संस्थानंतत्रचक्षुषाघटोगृह्यतइत्यस्मिन्व्यवहारोरूपमु

खेनघटोगृह्यतइतिनिरूपेस्वात्मारसादिः॥परात्मासघटोरूपेणाग्निनेतरेणारसादि
नाग्रतिनियतकरणग्राह्यत्वादयंथहिचक्षुषाघटोगृह्यतइत्यत्ररसादिरपिघटइतिगृ
ह्येतसर्वेषांरूपत्वप्रसंगस्ततश्चकरणांतरकल्पनानर्थिकायदिवारसादिवद्रूपमपि
घटइतिनगृह्येतचक्षुर्विषयतास्यनस्यात्॥अथवाशब्दभेदेध्रुवोर्थभेदइतिघटकु
टादिशब्दानामप्यर्थभेदः॥घटनाद्घटः॥कौटिल्यात्कुटइतितत्क्रियापरिणतिक्षण
एवतस्यशब्दस्यवृत्तिर्युक्तातत्रघटनक्रियाविषयकर्तृभावः॥स्वात्माइतरः॥परात्मा
तत्राद्येनघटोनेतरेणतथार्थसमभिरोहणाद्यदिचघटनक्रियापरिणतिक्षणेना
प्यघटःस्यात्तद्व्यवहारनिवृत्तिः॥स्याद्यदिचेतरअपेक्षयापिघटः॥स्यात्पटादिष्व
पितक्रियाविरहितेष्वतद्वृत्तिः॥स्यादेकशब्दवाच्यत्वेवावस्तुनः॥अथवाघट
शब्दप्रयोगानंतरमुत्पद्यमानउपयोगाकारः॥स्वात्मासहेयत्वादंतरंगत्वाच्चवा
ह्याकारः परमात्मातदभावेपिघटव्यवहार॥दर्शनात्सघटउपयोगाकारेणास्तिना
न्येनयदिहृपयोगाकारात्मनाप्यघटः॥स्याद्वक्तृश्रोतृहेतुफलभूतोपयोगघटा

गाभावात्तदधीनोव्यवहारोविनाशमाप्नुयादितरोऽसन्निहितोपियदिघटः स्यात्तदा
नामपिस्याद्घटत्वप्रसंग। अथवाचैतन्यशक्तेर्द्वावाकारौज्ञानाकारोज्ञेयाकारस्त्वनु
पयुक्तप्रतिबिंबाकारादर्शतलवत्ज्ञानाकारः प्रतिबिंबाकारपरिणतादर्शतलज्ञेय
कारस्तत्रज्ञेयाकारः। स्वात्मातन्मूलत्वाद्घटव्यवहारस्यज्ञानाकारः परात्मासर्वसाधा
रणत्वात्सघटोज्ञेयाकारेणास्तिनान्यथायदिज्ञेयाकारेणाप्यघटः। स्यात्तदाश्रयेपि
कर्त्तव्यतानिरासःस्याद्यथहिज्ञानाकारेणापिघटः। स्यात्पटादिज्ञानकालेपितत्संनि
धानाद्घटव्यवहारवृत्तिः। प्रसज्येत उक्तैः प्रकारैरर्पितंघटत्वमघटत्वंचपरस्परतो
नभिन्नं। यदिभिद्येतसामानाधिकरण्येनतद्बुद्ध्यभिधानप्रवृत्तिर्नस्याद्घटपटवत्तत्श्चे
तरेतरेविनाभावेउभयोरप्यभावात्तदाश्रयव्यवहारपन्हवः। कुतः स्यादस्तदुभया
त्मकौसौक्रमेणतच्छब्दवाच्यतामास्कंदनस्याद्घटश्चाघटश्चेत्युच्यते। यदितदुभया
त्मकंवस्तुघटइत्येवोच्यतेतत्तदात्मासंग्रहादसत्वामेवस्यात्। अथाघटएवेत्युच्यतेघ
टात्मानुपादानादसत्वमेवस्यात् नवस्तुतावदेवेति नचान्यः शब्दस्तदुभयात्मावस्थ

तत्वाभिधायी विद्यते। अतोसौ घटोवचनगोचरातीतत्वात्स्यादवक्तव्य इत्युच्यते। घटा
त्मायौगपद्येन उक्तावक्तव्यस्वरूपनिरूपणेन चादिश्यमानः स एवार्थ इति स्याद
घटश्चावक्तव्यश्च निरूपिता घटभंगसंयोगेन प्रदर्शिता वक्तव्यक्रमेनाव्यपदेश्यः। स
एवार्थ इति स्याद्घटश्चावक्तव्यश्च। तदुभयाभिधानक्रमाक्रमार्पणावशाद्दोषि
र्भूततद्व्यपदेशः। स एवार्थः स्याद्घटश्चाघटश्चावक्तव्यश्च भवति। एवमियं सप्तभं
गी जीवादिषु सम्यग्दर्शनादिषु च द्रव्यार्थिकपर्यायार्थिकनययोर्गुणप्रधानभावेन योज
यितव्या। तत्र द्रव्यार्थिकैकांत। अनिश्चिततत्वः। अतत्तदेवेत्यवधारणादुन्मत्तव
त्पर्यायार्थिकांतोपि तथैवातद्वस्तु तदेवेत्यवधारणादुन्मत्तवत् पाहादोनिश्चिता
र्थः। अपेक्षितयाथातथ्यवस्तुवादित्वादनुन्मत्तवचनवदवक्तव्यैकांतोप्यस
द्वादः स्ववचनविरोधात् सदा मौनव्रतिकवत्। अभ्युपायः स्यादवक्तव्यवादः व
क्तव्यावक्तव्यवादित्वात्सत्येतरवचनविशेषस्तवादनेकांते तदभावाद्व्याप्ति
रिति चेन्न। तत्रापि तदुपपत्तेः। स्यादेतदनेकांतेसा विधिप्रतिषेधविकल्पना

नास्तियदिस्याद्यदानेकांतोनभवतितदाएकांतदोषानुषंगोभवेदनवस्थाप्रसंगश्च
ततस्तत्रानेकांतत्वमेवेतिसासप्तभंगीप्राप्तिमतीनभवतीतितन्नकिंकारणं।तत्रापिन
दुपपत्तेः स्यादेकांतः।स्यादुभयः स्यादवक्तव्यः स्यादेकांतश्चावक्तव्यश्चस्यादनेकां
तश्चावक्तव्यश्च।स्यादेकांतश्चानेकांतश्चावक्तव्यश्चेतितत्कथमितिचेदुच्यते।प्र
माणनयार्प्पणाद्भेदादेकांतोद्विविधः सम्यगेकांतोमिथ्यैकांतइति।अनेकांतोद्वि
विधः सम्यगनेकांतोमिथ्यानेकांतइतितत्रसम्यगेकांतोहेतुविशेषसामर्थ्यापेक्षः
प्रमाणप्ररूपितार्थैकदेशादेशः।एकात्मावधारणेनान्याशेषनिराकरणप्रवणप्र
णिधिर्म्मिथ्यैकांतः।एकत्रसप्रतिपक्षानेकधर्म्मस्वरूपनिरूपणः।युक्त्यागमाभ्या
मविरुद्धः सम्यगनेकांतस्तदतत्स्वभाववस्तुशून्यंपरिकल्पितानेकात्मकंकेवलंवाग्वि
ज्ञानंमिथ्यानेकांतः।तत्रसम्यगेकांतोनयइत्युच्यतेसम्यगनेकांतः।प्रमाणंनयार्प्पणा
देकांतोभवतिएकनिश्चयप्रवणत्वात्प्रमाणार्प्पणादनेकांतोभवति।अनेकनिश्च
याधिकरणत्वाच्चयद्यनेकांतःअनेकांतएवस्यान्नैकांतोभवेदेकांताभावात्तत्समूहात्म

रा॰वा॰
४५

कस्यतस्याप्यभावस्यात् शाखाद्यभावेवृक्षाद्यभाववत्तदविनाभाविविशेषनिराकरणात्
त्मलोपेसर्वलोपः स्यादेवमुत्तरेचभंगायोजयितव्याः छलमात्रमनेकांतइतिचेन्नछ
ललक्षणाभावात् स्यान्मतंतदेवास्तितदेवनास्ति तदेवनित्यं तदेवानित्यमितिचानेकां
तप्ररूपणंछलमात्रमितितन्न कुतः छललक्षणाभावात् छलस्यहिलक्षणमुक्तंव
चनविघातोर्थविकल्पोपपत्त्याछलमिति यथानवकंबलोयंदेवदत्तइत्यविशेषाभिहितेर्थे
वक्तुरभिप्रायादर्थांतरकल्पनंनवास्यकंबलानचत्वारइतिनवोवास्यकंब
इतिनवकंबलः नतथानेकांतवादः यतउभयनयगुणप्रधानभावापादितार्पितव्य
रसिद्धिविशेषबललाभप्रापितयुक्तिपुष्कलार्थोनेकांतवादः संशयहेतुरिति
विशेषलक्षणोपलब्धेःस्यान्मतं संशयहेतुरनेकांतवादः कथमेकत्राधारेविरो
ऽनेकस्यासंभवादागमश्चैवंप्रवृत्तः एकंद्रव्यमनंतपर्यायमितिकिमागमप्रा
स्तिवानास्तिवानित्यंवानित्यंचेतितन्नकस्माद्विशेषलक्षणोपलब्धेरिहसामान्यप्र
त्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्चसंशयः तद्यथा स्थाणुपुरुषोचितेदेशेनाति

प्रकाशांधकारकलुषायांवेलायामूर्ध्वत्वमात्रेसारूप्यंपश्यतोवक्रकोटरविशेषयोनिलय
नादीन्स्थाणुगतान्विशेषान्वस्त्रसंसयनशिरःकंडूयनशिरश्चालनादीन्पुरुषगतांश्च
नुपलभमानस्यतेषांचस्मरतः संशयउत्पद्यते॥ नचतद्वदनेकांतवादेविशेषानुपल
ब्धिर्यतः स्वपराद्यादेशवशीकृताविशेषाउक्ताव्यक्ताप्रत्यर्थमुपलभ्यते॥ ततोविशेषो
पलब्धेर्नसंशयहेतुरितियदगादिष्मतत्सम्यग्निरवैष्म एवमपिसंशयः कथमिदंताव
दस्तिप्रष्टव्यः॥ एषामस्तित्वादीनांधर्माणांसाधनहेतुसंनिधानेसतिभवितव्यंसंशयेने
तिउच्यतेविरोधाभावात्संशयाभावः॥ यदिविरोधोभविष्यत्संशयो॥ जनिष्यतनचविरो
धोनयोपनीतानांधर्माणामस्तिकुतः॥ अर्पणाभेदादविरोधः पितापुत्रादिसंबंधव
दुक्तादर्पणाभेदादेकत्राविरोधेनावरोधोधर्माणांपितापुत्रादिसंबंधवत्तद्यथैकस्य
देवदत्तस्यजातिकुलरूपसंज्ञाव्यपदेशविशिष्टस्यपितापुत्रोभ्राताभागिनेयइत्येवंप्र
काराः॥ संबंधाजन्यजनकत्वादिशक्त्यर्पणाभेदान्नविरुध्यंतेनह्येकापेक्षयापित्रे
ति॥ शेषापेक्षयापिपिताभवतिशेषापेक्षायायावापुत्रादिव्यपदेशार्हइत्युक्तापेक्षयापि

राजवा
९६

ताउत्रादिकृतंसंबंधवक्तृत्वंदेवदत्तस्यैकत्वेनविरुध्यते। तद्वदस्ति
त्वाद्योनयोतिविरोधमेकत्रसपक्षासपक्षापेक्षोपलक्षितसत्वादिभेदोपचितैकधर्मव
त्वा अथवासपक्षासपक्षापेक्षयाउपलक्षितानांसत्वादीनांभेदानांमाधारेणपक्षधर्म
णोकेनकल्पंसर्वद्रव्यंनिरपेक्षयोर्ह्येकत्रवादिप्रतिवादिप्रयोगापेक्षयासंशयउक्तः
इतरथाहिपक्षधर्मोपिसंशयः कल्प्येत। एकस्यहेतोः साधकदूषकत्वाविसंवादवद्वा
अर्थेवमुपपत्त्या। विरोधेप्रतिपादितेपिमिथ्यादर्शनाभिवेशान्तत्वेनप्रतिपद्यतेयस्तंप्र
तिसार्वलौकिकहेतुवादमाश्रित्योच्यतेन्नहस्वपक्षमर्यादानक्रमेणान्यापधर्ममनुपाल
यतावादिनाभिप्रेतप्रतिष्ठार्थसिद्धिमाशंसताहेत्वनपदेशेसर्वाभिलषितार्थसिद्धिः
प्रतिज्ञामात्रादेवमाप्नुयादिति। अतिप्रसंगदोषनिवृत्तयेयोहेतुरुपदिश्यतेससाधको
दूषकश्चस्वपक्षंसाधयतिपरपक्षंदूषयतिः। ननौसाधनदूषणार्थोहेतोरन्योभवतः
नचाननात्वमस्तीतिकृत्वापिनसाधकस्तेनदूषकः येनवादूषकस्तेनसाधकः। नतयोः
संकरोविरोधोवा। एवंसर्वार्थेषुविरोधदोषमन्तरेतिविसर्यस्यनेकान्तप्रक्रियेति। सर्व

प्रवाद्यविप्रतिपत्तेश्चनात्रप्रतिवादिनोविसंवदंतेएकमनेकात्मकमितिकेचित्तावदाहुः
सत्वरजस्तमसांसाम्यावस्थाप्रधानमितितेषांप्रसादलाघवशोषतापावरणसाधना
दिभिन्नस्वभावानांप्रधानात्मनांमिथश्चनविरोधः॥अथमन्येथाः॥नप्रधानंनामैकं
गुणेभ्योव्यतिरिक्तमस्तिकिंतुतएवगुणाः॥साम्यमापन्नाः॥प्रधानाख्यांलभंतइति
यद्येवंभूमाप्रधानस्यात्स्यादेतत्तेषांसमुदायः॥प्रधानमेकमितिअतएवाविरोधः
सिद्धःगुणानामवयवानांसमुदायस्यच॥अपरेमन्यंते॥अनुवृत्तिबुद्ध्यभिधानलक्ष
णाः॥सामान्यविशेषइतितेषांचसामान्यमेवविशेषः॥सामान्यविशेषइतिएकस्यात्म
नःउभयात्मकंनविरुध्यते॥अपरेआहुः॥वर्णादिपरमाणुसमुदायोरूपपरमाणुरि
तितेषांकक्खडत्वादिभिन्नलक्षणानांरूपात्मनांमिथश्चनविरोधः॥अथमतंनप
रमाणुर्नामकोपिवाह्यः॥किंतुविज्ञानमेवतदाकारपरिणतंपरमाणुव्यपदेशार्ह
मित्युच्यते॥अत्रापिग्राहकविषयाभाससंवित्तिशक्तित्रयाकाराधिकरणस्यैकस्या
भ्युपगमान्नविरोधः॥किंचसर्वेषामेवतेषांपूर्वोत्तरकालभाव्यवस्थाविशेषापरिणा

स्यकार्यकारणशक्तिसमन्वयोनविरोधस्यास्पदमित्यविरोधःसिद्धः॥ एवंप्र
माणनयैरधिगतानांजीवादीनांपुनरप्यधिगमोपायांतरप्रदर्शनार्थमाह॥ निर्देशस्वा
मित्वसाधनाधिकरणस्थितिविधानतः॥ केपुनरिमेनिर्देशादयः
मित्वमाधिपत्यंसाधनंकारणं॥ अधिकरणंप्रतिष्ठास्थितिः॥ कालकृ
विधानंप्रकारः॥ अधिगमइत्यनुवर्तते॥ एतैरेतेभ्योवाधिगमः॥ पूर्ववत्तसिः
गमः॥ जीवादीनांसम्यग्दर्शनादीनांच॥ सतर्हितथानिर्देशः॥ कर्त
ः॥ अर्थवशाद्विभक्तिपरिणामोभवति॥ तद्यथा॥ उच्चैर्देवदत्तस्यगृहाण्यामंत्र
स्वैनंदेवदत्तमितिगम्यते॥ अथकिमर्थमादौनिर्देशउच्यते॥ अवधृतार्थ
स्यप्रतिपत्तेरादौनिर्देवचनंस्वरूपेणावधृतस्यार्थस्यस्वामित्वादिकाधर्मवि
निपत्तिर्भवति॥ अतोऽस्यनिर्देशस्यादौवचनंक्रियते॥ इतरेषांप्रश्नवशात्क्रमः॥ इ
त्वादीनांप्रश्नवशात्क्रमोवेदितव्यः॥ यद्येवंसएवतावदुच्यते॥ कोजीवइ
तउपशमिकादिभावपर्यायोजीवः॥ पर्यायादेशाद्वक्ष्यमाणउपशमिकादिभाव॰

पर्यायोऽजीवइत्युच्यते पर्यायादेशात् द्रव्यार्थादेशान्नामादिर्जीवइत्युच्यते तदुभय
संग्रहः ॥ प्रमाणं तस्योभयस्य संग्रहः ॥ प्रमाणनिर्देशइत्युच्यते कस्य जीवः ॥ तत्परिणा
मस्य भेदादग्नेरौष्ण्यस्य परिणामो यस्यासौ यं तत्परिणामस्तस्यासौ व्यपदिश्यते कुतः
कथंचिद्भेदात्परिणामपरिपरिणामिनोर्भेदकल्पनासद्भावात् अग्नेरोष्ण्यवत्तद्यथा उ
ष्णात्मकस्याग्नेर्दहनपचनस्वेदनादिक्रियासामर्थ्यमौष्ण्यं भेदेनोच्यते ॥ व्यवहारनय
वशात्सर्वेषां ॥ जीवादीनां सर्वेषां पदार्थानां व्यवहारनयवशाज्जीवः ॥ स्वामी किंसाध
नो जीवः ॥ पारिणामिकभावसाधनो निश्चयतः ॥ योसौ जीवात्मा पारिणामिकस्त
त्साधनो जीवः ॥ निश्चयनयेन तेन ह्यसौ वात्मानं सर्वकालं लभत इति ॥ उपशमिका
दिभावसाधनश्च व्यवहारतः ॥ व्यवहारनयवशादौपशमिकादिभावसाधनश्चेति
व्यपदिश्यते चशब्देन छक्रशोणिताहारादिसाधनश्च किमधिकरणो जीवः ॥ स्व
प्रदेशाधिकरणो निश्चयतः ॥ योसौ स्वप्रदेश असंख्यातस्वरूपः ॥ कर्मकृतशरी
रपरिमाणानुविधायित्वेपि अपरिह्रासमहीनाधिकभावस्तदधिकरणो जीवः स्वा

त्मप्रतिष्ठाकाशवद्व्यवहारतः॥शरीराधिष्ठानः कर्मोपात्तशरीरमेतत्त्वाधिकरणा
मात्माव्यवहारनयवशादधितिष्ठतीत्युच्यते॥किंस्थितिको जीवः॥स्थितिस्तस्य द्र
व्यपर्यायापेक्षानाद्यवसाना समयादिका च॥तस्य जीवस्यास्थितिः॥द्रव्यपर्यायापेक्षा
द्विधा कल्प्यते॥द्रव्यापेक्षाऽनाद्यवसाना जीवद्रव्यं हि चैतन्यजी
त्वमयप्रदेशादिसामान्यादेशान्न प्रच्यवते॥सर्वकालमिति पर्यायस्त्वस्य
तितदपेक्षा समयादिका कल्प्यते किमस्य विधानं नारकादिसंख्येयासंख्येयानंत
प्रकारो जीवः नारकादयः संख्येयाः॥असंख्येया अनंतप्रकाराभिद्यंते जीवस्यान
र्थांतरेषामागमाविरोधान्निर्देशादिवचनं तेनैव प्रकारेणागमाविरोधेनैतरेषामजी
वादीनां निर्देशादयो वक्तव्याः तद्यथा॥अजीवस्तावच्छ्रायणपर्यायरहितो नामाऽ
दिष्याजीवात्मेवाजीवस्य स्वामी जीवो वा भोक्तृत्वात्॥पुद्गलानामणुत्वादिसाधनं
भेदादि तन्निमित्तं वा कालादि धर्माधर्मकालाकाशानां गतिस्थितिवर्तनावगाहहे
तुता पारिणामिकी अगुरुलघुगुणानुग्रहो नास्वात्मभूतसत्तासंबंधाजी

वान्तदपेक्षत्वाद्रूस्यादिहेतुताभिव्यक्तेः॥स्वात्मैवाधिकरणंसर्वद्रव्याणांस्वात्मव्यवस्थि
तत्वात्‌दाकाशंसाधारणमसाधारणंचघटादिजलादीनांस्थितिर्द्रव्यापेक्षानाद्यवसनाप
र्यायापेक्षासमयादिकाविधानंधर्मादित्रिकंप्रतिनियतानादिपारिणामिकद्रव्यार्था
देशादेकैकंपर्यायार्थिकनयादेशादनेकं॥संख्येयानंतानांद्रव्याणांगतिस्थित्यवगा
हनाद्युपकारपर्यायादेशाश्रयादेकंस्यादनेकंस्यात्संख्येयंस्यादसंख्येयंस्यादनंतका
लः॥संख्येयोसंख्येयोनंतश्चभवति॥परप्रत्ययात्पुद्गलद्रव्यंरूपस्पर्शादिपारिणामि
कद्रव्यार्थादेशात्स्यादेकंप्रतिनियतैकानेकसंख्येयासंख्येयानंतप्रदेशपर्यायादे
शात्स्यादनेकंस्यात्संख्येयंस्यादसंख्येयंस्यादनंतं॥आस्रवनिर्देशः कायवाङ्मनः क्रि
यापरिणामोनामादिर्वाजीवोस्यस्वामीकर्मवातन्निमित्तत्वात्स्वात्मैवसाधनंशुद्धस्या
तद्भावात्कर्मवासतितस्मिन्प्रवृत्तेरधिकरणंआत्मनेवासीतत्रतत्फलदर्शनात्क
र्मणिकर्मकृतेचकायादावुपचारतः॥स्थितिर्वाङ्मनसास्रवयोर्जघन्येनैकसम
यः॥उत्कर्षेणांतर्मुहूर्त्तः कायास्रवस्यजघन्येनांतर्मुहूर्तः उत्कर्षेणानंतकालः

राजवा॰
५६

असंख्येया पुद्गलपरिवर्त्ताः॥ विधानंवाङ्मनसास्रवयोश्चतुर्विकल्पस्सत्यमस
षोभयानुभयभेदात्कायास्रवः सप्तविधः॥ उदारिकवैक्रियिकाहारकमिश्र
भेदादौदारिकौदारिकमिश्रकौमनुष्यतिरश्चांवैक्रियिकवैक्रियकमिश्रकौदेव
काराणांआहारकाहारकमिश्रकौसंयतानामृद्धिप्राप्तानांकार्मणकायास्रवोविग्र
हापन्नानांकेवलिनांवासमुद्घातगतानांअथवास्रवस्यप्रकारः

यिकः हिंसानृतस्तेयाब्रह्मादिषुप्रवृत्तिनिवृत्तिसंज्ञा वाचिकः परुषाक्रोशपि
शुनपरोपघातादिषुवचस्सुप्रवृत्तिनिवृत्तिसंज्ञः मानसोमिथ्याश्रुतेर्ष्यासूयादि
षुमनसः प्रवृत्तिनिवृत्तिसंज्ञः बंधनिर्देशः॥ जीवकर्मप्रदेशान्योन्यसंश्लेषोबंध
नामादिर्वासजीवस्यतत्रतत्फलदर्शनात्कर्मणश्चतस्यदृष्टत्वान्मिथ्यादर्शनाविर
तिप्रमादकषाययोगाबंधस्यसाधने

धिकरणंभवतिविवक्षातः कारकप्रवृत्तेः॥ स्थितिर्जघन्योत्कृष्टाच॥ तत्रजघन्यावे
दनीयस्यद्वादशमुहूर्त्ताः नामगोत्रयोरष्टौशेषाणामंतर्मुहूर्त्तउत्कृष्टाज्ञानदर्शना

मकोटीकोद्यः मोहनीयस्यसप्ततिर्नामगोत्रयोर्विं
वरणावेदनीयांतरायाणांशसागरोपमकोटीकोद्यः मोहनीयस्यसप्ततिर्नामगोत्रयोर्विं
शतिस्त्रयस्त्रिंशत्सागरोपमाण्यायुषः॥ अथवाबंधसंतानपर्यायादेशाश्यादनादि
रनिधनश्चाभव्यानांभव्यानांचकेषांचिद्येनतेनापिकालेननसेत्स्यंतिज्ञानावरणां
दिकर्मोत्पादविनाशश्यात्सादिः॥ सनिधनः विधानंबंधसामान्यादेशादेकः॥ द्विवि
धः॥ शुभाशुभभेदात्त्रिधाद्रव्यभावोभयविकल्पात्चतुर्धाप्रकृतिस्थित्यनुभाग
प्रदेशभेदात्पंचधामिथ्यादर्शनादिहेतुभेदात्॥ षोढानामस्थापनाद्रव्यक्षेत्रकाल
भावैः॥ सप्तधातेरेवभवाधिकैः॥ अष्टधाज्ञानावरणादिमूलप्रकृतिभेदादेवंसंख्ये
यासंख्येयानंतविकल्पश्चभवति हेतुफलभेदाद्बंधनिर्देशः॥ आस्रवनिरोधोना
मादिर्वाजीवोस्यस्वामीकर्मवानिरुध्यमानविषयत्वान्निरोधस्यसाधनंगुप्तिसमि
तिधर्म्मादयस्वामिसंबंधार्हमेवाधिकरणमित्यर्कस्थितिर्जघन्येनांतर्मुहूर्त्तोउ
त्कृष्टापूर्वकोटीदेशोना विधानंएकादिरष्टोत्तरशतविधः ततउत्तरश्चसंख्ये
यादिविकल्पः निरोध्यनिरोधकभेदाद्बेदितव्यः॥ तत्राष्टोत्तरशतविधउच्यते ति

स्तोत्तमय:।पंचसमितय:।धर्मोदशविध:।अनुप्रेक्षाद्वादशपरीषहाद्वाविंशति:।न
योद्वादशविधंप्रायश्चित्तंनवविधं।विनयश्चतुर्विध:।वैयावृत्यंदशविधंस्वाध्या
य:।पंचविध:।व्युत्सर्गोद्विविध:।धर्म्यध्यानंदशविधंशुक्लध्यानं।चतुर्विधमि
तिनिर्जरानिर्देश:।यथाविपाकात्तपसोवाउपभुक्तवीर्यकर्मनिर्जरानामादिर्वास
आत्मन:कर्मणोवाद्रव्यभावभेदत:।साधनतोयथाकर्मविपाकस्यअधिक
रणेआत्मन्येववास्थितिर्जघन्येनेकसमय:।उत्कर्षेणांतर्मुहूर्त:।सादि:
सपर्यवसानावा।विधानेसामान्यादेकानिर्जरा।द्विविधायथाकालप्रक्रमिकभेदा
दष्टधामूलकर्मप्रकृतिभेदादेवंसंख्येयासंख्येयानंतविकल्पाभवति।कर्मरसानि
र्हरणभेदान्मोक्षनिर्देश:।कृत्स्नकर्मसंक्षयोमोक्षोनामादिर्वातस्यस्वामीपरमात्मा
मोक्षात्मेववासाधनसम्यग्दर्शनज्ञानचारित्राणिबाह्यसिवेधाइहमेवाधिकरणंत
द्विषय।वास्थितिस्तस्यसादिरनिधानाविधानंसामान्यादेकोमोक्ष:द्रव्यभाव
मोक्षभेदादनेक:सम्यग्दर्शननिर्देशस्तत्वार्थश्रद्धानंसम्यग्दर्शनंनामादि

वीतस्तुनरात्मनः॥स्वस्यैववादर्शनमोहोपशमादिसाधनं॥ वाह्यंचोपदेशादिस्वात्माधा
स्वामिसंवंध॥भागेवाधिकरणे॥स्थितिर्जघन्येनांतर्मुहूर्त॥उत्कर्षेणषट्षष्ठिसा
गरोपमाणिसातिरेकाणि॥अथवा॥सादिसनिधनं॥अपशमिकक्षयोपशमिकेसा
द्यनिधनंक्षायिकंविधानं॥सामान्यादेकं द्विधानिसर्गजाधिगमजभेदात्त्रिधा॥अप
शमिकक्षायिकक्षायोपशमिकल्पादेवंसंख्येयानंतविकल्पंचभवति॥अथवस
नभेदात॥ज्ञाननिर्देशः॥जीवादितत्वप्रकाशनंज्ञानंनामादिवीतदात्मनः स्वाका
रस्यवाज्ञानावरणादिकर्मक्षयोपशमादिसाधनं स्वाविर्भावशक्तिर्वा॥अधिकरणं
स्वात्मास्वाकारोवातत्रप्रतिष्ठानात॥स्थिति॥सादिसनिधनंक्षायोपशमिकंज्ञानं
चतुर्विकल्पंसाद्यनिधनंक्षायिकंविधानंसामान्यादेकंज्ञानं प्रत्यक्षपरोक्षभेदा
द्विधाद्रव्यगुणपर्यायविषयभेदात्त्रिधानामादिविकल्पाच्चतुर्धामत्यादिभेदात्पं
चधाइत्येवंसंख्येयासंख्येयानंतविकल्पंचभवतिभेदाच्चारित्रनिर्देशः॥कर्मादान
कारणनिवृत्तिश्चारित्रंनामादिवीतस्तुनरात्मनः स्वरूपस्यवाचारित्रमोहोपश

राजवा.
५१

मादिसाधनंस्वरूपं किंवास्वामिसंबंधभागेवाधिकरणंस्थितिर्जघन्येनांतर्मुहूर्तउत्क
र्षेणपूर्वकोटीदेशोना॥ अथवासादिपर्यवसानौ॥ औपशमिकक्षायोपशमिके॥ सा
द्यपर्यवसानंक्षायिकंशुद्धिव्यत्ययापेक्षयाविधानंसामान्यादेकंद्विधावाह्याभ्यं
तरनिवृत्तिभेदात्॥ त्रिधाऔपशमिकक्षायिकक्षायोपशमिकविकल्पात्
चतुर्थमभेदात्पंचधासामायिकादिविकल्पादित्येवसंख्येयासंख्येयानंतविक
ल्पंचभवति॥ परिणामभेदात्किमेतैरेवजीवादीनामधिगमोभवतिउतान्योप्यधि
गमोपायोस्तीतिपरिपृष्टः॥ अस्तीत्याह॥ सत्संख्याक्षेत्रस्पर्शनकालांतरभावा
ल्पबहुत्वैश्च॥ अधिगमइत्यनुवर्त्ततेप्रशंसादिषुसच्छब्दवृत्तेः॥ इच्छातःसद्भाव
ग्रहणंसच्छब्दः प्रशंसादिषुवर्त्ततेतद्यथाप्रशंसायांतावत्सत्पुरुषः सदश्वइ
तिक्वचिदस्तित्वेसच्छब्दः सत्घटइतिक्वचित्प्रतिज्ञायमानेप्रव्रजितः सत्कथमे
वंब्रूयात्प्रव्रजितइतिप्रज्ञायमानइत्यर्थः॥ क्वचिदादरेसत्कृत्यातिथीन्भोज
ति आदृत्येत्यर्थः॥ तत्रेहेच्छातःसद्भावोगृह्यते॥ अव्यभिचारात्सर्वमूलत्वाच्च

तस्माद्द्वैवचनंसत्वंह्यव्यभिचारिसर्वपदार्थेः॥सत्तांव्यभिचरतियदिव्यभिचरेद्द्याग्वि
ज्ञानगोचरातीतः स्यात॥तराणास्तुरूपादयोज्ञानादयश्चकेषुचित्संतिकेषुचिन्न
संतिक्रियाचपरिस्पंदात्मिकाजीवपुद्गलेष्वस्तिनेतरेष्वितिनःपाभिमता॥सर्वेषांच
विचाराहर्णामास्तित्वंमूलंतेनहिनिश्चितस्यवस्तुनउत्तरकालंचिंताप्रवर्तते॥अतस्तस्या
द्वैवचनंक्रियते॥सतःपरिणामोपलब्धेःसंख्यापदेशः॥सतोहिवस्तुनःसंख्या
तानंतपरिणामोपलब्धेः॥संख्यानाद्यनंतमपरिमाणावधारणार्थंसंख्यातद्ल
क्षणाउपदिश्यतेनिज्ञातिसंख्यस्यनिवासविप्रतिपत्तेःक्षेत्राभिधानंनिश्चये
नज्ञातसंख्यस्यार्थस्योर्ध्वमधस्तिर्यग्निवासविप्रतिपत्तेरूर्द्ध्वाद्यन्यतमनिश्चया
र्थं॥क्षेत्राभिधानं॥अवस्थाविशेषस्यवैचित्र्यत्रिकालविषयोपश्लेषनिश्चयार्थं
स्पर्शनं॥अवस्थाविशेषोविचित्रस्त्र्यश्चचतुरस्रादिस्तस्यत्रिकालविषयमुप
श्लेषणंस्पर्शनंकस्यचित्तक्षेत्रमेवस्पर्शनं॥कस्यचिद्द्रव्यमेवकस्यचिद्भवः प
डष्ठौवेति॥एकसर्वजीवसंनिधौतन्निश्चयार्थंतदुच्यते॥स्थितिमतोवधिप

रिच्छेदार्थेकालोपादानंस्थितिमतोर्थस्यावधिपरिच्छेत्तव्यइति।कालोपादानंक्रियते
अंतरशब्दस्यानेकार्थवृत्तेश्छि
द्रः क्वचिच्छिद्रेवर्त्ततेसांतरंकाष्ठंसच्छिद्रमिति।क्वचि
दंतइतिक्वचिन्मध्येहिमवत्सागरांतरमिति।क्वचित्सामीप्येस्फटिकस्यशुक्लर
क्तांतरस्थस्यतद्रूपेणनिशुक्लरक्तसमीपस्थस्येतिगम्यते क्वचि
द्वारणालोहानांकाष्ठपाषाणवाससांनारीपुरुषतोयानामंतरंमहदंतरमितिम
हान्विशेषइत्यर्थः॥क्वचिद्बहिर्योगेग्रामस्यांतरेकूपाइति।क्वचिदुपसंव्या
ने।अंतरेशाटकाइतिक्वचिद्विरहेअनभिप्रेतश्रोतृजनेंतरेमंत्रंमंत्रयते॥त
द्विरहेमंत्रयतइत्यर्थः॥तत्रेहछिद्रमध्यविरहेष्वन्यतमोवेदितव्यः॥
वीर्यस्यन्यग्भावेपुनरुद्भूतिदर्शनात्तद्वचनं अनुपहतवीर्यस्यद्रव्यस्यानिमित्त
वशात्कस्यचित्पर्यायस्यन्यग्भावेसतिपुनर्निमित्तांतरात्तस्यैवाविर्भावदर्श
नादंतरमित्युच्यतेपरिणामप्रकारनिर्णयार्थंभाववचनमौपशमिकादिः॥

मप्रकारेणनिर्ल्लेतव्यंइतिभाववचनंक्रियतेसंख्यानाद्यन्यतमनिश्चयेप्यन्योन्यवि
शेषप्रतिपत्त्यर्थमल्पबहुत्ववचनंसंख्यानादिष्वन्यतमेनपरिमाणेननिश्चेताना
मन्योन्यविशेषप्रतिपत्त्यर्थमल्पबहुत्ववचनंक्रियतेइमेएभ्योऽल्पाइमेबह
वइत्याहनिर्देशवचनात्सत्वप्रसिद्धेःसंग्रहणंनिर्देशवचनादेवसत्वसिद्धेर्नह्यस
तोनिर्देशइतितस्मादसद्ग्रहणमनर्थकंसद्ग्रहणमसद्ग्रहणंनवा॥क्वास्तिक
नास्तीतिचतुर्दशमार्गणास्थानाविशेषणार्थत्वान्नवाएषदोषः॥किंकारणं
नानेनसम्यग्दर्शनादेः॥सामान्येनसत्वमुच्यते।किंतुगतीन्द्रियकायादिचतु
र्दशसुमार्गणास्थानेषुक्वास्तिसम्यग्दर्शनादिकंनास्तीत्येवंविशेषणार्थंसद
चनं॥सर्वभावाधिगमहेतुत्वाच्चाधिकृतानांसम्यग्दर्शनाजीवादीनांचनिर्देश
वचनेनास्तित्वमधिगतंस्यादेतदनधिकृताजीवपर्यायाःक्रोधादयः॥योवाजी
वपर्यायाः वर्णादयोघटादयश्चतेषामस्तित्वाधिगमार्थंपुनर्वचनं॥अनधि
कृतत्वादितिचेन्नसामर्थ्यात्स्यादेतदनधिकृतानास्तित्ततोनपुनरुक्तमेषांग्रहणं

मितितन्नकिंकारणंसामर्थ्यात्तेषामपिग्रहणंभवति॥ विधानग्रहणानार्थत्वा
त्वास्यादेतद्विधानग्रहणादेवसंख्यासिद्धिरितितन्नकिंकारणंभेदगणनार्थत्वात्स्व
कारगणनंहितद्भेदगणनार्थमिदमुच्यते॥ उपशमसम्यग्दृष्टयइयन्तः॥ क्षायि
कसम्यग्दृष्टयएतावन्तइति॥ क्षेत्राधिकरणयोरभेदइतिचेन्नोक्तत्वात्स्यादेतद्यदे
वाधिकरणंतदेवक्षेत्रं॥ अतस्तयोरभेदात्पृथग्ग्रहणमनर्थकमितितन्नकिंका
रणंप्रक्तार्थत्वादुक्तमेतत्सर्वभावाधिगमार्थत्वादितिक्षेत्रेसतिस्पर्शनोपलब्धेर
षुघटवत्पृथग्ग्रहणं॥ यथेहसतिघटेक्षेत्रेवृत्तोवस्थानात्तन्नियमाहृत्स्पर्शन
नंनह्येतदस्तिघटेवृ॥ अवतिष्ठतेनचघटंस्पृशतीतितथाकाशक्षेत्रेजीवावस्था
नियमादाकाशस्पर्शनमितिक्षेत्राभिधानेनैवस्पर्शनस्यार्थग्रहो॥ तत्वात्पृथग्ग्रह
णमनर्थकं॥ नवाविषयवाचित्वान्नवायंमदोषः॥ किंकारणंविषयवाचित्वाद्विषय
वाचीक्षेत्रशब्दः यथाराजाजनपदक्षेत्रेवतिष्ठतेनचकृत्स्नं
नंतुकृत्स्नविषयमितित्रैकाल्यगोचरत्वात्स्वयथासांप्रतिकेनावुनासांप्रतिकंघट

क्षेत्रेस्पर्शनातीतानागतत्वैवमात्मनः॥ सांप्रतिकक्षेत्रस्पर्शनस्पर्शनाभिप्रायः स्पर्श
नाभिप्रायः स्पर्शनस्य त्रिकालगोचरत्वात्॥ स्थितिकालयोरर्थांतरत्वाभावइतिचेन्न
मुख्यकालास्तित्वसंप्रत्ययार्थत्वात् स्यादेतत् स्थितिरेवकालः॥ कालएवस्थितिरित्यतोना
स्त्युभयोरर्थांतरभावइतितन्न किंकारणं मुख्यकालास्तित्वसंप्रत्ययार्थंपुनः॥ का
लग्रहणं द्विविधोहिकालो मुख्योव्यावहारिकश्चेति तत्र मुख्यो निश्चयकालः॥ प
र्यायिपर्यायावधिपरिच्छेदो व्यावहारिकः॥ तयोरुत्तरत्र निर्णयोवक्ष्यते॥ उक्तंच॥
किमुक्तं सर्वभावाधिगमहेतुत्वादिति नामादिषु भावग्रहणात्पुनर्भावग्रहणमिति
चेन्नौपशमिकाद्यपेक्षत्वात्॥ स्यादेतन्नामादिषु भावग्रहणं कृतंतेनैवसिद्धत्वा
त्पुनर्भावग्रहणमनर्थकमितितन्न किंकारणं औपशमिकाद्यपेक्षत्वात् पूर्वंभावग्रह
णं द्रव्येनभवतीत्येवंपरमिदंत्वौपशमिकादिवक्ष्यमाणभावापेक्षं किंसम्यग्दर्शनं
औपशमिकं क्षायिकमित्यादि॥ विनेयाशयवशोवातत्वाधिगमहेतुविकल्पः॥ स्व
थवासर्वेषामेवंपरिहारः॥ विनेयाशयवशोहितत्वाधिगमहेतुविकल्पोवेदितव्यः॥

राजवा॰
५४

हिस्ततेरणाद्गतरथाहिप्रमाणास्प्रहरणादेवासिद्धेरितरेषामधि
गमोपायानांग्रहणमनर्थकंस्यादिति ॥ इतितत्त्वार्थवार्त्तिकेप्रथमेध्यायेपंचमाह्नि
कंसमाप्तं ॥ एवंसम्यग्दर्शनस्यादावुपदिष्टस्यलक्षणोत्पत्तिस्वामिविषयन्यासाधिगमो
: तत्संबंधेनचजीवादीनांसंज्ञापरिणामादिनिर्दिष्टंतदनंतरमिदानीं
सम्यग्ज्ञानंविचारार्हमित्याह ॥ मतिश्रुतावधिमनःपर्ययकेवलानिज्ञानं ॥ मत्या
दयइतिकर्तृशब्दाः मतिशब्दोभावकर्तृकरणसाधनः ॥ अयमतिशब्दोभावकर्तृ
वेदितव्यः ॥ मतेर्भावसाधनोक्तिः ॥ तदावरणकर्मक्षयोपश
मसतींद्रियापेक्षमर्थस्यमननंमतिः ॥ उदासीन्येनतत्त्वकथनाद्बहुलापेक्षयाक
र्तृसाधनः ॥ करणसाधनोवामनुतेर्थान्मन्यतेनेनेतिवामतिः ॥ भेदाभेदविवक्षोपप
त्तेश्रुतशब्दःकर्मसाधनश्चकिंचपूर्वोक्तविषयसाधनश्चनिवर्तनेश्रुतावरणक्ष
योपशमाद्यंतरंगवहिरंगहेतुसंनिधानेसतिश्रूयतेस्मेतिश्रुतंकर्त्तरिश्रुतपरिणत
आत्मैवश्रृणोतीतिश्रुतंभेदविवक्षायांश्रूयतेनेनेतिश्रुतंश्रवणमात्रंवा ॥ अवप्

घेस्यदधाति॥ कर्मादिसाधनः॥ किः कर्मादिषुसाधनेष्वन्यतमे किरयंवेदितव्यः अ
वधिज्ञानावरणक्षयोपशमाद्युभयहेतुसंनिधाने सत्यवधीयते अवाग्दधाति अवा
ग्धानमात्रंवावधिः॥ अवशब्दोधः पर्यायवचनः॥ यथा अधः॥ क्षेपणमवक्षेपण
मिति॥ अधोगतभूयोद्रव्यविषयोह्यवधेः॥ अथवावधिर्मर्यादा अवधिनाप्रति
वद्धंज्ञानंअवधिज्ञानं॥ तथाहिवक्ष्यते रूपिष्ववधेरिति सर्वेषांप्रसंगइतिचेन्न
रूढिवशाद्व्यवस्थोपपत्तेः॥ गोशब्दप्रवृत्तिवत्मनः॥ प्रतीत्यप्रतिसंधायवाज्ञा
नंमनःपर्ययः॥ तदावरणकर्मक्षयोपशमादिद्वितयनिमित्तवशात्परकीयमनो
गतार्थज्ञानंमनःपर्ययः॥ भावादिसाधनत्वंपूर्ववद्वेदितव्यंकथंमनः॥ प्रतीत्यप्र
तिसंधायवाज्ञानमित्यत्रोच्यते परकीयमनसिगतोर्थोमनइत्युच्यते॥ तात्स्थ्यात्ताच्छ
ब्द्यमितिस्वकः॥ मनोगतोर्थोभावघटादिस्तमर्थंसमंतादेत्यावलंब्यवस्वप्रसादात्म
नोज्ञानंमनःपर्ययः॥ मतिज्ञानप्रसंगइतिचेन्न॥ अपेक्षामात्रत्वात्स्यादेतन्मनः
पर्ययाज्ञानंमतिज्ञानंप्राप्नोति कुतमनोनिमित्तत्वादेवंहि आर्थीप्रक्रियामनसाम

नः संपरिचिंत्येतितन्त्लर्किंकारमपेक्षामात्रत्वात्तस्वपरमनोपेक्षामात्रेनत्रक्रिय
तेयथाभ्रेचंद्रमसंपश्येतिनतत्कार्यंमतिज्ञानवत्॥आत्मशुद्धिनिमित्तत्वादितस्य
ति बाह्याभ्यंतरक्रियाविशेषान्यदर्थंकेवंतेतकेवलंतपः॥क्रियाविशेषान्वा
ज्ञानसकायाश्रयान्बाह्यानभ्यंतरांश्चतपः यदर्थमर्थिनः॥केवंतेसेवंतेत
वलं॥अथ्युत्पत्तोवासहायार्थः॥केवलशब्दः॥यथाकेवलमन्नंभुंक्तेदेवदत्त
इति असहायंव्यंजनरहितंभुंक्तेइतिगम्यते॥तथाक्षायोपशमिकज्ञानासंपृ
क्तं असहायंकेवलमित्यव्युत्पन्नोयंशब्दोद्रष्टव्यः॥करणादिसाधनोज्ञानश॰
व्याख्यातः॥अयंज्ञानशब्दः करणादिसाधनइतिव्याख्यातः॥पुरस्तादितरे
तराभावः॥इतरेषामेकांतवादिनांतस्यज्ञानस्यकरणादिसाधनत्वंनोपपद्यते
मितिचेदुच्यते॥आत्माभावेज्ञानस्यकरणादित्वानुपपत्तिः कर्त्तुरभावा
द्यामात्मानविद्यतेतेषांज्ञानस्यकरणादित्वंनोपपद्यते कुतः कर्त्तुरभावात्सति
कर्त्तरिपरशोः॥करणत्वंदृष्टं॥तथाचात्मन्यसतिनास्यकरत्वं न

भावसाधनत्वमपि नोपपद्यते ज्ञातिर्ज्ञानमिति न ह्यसति भाववति भाव इति स्यादेतज्ज्ञा
नातीति ज्ञानमिति कर्तृसाधनत्वमिति तन्न निरीहकत्वान्न हि निरीहको भावः कर्तृ
त्वमास्कंदति निरीहकाश्च सर्वे भावाः॥ किंच पूर्वोत्तरापेक्षस्य लोके कर्तृत्वं दृष्टं न च त
स्य ज्ञानस्य पूर्वोत्तरापेक्षास्ति क्षणिकत्वादतो निरपेक्षस्य कर्तृत्वाभावः॥ किंच करण
व्यापारापेक्षस्य लोके कर्तृत्वं दृष्टं न च ज्ञानस्यान्यत्करणमस्ति अतोस्य कर्तृत्वमपि
नोपपद्यते स्वशक्तिरेव करणमिति चेन्न शक्तिमद्भेदाभ्युपगमे आत्मासिद्धिः
अभेदे च स दोषस्तदवस्थ एवेति संतानापेक्षया कर्तृकरणभेदोपचार इति चेन्न प
रमार्थविपरीतत्वेऽन्यथा॥ वादोपपत्तेर्भेदाभेदविकल्पनयोरुक्तदोषप्रसंगाच्च मन
श्चेंद्रियं चास्य करणमिति चेन्न तस्य तत्कृत्याभावात् मनस्तावन्न करणं विनष्टत्वा
त् षण्णामनंतरातीतं विज्ञानं यद्धि तन्मन इति वचनान्नेंद्रियमप्यतीतं नंतरमेवनाश्यु
पजायमानस्य करणत्वं न हि सव्यविषाणं युगपज्जायमानमितरस्य विषाणस्य
करणं भवति॥ किंच प्रकृत्यर्थादन्यस्याभावात् ज्ञा इत्यस्याः प्रकृतेरवबोधन

मर्थः न तस्मादन्यः कश्चिदर्थोस्ति यः कर्तृत्वमनुभवेत् अतोस्य कर्तृत्वाभा
वः किंच एकक्षणविषयं यत्कर्तृत्वं तदनेकक्षणगोचरोच्चारणशब्दजन्मना कर्तृ
शब्देन कथमुच्यते कथं वायमेकक्षणोसत्वाच्चकः स्यात् संतानावस्थानाद्वा
च्य वाचकभावसंबंध इति चेन्न तस्य प्रतिविहितत्वात् अथ मतमेतत् स्वात्य
तिनानोरन्तदृष्टिरं वाच्यमेव हि तत्त्वमिष्यते अव्यापारेषु हि सर्वधर्मेषु वाग्व्य
वहारो नास्त्येवेति तदपि नोपपद्यते स्ववचनविरोधात् त्वत्प्रतिपत्तकथायाः पन्ह
वप्रसंगाच्च किंच जानातीति ज्ञानमिति कर्तृसाधनत्वेनोपपद्यते कुतो विशेषा
नुपलब्धेः येन हि कर्तृसाधनत्वमवगतं करणादिसाधनत्वं च तेनेदं युज्यते व
क्तुं कर्तृसाधनमिदं न करणादिसाधनमिति न च क्षणिकवादिनः प्र
वर्तिज्ञानविकल्पनायां अनवधारितोभयस्वभावस्य तद्विशेषोपलब्धिरस्ति न
हि शुक्लेतरविशेषानभिज्ञस्य शुक्लमिदं न नीलादीति विशेषणमुपपद्यते अपि
च व्यवक्रियस्य तदभावो नाभिसंबंधादात्मनः प्रस्तित्वेपि ज्ञानस्य करणाद्यभावः

कुतोनभिसंबंधाद्यस्यमतमात्मनोज्ञानाख्योतरगास्तस्माच्चार्थांतरभूतः॥ आत्मेंद्रि
यमनोर्थसन्निकर्षाद्यन्निष्पद्यते॥ नदन्यदितिवचनादितितस्यज्ञानंकरणंनभवि
तुमर्हतिकुतः॥ पृथगात्मलाभाभावात्दृष्टोहिलोकेछेत्तुर्देवदत्तार्थांतरभूतस्यपरशो
स्तेक्ष्ण्यगौरवकाठिन्यादिविशेषलक्षणोपेतस्यसतः करणभावः॥ नचतथाज्ञान
स्यस्वरूपंपृथगुपलभामहे॥ किंचापेक्षाभावात्दृष्टोहिपरशोर्देवदत्ताधिष्ठितोद्य
मननिपतनापेक्षस्यकरणभावः॥ नचतथाज्ञानेनकिंचित्कर्तृसाध्यंक्रियांतरंस
मपेक्ष्यमस्तिकिंचतत्परिणामाभावात्छेदनक्रियापरिणतेनहिदेवदत्तेनतत्क्रिया
यायाः॥ साचिव्येनिष्पद्यमानः॥ परशुःकरणमित्येतद्युक्तं॥ नचतथात्माज्ञानक्रि
यापरिणतः॥ अर्थांतरत्वेतस्याज्ञत्वादिहयज्ज्ञानादन्यद्भवतितदज्ञंदृष्टं॥ यथा
घटादिद्रव्यं॥ तथाचज्ञानादन्यआत्मेत्यज्ञत्वप्रसंगः॥ ज्ञानयोगाज्ज्ञत्वंदृष्टत्वाद्दं
डिवदितिचेन्नतत्स्वभावाभावेसंबंधनियमानुपपत्तिरिंद्रियमनोवत्तज्ज्ञस्वभावा
भावेसत्यात्मन्येवयोगोनमनसेंद्रियेणवेतिनियमाभावः॥ यतसिद्धयोश्चदंडिदं

अ॰
राजवा॰
५७

डिनोसंबंधोदंडस्यचप्रसिद्धस्यचैप्रसिसतोविशेषणमात्रत्वेनोपादानादात्मनश्च
तुदुत्पत्तौहितविचारणाविक्रियोपपत्तेरसाम्येउभयोश्चात्तयोः संबंधेप्यत्र
लप्रसंगोदृष्टत्वाज्जात्यंधयोः संबंधेदर्शनशक्त्याभाववत् किंच इंद्रियमनः
प्रसंगाच्चदिस्रायतइति किंचउभयोर्निष्क्रियात्वात्सर्वगतस्यतावदात्मनः क्रि
यानास्तिनापिज्ञानस्यक्रियावत्वंद्रव्यस्यैवलक्षणमितिवचनात्ततः क्रियावि
रहितस्यकथंकर्तृत्वंकरणत्वंवास्यात् यस्यापिमतमन्यत्गुणव्यतिरेकात् बु
द्धः पुरुषोनित्यश्चनिर्विकारत्वादितितस्यज्ञानंकरणंनभवितुमर्हति कुतः
श्चनभिसंबंधाद्यथाबुद्धिरिंद्रियमनोहंकारमहद्भ्युपनीतालोचनसंकल्पाभि
मानाध्यवसायरूपासाप्रकृतिः पुरुषः पुनरविक्रियः शुद्धश्चतस्यसाक
रणंकथंस्यात्क्रियापरिणतस्यहिदेवदत्तस्यलोकेकरणसंप्रयोगोदृष्टस्त्येवमा
दियोज्यंनापिकर्तृसाधनत्वंयुज्यतेलोकेहिकरणत्वेनप्रसिद्धस्यासेः तत्प्रसं
सापरायामभिधानप्रवृत्तौसमीक्षितायांनैकगौरवकाठिन्यादिनविशेषोयमे

वह्निनत्ती। तिकर्तृधर्माध्यारोपः॥ क्रियतेनचतथाज्ञानंकरणत्वेनप्रसिद्धमस्ति
पूर्वदोषोपपत्तेः॥ अतोस्यकर्तृत्वमयुक्तं॥ नचभावसाधनत्वमुपपत्तिमत्॥ अवि
क्रियस्यतत्परिणामाभावाद्धिक्रियास्वभावस्यहिवस्तुनस्तंडुलादेर्विक्लेदादिदर्श
नात्पचनंपाकइत्येवमादिभावदर्शोपपत्तोनाकाशस्येति॥ किंचफलाभावात्॥ ज्ञा
नेहिप्रमाणमिष्टंमाणेनचफलवताभवितव्यंनचाववोधनमंतरेणफलमन्यदु
पलभ्यते॥ तस्मादन्येनज्ञानेनभवितव्यंयस्मिन्सतिसाक्षातिरववोधः फलमा
त्मनोभवति॥ तत्त्वनास्त्यतोनभावसाधनत्वं॥ अधिगमश्चात्रनभावांतरमितिफले
प्रामाणोपचार॥ इतिवायुक्तंमुख्याभावादात्मफलप्रमाणपरिकल्पनावायुक्ता
आकारावत्तोभेदाभेदयोरनेकदोषोपपत्तेर्निर्विकल्पकत्वाच्चतत्वस्याकारक
ल्पनाभावः॥ बाह्यवस्त्वकारापोहेंतरंगाकारानुपपत्तिश्चेति जैनैर्ज्ञानंतुप
रमर्षिसर्वज्ञप्रणीतनयभंगगहनप्रपंचविपश्चिताम्स्याद्वादप्रकाशोन्मीलित
ज्ञानचक्षुषामेकस्मिन्नप्यर्थेनेकपर्यायसंभवादुपपद्यतइतिविस्तरेणबहुमे

यतन्मत्यादीनांज्ञानशब्देनप्रत्येकमभिसंबंधोभुजिवद्यथादेवदत्तजिनदत्तगुरु
दत्ताभोज्यंतामितिदेवदत्तादीनांभुजिनांप्रत्येकमभिसंबंधोभवतिएवमिहापिप्र
त्येकमभिसंबंधः मतिज्ञानंश्रुतज्ञानंऽवधिज्ञानंकेवलज्ञानमितिसत्यपित्त
सामानाधिकरण्येउपात्तलिंगसंख्यत्वात्तल्लिंगसंख्योपादानंनास्तीत्युक्तंपुरस्ता
त्घ्यंतत्वादल्पांतरत्वादल्पविषयत्वात्मतिग्रहणमादौमतिरित्येतत्पदंघ्यंत
मल्पाच्तरंचावध्यादिभ्योविषयस्यास्याल्पत्वाच्चक्षुरादीनांप्रतिनियतविषयत्वा
त्तस्मादस्यादौग्रहणंक्रियतेतदनंतरंश्रुतंतत्पूर्वंहिस्फुतमितिवक्ष्यतेततस्त
दनंतरंश्रुतंक्रियतेतत्त्वविषयनिबंधनतुल्यत्वाच्चमतिश्रुतयोर्निबंधोद्रव्ये
ष्वसर्वपर्यायेष्वितिवक्ष्यते अतस्तत्तुल्यत्वाच्चतदनंतरंश्रुतंतत्सहायत्वाच्चय
थानारदपर्वतौ यत्रपर्वतस्तत्रनारदः परस्परापरित्यागात्तथामतिश्रुतयोः
परस्परापरित्यागः यत्रमतिस्तत्रश्रुतंयत्रश्रुतंतत्रमतिरितिप्रत्यक्षत्रयस्या
दावंवधिवचनंविशुद्ध्यभावात्सत्यपिमतिश्रुताभ्यांप्रत्यक्षत्वाद्विशुद्धत्वेऽव

धिरोपरिष्टं प्रत्यक्षज्ञानमपेक्ष्य अवधिर्न्नविशुद्धतरं ततोऽस्य प्राप्तपन्यासस्ततो विशु
द्धतरत्वान्मनःपर्ययग्रहणं ततोऽवधेर्मनःपर्ययज्ञानं विशुद्धतरं किंकृतोऽस्य वि
शुद्धतरं किंकृतोऽस्य विशुद्धिप्रकर्षः संयमगुणसन्निधानकृतः अतोऽस्यानं
तरं ग्रहणं अंते केवलग्रहणं ततः परं ज्ञानप्रकर्षाभावात्सर्वेषां ज्ञानानामुपरि
च्छेदने केवलसामर्थ्यादस्य चान्येन ज्ञानेनापरिच्छेद्यत्वात्ततोऽन्त्यप्रकृष्टज्ञाने
मस्तीति ततः परं ज्ञानप्रकर्षाभावस्तेनैव सह निर्वाणाच्च यतश्च केवलेने
व सह निर्वाणं क्षायोपशमिकज्ञानैः सहातोऽन्ते केवलग्रहणं कश्चिदाह म
तिश्रुतयोरेकत्वसाहचर्यादेकत्रावस्थानाच्चाविशेषान्मतिश्रुतयोरेकत्वं प्रा
प्नोति कुतः साहचर्यादेकत्रावस्थानाच्चाविशेषान्नानात्वसिद्धेर्नो विशेषः कु
तः अतस्तत्सिद्धेर्यत एव मतिश्रुतयोः साहचर्यमेकत्रावस्थानं चोच्यते अ
त एव विशेषः सिद्धः प्रतिनियतविशेषसिद्धयोर्हि साहचर्यमेकत्रावस्था
नं च युज्यते नान्यथेति तत्पूर्वकत्वाच्च मतिपूर्वं श्रुतमिति वक्ष्यते ततश्चा

नयोर्विशेषः यत्पूर्वं यच्च पश्चात्तयोः कथमविशेषः तत एवाविशेषः कारणसदृ
शत्वाद्युगपद्वृत्तेश्चेति चेन्नातएवनानात्वात् स्यादेतद्यतो मतिपूर्वकत्वमत एवा
शेषः कुतः कारणसदृशत्वात्कार्यस्य कथं तंतुपटवद्यथा शुक्लादितंतुकार्यं
पटद्रव्यं शुक्लादिगुणमेव तथा मतिकार्यत्वाच्छ्रुतस्यापि मत्यात्मकत्वं युगपद्वृत्तेश्च
यथाग्नावौष्ण्यप्रकाशनयोर्युगपद्वृत्तेरन्यात्मकत्वं तथा सम्यग्दर्शनाविर्भावादनंत
रं युगपन्मतिश्रुतयोः ज्ञानव्यपदेशवृत्तेरविशेष इति तन्न किं कारणं अत एव ना
नात्वात् यत एव नानात्वाद्यत एव कारणसदृशत्वयुगपद्वृत्तिश्च चोद्यते अत एव
नानात्वं सिद्धं द्वयोर्हि सादृश्यं युगपद्वृत्तिश्चेति विषयाविशेषादिति चेन्न ग्रहणभे
दात् स्यादेतद्विषयाविशेषान्मतिश्रुतयोरेकत्वमेव हि वक्ष्यते मतिश्रुतयोरेकत्वमेव हि
वक्ष्यते मतिश्रुतयोर्निबंधो द्रव्येष्वसर्वपर्यायेष्विति तन्न किं कारणं ग्रहणभेदाद
न्यथा हि मत्या गृह्यते अन्यथा श्रुतेन यो हि मन्यते विषयाभेदादविशेष इति तस्यै
कघटविषयदर्शनस्पर्शनाविशेषः स्यात् उभयोरिंद्रियानिमित्तत्वादिति चेन्न श्र

सिद्धत्वात् ॥ स्यादेतदुभयोरिन्द्रियानिन्द्रियनिमित्तत्वादेतत् करणनिमित्तत्वाच्च तदुभय
निमित्तमिति तन्न किं कारणमसिद्धत्वात् जिह्वा हि शब्दोच्चारक्रियाया निमित्तं न ज्ञानस्य श्रो
त्रमपि स्वविषयमतिज्ञाननिमित्तं न श्रुतस्येत्युभयनिमित्तत्वमसिद्धं सिद्धो हेतुः
साध्यमर्थं साधयेन्नासिद्धः ॥ किंनिमित्तं तर्हि श्रुतमनिन्द्रियनिमित्तोऽर्थावगमः श्रु
तं [illegible] इन्द्रियानिन्द्रियबलाधानात् पूर्वमुपलब्धेऽर्थे नोइन्द्रियप्राधान्यादुत्
पद्यते ज्ञानं तद्यत् ज्ञानं तच्छ्रुतं ईहादिप्रसंग इति चेन्नावग्रहीतमात्रविषयत्वात्स्या
देतदीहादीनामपि श्रुतत्वव्यपदेशः ॥ प्राप्तस्तेऽप्यनिन्द्रियनिमित्ता इति तन्न किं कारणम
वग्रहीतमात्रविषयत्वादिन्द्रियेणावग्रहीतोऽर्थस्तन्मात्रविषया ईहादयः श्रुतं पुन
र्न तद्विषयं तर्हि श्रुतं अपूर्वविषयं एकं घटमिन्द्रियानिन्द्रियाभ्यां निश्चित्यायं घट इति
तज्जातीयमन्यमनेकदेशकालरूपादिविलक्षणमपूर्वमधिगच्छति यत्तच्छ्रुतं नाना
प्रकारार्थप्रकारार्थप्ररूपणपरं यत्तद्वा श्रुतं अथवा इन्द्रियानिन्द्रियाभ्यामेकं जीवमजीवं
चोपलभ्य तत्र सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वादिभिः ॥ प्रकारैरर्थप्ररू

राजवा·
६०

परोक्षत्वेयस्वसमर्थनश्रुतं श्रुत्वावधारणाश्रुतमितिचेन्नमतिज्ञानप्रसंगात्॥ श्रुत्वाप
दंवधारयतितच्छ्रुतमितिकेचिन्मन्यंतेतन्नयुक्तंकुतः मतिज्ञानप्रसंगात्तदपिशब्दंश्रुत्वा
गोशब्दोयमितिप्रतिपद्यतेऽसाधारणेननामलक्षणेनभवितव्यंश्रुतंपुनस्तस्मिन्निं
द्रियगृहीतागृहीतपर्यायसमूहात्मनि॥ शब्देतदभिधेयेचश्रोत्रेंद्रियव्यापारमंतरेण
जीवादौनयादिभिरधिगमोपायैर्योर्थात्मनावबोधः प्रमाणनयैरधिगमइत्युक्तं
तेकेषांचिज्ज्ञानमभिमतंकेषांचित्सन्निकर्षइत्यतोधिकृतानामेवमत्यादीनांप्रमाणत्व
ख्यापनार्थमाह॥ तत्प्रमाणे॥ प्रमाणशब्दस्यकोर्थः भावकर्तृकरणत्वोपपत्तेः॥ प्र
माणशब्दस्येष्टोर्थाध्यवसायः॥ अयंप्रमाणशब्दः॥ भावेकर्त्तरिकरणेचवर्त्तते॥ तत्र
भावेनावत्प्रमेयार्थंप्रतिनिवृत्तव्यापारस्यतत्वकथनात्प्रमाणमिति॥ कर्त्तरिप्रमेया
र्थंप्रतिप्रमातृत्वशक्तिपरिणतस्याश्रितत्वात्तत्प्रमिणोतिप्रमेयमितिप्रमाणंकरणेप्र
मातृप्रमेययोः प्रमाणप्रमेययोश्चस्पदिन्यत्वात्प्रमिणोत्यनेनेतिप्रमाणं॥ अनवस्थेति
चेत्॥ नदृष्टत्वात्प्रदीपवत् स्यान्मतमिदमिहसंप्रधार्यंप्रमाणसिद्धिः॥

नएववेत्तियदियथाप्रमेयसिद्धिःप्रमाणसिद्धिः॥ परतोवास्यात्स्वतएववेत्तियदियथाप्रमेय
सिद्धिःप्रमाणाधीनाएवं॥प्रमाणसिद्धिरपिप्रमाणांतराधीनेतितस्याप्यन्यत्तस्याप्यन्यदि
त्यनवस्था॥अथस्वतएवसिद्धिः एवमपियथाप्रमाणस्यस्वतएवसिद्धिस्तथाप्रमेयस्या
त्मनएवसिद्धिरितिप्रमाणव्यवस्थाकल्पनाप्रकाशकः स्वस्यचतथाप्रमाणमपि इति
अथवायमपरार्थः॥ यदिभावकर्तृकरणानामन्यतमस्साधनःप्रमाणशब्द॥अन
वस्थाप्राप्नोतितर्ह्येकस्मिन्नर्थेनिविरुद्धशक्त्यवस्थानमिति॥ नन्न किंकारणंह्यस्य
त्वात्प्रदीपवद्यथैकस्यप्रदीपस्यप्रदीपयति॥प्रदीप्यतेनेनेति॥वाभावादिशक्त्याऽवि
रोधस्तथाप्रमाणस्यापीतिइतरथाहिप्रमाणव्यपदेशाभावः॥ यदिप्रमाणंस्वस्या
परसंवेद्यत्वात्स्यप्रमाणव्यपदेशोनस्यात्॥ विषयज्ञानतद्धिज्ञानयोरविशेषः वि
शेषः॥विषयाकारपरिच्छेदात्मनिज्ञानेयदिस्वाकारपरिच्छेदोनस्यात्तद्विषयेविज्ञा
नेविषयाकाररूपतेवेतितयोरविशेषःस्यात्स्मृत्यभावप्रसंगश्चनह्यनुपलब्धपू
र्वेऽर्थेसएवायमितिस्मृतिर्भवतियदिचविज्ञानंस्वात्मानंनविजानीयादुत्तरकालमन

राजवा॰
६१

धिगतस्वात्मविज्ञानः॥ कथंब्रूयात्ज्ञोहमितितत्स्थितेरभावः॥ स्यात्फलाभाववृत्तिचे
न्नार्थाववोधेप्रीतिदर्शनात्स्यादेतद्भावसाधनेप्रमाणेप्रमेवप्रमाणमितिनफलमन्यदु
पलभ्यतइतिफलाभाववृत्तितन्नकिंकारणमर्थाववोधेप्रीतिदर्शनात्॥ ज्ञस्वभावस्या
त्मनः॥ कर्ममलीमसस्यकरणालंबनार्थनिश्चयेप्रीतिरुपजायते॥ साफलमित्यु
च्यतेउपेक्षाज्ञाननाशोवारागद्वेषयोरप्रणिधानमुपेक्षा॥ अज्ञानमुपेक्षा॥ अज्ञानना
शोवाफलमित्युच्यतेज्ञातृप्रमाणयोरन्यत्वमितिचेन्नाज्ञप्रसंगात्स्यान्मतंप्रमिणो
त्यात्मानंपरंवाप्रमाणमितिकर्तृसाधनत्वमयुक्तंयस्मादन्यत्प्रमाणंज्ञाने॥ संचगु
णः॥ अन्यश्चप्रमातासासचगुणी॥ गुणिगुणयोश्चान्यत्वंद्रव्यरूपवत्तथाचात्मे
न्द्रियमनोर्थसन्निकर्षाद्यदभिव्यद्यतेतदन्यदितिवचनादन्यत्प्रमाणमन्यःप्रमाताततः
करणसाधनत्वमेवयुक्तमितितन्न॥ किंकारणमज्ञानादन्यत्वात्मनस्याज्ञत्वप्राप्ते
तिघटवत्॥ ज्ञानयोगादितिचेन्नतत्स्वभावत्वेज्ञातृत्वाभावोघटदीपसंयोगवत्स्याद
तद्ज्ञानयोगाज्ज्ञातृत्वंभवतीतितन्नकिंकारणं॥ अतत्स्वभावत्वेज्ञातृत्वाभावः॥ कथम

घप्रदीपसंयोगवद्यथाजात्यंधस्यप्रदीपसंयोगेपिनदृष्टत्वं तथाज्ञानयोगेप्यर्थो
ज्ञौघ्यस्वभावस्यात्मनोनज्ञातृत्वंप्रमाणप्रमेययोरन्यत्वमितिचेन्नानवस्थानात्
स्यान्मतं अन्यत्प्रमाणमन्यत्प्रमेयंकुतः लक्षणभेदाद्घटपटवदितितन्नकिंका
रणं अनवस्थानाद्यदियथावाद्यात्प्रमेयाकारादन्यत्स्यात् अनवस्थास्यस्याप्र
काशवदितिचेन्नप्रतिज्ञाहानेस्तत्रैनत्स्यान्नानवस्थादोषः कथंप्रकाशवद्यथाप्र
काशस्यघटादीनामात्मनश्चप्रकाशस्यनानवस्थादोषः एवमिहापीतितन्नकिंका
रणंप्रतिज्ञाहानेः प्रकाशोहिस्वात्मनोनाशः स्वपरप्रकाशनेसमर्थः प्रदर्श्यमानः
प्रमाणप्रमेययोरन्यत्वप्रतिज्ञांहापयतिअनन्यत्वमेवेतिचेन्नोभयाभावप्रसंगाद्य
द्यनन्यत्वेदोषोनन्यत्वंतर्हिज्ञातृप्रमाणयोःप्रमाणप्रमेययोश्चेतितन्नकिंकारणंउ
भयाभावप्रसंगाद्यदिज्ञातुरनन्यत्प्रमाणंप्रमाणाच्चप्रमेयमन्यतराभावेतदविनाभ
विनोवशिष्टस्याप्यभावद्युभयाभावप्रसंगकथंतर्हिसिद्धिरनेकांतात्सिद्धिःस्यादन्य
त्वंस्यादनन्यत्वंस्यादनन्यत्वमित्यादिसंज्ञालक्षणादिभेदात्स्यादन्यत्वंव्यतिरेकेणानु

नुपलब्धेः स्यादनन्यत्वमित्यादिनतः॥ सिद्धमेतत्प्रमेयंनियमात्प्रमेयंप्रमाणंतुस्यात्प्र
माणंस्यात्प्रमेयमितिवक्ष्यमाणाभेदापेक्षयाद्वित्वनिर्देशः॥ आद्येपरोक्षंप्रत्यक्षमन्य
दितिवक्ष्यतेतदपेक्षयाप्रमाणेइतिद्वित्वनिर्देशः॥ किमर्थंतेतद्वचनंसन्निकर्षादिनिवृ
त्त्यर्थं॥ नन्मत्यादिज्ञानंवर्णितंप्रमाणव्यपदेशंलभन्तेनसन्निकर्षादीनि॥ अथसन्नि
कर्षादिप्रमाणेकोदोषः॥ सन्निकर्षेप्रमाणेसकलपदार्थपरिच्छेदाभावस्तदभावा
द्यस्यमतेसन्निकर्षः प्रमाणमर्थाधिगमः फलमितितस्यसकलपदार्थपरिच्छेदो
नास्तिकुतस्तदभावात्तस्यसन्निकर्षस्याभावात्कथमितिचेदुच्यतेयेनकेनचित्सर्वज्ञे
नभवितव्यंतस्यार्थपरिच्छेदहेतुर्यदिसन्निकर्षः॥ स्वचतुष्टयत्रयविषयः॥ स्यात्त
त्रचतुष्टयविषयस्त्रयविषयश्चनसंभवतिमनसइंद्रियाणांवायुगपत्प्रवृत्तिर्ल्वात्प्र
तिनियतविषयत्वाच्चानंतोहिज्ञेयस्त्रिकालविषयः॥ सूक्ष्मांतरितविप्रकृष्टरूपः
सकथमिंद्रियैः सन्निकृष्यते॥ असंनिकृष्टेनतत्फलमवबोधः प्रवर्तते॥ अतःसर्व
ज्ञाभावः स्यात्ततएवद्वयसंनिकर्षोपिनभवति सर्वगतत्वादात्मनः सकलेनार्थे

नसन्निकर्षइतिचेन्नतस्यपरीक्षायामनुपपत्तेः॥यदिहिसर्वगतआत्मास्यात्तस्यक्रि
याभावात्पुण्यपापयोः॥कर्तृत्वाभावेतत्पूर्वकसंसारस्तदुपरतिरूपश्चमोक्षोनयो
ष्यतइतिकरणग्रामस्यसंसारइतिचेन्नतस्याचेतनत्वात्स्येवमोक्षप्रसक्तेश्चसर्वे
न्द्रियसन्निकर्षाभावश्चउपरिष्टाद्वक्ष्यतेसर्वथाग्रहणप्रसंगश्चसर्वात्मनासंनिकृ
ष्टत्वाद्घ्राणेंद्रियाणिप्राप्यकारीणितैरपिसर्वथार्थस्यग्रहणंप्राप्नोतिकुतः॥सर्वा
त्मनासंनिकृष्टत्वात्तत्फलस्यसाधारणत्वप्रसंगः॥स्त्रीपुरुषसंयोगवत्तस्यसंनि
कर्षस्यप्रमाणस्ययत्फलमर्थावबोधनंतेनचसाधारणेनभवितव्यंकथंस्त्रीपुरु
षसंयोगवद्यथास्त्रीपुरुषसंयोगजंसुखमुभयोरपिसाधारणंतथेंद्रियाणांमन
सोर्थस्यभावबोधनंप्राप्नोतिशय्यावदितिचेन्नाचेतनत्वात्॥स्यान्मतंयथाशय्यादी
नांपुरुषस्यचसंयोगेसाधारणेपितत्फलंसुखंनशय्यादीनांभवतिकिंतर्हिपुरुष
स्यैवेतितथेहापीतितन्नकिंकारणमचेतनत्वादचेतनानांशय्यादीनांसत्यपिसंयो
गेसुखंनभवति॥इहापितन्नएवेतिचेन्नाविशेषात्स्यादेतन्मनः॥प्रभृतीनांसत्यपि

सन्निकर्षेन तत्फलमवबोधनं भवति कुतो चेतनत्वादेवेति तन्न किं कारणं अविशे
षात् ज्ञस्वभावत्वेनात्मनः सर्वेषामात्मादीनामविशिष्टं तत्र किं कृतोयं विशेषः सन्नि
कर्षफलमवबोधनमर्थान्तरभूतमपि सदात्मन्येव संबध्यते न मनः प्रभृतिभिरिति
।ज्ञस्वभावत्वे चात्मनः॥ प्रतिज्ञाहानिः॥ समवायादिति चेन्नाविशेषात् स्यादेतत् सम
वायो नामायुतसिद्धिलक्षणः संबंधोस्ति तत्कृतोयं विशेष इति तन्न किं कारणं
मविशेषात् समवायो हि सर्वगतः॥ ज्ञस्वभावशून्यत्वे समानेपि आत्मन्येव ज्ञानं योजय
ति न मनःप्रभृतिभिरिति वचनं न विपश्चिन्मनः॥ प्रीतिकरं एवमिंद्रियेपि योज्यं अ
नुमानोपम्ययोरनुमानागमयोरनुमानप्रत्यक्षयोरौपम्यप्रत्यक्षयोरौपम्यागा
मप्रत्यक्षयोः॥ प्रत्यक्षपरोक्षयोश्च विपर्ययप्रसंगे मत्यादीनां मे विशेषणाप्रमा
णार्थमाह ॥ आद्ये परोक्षं ॥ आदिशब्दस्यानेकार्थवृत्तित्वे विवक्षातः तत्राद्यस्या
र्थसंग्रहः आयमादिशब्दोनेकार्थवृत्तिः क्वचित्प्राथम्ये वर्त्तते अकारादयो वर्णा
ऋषभादयस्तीर्थकरा इति क्वचित्प्रकारे भुजंगादयः॥ परिहर्त्तव्या इति॥ क्वचिद्व्यव

स्यायां सर्वादि सर्वनामेति ॥ क्वचित्सामीप्येऽनन्वादीनि क्षेत्राणीति क्वचिदवयवे दिदा
दिरिति ॥ नन्वेहादिशब्दस्य विवक्षातः ॥ आद्यस्यार्थो वेदितव्यः ॥ आदौ भवमाद्यं किं प्र
नस्तन्मतिः श्रुतानुग्रहणमप्रथमत्वाच्छ्रुतस्य ग्रहणं न प्राप्नोति कुतः ॥ अप्रथमत्वान्
हि सूत्रे श्रुतं प्रथमं ॥ उत्तरापेक्षया दित्वमिति चेन्नातिप्रसंगात्तस्यान्मतं ॥ अवध्यापु
त्तरमपेक्ष्य श्रुतस्यादित्वमिति तन्न ॥ किं कारणमतिप्रसंगादुत्तरमपेक्ष्य यथादि
त्वं कल्प्यते केवलेः श्रुदस्य सर्वस्यादित्वं प्राप्नोति हि त्वनिर्देशादिति चेन्न तदवस्थत्वा
त् स्यादेतद्धि त्वनिर्देशेन सर्वग्रहणं भवति अतो नातिप्रसंग इति तन्न किं कारणं त
दवस्थत्वादेवमप्यतिप्रसंग एव भवति कयोर्द्वयोर्ग्रहणमिति न वा प्रत्यासत्तेः श्रु
तग्रहणं न वा एष दोषः ॥ किं कारणं प्रत्यासत्तेः श्रुतग्रहणं भवति हि त्वनिर्देशाद्
त्नमारोपयदाद्यस्य प्रत्यासन्नं तदेव गृह्यते तस्य हि सामीप्यादौपचारिकं प्राथम्यम
स्तीति तथा सामीप्यं श्रुतेरर्थाच्च ॥ उपान्तात् उपान्तपरस्य प्राधान्यादवगमः ॥ परोक्षं उ
पान्तानीन्द्रियाणि मनश्चानुपात्तं प्रकाशोपदेशादि तत्प्राधान्यादवगमः ॥ परोक्षं

रुपात्तानींद्रियाणिमनश्चानुपात्तंप्रकाशोपदेशादिनत्प्राधान्यादवगमः॥ परोक्षं॥
यथागतिशक्त्यापेतस्यापिस्वयमेवगंतुमसमर्थस्ययष्ट्याद्यवलंबनप्राधान्यंगमनं
तथामतिश्रुतावरणक्षयोपशमेसतिज्ञस्वभावस्यात्मनः॥ स्वयमेवार्थानुपलब्धु
मसमर्थस्यपूर्वोक्तप्रत्ययप्रधानं॥ ज्ञानंपरायत्तत्वात्तदुभयंपरोक्षमित्युच्यते॥ अ
तएवप्रमाणत्वाभावइत्यनुपालंभः॥ अत्रान्यउपालभंतेपरोक्षंप्रमाणंनभवति
प्रमीयतेनेनेतिहिप्रमाणं॥ नचपरोक्षेणकिंचित्प्रमीयतेपरोक्षत्वादेवेतिसउपा
लंभः कुतः अतएवयस्मात्परायत्तंपरोक्षमित्युच्यतेनानवबोधइति॥ अभिहि
तलक्षणात्परोक्षादितरस्यसर्वस्यप्रत्यक्षत्वप्रतिपादनार्थमाह॥ प्रत्यक्षमन्य
त्॥ अन्यत्त्रिविधंप्रत्यक्षमित्युच्यते॥ किमिदंप्रत्यक्षंनामइंद्रियानिंद्रियानपेक्ष
मतीतव्यभिचारंसाकारग्रहणंप्रत्यक्षंइंद्रियाणिचक्षुरादीनिपंचानींद्रियंमनः
तेष्वपेक्षायस्यनविद्यतेअतस्मित्तदितिज्ञानंव्यभिचारः॥ सोतीतोस्याकारोविक
ल्पः यत्सहाकारेणवर्त्ततेतत्प्रत्यक्षमित्युच्यतेइंद्रियानिंद्रियानपेक्षमितिविशे

षरां मतिश्रुतनिवृत्त्यर्थं ज्ञानं तदव्यभिचारमित्येतन्नहि भंगज्ञाननिवृत्त्यर्थो ॥ नहि मिथ्या
दर्शनोदयाद्व्यभिचरतीति साकारग्रहणमित्येतदवधिकेवलदर्शनव्युदासार्थं
मनाकारं हि तदिति किं गतमेतदियता सूत्रेण ॥ हे॰ द्विधैवं वक्तव्यमिति गतं प्रतिप
न्नं कथमिति चेदुच्यते ॥ अक्षं प्रतिनियतमिति परापेक्षानिवृत्तिः ॥ अक्ष्णोति व्या
प्नोति जानातीति ॥ अक्ष आत्मा तमक्षायोपशमः ॥ प्रक्षीणावरणो वा तमेव प्रति
नियतं प्रत्यक्षमिति विग्रहात्परापेक्षानिवृत्तिः कृता भवति ॥ अधिकारादनाकार
व्यभिचारव्युदासः ॥ अधिकृतमेतत्ज्ञानं सम्यगिति च ततोऽनाकारस्य दर्शनस्य व्य
भिचारिणो ज्ञानस्य च व्युदासः ॥ कृतो भवति करणात्ययेऽग्रहणाभाव ॥ इति चेन्न दृष्ट
त्वात् ॥ सर्वतः स्यादेतत्करणात्ययेऽर्थस्य ग्रहणं न प्राप्नोति ॥ नह्यकरणस्य कस्यचिद्ज्ञा
नं दृष्टमिति तन्न किं कारणं दृष्टत्वात् कथमीशवद्यथा रथस्य कर्त्ता ईशः ॥ उपक
रणापेक्षो रथं करोति स न तदभावेन शक्तोऽयः ॥ पुनरीशस्तपोविशेषात्परिप्राप्तर्द्धि
विशेषः ॥ स बाह्योपकरणानपेक्षः स्वशक्त्यैव रथं निर्वर्त्तयन् प्रतीतस्तथा

राजवा·
६५

कर्मलीमसः आत्माक्षायोपशमिकेंद्रियानींद्रियप्रकाशाद्युपकरणापेक्षार्थान्संवेत्ति
॥क्षयोपशमविशेषक्षयेचसतिकारणानपेक्षः॥ स्वशक्त्यैवार्थान्वेत्तीति
कोविरोधः॥ ज्ञानदर्शनस्वभावत्वाच्चभास्करादिवत्॥ यथाभास्करादयः प्रकाशस्वभा
वत्वात्प्रकाशांतरानपेक्षाःप्रकाश्यानर्थान्प्रकाशयंतितथाज्ञानदर्शनस्वभावःआ
त्मातदावरणक्षयोपशमशेषेसतिस्ववशात्स्वैवार्थानाविष्करोतीति सिद्धं इंद्रियमि
तेज्ञानंप्रत्यक्षंतद्विपरीतंपरोक्षमित्यविसंवादिलक्षणमितिचेन्नाप्तस्यप्रत्यक्षा
स्यात्मतमिंद्रियव्यापारजनितंज्ञानंप्रत्यक्षंव्यतीतेंद्रियविषयव्या
त्येतदविसंवादिलक्षणंतथाचोक्तं प्रत्यक्षंकल्पनापोढंनामजा
त्यादर्शैरव्यपदिश्यते इंद्रियार्थसन्निकर्षोत्पन्नं
ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकःआत्मेंद्रियमनोर्थसंनिकर्षाद्य
न्निष्पद्यतेतदन्यच्छ्रोत्रादिवृत्तिः॥ प्रत्यक्षंसत्संप्रयोगेपुरुषस्येंद्रियाणांबुद्धि
जन्मतत्प्रत्यक्षमितिचसर्वैरभ्युपगम्यतेःअतएवतल्लक्षणमविसंवादित्वेन

व्यमितितन्नकिंकारणं आप्तस्यप्रत्यक्षाभावप्रसंगात् ॥ यदीन्द्रियनिमित्तमेवज्ञानं
प्रत्यक्षमिष्यते ॥ एवंसत्याप्तस्यप्रत्यक्षज्ञानंनस्यात् ॥ नहितस्येन्द्रियपूर्वोर्थाधिग
मोयतस्यापिकरणपूर्वकमेवज्ञानंकल्प्यते ॥ तस्यासर्वज्ञत्वेपुरस्तादुक्तं ॥ आगमा
दितिचेन्नतस्यप्रत्यक्षज्ञानपूर्वकत्वात् स्यादेतदागमादतीन्द्रियार्थाधिगमेव्याहत
शक्तेसर्वार्थावबोधइतितन्नकिंकारणंतस्यप्रत्यक्षज्ञानपूर्वकत्वात् तेनहिक्षी
णदोषेणप्रत्यक्षज्ञानेनप्रणीतआगमोभवतिनसर्वः यदिसर्वः स्याद्विशेषः स्या
त्सचनास्तीत्यागमस्यप्रामाण्याभावः ॥ अपौरुषेयादितिचेन्नतदसिद्धेः ॥ स्यादेत
दपौरुषेयआगमोस्तिअनादिनिधनः ॥ अत्यंतपरोक्षेष्वप्यर्थेष्वप्रतिहतगतिस्ततः
सर्वार्थाधिगमइतितन्नकिंकारणंतदसिद्धेः नचकश्चिदागमोपौरुषेयः ॥ सिद्धोस्ति
हिंसादिविधायिनः प्रामाण्यासिद्धेः ॥ अतीन्द्रियंयोगिप्रत्यक्षमितिचेन्नार्थाभावात्तस्या
न्मतेयोगिनोतीन्द्रियंप्रत्यक्षंज्ञानमस्ति ॥ आगमविकल्पातीतंतेनासौ ॥ सर्वानर्थान्प्रत्य
क्षंवेत्ति ॥ उक्तंच ॥ योगिनांगुरुनिर्देशाद्व्यतिभिन्नार्थमात्रदृक् इतितन्नकिंकारणंअ

र्थाभावादक्षमक्षंप्रतिवर्त्तत इति प्रत्यक्षं न चायमर्थो योगिनि विद्यते ऽक्षाभावादथवा
नसंतिसर्वेभावाः स्वपरोभयहेत्वहेतुभ्यउत्पत्त्याद्यभावात्सामान्यविशेषयोश्चैकानेक
योर्दृष्टस्यसंभवादिदोषपपत्तेरतोर्थाभावान्निरालंबनंयोगिनोज्ञानंकथंस्यात्परिकल्पिता
त्मनानसंतिभावानिर्विकल्पात्मनासंतीतिचायुक्तंतदधिगमोपायाभावान्नहिनिर्विक
ल्पोर्थोस्तितद्विषयंज्ञानंचेतिप्रतिपादयितुंशक्यंलक्षणाभावात्तदभावाच्चनस्ययोगि
नोभावाच्च नहिकश्चित्तत्परिकल्पितायोगीविद्यतेविशेषलक्षणाविरहात्सर्वविर
हाच्चनिर्वाणप्राप्तौतत्रैतस्यान्निर्वाणंहिद्विविधंसोपधिविशेषनिरुपधिविशेषंचेति
तत्रसोपधिविशेषनिर्वाणेबोद्धास्तीतत्रापियथाबाह्यस्याभावः कल्पतेः तैरन्तथा
भ्यंतरस्यापीति बोद्धुरभावएवयोगजधर्मानुग्रहादात्माकरणाविरहितोप्यवैतीतिचे
न्नतस्यनिः क्रियस्यनित्यस्यसतस्तत्क्रियातदनुग्रहविकाराभावात्तल्लक्षणानु
पपत्तेश्चस्ववचनव्याघातात्तस्यप्रत्यक्षस्योक्तंलक्षणमयिनोपपद्यतेः कुतः स्व
वचनव्याघातादन्यापोहिकप्रतिविहितान्येवशेषप्रमाणलक्षणानिततस्तत्रनोना

तितरांप्रतिविधानादरः॥ किंतुतत्प्रमाणलक्षणगतासंभावनातिरस्कारार्थंकिंचिद्व्या
प्रियामहेयदुक्तंकल्पनापोढंप्रत्यक्षमितिकल्पनाहिजातिद्रव्यगुणक्रियापरिभाषा
कृतोवास्वबुद्धिविकल्पस्ततोपोढंकल्पनापोढंकिंतत्सर्वथाकल्पनापो — मुताहोक
थंचिदितियदिसर्वथास्तिप्रमाणंस्यान्नकल्पनापोढमित्येवमादिकल्पनाभ्योप्यपोढ
मित्यस्यादिवचनव्याघातः अथास्त्यादिकल्पनाभ्योनपोढमिष्यते॥ सर्वथाकल्प
नापोढमितिवचनव्याघातः॥ अथकथंचित्कल्पनापोढमेकांतवादत्यागात्पुनरपि
स्वपिस्ववचनव्याघातएव॥ अथमतं॥ नास्माकमेकांतः कल्पनापोढमेवेतिकिम
र्थंतर्हिविशेषणंपरमतापेक्षंविशेषणंपरमतेहिनामजात्यादिभेदोपचारकल्प
नाप्रोक्ता ततोपोढंनस्वविकल्पादिति॥ उक्तंच॥ सवितर्कविचाराहिपंचविज्ञानधा
तवः॥ निरूपणानुस्मरणविकल्पनविकल्पकाइति॥ अत्रोच्यते॥ आलंबनेअर्पणा
वितर्कस्तत्रैवानुमर्षणंविचारस्तस्यनामादिभिः॥ प्रकल्पनानिरूपणंपूर्वानुभू
तानुसारेणविकल्पनमनुस्मरणमित्यतेधर्माः॥ क्षणमात्रावस्थानेष्वक्षविषयवि

ज्ञानेषुनिरन्वयेषुनोपपद्यंते। युगपदुत्पत्तेरनवस्थानाच्चातोग्राह्यग्रहणाभावाभाव
श्चस्यात्सव्येतरगोविषाणवत्। क्रमवृत्तित्वेचतेषांस्वार्थाभावप्रसंगश्चेतिसंताना
द्यपेक्षयातदुपपत्तिरितिचेन्नतत्परीक्षाक्षमत्वादतः। सर्वस्मिन्नसतिविकल्पेऽयं
विकल्पोऽस्त्ययंनास्तीतिविज्ञानस्यविवेकोनोपपद्यतेसर्वविकल्पविरहाच्चनास्ति
त्वमेवास्यस्यात्। अनुस्मरणाभ्युपगमेचएकस्यानेकक्षणवृत्तित्वोवस्तुनोस्ति-
त्वंसिद्धमनुस्मरणादिहिस्वयमनुभूतस्यार्थस्यदृष्टंनाननुभूतस्यनान्यानुभूतस्येति
तथामानसमपिप्रत्यक्षंनोपपद्यते। अपिचषण्णामनंतरातीतंविज्ञानंयद्धितन्म
नइति। अतीतमसत्कथंविज्ञानस्यकारणंस्यात्। अथपूर्वोत्तरनाशोत्पत्त्योर्युग
पद्वृत्तेः कार्यकारणभावः। कल्प्यतेभिन्नसंतानयोरपिविनश्यदुत्पद्यमानयोः का
र्यकारणभावःस्यात्। एकसंतानेशक्त्यनुमाभ्युपगमेप्रतिज्ञाहानिश्चस्यादपूर्वाधि
गमलक्षणानुपपत्तिश्चसर्वस्यज्ञानस्यप्रमाणत्वोपपत्तेरपूर्वाधिगमलक्षणंप्र
माणमित्येतच्चनोपपद्यतेकुतः। सर्वस्यज्ञानस्यप्रमाणत्वोपपत्तेः। प्रमीयतेनेनै

न्तिप्रमाणंसर्वेणाचज्ञानेनप्रमीयतेयथांधकारेवस्थितानामुत्पत्त्यनंतरंप्रकाशःप्र
दीपः। उत्तरकालमपिनतंव्यपदेशंजहातितद्वस्थानकारणत्वादेवंज्ञानमुत्पत्त्यनं
तरंघटादीनामवभासकंभूत्वाप्रमाणत्वमनुभूयोत्तरकालमपिनतंव्यपदेशंत्यजति
तदर्थत्वात्। अथमतंक्षणेक्षणेऽन्यएवप्रदीपः। अपूर्वमेवप्रकाशकत्वमवलंब
त इति। एवंसतिज्ञानमपितादृगेवेतिक्षणेक्षणेऽन्यत्वोपपत्तेरपूर्वाधिगमलक्षणमविशि
ष्टमिति। तत्रयदुक्तंस्मृतीच्छाद्वेषादिवत्पूर्वाधिगतविषयत्वात्पुनः। पुनरपिविधा
नंज्ञानंप्रमाणमितितन्न्याहन्यते। स्वसंवित्तिफलानुपपत्तिश्चार्थांतरत्वाभावात्प्रमा
णंलोकेफलवदुपलब्धं। अस्यचप्रमाणस्यकेनचित्फलेनभवितव्यमिति। कश्चि
दाह। द्व्याभासंहिज्ञानमुत्पद्यते। स्वाभासंविषयाभासंच। तस्योभयाभासस्ययत्संवे
दनंतत्फलमिति। तन्नोपपद्यते। कुतः। अर्थांतरत्वाभावात्। लोकेप्रमाणात्फलमर्था
न्तरभूतमुपलभ्यते। तद्यथाछेत्तृच्छेत्तव्यच्छेदनसंनिधानेद्वैधीभावः। फलंनचतथा
स्वसंवेदनमर्थांतरभूतमस्तितस्मादस्यफलत्वंनोपपद्यते। सत्यमेवमेतत् अतएव

तस्मिन्नधिगमरूपे फलेसव्यापारप्रतीततात्तपाधायप्रमाणोपचारइतिप्रमाणोप
चारानुपपत्तिर्मुख्याभावात्सतिमुख्येलोकेउपचारोदृश्यतेयथासतिसिंहेविशिष्ट
तिर्यग्गतिपंचेंद्रियजातिनखदंष्ट्राकेसरोपभासुरकपिलनयननारकाद्यवयववि
शिष्टेऽन्यत्रक्रौर्यशौर्यादिगुणसाधर्म्यात्सिंहोपचारः॥क्रियतेनचतथेहमुख्यं
प्रमाणमस्तितदभावात्फलेप्रमाणोपचारोनयुज्यते॥आकारभेदाद्भेदइतिचेन्न
एकांतवादत्यागात्स्यादेतद्ग्राहकविषयाभाससंवित्तिशक्तित्रयाकारभेदात्प्रमा
णप्रमेयफलकल्पनाभेदइतितन्नकिंकारणंएकांतवादत्यागात्एकमनेकाकारमि
ष्यतेतर्हिभेददर्शनंतत्कथमेकांतवादेयुज्यतेयदिह्येवमभ्युपगम्यतद्रूपेकोपरितोषः
रूपाद्यनेकात्मकमेकंपरमाणुद्रव्यंज्ञानाद्यनेकात्मद्रव्यमिति॥अथद्रव्यसिद्धिर्म्मा
भूदिति आकाराएवनज्ञानमितिकल्प्यतेएवंसतिकस्यतेआकाराइतितेषामप्य
भावः॥स्यात्किंचतेषामाकाराणांयौगपद्येनवाउत्पत्तिः॥स्यात्क्रमेणवा॥यदियौ
गपद्येनहेतुहेतुमद्भावोविरुध्यतेअथक्रमेणक्षणिकस्यविज्ञानस्याकाराणां

कथंक्रमः। यदिस्यादधिगमस्त्वात्रनभावात्तरमितिव्याहन्यते। अपिचवा ह्यस्यवि
ज्ञेयस्याभावेंतरंगाकारत्रयकल्पनायांप्रमाणाप्रमाणाभासौनोपपद्यते। अंतरंगा
काराभेदात्सद्वस्तुयस्सदितिकल्पयतितत्प्रमाणाभासमसद्वेतियत्प्रतिपद्यते
तत्प्रमाणमित्यस्तिविशेषइतिचेत्प्रमेयद्वयव्यवस्थापितप्रमाणद्वयकल्पनाव्या
घातः। स्वलक्षणविषयंहिप्रत्यक्षंसामान्यलक्षणविषयमनुमानंस्वलक्षणमसा
धारणोधर्मः। विकल्पातीतत्वादिदंतदित्यव्यपदेश्यं। तद्विपरीतंसामान्यलक्षण
मितिसर्वस्यासत्वे किंकृतोयंविशेषः। असत्वंहिनस्वतोभिद्यतेसंबंधिभेदाश्रयाइदं
घटस्यासत्वंपटस्यासत्वमितितेषांघटादीनांसंबंधिनामभावेतद्विशेषाभावइतिस्या
न्मतंख्यास्यतितानोरलदृष्टिरिष्टमेवाप्रतर्कितमुपस्थितमतएवसर्वेविज्ञानाभिधा
नमयथार्थंपरिकल्पितार्थत्वान्निर्विकल्पार्थगोचरमात्मीयमेवविज्ञानंप्रमाणमि
ति उक्तंच शास्त्रेषुप्रक्रियाभेदैरविद्यैवोपवर्ण्यते। अनागमविकल्पाहिस्वयंविद्या
प्रवर्त्ततइति एवंचानुपपन्नंतदधिगमोपायाभावात्। उक्तंच प्रत्यक्षबुद्धिः क्रम

राजवा॰
६८

नयत्रतह्लिंगगम्यंननदर्थोलिंगेवाचोनवानाद्विषयेणायोगः। कातन्नति ॥ कष्टमस्ट
एवतस्तेइत्याहितोभयप्रकारस्यप्रमाणस्यादिप्रकारविशेषज्ञतिपत्त्यर्थमाह ॥ मतिः
स्मृतिःसंज्ञाचिंताभिनिबोधइत्यनर्थांतरं ॥ इतिशब्दस्यानेकार्थसंभवेविवक्षाव
शादाद्यर्थसंप्रत्ययः। इतिशब्दोनेकार्थः। संभवतिक्कचिद्धेतौवर्त्तते हेतीतिपलाय
नवर्षतीतिधावति। क्कचिदेवमित्यस्यार्थेवर्त्ततेइतिस्मनुपाध्यायः। कथयतिएवंस्म
इतिगम्यते। क्कचित्प्रकारेवर्त्ततेयथागौरश्वः। शुक्लोनीलस्वरतिल्लवतेजिनदत्तोदे
वदत्तइतिएवंप्रकाराइत्यर्थः। क्कचिद्व्यवस्थायांवर्त्ततेयथाहलितिकसेतान्नोइति
क्कचिदर्थविपर्यासेवर्त्ततेयथागौरित्ययमाहगौरितिजानीतइति। क्कचित्समाप्तौव
मितिद्विती यमाह्निकमिति। क्कचित्शब्दप्रादुर्भावेवर्त्ततइतिश्री
दत्तमितिसिद्धसेनमितितत्रेहविवक्षावशादादिशब्दार्थोवेदितव्यः। मतिस्मृतिसंज्ञा
चिंताभिनिबोधादयइत्यर्थः। केपुनस्तेप्रतिभाबुद्धिउपलब्ध्यादयः। प्रकारेवाएवंप्र
काराइति। कथमेषांशब्दानामनर्थांतरत्वंमतिज्ञानावरणक्षयोपशमनिमित्तार्थी

ब्रिविषयत्वादनर्थांतरत्वं रूढिवशादेतेषां मत्यादीनां शब्दानां मतिज्ञानावरणक्षयो
पशमनिमित्तायामर्थोपलब्धौ वृत्तेरनर्थांतरत्वं वेदितव्यं कथं पुनर्मननं मन्यत इति
वा मतिरित्येवमाद्यर्थविषयाणामेषामनर्थांतरत्वमित्यत आह रूढिवशादिति यथा
गच्छतीति गौरित्यंगीकृतमपि गमनेन शब्दवृत्तिनियमकारणं रूढिवशात्क्वचिदेव वर्त्त
ते तथा मत्यादयः ॥ शब्दाप्रवृत्तिकर्म्मणि सत्यप्यपर्यायेणाभेदे क्वचिदेव वर्त्तत इत्यन
र्थांतरत्वमवसीयते शब्दभेदादर्थभेदो गवाश्वादिवदिति चेन्नातः संशयात्स्यादेतन्म
त्यादीनां शब्दानां परस्परतोऽर्थांतरत्वमस्ति कुतः ॥ शब्दभेदाद्गवाश्वादिवदिति तन्न
किं कारणमतः ॥ संशयाद्यत एव मत्यादीनां शब्दभेदादन्यत्वमाह भवानत एव संशयः
कथमिन्द्रादिवदर्थैकत्वं शक्रपुरंदरादिशब्दभेदेऽपि नार्थभेदस्तथा मत्यादिशब्दभेदेऽप्य
र्थाभेद इति ॥ नहि यत एव संशयस्तत एव निर्णयः ॥ किंच शब्दाभेदेऽप्यर्थैकत्वप्रसंगा
द्यस्य शब्दभेदोऽर्थभेदे हेतुरिति मतं तस्य वागादिनवार्थेषु गोशब्दाभेददर्शनाद्वागाद्य
र्थानामेकत्वमस्तु अथ नैतदिष्टं न तर्हि शब्दभेदोऽन्यत्वस्य हेतुः ॥ किंच आदेशव

चनाद्यर्थेन्द्रादीनामेकद्रव्यपर्यायादेशात्स्यादेकत्वंप्रतिनियतपर्यायार्थादेशात्स्यान्
न्यत्वंइंदनादिंद्रः शकनाच्छक्रः। पूर्दारणात्पुरंदरइतितथामत्यादीनामेकद्रव्यपर्याया
देशात्स्यादेकत्वंप्रतिनियतार्थपर्यादेशात्स्यान्नानात्वं। मननंमतिः स्मरणंस्मृतिः
संज्ञानंसंज्ञा चिंतनंचिंता। अभिमुख्येननियतंबोधनमभिबोधइति पर्यायशब्दोल
क्षणंनेतिचेन्न। ततोनन्यत्वात्। स्यान्मतंमत्यादयअभिनिबोधपर्यायशब्दानाभिनि
बोधस्यलक्षणंमनुष्यादिवद्यथामनुष्यमर्त्यमनुजमानवादयः पर्यायशब्दाः म
नुष्यस्यलक्षणंनभवंतीतितन्नकिंकारणंततोनन्यत्वादिहपर्यायिणोनन्यपर्याय
शब्दः। सलक्षणंकथमौष्ण्याग्निवद्यथापर्यायशब्दः। उष्णमग्नेः पर्यायिणोनन्यत्वा
दग्नेर्लक्षणंभवतितथापर्यायशब्दामत्यादयः। आभिनिबोधिकज्ञानपर्यायिणोन
न्यत्वेनाभिनिबोधस्यलक्षणं। अथवाततोन्यत्वात्। यथामनुष्यमर्त्यमनुजमानवा
दयः। असाधारणत्वादन्यघटादिद्रव्यासंबंधिनोमनुष्यादनन्यत्वात्तस्यलक्षणं।
अन्यथाहिमनुष्यादिपर्यायालक्षणत्वान्मनुष्यभावोभवेद्यतोनमनुष्यादिलक्षणा

व्यतिरेकिरणस्यान्मल्लक्षणमस्तीतिनचाभावइष्यतेतः॥पर्यायशब्दोलक्षणं॥तथाम
तिस्मृत्यादयः॥असाधारणत्वादन्यत्रानासंभविनः॥अभिनिबोधादनन्यत्वात्तस्यल
क्षणमितश्चपर्यायशब्दोलक्षणं कस्मात्कृत्वाप्रत्यागतलक्षणग्रहणात्कथमत्र
वध्यथाग्निरितिगत्वाज्ञात्वाबुद्धिरुष्णपर्यायशब्दंगच्छतिकथंगच्छतिकोयमग्निर्यउष्ण
इतिउष्णइतिचत्वाबुद्धिः प्रत्यागच्छतिकोयमुष्णः॥योग्निरितितथामतिरितिगत्वाबु
द्धिः॥स्मृतिंगच्छतिकामतिर्यास्मृतिरिति॥ततः स्मृतिरितिगत्वाबुद्धिःप्रत्यागच्छतिकास्मृ
तिर्यामतिरित्तिएवमुत्तरेष्वपितस्मात्कृत्वाप्रत्यागतलक्षणग्रहणात्पश्यामः॥पर्याय
शब्दोलक्षणमिति॥किंच पर्यायहेतुविध्यादग्निवध्यथाग्नेरात्मभूतउष्णपर्यायोलक्ष
णंनधूमस्तस्यबाह्येंधननिमित्तत्वेकादाचित्कत्वात्तथाआभ्यंतरोमत्यादिपर्यायआ
त्मभूतत्वाल्लक्षणंनानात्मभूतोबाह्योमत्यादिशब्दः॥उक्तः॥तत्प्रत्यायनसमर्थस्त
स्यबाह्यकरणप्रयोगनिमित्तत्वादितिकरणस्यवाभिधेयार्थत्वादथवाइतिकरणो
यमभिधेयार्थः॥प्रयुज्यते मतिःस्मृतिःसंज्ञाचिंताभिनिबोधइतियोर्थोभिधीयते

तन्मतिज्ञानमितिततोलक्षणत्वमुपपद्यते।स्मृत्यादीनामेतैरनभिधानान्नह्येतैर्मत्यादिभिः
स्मृत्यादीन्यभिधीयंते।वक्ष्यमाणलक्षणसद्भावात्स्मृत्यादीनांहिलक्षणंवक्ष्यतेततस्तेषा
मत्यप्रसंगः।यदेवंलक्षणंमतिज्ञानमवधियते।अथास्यात्मलाभेकिंनिमित्तमित्यतआ
ह॥तदिंद्रियानिंद्रियनिमित्तं॥अथवाआत्मप्रसादाविशेषात्सर्वज्ञानानामेकत्व
प्रसंगेनिमित्तभेदान्नानात्वंप्रतिपिपादयिषन्नवीतिसत्यप्यत्रस्मिन्नविशेषेपृथक्
मेयामवेमः।कुतः।यस्मात्तदिंद्रियानिंद्रियनिमित्तमितिकिमिदमिंद्रियंनामइंद्रिय
स्यात्मनोर्थोपलब्धिलिंगमिंद्रियं।इंद्रआत्मातस्यकर्ममलीमसस्यस्वयमर्थान्गृहीतु
मर्थस्यार्थोपलंभनेयल्लिंगंतदिंद्रियमित्युच्यते।अथकिमिदमनिंद्रियम: निंद्रियं
मनोनुदरावत्।मनोतःकरणमनिंद्रियमित्युच्यते।कथमिंद्रियप्रतिषेधेनमनउच्य
ते यथायमब्राह्मणइत्युक्तेब्राह्मणत्वरहितेकस्मिंश्चित्संप्रत्ययोभवति।तथाइंद्रलिं
गविरहितेन्यस्मिन्ननिंद्रियमितिसंप्रत्ययः स्यात्तन्नविंद्रलिंगएवमनसिनैषदोषः ई
षत्प्रतिषेधात्।कथमनुदरावद्यथानुदराकन्याइतिनास्याउदरनविद्यतेकिंतुगर्भ

भारोद्वहनसमर्थोदराभावादनुदरा तथानिंद्रियमितिनास्येंद्रियत्वाभावः। किंतुच
क्षुरादिवत्प्रतिनियतदेशविषयावस्थानाभावादनिंद्रियंमनइत्युच्यते। अंतरंगंत
त्करणमिंद्रियानपेक्षत्वान्नास्येंद्रियेष्वपेक्षास्तीतींद्रियानपेक्षंनह्यस्यकरणादोषवि
चारस्वविषयप्रवृत्तौइंद्रियापेक्षास्तितनोतरंगंतत्करणमितिवेदितव्यंतदुभयम
वष्टभ्ययदुत्पद्यतेतन्मतिज्ञानं। तदित्यग्रहणमनंतरत्वादितिचेन्नोत्तरार्थत्वात्
स्यादेतन्मतिज्ञानस्यानंतरत्वादनेनाभिसंबंधोभवतीतितदित्येतद्ग्रहणमनर्थकमि
तितन्नकिंकारणंउत्तरार्थत्वादुत्तरार्थंह्येतत्। इतरथाह्यवग्रहेहावायधारणा
मतिज्ञानभेदाइतिविज्ञातुमशक्यमतद्ग्रहणेपुनः। क्रियमाणेतन्मतिज्ञानमवग्र
हादयइतिसंबंधः। सुगमोभवति। यदेतस्मिन्निमित्तद्वयसंनिधानेसत्यात्मला
भेप्रत्यागूर्णं। अनिवर्णितभेदमितितद्भेदप्रतिपत्त्यर्थमाह। अवग्रहेहावायधा
रणाः॥ विषयविषयिसन्निपातसमनंतरमाद्यग्रहणमवग्रहः। विषयविषयिस
न्निपातेदर्शनंभवतितदनंतरमर्थस्यग्रहणमवग्रहः। अवगृहीतेऽर्थेतद्विशेषा

रजवा·
७२

कांक्षणमीहा यथा पुरुष इत्यवगृहीते तस्य भाषावयोरूपादिविशेषैराकांक्षणमी
हा विशेषनिर्ज्ञानाद्याथात्म्यावगमनमवायः। भाषादिविशेषनिर्ज्ञानात्तस्य या
थात्म्येनावगमनमवायः। दाक्षिणात्योयं युवा गौर इति वा निर्ज्ञातार्थाविस्मृतिर्धा
रणा भाषावयोरूपादिविशेषैर्याथात्म्येन निर्ज्ञाते। तस्य पुरुषस्योत्तरकालं स एवा
यमित्यविस्मरणं यतो भवति सा धारणा एते मतिज्ञानभेदाः अत्राह इदमानु
पूर्व्यं किं कृतमेषामुच्यते। अवग्रहादीनामानुपूर्व्यमुत्पत्तिक्रमापेक्षं अवग्र
हपूर्वकत्वादितरेषामादावेवग्रहः। क्रियते तर्थेतरेष्वपि योज्यं अत्राह। अवग्र
हेहयोरप्रमाणत्वं सद्भावेपि संशयदर्शनाच्चक्षुर्वत् यथा चक्षुषि न निर्णयः। सत्ये
व तस्मिन् किं मयं स्थाणुराहो स्वित्पुरुष इति संशयदर्शनात्तथावग्रहेपि सति न नि
र्णयः ईहादर्शनादीहायां च न निर्णयः। यतो निर्णयार्थमीहा न त्वीहैव निर्णयः। य
श्च निर्णयो न भवति स संशयः। अतो यद्यत्वप्रामाण्यमनयोरिति अवग्रहवचनाद्यत
नुक्ते पुरुषोयमिति अवग्रहस्तस्य भाषावयोरूपादिविशेषाकांक्षणमीहेति

त्तिसंशयस्त्वप्रतिपत्तिरेवेतितन्नकिंकारणंसंशयाननिवृत्तेः॥कथमालोचनवद्वयोर्ह्या
र्थालोचनेकिमयमर्थइत्यर्थः॥स्थाणुरुतपुरुषइतिसंशयाननिवृत्तिरनयोर्ह्ययमर्थइ
त्यवग्रहेईहाद्यपेक्षत्वात्संशयाननिवृत्तिरुच्यतेलक्षणभेदादन्यत्वमग्निजलवद्यथा
ग्निजलयोर्दहनप्रकाशनादिद्रवतास्नेहनादिप्रतिनियतलक्षणभेदादन्यत्वंतथाव
ग्रहसंशययोर्लक्षणभेदादन्यत्वंकोसौलक्षणभेदउच्यते॥अनेकार्थानिश्चितापर्यु
दासात्मकःसंशयस्तद्विपरीतोवग्रहः स्थाणुपुरुषाद्यनेकार्थालंबनसंनिधानादने
कार्थात्मकः॥संशयएकपुरुषाद्यन्यतमात्मकोऽवग्रहः॥स्थाणुपुरुषानेकधर्मानि
श्चितात्मकः॥संशयः यतोनस्थाणुधर्मान्पुरुषधर्मांश्चनिश्चिनोति॥अवग्रहस्तुपु
रुषाद्यन्यतमैकधर्मनिश्चयात्मकः स्थाणुपुरुषानेकधर्मापर्युदासात्मकः॥सं
शयः॥यतोनप्रतिनियतान्स्थाणुपुरुषधर्मान्पर्युदस्यतिसंशयः॥अवग्रहःपुनः
पर्युदासात्मकः॥सह्यन्यांभवादीन्पर्यायान्पर्युदस्यपुरुषइत्येकपर्यायालंबनः॥संश
यतुल्यत्वमपर्युदासादितिचेन्ननिर्णयविरोधात्संशयस्यस्यादेतत्संशयतुल्योवग्र

राजवा·
७३

हः॥ कुतः॥ अपर्युदासाद्यथा संशयः॥ स्थाणुपुरुषविशेषापर्युदासात्मकस्तथावग्र
होऽपि पुरुष इति भाषावयोरूपाद्यपर्युदासात्मकः॥ अतश्चैतदेवं यदुत्तरकाले तद्विशेषा
र्थमीहामारभत इति तन्न किं कारणं निर्णयविरोधात्संशयस्य संशयो हि निर्णयवि
रोधी न त्ववग्रहः॥ निर्णयदर्शनादीहायां तत्प्रसंग इति चेन्नार्थादानात्॥ स्यादेतद्यदि नि
र्णयाविरोध्यवग्रह इति न संशयः॥ नन्वीहाया निर्णयविरोधित्वात्संशयत्वप्रसंग इ
ति॥ तन्न किं कारणं अर्थादानात् अवग्रहगृहीतेऽर्थे तद्विशेषलब्ध्यर्थमर्थादानमीहा संशयः
पुनर्नार्थविशेषालंबनः संशयपूर्वकत्वाच्च संशयो हि पूर्वमुपजायते ईहायाः॥ कथ
मिह पुरुषमवग्रह्य किमयं दाक्षिणात्य उतौदीच्य इत्येवमाद्यप्रतिपत्तौ संशयः॥ एवं सं
शयितस्योत्तरकाले विशेषोपलिप्सां प्रतियतनमीहेति संशयादर्थांतरत्वं॥ अत एव
संशयावचनमर्थगृहीतेः॥ अत एव सूत्रे संशयो नोक्तः कुतः अर्थगृहीते सति संश
ये ईहायाः॥ प्रवृत्तिर्नास्तीति आह किमयं पापकृत्तावाद्ययति उभयथा न दोषः अन्य
तरवचनेऽन्यतरस्यार्थगृहीतत्वात् यदा न दाक्षिणात्योऽयमित्यपायं त्यागं करोति तदा

उदीच्यइतिअवायोधिगमोर्थगृहीतः॥यदाचोदीच्यइत्यवायंकरोतितदानदाक्षिणा
त्योयमित्यपायोर्थगृहीतः कश्चिदाहयदुक्तंभवताविषयविषयिसन्निपातेदर्शनंभ
वतितदनंतरमवग्रहइतितदयुक्तमवैलक्षण्याल्लह्यवग्रहाद्धिलक्षणंदर्शनमस्ती
त्यत्रोच्यतेनवैलक्षण्यात्कथमिहचक्षुषाचक्षुर्दर्शनावरणवीर्यांतरायक्षयोपश
मांगोपांगनामावष्टंभादविभावितविशेषसामर्थ्येनकिंचिदेतद्वस्त्वितिआलोकनम
नाकारंदर्शनमित्युच्यतेबालवद्यथाजातमात्रस्यबालस्यप्राथमिकउन्मेषोसावभा
वितरूपद्रव्यविशेषालोचनाद्दर्शनंविवक्षितंतथासर्वेषांततोहित्र्यादिसमयभावि
षून्मेषेषुचक्षुरवग्रहमतिज्ञानावरणवीर्यांतरायक्षयोपशमांगोपांगनामावष्टंभा
द्रूपमिदमितिविभावितविशेषोऽवग्रहः यत्प्रथमसमयोन्मेषितस्यबालस्यदर्शनंत
द्यद्यवग्रहजातीयत्वात्ज्ञानमिष्टंतन्मिथ्याज्ञानंवास्यात्सम्यग्ज्ञानंवामिथ्याज्ञान
त्वेपिसंशयविपर्ययानध्यवसायात्मकंस्यात्तच्चनतावत्संशयविपर्ययात्मकंचाचेष्टि
तस्यसम्यग्ज्ञानपूर्वकत्वात्प्राथमिकत्वाच्चतन्नास्तीतिनवानध्यवसायरूपंजात्यंध

राजवा-
७७

व्यक्तवस्तुमात्राप्रतिपत्तेर्नसम्यग्ज्ञानमर्थाकारावलंबनाभावात्किंच
कारणनानात्वात्कार्यनानात्वसिद्धेः यथामृत्तंतुकारणभेदाद्घटपटकार्यभेदस्तथा
दर्शनज्ञानावरणक्षयोपशमकारणभेदात्तत्कार्यदर्शनज्ञानभेदइतिअस्तिप्राग
वग्रहाद्दर्शनंततः शुक्लकृष्णादिरूपविज्ञानसामर्थ्योपेतस्यात्मनः॥ किंशुक्लमुत
कृष्णमित्यादिविशेषाप्रतिपत्तेः संशयस्ततः॥ शुक्लविशेषाकांक्षणंप्रतीहनमीहा
शुक्लमेवेदंनकृष्णमित्यवायनमवायः॥ अवेतस्याविस्मरणंधारणाएवंश्रोत्रा
न्यस्यापियोज्यं॥ तदावरणकर्मक्षयोपशमविकल्पात्प्रत्येकमवग्रहादिज्ञाना
कथंज्ञानावरणमूलप्रकृतेः॥ पंचोत्तरप्रकृतयस्तासामप्युत्तरो
विशेषाः॥ संतिज्ञानावरणस्योत्तरप्रकृतयः॥ असंख्येयालोकाइतिवच
ईहादीनाममतिज्ञानप्रसंगः कुतः परस्परकार्यत्वादवग्रहः॥ कारणंईहाका
र्यंकारणमवायः कार्यमवायः कारणंधारणाकार्यं॥ नचेहादीनामिंद्रियानिंद्रि
त्वमस्तीतिनैवदोषः॥ ईहादीनामनिंद्रियनिमित्तत्वान्मतिज्ञानव्यपदेशः॥य

घ्येवंश्रुतस्यापिप्राप्नोतिइंद्रियगृहीतविषयत्वादीहादीनामिंद्रियानिमित्तत्वमप्यु
पचर्यतेनतुश्रुतस्यायंविधिरस्तितस्यानिंद्रियविषयत्वादितिश्रुतस्याप्रसंगः॥ य
घेवंचक्षुरिंद्रियेहादिव्यपदेशाभावइतिचेन्नेंद्रियशक्तिपरिणतस्यजीवस्यभावेंद्रि
यत्वेतद्व्यापारकार्यत्वादिंद्रियभावपरिणतोहिजीवोभावेंद्रियमिष्यते॥ तस्यविषया
कारपरिणामईहादयइतिचक्षुरिंद्रियेहादिव्यपदेशइतियइमेवग्रहादयोमतिज्ञा
नप्रभेदाउक्ताः॥ तेज्ञानावरणक्षयोपशमनिमित्ताः केषांभवंतीत्युच्यते॥ बहुबहु
विधक्षिप्रानिःसृतानुक्तध्रुवाणांसेतराणां॥ संख्यावैपुल्यवाचिनोबहुशब्दस्य
ग्रहणमविशेषात्॥ बहुशब्दोहिसंख्यावाचीवैपुल्यवाचीचतस्योभयस्यापिग्रहणं
कस्मादविशेषात्संख्यायामेकः॥ द्वौबहवइतिवैपुल्येबहुरोदनः॥ बहुसूपइति॥ बह्व
वग्रहाद्यभावः प्रत्यर्थवशवर्तित्वादितिचेन्नसर्वदैकप्रत्ययप्रसंगात्स्यादेतत्प्रत्य
र्थवशवर्त्तिविज्ञानंनानेकमर्थंगृहीतुमलमतोबह्वग्रहादीनामभावइति॥ तन्नकिं
कारणंसर्वदैकप्रत्ययप्रसंगात्यथारण्यपल्ल्यांकश्चिदेकमेवपुरुषमवलोकयन्ना

राजवा॰
७५

नेकइत्यवैतिमिथ्याज्ञानमन्यथास्यादेकत्रानेकबुद्धिर्यदिभवेत्तथानगरवनस्कंधा
वारावगाहिनोपितस्यैकप्रत्ययः स्यात्सार्वकालिकः। अतश्चानेकार्थग्राहि विज्ञा
नस्यात्यंतासंभवान्नगरवनस्कंधावारप्रत्ययनिवृत्तिर्नेना। संज्ञाह्येकार्थनिवेशि
न्यस्तस्माल्लोकसंव्यवहारनिवृत्तिः। किंचनानात्वप्रत्ययाभावाद्यस्यैकार्थमेवनि
यमाज्ज्ञानंतस्यपूर्वज्ञाननिवृत्तावुत्तरज्ञानोत्पत्तिःस्यादनिवृत्तौवाउभयथाचदो
षः। यदिपूर्वमुत्तरज्ञानोत्पत्तिकालेस्तियदुक्तमेकार्थमेकमनस्त्वादितिसादोवि
। यथैकंमनोनेकप्रत्ययारंभकंतथैकप्रत्ययोनेकार्थोभविष्यतिअनेक
कालसंभवान्नन्वनेकार्थोपलब्धिरुपपद्यतेतत्रयदभिमतं। मेवै
कस्यज्ञानमेकंचार्थमुपलभतइतितदुभयव्याघातः। अथपुनर्निवृत्तेपूर्वस्मिन्नु
त्तरज्ञानोत्पत्तिःप्रतिज्ञायतेननुसर्वथैकार्थमेवज्ञानमित्यंतइदमस्मादन्यदितिव्य
षव्यवहारोनस्यादृष्टिश्चसततस्मान्नकिंचिदेतत्किंचआपेक्षिकसंव्यवहारनिवृत्ते
यस्यैकज्ञानमनेकार्थविषयंनविद्यतेतस्यमध्यमाप्रदेशिन्योर्युगपदनुपलंभात्त

हिषयदीघेहस्त्वव्यवहारोविनिवर्त्तेतस्वाविक्षिकोह्यसौनचापेक्षास्तिकिंचसंशया
भावप्रसंगादेकार्थविषयवर्त्तिनिविज्ञानेस्वांशोपरुषेवाप्रावसत्ययजन्मस्यान्नोभ
योः॥प्रतिज्ञातविरोधात्तयदिस्यांशोपरुषाभावात्स्थास्यवंध्यास्तत्रवत्संशयाभा
वः॥स्यात्सयपुरुषेतथास्थाणुद्वयानपेक्षत्वात्संशयोनस्यात्त॥तत्पूर्ववत्त्वभा
वः॥इष्टः॥अतोनैकार्थग्राहिविज्ञानकल्पनाश्रेयसीति॥किंचईप्सितनिष्पत्त
नियमाद्विज्ञानस्यैकार्थावलंबित्वेचित्रकर्मणि॥निष्णातस्यचैत्रस्यवर्णकलशामा
लिखतःस्तक्रियाकलशवत्प्रकारग्रहणविज्ञानभेदादितरेतरविषयसंगमाभा
वादनेकविज्ञानोत्पादनिरोधक्रमेसत्यनियमेननिष्पत्तिःस्याद्दृश्यतुसानियमेनसा
चैकार्थग्राहिणिविज्ञानेविरुध्यतेतस्मान्नानार्थोपिप्रत्ययोभ्युपेयः॥द्वित्र्यादिप्रत्य
याभावाच्चएकार्थविषयवर्त्तिनिविज्ञानेद्वाविमाविमेत्रयइत्याद्विप्रत्ययस्याभावः
यतोनैकंविज्ञानंद्वित्र्यर्थानांग्राहकमस्तिसंतानसंस्कारकल्पनायांचविकल्पात
पत्तिः॥संतानेसंस्कारेचकल्प्यमानेविकल्पयोरनुपपत्तिस्सन्तानः॥संस्कारस्व

ज्ञानजातीयोवास्यादज्ञानजातीयोवायद्यज्ञानजातीयःनततः।किंचित्प्रयोज
नमस्तिज्ञानजातीयत्वेपिएकार्थग्राहित्वंस्यादनेकार्थग्राहित्वंस्यादनेकार्थग्राहि
त्वंवायद्येकार्थग्राहित्वंदोषविधिस्तदवस्था।अथानेकार्थग्राहित्वंप्रतिज्ञाहानिः
प्रसज्यते।विधग्रहणंप्रकारार्थं।विधयुक्तगतप्रकारासमानार्थाइतिप्रकारा
र्थोविधशब्दः।बहुविधंबहुप्रकारमित्यर्थः।क्षिप्रग्रहणमचिरप्रतिपत्त्यर्थं
अचिरप्रतिपत्तिःकथंस्यादितिक्षिप्रग्रहणंक्रियते।अनिःसृतग्रहणमसक
लपुद्गलोद्गमार्थं।अनिःसृतग्रहणंक्रियते।असकलपुद्गलोद्गमार्थं।अनुक्ता
मभिप्रायेणप्रतिपत्तेः।अभिप्रायेणप्रतिपत्तिरस्तीत्यनुक्तग्रहणंक्रियते।ध्रुवं
यथार्थग्रहणाद्ध्रुवग्रहणंक्रियतेयथार्थग्रहणमस्तीतिसेतरग्रहणाद्विपर्या
विरोधः।अल्पमल्पविधंचिरंनिःसृतमध्रुवमितिएतेषामवरोधोभवतिसेत
रग्रहणादवग्रहादिसंबंधात्कर्मनिर्देशः।बह्वादीनामितिकर्मनिर्देशोऽव
ग्रहाद्यपेक्षोवेदितव्यः।बह्वादीनामा

क्षयोपशमविशुद्धिप्रकर्षयोगे सति बह्वादीनामवग्रहादयो भवंतीति तेषां ॥ ग्रह
णमादौ क्रियते ते च प्रत्येकमिन्द्रियानिन्द्रियैः षड्द्वादशविकल्पनेयाः ॥ तद्यथा ॥ प्र
कृष्टश्रोत्रेन्द्रियावरणवीर्यांतरायक्षयोपशमांगोपांगनामोपष्टंभात्संभिन्नश्रो
तान्यो वा युगपत्ततविततघनसुषिरादिशब्दश्रवणाद्बहुशब्दमवगृह्णाति ॥ स्व
ल्पश्रोत्रेन्द्रियावरणक्षयोपशमपरिणाम आत्मा ततशब्दादीनामन्यतममल्पं
शब्दमवगृह्णाति ॥ प्रकृष्टश्रोत्रेन्द्रियावरणक्षयोपशमादिसन्निधाने सति
ततादिशब्दविकल्पस्य प्रत्येकमेकद्वित्रिचतुःसंख्येयासंख्येयानंतगुणस्य
वग्राहकत्वाद्बहुविधमवगृह्णात्यल्पविशुद्धिः श्रोत्रेन्द्रियादिपरिणामकार
णात्मा ततादिशब्दानामेकविधावग्रहणादेकविधमवगृह्णाति प्रकृष्ट
श्रोत्रेन्द्रियावरणक्षयोपशमादिपरिणामित्वात्क्षिप्रं शब्दमवगृह्णात्यल्पविशु-
२ द्धिः श्रोत्रेन्द्रियावरणक्षयोपशमादिपारिणामिकत्वाच्चिरेण शब्दमवगृह्णा
ति सुविशुद्धिश्रोत्रादिपरिणामात्साकमल्पेनानुच्चारितस्य ग्रहणादनिसृत

मवगच्छतिनिसृतंप्रतीतंप्रकृष्टविशुद्धिश्रोत्रेन्द्रियादिपरिणामकारणत्वादेक
वर्णनिर्गमेपिअभिप्रायेणैवानुच्चारितंशब्दमवगच्छतिइमंभवान्शब्दंवक्ष्यती
त्यथवास्वरसंचारणात्प्राक्तंत्रीद्रव्यातोद्याद्या
अभिप्रायेणाक्त्याचष्टेभवानिमंशब्दंवादयिष्यतीत्युक्तंप्रतीतंसंक्लेशपरि
णामनिरुत्सुकस्ययथानुरूपंश्रोत्रेन्द्रियावरणक्षयोपशमादिपरिणामकार
णावस्थितत्वाद्यथाप्राथमिकंशब्दग्रहणंतथावस्थितमेवशब्दमवगच्छति
नोनंनाभ्यधिकंपौनः पुन्येनसंक्लेशविशुद्धिपरिणामकारणापेक्षस्यात्मनोय
थानुरूपपरिणामोपात्तश्रोत्रेन्द्रियसान्निध्येपितदावरणस्येषदीषदाविर्भावा
त्पौनःपुनिकंप्रकृष्टावकृष्टश्रोत्रेन्द्रियावरणादिक्षयोपशमपरिणामत्वाच्चाध्रु
वमवगच्छतिशब्दंक्वचिद्बहुक्वचिदल्पंक्वचिद्बहुविधंक्वचि
क्वचिच्चिरेणाक्वचिदनिसृतंक्वचिन्निसृतंक्वचिदुक्तंक्वचिदनुक्तं।
विधयोः कःप्रतिविशेषः

ड्यतेनविशेषदर्शनाद्यथाकश्चिद्बहूनिशास्त्राणिमौनेनसमान्यार्थेनाविशेषिते
न्याचष्टेनतुबहुभिर्विशेषितार्थैः कश्चित्तुतेषामेवबहूनांशास्त्राणांबहुभिर
र्थैः परस्परातिशययुक्तैर्बहुकल्पैर्व्याख्यानंकरोति तथाततादिशब्दस्यग्रहणा
विशेषेपियत्प्रत्येकंततादिशब्दानामेकद्वित्रिचतुःसंख्येयासंख्येयानंतगुण
परिणतानांग्रहणंतद्बहुविधग्रहणंयत्ततादीनांसामान्यग्रहणंतद्बहुग्रहणं
ग्राह्यउक्तनिःसृतयोःकः प्रतिविशेषः यतःसकलशब्दनिःसरणान्निःसृ
तमुक्तमप्येवंविधमेवोच्यते अन्योपदेशपूर्वकंशब्दग्रहणमुक्तंगोशब्दोयमि
तिस्वतएवग्रहणंनिःसृतंचक्षुषात्तुविशुद्धचक्षुरिंद्रियावरणक्षयोपशमपरि
णामकारणत्वाच्छुक्लकृष्णरक्तनीलपीतरूपपर्यायंबहुमंवस्तुशक्नोति अल्पंपूर्व
वत्प्रकृष्टविशुद्धिः चक्षुरिंद्रियादिक्षयोपशमपरिणामकारणत्वाच्छुक्लादि
पंचतयरूपगणस्यप्रत्येकमेकद्वित्रिचतुःसंख्येयासंख्येयानंतगुणपरिणा
मिनोवग्राहकत्वसामर्थ्यंबहुविधरूपमवग्रहात्येकविधंपूर्ववत्क्षिप्रचिर

योरयुक्त एवक्रमः॥ पंचवर्णवस्त्रकेवलचित्रपटादीनां सतदेकदेशविषयपंच
वर्णग्रहणात्कृत्स्नपंचवर्णेष्वदृष्टेष्वनिसृतेष्वपि तद्ग्रहणे चित्रकरसामर्थ्याद्दनि
सृतमवग्रह्णाति॥ अथवादेशांतरस्थपंचवर्णपरिणतैकवस्त्रादिकथनाशाक
ल्येनाकल्येनाकथितस्याप्येकदेशकथनेनैवतत्॥ कृत्स्नपंचवर्णग्रहणादनि
सृतंनिसृतंप्रतीतं॥ सुविशुद्धिचक्षुरिंद्रियादिक्षयोपशमः प्रमातासु क्लकृत्स्ना
दिवर्णमिश्रीकरदर्शनात्पारेणाकथितमपिवर्णमभिप्रायेणैवप्रतिपद्यतेभवा
निमंवर्णमित्तद्वयमिश्रणात्करिष्यतीत्येवंग्रहणादनुक्तंरूपमवग्रह्णाति॥ अथवा
देशांतरस्थपंचवर्णैकद्रव्यकथनेतात्व्यादिकरणसंश्लेषात्प्राक्सत्त्कद्रव्यक
थितमेवद्रव्यमाचष्टेभावानेवंविधमस्माकंपंचवर्णव्यतिकरिष्यतीत्यनुक्तं
मवग्रह्णातिपरकीयाभिप्रायानपेक्षमात्मी
वोक्तंरूपमवग्रह्णातिसंक्ले
यावरणक्षयोपशमपरिणामकारणावस्थितत्वाद्यथाप्राथमिकंरूपग्रह

णां तथावस्थितमेवस्वरूपमवग्रह्णातिनीनंनाभ्यधिकं पौनःपुन्येनसंक्लेशावि
शुद्धिपरिणामापेक्षस्यात्मनोयथातत्स्वरूपपरिणामोपात्तचक्षुरिंद्रियसान्नि
ध्येपितदावरणस्येषदीषदाविर्भावात्पौनःपुनिकंप्रकृष्टावकृष्टचक्षु
रिंद्रियावरणक्षयोपशमपरिणामकारणत्वाच्चाध्रुवमवग्रह्णातिरूपं
क्वचिद्बहुक्वचिदल्पंक्वचिद्बहुविधंक्वचिदेकविधंक्वचित्क्षिप्रंक्वचिच्चि
रेणक्वचिदनिःसृतंक्वचिन्निःसृतंक्वचिदनुक्तंक्वचिदुक्तं एवंघ्राणाद्य
वग्रहेष्वपियोज्यंतथाईहावायधारणाअपिबह्वादिभिः सेतरैरवसेयाः
कश्चिदाह श्रोत्रघ्राणस्पर्शनरसनचतुष्टयस्यप्राप्यकारित्वादनिःसृता
नुक्तशब्दाद्यवग्रहेहावायधारणानुपपन्नाइत्युच्यतेप्राप्तत्वात्कथंपिपीलि
कादिवद्यथापिपीलिकादीनांघ्राणरसनदेशप्राप्तेपिगुडादिद्रव्येगंधरस
ज्ञाने तच्चैश्चयावाङ्गिश्चासदाद्यप्रत्यक्षसूक्ष्मगुडावयवैः पिपीलिका
दिघ्राणरसनेंद्रिययोः परस्परानपेक्षावृत्तिस्ततोनदोषः अस्मदादीनां

राजवा·
७८

तदभावइतिचेन्नस्मृत्यनपेक्षत्वाद्यथाभूप्रदेशसंवर्द्धितोक्तिनःस्पर्शस्पृक्षुरादि
भिरवभासंतेष्वपिघटादिषुघटोयंरूपमिदमित्यादियद्विशेषपरिज्ञानंत
नापेक्षंपरोपदेशापेक्षत्वात्तथास्मदादीनामभ्यस्तानुक्तमपिज्ञानंविक
ल्पशब्दाद्यवग्रहादिज्ञानंतन्नुनापेक्षं। किंच लघ्वक्षरत्वात्कृतज्ञानप्रभे
दस्वरूपपर्यायोलघ्वक्षरस्तनकथनंघोताप्रभिभक्तं। तद्यथा। चक्षुःश्रो
त्रघ्राणरसनस्पर्शनमनोलघ्वक्षरमित्यार्षउपदेशः। अनक्षरः चक्षुःश्रोत्र
घ्राणरसनस्पर्शनेन्द्रियमनोलघ्वक्षरसान्निध्यादेताशिच्यातिःपनिस्वता
नुक्तानामपिशब्दादीनामवग्रहादिज्ञानंयद्यवग्रहादयोबह्वादीनांकर्म्मणामोक्षे
मारः। बह्वादीनिपुनर्विशेषणानिकस्येत्यत आह। अर्थस्य। चक्षुरादिविषयो
र्थस्तस्यबह्वादिविशेषणविशिष्टस्यावग्रहादयोभवंति इयर्त्तिपर्यायनर्यतेवार्त्तेरि
त्यर्थोद्रव्यंप्रत्यासंबंधिनः। पर्यायानुभयनिमित्तवशादुत्पत्तिप्रत्यात्मानिय
तिगच्छत्यर्यतेगम्यतेवात्तैरित्यर्थः। कः पुनः। रसोद्रव्यं किमर्थमिदमुच्यते। अर्थ

वचनंग्रहणाग्रहणानिवृत्त्यर्थं॥केचिद्रूपादयोग्रहणाएवइंद्रियेसन्निकृष्यंतेन
तस्तद्ग्रहणमितिमन्यंतेतन्मतनिवृत्त्यर्थमर्थस्येत्युच्यतेनहितेरूपादयोग्रहणा
अमूर्त्ताइंद्रियसंनिकर्षमापद्यंतइतितत्प्रचयविशेषेसतिसन्निकर्षसंभव
इतिचेन्नग्रहणादीनांप्रचयानुपपत्तेः॥सत्यपिवाप्रचयेर्थांतरप्रादुर्भावाभा
वात्सूक्ष्मावस्थानतिक्रमादग्रहणमेवैषांस्यान्नतहीदानीमिदंभवतिरू
पेमयादृष्टंगंधोवाघ्रातइतिभवतिचार्थग्रहणात्तद्व्यतिरेकात्तेषामपिग्रह
णोपपत्तेः॥नेषुसत्सुमतिज्ञानात्मलाभात्सप्तमीप्रसंगः॥यतोविषयेषुसत्सु
मतिज्ञानमाविर्भवति॥अतोर्थइतिवाच्यंनानेकांतान्नायमेकांतोस्तिसत्यर्थे
मतिज्ञानंभवतीतियतः॥सत्यप्यर्थेवनितलभवनसंभूतस्यकुमारस्योत्तीर्थे
मात्रस्यघटरूपादिमतिज्ञानाभावः॥अथवानायमेकांतोस्त्यधिकारणस्य
सत्वात्सप्तमीप्रसंगः॥यतोविषयेषुसत्सुमतिज्ञानमाविर्भवति॥अतोर्थइति
वाच्यंनानेकांतान्नायमेकांतोस्तिसत्यर्थेमतिज्ञानंभवतीतियतः॥सत्यप्यर्थेव

राजवा·
८०

नितलभवनसंभूतस्यकुमारस्योत्तीर्णामात्रस्यघटरूपादिमतिज्ञानाभावः॥अ
थवानायमेकांतोस्त्यधिकारस्यसत्वात्समभीप्रसंगइति कस्मात्तस्याविवक्षितत्वा
द्विवक्षावशाद्धिकारकाणिभवंतिक्रियाकारकसंबंधस्यविवक्षितत्वाद्वग्रहा
दयः॥क्रियाविशेषास्तुक्ताः॥तेषामेवपर्यंकेनकिंकर्मणाभिवितव्यमितिवह्वा
दिविकल्पस्यार्थस्येत्युच्यते वह्वादिसामानाधिकरण्याद्बहुत्वप्रसंगः॥यतोव
ह्वादिरेवार्थोनातोन्यस्ततोवह्वादिसामानाधिकरण्यादर्थानामिति वहुत्वंप्रा
प्नोतिनवानभिसंबंधात्लवाण्यदोषः॥किंकारणमनभिसंबंधात्ह्यस्यवहु
त्वादिभिरभिसंबंधः क्रियतेकेनतर्ह्यवग्रहणादिभिः॥कस्येत्युक्तेअर्थस्य
हसंबध्यते॥तद्विशेषणंवह्वादिग्रहणं॥सर्वस्यवार्थमाणत्वा
र्थत्वंअतोजातिप्रधानत्वात्निर्देशस्यार्थस्येत्येकत्वनिर्देशोयुक्तः॥प्रत्येक
मभिसंबंधाद्वा॥अथवाप्रत्येकमभिसंबंधः॥क्रि
र्थस्येति॥किमर्मीअवग्रहादयः॥सर्वस्येंद्रियार्थस्यभवंत्युतनकश्चि

शेषोस्तीत्यत्राह ॥ व्यंजनस्यावग्रहः ॥ व्यंजनमव्यक्तंशब्दादिजातंतस्यावग्र
होभवति ॥ किमर्थमिदंनियमार्थमवग्रहाएवनेहादयइतिसतर्हिएवकारः कर्त्तव्यः
नवासामर्थ्यादवधारणप्रतीतेरब्भक्षवन्नवाकर्त्तव्यः ॥ किंकारणंसामर्थ्यादवधा
रणप्रतीतेः कथमब्भक्षवद्यथानकश्चिद्येनभक्षयतीतिसामर्थ्यादवधारणं
प्रतीयते ॥ अपएवभक्षयतीतितथासर्वेषामवग्रहादीनांप्रसिद्धोऽवग्रहवच
नमवधारणार्थंविज्ञायते तयोरभेदोऽग्रहणविशेषादितिचेन्नव्यक्ताव्यक्तभेदा
दभिनवशरावववत्पादेतत्तयोरर्थावग्रहव्यंजनावग्रहयोर्नास्तिभेदः ॥ ग्रहणवि
शेषान्नहिशब्दादिग्रहणंप्रतिविशेषोस्तीतितन्नकिंकारणंव्यक्ताव्यक्तभेदाद्व्य
क्तग्रहणमर्थावग्रहः ॥ अव्यक्तग्रहणंव्यंजनावग्रहःअभिनवशरावववद्यथासूक्ष्म
जलकणाद्वित्रिसिक्तःशरावोभिनवोनार्द्रीभवतिसएवपुनःपुनःसिच्यमानः ॥ श
नैस्तिम्यतितथात्मनः ॥ शब्दादीनांव्यक्तग्रहणात्प्राग्व्यंजनावग्रहः ॥ व्यक्तग्रह
णमर्थावग्रहः ॥ सर्वेन्द्रियाणामविशेषेणव्यंजनावग्रहप्रसंगेयत्रासंभवस्त

दर्थप्रतिषेधमाह ॥ नचक्षुरनिंद्रियाभ्यां ॥ चक्षुषानिंद्रियेण व्यंजनावग्रहो
नभवतिकुतः ॥ व्यंजनावग्रहाभावश्चक्षुर्मनसोरप्राप्यकारित्वाद्यतः ॥ अप्राप्त
मर्थमविदिक्कंयुक्तंसंनिकर्षविषयेवस्थितंबाह्यप्रकाशाभिव्यक्तमुपलभते
चक्षुर्मनश्चाप्राप्तंततोनानयोर्व्यंजनावग्रहोस्तिइच्छामात्रमिति
स्यादेतदिच्छामात्रमिदमप्रामाण्यकत्वाहिचक्षुरितितन्नकिंकारणंसामर्थ्या
र्थसामर्थ्ये आगमतोयुक्तितश्च आगमस्तावत् ॥ गाहा पुट्ठंसुणेदिसद्दंअपु
ट्ठंपुणविपस्सदेरूवंगंधंरसंचफासंपुट्ठंपुट्ठं ॥ वियाणादि पुट्ठंसुणोदिसद्दंअ
पुट्ठंपुणपस्सदेरूवं ॥ गंधंरसंचफासंपुट्ठमपुट्ठंवियाणादिइतियुक्तितोपि
अप्राप्यकारिचक्षुः स्पृष्टानवग्राहात्यदिप्राप्यकारिस्यात्त्वगिंद्रियवत् ॥ स्पृष्ट
मंजनंगृह्णीयान्नचगृह्णात्यतोमनोवदप्राप्यकारीत्यवसेयं अत्रकेचिदाहुः
प्राप्यकारिचक्षुः आवृतानवग्रहात्त्वगिंद्रियवदिति ॥ अत्रोच्यते काचाभ्र
स्फटिकावृतार्थावग्रहेसत्यव्यापकत्वादसिद्धोहेतुर्वनस्पतिचैतन्येस्वापवत्

यांसंशयहेतुरप्राप्यकारित्वमयस्कांतोपले साध्याविपक्षेपि दर्शनादिति। भौति
कत्वात्प्राप्यकारिचक्षुरग्निवदितिचेन्न। अयस्कांतेनैवप्रत्युक्तत्वात्। घ्राणेंद्रियत्वा
त्प्राप्यकारिचक्षुरितिचेन्न द्रव्येंद्रियोपकरणस्यभावेंद्रियस्यप्राधान्यादप्राप्य
कारित्वेव्यवहितानिविप्रकृष्टग्रहणप्रसंगइतिचेन्नायस्कांतेनैवप्रत्युक्तत्वा
दयस्कांतोपलमप्राप्यलोहमाकर्षदपिनव्यवहितमाकर्षतिनातिविप्रकृष्ट
मिति संशयावस्थमेतदित्यप्राप्यकारित्वंसंशयविपर्ययाभावइतिचेन्नतत्प्रा
प्यकारित्वेपितदविशेषात्कश्चिदाहरश्मिवच्चक्षुस्तैजसत्वात्तस्मात्प्राप्यका
रीत्यग्निवदित्येतच्चायुक्तमनभ्युपगमान्नहिवयमभ्युपगच्छामस्तैजसंचक्षुरि
तितेजोलक्षणामौष्ण्यमितिकृत्वाचक्षुरिंद्रियस्थानमुष्णंस्यान्नचतद्देशस्पर्श
नेंद्रियमुष्णस्पर्शोपलंभीदृष्टमितिइत। अथातैजसंचक्षुर्भासुरत्वानुपलब्धिरदृ
ष्टवशात्तनुलाभासुरत्वमितिचेन्नादृष्टस्यसाधारणत्वात्क्रियस्यभावस्वभावनिग्र
हासामर्थ्यान्नक्तंचररश्मिदर्शनाद्रश्मिवच्चक्षुरितिचेन्नातैजसोपिपुद्गलद्र

स्यभास्वरत्वपरिणामोपपत्तेरिति किं च गतिमद्धि धर्म्यादिह यद्गतिमद्भवति न
तत्संनिकृष्टविप्रकृष्टावभिन्नकाले प्राप्नोति न च तथा चक्षुश्चक्षुर्हि शाखां चंद्रम
सां चाभिन्नकाले उपलभते येनावता कालेन शाखां प्राप्नोति तावता चंद्रमसमिति स्पष्टं
गतिमद्धि धर्मस्तस्मान्न गतिमच्चक्षुरिति यदि च प्राप्यकारि चक्षुः स्यात्तमिस्रायां
रात्रौ दूरे गोप्रज्वलति तत्समीपगतद्रव्योपलंभनं भवति कुतो नांतरा-
लोचनं प्रकाशाभावादिति चेन्न तत
किं च यदि प्राप्यकारि चक्षुः स्यात् सांतराधिकग्रहणं न प्राप्नोति इंद्रियाणां निरंतरे
विषययोगं धाक्षेसांतरग्रहणं दृष्टं नाप्यधिकग्रहणं अथमतं बहिरधिष्ठानादृत्ति
रिंद्रियस्य अनुपपन्नं तद्विषयस्य सांतराधिकग्रहणमिति तदयुक्तं यस्मान्न बहि
रधिष्ठानादिंद्रियं तत्र चिकित्सादिदर्शनादन्यथाधिष्ठानपिधानेपि
मनसश्चाबहिर्भावान्मनसाधिष्ठितं हींद्रियं स्वविषयेभ्यः प्रियते न च मनो बहिरधि
ष्ठानमस्ति तदभावाद्ग्रहणप्रसंगः अनुवृत्तौ च संभवाभावाद्धि प्रकीर्णं । चक्ष

रश्मिसमूहः॥ कथमप्राप्तमनोधिष्ठस्येति॥ कश्चिदाह॥ श्रोत्रमप्राप्यकारि विप्रकृष्ट
विषयग्रहणादिति एतच्चायुक्तं असिद्धत्वात्साध्यं तावदेतद्विप्रकृष्टं गृह्णाति श्रो
त्रमुत घ्राणेंद्रियवद्गंधं स्वविषयभावपरिणतं पुद्गलद्रव्यं गृह्णातीति विप्रकृष्ट
शब्दग्रहणे च स्वकर्णांतर्विलगतमशकशब्दो नोपलभ्येत न हींद्रियं किंचिदेकं
दूरस्पृष्टविषयग्राहि दृष्टमिति आकाशगुणत्वाच्छब्दस्य स्पर्शवद्गुणत्वाभावइति
चेन्नामूर्त्तगुणस्यात्मगुणवदिंद्रियविषयत्वादर्शनादिति प्राप्तावग्रहे श्रोत्रस्य दि
ग्भेदविशिष्टविषयग्रहणाभावइति चेन्न शब्दपरिणतविसर्प्पत्पुद्गलवेगशक्ति
विशेषस्य तथाभावापत्तेः सूक्ष्मत्वादप्रतिघातात्समंततः प्रवेशाच्चासिद्धमेतच्चक्षु
र्मनसी वर्जयित्वा शेषाणामिंद्रियाणां व्यंजनावग्रहः॥ सर्वेषामिंद्रियाणामर्थाव
ग्रहइति मनसोनिंद्रियव्यपदेशाभावः स्वविषयग्रहणे करणांतरानपेक्षत्वाच्च
क्षुर्वत्॥ यथा चक्षु रूपग्रहणे करणांतरं नापेक्षत इतींद्रियव्यपदेशं लभते तथा
मनोपि गुणदोषविचारादिस्वव्यापारे करणांतरं नापेक्षत इतींद्रियप्राप्तो नानिं

द्रियमितिनवाप्रत्यक्षत्वान्नवाएषदोषः किंकारणंअप्रत्यक्षत्वाद्यथाचक्षुरा
दिपरस्येंद्रियकत्वात्प्रत्यक्षंनतथामनयेंद्रियकंकुतः सूक्ष्मद्रव्यपरि
दनिंद्रियमित्युच्यते। अत्राह। कथमेवगम्यतेप्रत्यक्षंतदस्तीति। अनुमानात्त
स्याधिगमः। अप्रत्यक्षाणामप्यर्थानांलोकेनुमानादधिगतिर्दृष्टायथादि
गतिर्वनस्पतीनांवृद्धिह्रासौ। तथामनसोप्यस्तित्वमनुमानादवगम्यतेकोसावनु
मानः। युगपज्ज्ञानक्रियानुत्पत्तिर्मनसोहेतुः सत्सुचक्षुरादिकरणेषुसत्किमत्त
चवाह्येषुरूपादिषुसतिचानेकस्मिन्प्रयजनेयतोज्ञानानांक्रियाणांचयुगपद
नुत्पत्तिस्तदस्तिमनइत्यनुमीयते। अनुस्मरणदर्शनाच्च यतःसकृद्दृष्टंश्रुतंवा
नुस्मार्यतेऽयतस्तद्दर्शनात्तदस्तित्वमवसेयं अन्याहएकस्यात्मनः कृतकरणाभेदः
शस्त्राभावस्यापिकरणाभेदोऽनेककलाकुशलदेवदत्तवत्त
शक्तिद्युपेक्षाकाष्ठकर्मणिवर्त्तमानस्यवासीघटभुरवद्वक्षादनादि
यात्मनोपिक्षयोपशमभेदाज्ञानक्रियापरिणामप्राप्तिएकस्यचक्षुराद्यनेकं

रणापेक्षानविरुध्यतेसनामकर्मसामर्थ्यात्सएषकरणभेदोनामकर्मसामर्थ्याद्वे
दितव्यः॥कथमिहदेतच्छरीरनामकर्मोदयापादितंयवनालिकासंस्थानंश्रोत्रे
न्द्रियमेतदेवशब्दोपलब्धिसहितुनेतराणितथायदेतद्घ्राणेंद्रियमतिमुक्तकचंद्र
कसंस्थानंएतदेवगंधावगमसमर्थंनेतराणितथायदेतज्जिह्वेंद्रियंक्षुरप्राकृते
तदेवरसावगमेनान्यानितथायदेतत्स्पर्शनेंद्रियमनेकाकृतितदेवस्पर्शोपलंभनेने
तराणि॥तथापदेतच्चक्षुरिंद्रियंमसूरिकाकारंकृष्णताराधिष्ठानंतदेवरूपाविष्क
रऽलंनेतराणीतिएवमाभिनिबोधिकंद्रव्यक्षेत्रकालभावैरवसेयंद्रव्यतोमतिज्ञा
नीसर्वद्रव्याण्यसर्वपर्यायाण्युपदेशेनजानातिक्षेत्रतः॥उपदेशेनसर्वक्षेत्राणिजा
नाति॥अथवाक्षेत्रंविषयः॥चक्षुषः॥क्षेत्रंसमचत्वारिंशद्योजनसहस्राणिषट्
धिकेचद्वेयोजनशतेयोजनस्यचैकविंशतिः॥षष्टिभागाः श्रोत्रस्यक्षेत्रंद्वादश
योजनानिघ्राणरसनस्पर्शनानांनवयोजनानिकालतः॥उपदेशेनसर्वकालंजाना
तिभावतः॥उपदेशेनजीवादीनांमोदयिकादीन्भावान्जानातीतान्सामान्यादेकस्मिंद्रि

याभेदाद्द्विधा॥ अवग्रहादिभेदाच्चतुर्धा तैरिंद्रियगुणिता तैश्चतुर्विंशतिविधतैरेवव्यं
जनावग्रहाधिकैरष्टाविंशतिविधंतैरेवमूलभंगाधिकैः॥ द्रव्यादिसहितैर्वाद्वात्रिं
शद्विधंतत्रानेत्रयोविकल्पाः॥ बह्वादिभिः॥ षड्भिरितरानपेक्षैर्गुणिता॥ ताश्चतुश्चत्वा
रिंशच्छतंअष्टषष्ठ्युत्तरंशतद्वानवत्यधिकंशतमितिचभवंति तएवबह्वादिभिर्द्वा
दशभिर्गुणिताः द्वेशतेअष्टाशीत्युत्तरेत्रीणिशतानिषड्विंशानिचतुरशीत्यधिका
नित्रीणिशतानिचभवंति॥ आहव्यंजनावग्रहेबह्वाद्यभावः॥ कस्माद्व्यक्तत्वादव्य
ते॥ अवग्रहवत्तत्सिद्धिः यथा अव्यक्तग्रहणमवग्रहः तथाबह्वादिविकल्पो
रूपेणैववेदितव्यः॥ अथानिःसृतेकथंतत्रापिपंचयावतश्चपुद्गलाः सूक्ष्मानिःसृ
ताः॥ संतिसूक्ष्मास्तुसाधारणैर्नोपलभ्यंते तेषामिंद्रियस्थानावगाहनंअनिःसृतंव्यं
जनावग्रहः॥ परोक्षद्वैविध्यसंप्रपक्रमलक्षणाविकल्पमतिज्ञानविधामीयद्वृत्ती
यमुपदिष्टंताकिंनिमित्तकतिविधंचेत्युच्यते॥ श्रुतंमतिपूर्वंद्व्यनेकद्वादशभे
दं॥ श्रुतशब्दोजहत्स्वार्थवृत्तिरूढिवशात्कुशलशब्दवद्यथाकुशलशब्दः कु

शालशब्दश्चैवंयथाकुशलशब्दः कुशलवनक्रियांप्रतीत्यव्युत्पादितः। तद्धित्वासर्वत्र
पर्यवदानेवर्त्ततेतथाश्रुतशब्दोपिश्रवणमुपादायव्युत्पादितोरूढिवशात्कस्मिंश्चिज्ज्ञा
नविशेषेवर्त्ततेकार्यंप्रतिपालनात्कारणाद्यपूर्वंकारणंकार्यंपालयतिपूरयतीतिवापूर्वं
कारणंलिंगंनिमित्तमित्यनर्थांतरं। मतिज्ञानंव्याख्यातंतत्पूर्वमस्येतिमतिपूर्वंमतिका
रणकमित्यर्थः। मतिपूर्वकत्वेश्रुतस्यतदात्मकत्वप्रसंगोघटवदतदात्मकत्वेवा
तत्पूर्वकत्वाभावः। कश्चिदाह। मतिपूर्वंश्रुतंतदपिमत्यात्मकंप्राप्नोति। कारणगुणा
नुविधानंहिकार्यंदृष्टंयथामृन्निमित्तोघटोमृदात्मकः। अथातदात्मकत्वमिष्यते
तत्पूर्वकत्वंतर्हितस्यहीयतइति। नवानिमित्तमात्रत्वाद्दंडादिवत्तच्चैषदोषः। किं
कारणंनिमित्तमात्रत्वाद्दंडादिवद्यथामृदःस्वयमंतर्घटभवनपरिणामाभिमुख्ये
दंडचक्रयोःपुरुषप्रयत्नादिनिमित्तमात्रंभवति। यतःसत्स्वपिदंडादिनिमित्तेषु
शर्करादिप्रचितोमृत्पिंडःस्वयमंतर्घटभवनपरिणामनिरुत्सुकत्वान्नघटीभव
ति। अतोमृत्पिंडएवबाह्यदंडादिनिमित्तापेक्षः। आभ्यंतरपरिणामसान्निध्याद्घटो

भवतिनदंडादयइतिदंडादीनांनिमित्तमात्रत्वंतथापर्यायिपर्याययोः स्यादन्यत्वा
दात्मनः स्वयमतः॥श्रुतभवनपरिणामाभिमुख्येमतिज्ञानंनिमित्तमात्रंभवति य
तःसत्यपिसम्यग्दृष्टेः॥श्रोत्रेंद्रियबलाधानेबाह्याचार्यपदार्थोपदेशसंनि
श्रुतज्ञानावरणोदयवशीकृतस्यस्वयमतः॥श्रुतभवननिरुत्सुकत्वादात्मनो
श्रुतंभवति॥ततोबाह्यमतिज्ञानादिनिमित्तापेक्षआत्मैवाभ्यंतरश्रुतज्ञाना
णक्षयोपशमापादितश्रुतभवनपरिणामाभिमुख्यात्कुतोभवतिनमतिज्ञानस्य
श्रुतिभवनमस्तितस्यनिमित्तमात्रत्वात्॥अनेकांतात्तुनायमेकांतोस्तिकारणस
दृशमेवकार्यमिति॥कुतस्तत्रापिसप्तभंगीसंभवात्कथंघटवद्यथाघटःकारणा
नन्यत्वेनस्यात्सदृशः॥स्याजसदृशइत्यादिइतिमृद्द्रव्याजीवा
त्सदृशः॥पिंडघटसंस्थानादिपर्यादेशान्नसदृशः पूर्ववदुत्तरेभंगानेतव्याः
कांतेनकारणानुरूपंकार्यंतस्यघटपिंडशिविकादिपर्यायाउपलभ्यंतेकिंच
डेनतद्दर्शनादपिचम्लात्पिंडेनतद्दर्शी

स्यघटत्वेनपरिणामवत्तस्यापिघटत्वेनपरिणामः॥स्यादेकांतसदृशत्वान्नचैवंभवतिश्रु
तोनेकांतेनकारणसदृशत्वं॥तथाश्रुतंसामान्यादेशात्स्यात्कारणसदृशंयतोमतिरपिश्रु
तंश्रुतमपिअव्यवहिताभिमुखग्रहणंनानाप्रकारार्थप्ररूपणसामर्थ्यादिपर्यायादेशा
त्स्यान्नकारणसदृशंपूर्ववदुत्तरेभंगानेतव्याः॥श्रोत्रमतिपूर्वस्यैवश्रुतत्वाप्रसंगः॥तद
र्थत्वादितिचेन्नोक्तत्वात्स्यादेतच्छ्रोत्रमतिपूर्वकस्यैवश्रुतत्वंप्राप्नोतिकुतस्तदर्थत्वाच्छ्रुत्वा
वधारणाद्धिश्रुतमित्युच्यतेनचक्षुरादिमतिपूर्वकस्यैवश्रुतत्वंनप्राप्नोतितन्नकिंकार
णंउक्तत्वात्॥उक्तमेवश्रुतशब्दोयंरूढिशब्दइतिरूढिशब्दाश्चस्वोत्पत्तिक्रियानपेक्षाः
प्रवर्तंतइतिसर्वमतिपूर्वस्यश्रुतत्वसिद्धिर्भवति॥आदिमत्त्वांतवत्त्वाच्छ्रुतस्यानादिनिधन
त्वानुपपत्तिरितिचेन्नद्रव्यादिसामान्यापेक्षयातत्सिद्धेः स्यादेतच्छ्रुतस्यादिमत्त्वमभ्युपग
तंमतिपूर्वमितिवचनात्आदिमतश्चलोकेंतवत्त्वंदृष्टंततश्चाद्यंतसंभावादनादिनिधनंश्रु
तमितिव्याहन्यतेततश्चपुरुषकृतित्वादप्रामाण्यंस्यादितिनैषदोषः॥द्रव्यादिसामा
न्यापेक्षयातत्सिद्धेः द्रव्यक्षेत्रकालभावानांविशेषस्याविवक्षायांश्रुतमनादिनिध

नमित्युच्यतेनहिकेनचित्पुरुषेणक्वचित्कदाचित्कथंचिदुत्प्रेक्षितमितितेषामेववि
शेषापेक्षया।आदिरंतश्चासंभवतीतिमतिपूर्वमित्युच्यते।यथांकुरोबीजपूर्वःसच
संतानापेक्षयाऽनादिनिधनइतितथाश्रुतस्यकृतकत्वंप्रामाण्यकारणंचौर्याद्युपदेश
स्यासर्वमाणाकर्तृकस्यप्रामाण्याप्रसंगात्नित्यस्यचप्रत्यक्षादेः।प्रामाण्येकोविरोधः
सम्यक्त्वोत्पत्तौयुगपन्मतिश्रुतोत्पत्तेर्मतिपूर्वकत्वाभावइतिचेन्नसम्यक्त्वस्यतदपेक्ष
त्वात्स्यान्मतं।मत्यज्ञानश्रुताज्ञानयोः।प्रथमसम्यक्त्वोत्पत्तौयुगपद्ज्ञानपरिणामान्म
तिपूर्वकत्वंश्रुतस्यनोपपद्यतइतितन्नकिंकारणंसम्यक्त्वस्यतदपेक्षत्वात्तयोर्हिस
म्यक्त्वंसम्यग्दर्शनोत्पत्तौयुगपद्भवति।आत्मलाभस्तुक्रमवानितिमतिपूर्वकत्वंयुक्तं
नापत्यवन्मतिपूर्वकत्वाविशेषइतिचेन्नकारणभेदात्तद्भेदसिद्धेः।
नांश्रुतमविशिष्टंप्राप्नोति।कुतःकारणाविशेषान्मतिपूर्वत्वंहि
षामविशिष्टमितितन्नकिंकारणंकारणभेदात्तद्भेदसिद्धेःप्रतिपुरुषंहिमतिश्रुता
वरणक्षयोपशमोबहुधाभिन्नस्तद्भेदाद्बाह्यनिमित्तभेदाच्चश्रुतस्यप्रकर्षाप्रकर्ष

योगोभवतिमतिपूर्वत्वाविशेषेपिश्रुतान्तुतप्रतिपत्तेर्लक्षणाव्याप्तिरितिचेन्नतस्यो
पचारतोमतित्वसिद्धेः स्यान्मतंयस्माच्छब्दपरिणतपुद्गलस्कंधादाहितवर्णपदवा
क्यादिभावाच्चक्षुरादिविषयाच्चआद्यश्रुतविषयभावमापन्नादविनाभाविनः कृ
तसंगतिर्जनोघटाज्जलधारणादिकार्यसंबंध्यंतरंप्रतिपद्यतेधूमादेर्वाग्न्यादिद्रव्यं
तदाश्रुताच्छ्रुतप्रतिपत्तिरितिकृत्वामतिपूर्वलक्षणमव्यापीतितन्नकिंकारणंतस्यो
पचारतोमतित्वसिद्धेः मतिपूर्वंहिश्रुतंक्वचिन्मतिरित्युपचर्यतेअथवाव्यवहिते
पूर्वशब्दोवर्त्तते। तद्यथा। पूर्वंमथुरायाः पाटलीपुत्रमितिततः साक्षान्मतिपूर्वं
परंपरयावामतिपूर्वमपिमतिपूर्वग्रहणेनगृह्यतेभेदशब्दस्यप्रत्येकंपरिसमाप्ति
र्भुजिवद्यथादेवदत्तजिनदत्तगुरुदत्ताभोज्यंतामितिभुजिः प्रत्येकंपरिसमाप्य
तेतथेहापिभेदशब्दः प्रत्येकमभिसंबध्यतेद्विभेदमनेकभेदंद्वादशभेदंचेतित्वां
गप्रविष्टमंगबाह्यंचेति। द्विविधेअंगप्रविष्टमाचारादिद्वादशभेदं बुद्ध्यतिशयर्द्धि
युक्तैर्गणधरानुस्मृतंग्रंथरचनं भगवदर्हत्सर्वज्ञहिमवन्निर्गतवागंगार्थविम॰

लसलिलप्रक्षालितान्तःकरणैर्बुद्ध्यतिशयर्द्धियुक्तैर्गणधरैरनुस्मृतग्रंथरचनमाचा
दिद्वादशविधमंगप्रविष्टमित्युच्यते तद्यथा आचारः सूत्रकृतं स्थानं समवायो व्या
ख्याप्रज्ञप्तिर्ज्ञातृधर्मकथा उपासकाध्ययनं अंतकृद्दशं अनुत्तरोपपादिकदशं प्रश्न
व्याकरणं विपाकसूत्रं दृष्टिवाद इति आचारे चर्याविधानं शुद्ध्यष्टकपंचसमितित्रिगुप्ति
विकल्पं कथ्यते सूत्रकृते ज्ञानविनयप्रज्ञापनाकल्प्याकल्प्यछेदोपस्थापनाव्यवहारधर्म
क्रियाः प्ररूप्यंते स्थानेनेकाश्रयाणामर्थानां निर्णयः क्रियते समवाये सर्वपदार्था
नां समवायश्चिंत्यते स चतुर्विधः द्रव्यक्षेत्रकालभावविकल्पैस्तत्र धर्माधर्मास्तिका
यलोकाकाशैकजीवानां तुल्यासंख्येयप्रदेशत्वादेकेन प्रमाणेन द्रव्याणां समवाय
नात् द्रव्यसमवायः जंबूद्वीपसर्वार्थसिद्ध्यप्रतिष्ठाननरकनंदीश्वरैकवापीनां तु
ल्ययोजनशतसहस्रविष्कंभप्रमाणेन क्षेत्रसमवायनात् क्षेत्रसमवाय उत्सर्पिण्य
वसर्पिण्योस्तुल्यदशसागरोपमकोटीप्रमाणात् कालसमवायः क्षायिकसम्यक्त्वके
वलज्ञानकेवलदर्शनयथाख्यातचारित्राणां यो भावस्तद्भवस्य तुल्यानंतप्रमाणत्वा

ह्लावसमवायनाह्लावसमवायव्याख्याप्रज्ञप्तौषट्त्रिंव्याकरणसहस्राणि किमस्ति जी
घोनास्तीत्येवमादीनि निरूप्यंते ज्ञातधर्मकथायामाख्यानोपाख्यानानां बहुप्रकाराणां
कथनमुपासकाध्ययने श्रावकधर्मलक्षणं संसारस्यांतः कृतो यैस्ते ऽतकृतः नमि
मतंगसोमिलरामपुत्रसुदर्शनयमलीकवलीकनिष्कंबलपालांबष्टपुत्रा इत्येते द
स वर्द्धमानतीर्थकरतीर्थे एवमृषभादीनां त्रयोविंशतेस्तीर्थेष्वन्येन्ये च दश दशानगा
रा दश दश दारुणानुपसर्गान्निर्जित्य कृत्स्नकर्मक्षयादंतकृतः दशास्यां वर्ण्यंत इति
अंतकृद्दशा अथवा अंतकृतां दशा अंतकृद्दशा तस्यामर्हदाचार्यविधिः सिध्यतां
च उपपादो जन्म प्रयोजनं येषां त इमे औपपादिकाः विजयवैजयंतजयंतापराजितस
र्वार्थसिद्धाख्यानि पंचानुत्तराणि अनुत्तरेष्वौपपादिकाः अनुत्तरोपपादिकाः ऋषि
दासवान्यसुनक्षत्रकार्त्तिकनंदनंदनशालिभद्राभयवारिषेणचिलातपुत्रा इत्येते द
श वर्द्धमानतीर्थकरतीर्थे एवमृषभादीनां त्रयोविंशतेस्तीर्थेष्वन्येन्ये च दश दशानगा
रा दश दश दारुणानुपसर्गान्निर्जित्य विजयाद्यनुत्तरेषूत्पन्ना इत्येवमनुत्तरोपपादि

रुजवा

८८

माध्वैनयिकानुबंधविशेषः॥ आक्षेपविक्षेपैर्हेतुनायाश्रितानांप्रश्ना
नांव्याकरणंप्रश्नव्याकरणंतस्मिंल्लौकिकवैदिकानामर्थानांनिर्णयः विपाकसू
कृतःदुःकृतानांविपाकश्चिंत्यते॥ द्वादशमंगंदृष्टिवादइतिकौ॥ कलकारणेविद्धिकौ
शिकहरिश्मश्रुमांछपिकरोमसहारितमुंडाश्वलादीनांक्रियावाददृष्टीनामशी
तेमरीचिकुमारकपिलोलूकगार्ग्यव्याघ्रभूतिवाहुलिमाठरमौद्गल्यायनादीनामक्रि
यावाददृष्टीनांचतुरशीतिःशाकल्यवाकलकुथुमिसात्यमुग्रिनारायणकंठमाध्यं
मोदपैप्पलादबादरायणाम्बष्ठीकृदैरिकायनवसुजैमिन्यादीनामज्ञानिकदृष्टीनां
॥वशिष्ठपाराशरजतुकर्णिवाल्मीकिरोमर्षिसत्यदत्तव्यासैलापुत्रौप
मन्यवस्थूलादीनांवैनयिकदृष्टीनांद्वात्रिंशदेषांदृष्टिशतानांत्रयाणांत्रिष
ष्ट्युत्तराणांप्ररूपणनिग्रहश्चदृष्टिवादेक्रियते॥ सपंचविधः॥ परिकर्मसूत्रंप्रथमा
नुयोगःपूर्वगतंचूलिकाचेतितत्रपूर्वगतंचतुर्दशप्रकारंउत्पादपूर्वमग्रायणीयंवी
र्यानुप्रवादंअस्तिनास्तिप्रवादंज्ञानप्रवादंसत्यप्रवादमात्मप्रवादंकर्मप्रवादंचप्रत्या

ख्याननामधेयंविद्यानुवादंकल्याणनामधेयंप्राणावायंक्रियाविशालेलोकवि
न्दुसारमितिकालभङ्गलजीवादीनांयद्यायत्रयथाचपर्यायैरुत्पादोवर्ण्यतेतदुत्पा
दपूर्वंक्रियावादादीनांप्रक्रियाग्रायणीयांगादीनांस्वसमवायविषयश्चयत्राख्या
पितस्तदग्रायणीयंछद्मस्थकेवलिनांवीर्यंसुरेन्द्रदैत्याधिपानांऋद्धयोनरेन्द्रचक्रध
रबलदेवानांचवीर्यलाभोद्रव्याणांसम्यक्लक्षणंचयत्राभिहितंतद्वीर्यप्रवादंपंचा
नामस्तिकायानामर्थोनयानांचानेकपर्यायैरिदमस्तीदंनास्तीतिचकात्स्न्र्येनयत्रा
वभासितंतदस्तिनास्तिप्रवादं।अथवाषरामपिद्रव्याणांभावाभावपर्यायविधि
नास्वपरपर्यायाभ्यामुभयनयवशीकृताभ्यामर्पितानर्पितसिद्धाभ्यांयत्रनिरूप
णंतदस्तिनास्तिप्रवादपंचानामपिज्ञानानांप्रादुर्भावविषयायतनानांज्ञानिनाम
ज्ञानिनामिन्द्रियाणांचप्राधान्येनयत्रविभागोविभावितःतज्ज्ञानप्रवादं।वाग्गुप्तिसं
स्कारकारणप्रयोगोद्वादशधाभाषावक्तारश्चानेकप्रकारमृषाभिधानंदशप्र
कारश्चसत्यसद्भावोयत्रप्ररूपितस्तत्सत्यप्रवादं वाग्गुप्तिंवक्ष्यमाणोवाक्संस्का

राजवा.
८६

रकाराणां निशिरः कंठादीन्यष्टौ स्थानानि वाक्प्रयोगः शुभेतरलक्षणो वक्ष्यते अ
भ्याख्यानकलहपैशुन्यासंबद्धप्रलापरत्यरत्युपधिनिकृत्यप्रणतिमोषसम्यग्मि
थ्यादर्शनात्मिकाभाषाद्वादशधा हिंसादेः कर्मणः कर्तुर्विरतस्याविरतोविरतस्य
वायमस्य कर्त्तेत्यभिधानमभ्याख्यानं। कलहः प्रतीतः। पृष्ठतो दोषाविष्करणं
पैशुन्यं धर्मार्थकाममोक्षासंबद्धा वागसंबद्धप्रलापः। शब्दादिविषयदेशादिषु
रत्युत्पादिकारतिवाक्। तेष्वेवारत्युत्पादिकारतिवाक् यां वाचं श्रुत्वा परिग्रहा
र्जनरक्षणादिष्वासज्यते सोपधिवाक्। वाणिज्यव्यवहारे यामवधार्य निकृ
त्यात्मा भवति सा निकृतिवाक्। यां श्रुत्वा तपो विज्ञानाधिकेष्वपि न प्रणमति
सा प्रणतिवाक्। यां श्रुत्वा स्तेये वर्त्तते सा मोषवाक्।
ग्दर्शनवाक्। तद्विपरीता मिथ्यादर्शनवाक्। वक्तारस्याविष्कृतवक्तृत्वपर्यायाद्वी
न्द्रियादयः। द्रव्यक्षेत्रकालभावाश्रयमनेकप्रकारमनृतं। दशविधः सत्यसद्भा
वः नामरूपस्थापनाप्रतीत्यसंवृतिसंयोजनाजनपददेशभावसमयसत्यभेदेन

तत्र सः चेतनेतरद्रव्यस्यासत्यप्यर्थे यद्व्यवहारार्थं संज्ञाकरणं तन्नामसत्यं इं
द्र इत्यादि यदर्थासंनिधानेपि रूपमात्रेणोच्यते तद्रूपसत्यं यथा चित्रपुरुषादिष्वस
त्यपि चैतन्योपयोगादावर्थे पुरुष इत्यादि असत्यप्यर्थे यत्कार्यार्थं स्थापितं द्यूताक्ष
निक्षेपादिषु तत्स्थापनासत्यं। आदिमदनादिसदौपशमिकादीन्भावान्प्रतीत्य
यद्वचनं तत्प्रतीत्यसत्यं यल्लोके संवृत्यानीतं वचस्तत्संवृतिसत्यं यथा पृथिव्याद्य
नेककारणत्वेपि सति पंके जातं पंकजमित्यादि धूपचूर्णवासानुलेपनप्रघर्षादि
षु पद्ममकरहंससर्वतोभद्रक्रौंचव्यूहादिषु वा सचेतनेतरद्रव्याणां यथाभाग
विधिसंनिवेशाविर्भावकं यद्वचस्तत्संयोजनासत्यं। द्वात्रिंशज्जनपदेष्वार्यानार्य
भेदेषु धर्मार्थकाममोक्षाणां प्रापकं यद्वचस्तज्जनपदसत्यं। ग्रामनगरराजगणपा
षंडजातिकुलादिधर्माणामुपदेष्टृ यद्वचस्तद्देसमसत्यं। छद्मस्थज्ञानस्य द्रव्ययाथा
त्म्यादर्शनेपि संयतस्य संयतासंयतस्य वा स्वगुणपरिपालनार्थं प्रासुकमिदमप्रा
सुकमिदमप्रासुकमित्यादि यद्वचस्तद्भावसत्यं। प्रतिनियतषड्द्रव्यपर्याया-

राजवा-
६०

णामागमगम्यानां याथात्म्याविष्करणं यत्र च तत्समयसत्यं ॥ यत्रात्मनोस्तित्वना
स्तित्वनित्यत्वानित्यत्वकर्तृत्वभोक्तृत्वादयो धर्माः षड्जीवनिकायभेदाश्च युक्ति
तो निर्दिष्टास्तदात्मप्रवादं ॥ बंधोदयोपशमनिर्जरापर्यायाः अनुभवप्रदेशाधि
करणानि स्थितिश्च जघन्यमध्यमोत्कृष्टा यत्र निर्दिश्यते तत्कर्मप्रवादं ॥ व्रत
नियमप्रतिलेखनतः कल्पोपसर्गाचारप्रतिमाविराधनाराधनविशुद्ध्युपक्र
मश्रामण्यकारणं च परिमितापरिमितद्रव्यभावप्रत्याख्यानं च यत्राख्यातं त
त्प्रत्याख्याननामधेयं ॥ समस्ता विद्या अष्टौ महानिमित्तानि तद्विषयो रज्जुराशि
विधिः क्षेत्रं श्रेणी लोकप्रतिष्ठा संस्थानं समुद्घातश्च यत्र कथ्यते तद्विद्यानु
वादं ॥ तत्रांगुष्ठप्रसेनादीनामल्पविद्यानां सप्तशतानि रोहिण्यादीनां महावि
द्यानां पंचशतानि अंतरिक्षभौमांगस्वरस्वप्नलक्षणव्यंजनछिन्नान्यष्टौ महा
निमित्तानि तेषां विषयो लोकः ॥ क्षेत्रमाकाशं पटसूत्रवच्चर्मपटवद्वानु
पूर्व्येणोर्ध्वाधस्तिर्यग्व्यवस्थिताः ॥ असंख्याताश्चाकाशप्रदेशाः श्रे

णायउक्ताः॥ अलोकाकाशस्यानंतस्य बहुमध्ये सुप्रतिष्ठकसंस्थानो लोकउक्तःम
ध्यस्तिर्यङ्मृदंगवेत्रासनझल्लर्याकृतिः तनुवातवलयपरिक्षिप्तमध्योस्तिर्यक्ष्व
नरवृत्तश्चतुर्दिशः ह्यायामोमेरुप्रतिष्ठवज्रवैडूर्यपटलांतररुचकसंस्थिताअ
ष्टावाकाशप्रदेशा लोकमध्ये लोकमध्याद्यावदैशानांतस्तावदेकारज्जुरूर्द्धंचमा
हेंद्रांते मिश्रः ब्रह्मलोकांते द्वे चतुर्थ्यौ॥ कापिष्ठांते चतस्रः॥ महाशुक्रांते अर्द्धपं
चमाः सहस्रांते पंच प्राणतांते अर्द्धषष्ठाः॥ अच्युतांते षट् आलोकमध्यादधः
यावच्छर्कराप्टथिव्यंतस्तावदेकारज्जुस्ततोधः पृथिवीनां पंचानां प्रत्येकमंते
ऽतोरज्जुरेकैका हृत्वा ततोधस्तमस्तमः प्रभाया आलोकांतादेकारज्जुः एवंसप्त
धोरज्जवः घनोदनोदधिघनानिलतनुवातवलयानि त्रीणि यैरयं परिक्षिप्तः सर्वःस
मंताल्लोकः॥ त्रयाणामप्यधोलोकदिग्विदिक्पार्श्वभाविनां प्रत्येकं विस्तारो विंश
तियोजनसहस्राणि ततउपरिक्रमतो हानिवशात्तिर्यग्लोकभाविदिक्पार्श्वेष्व
प्यनुप्रत्येकं त्रीण्यपि वलयानि पंचचतुस्त्रियोजनविस्तीर्णानि पुनरुपरिवृद्धि

वशाद्ब्रह्मलोके दिग्विदिक्पार्श्वेष्वष्टासु प्रत्येकं त्रीण्यपि वलयानि सप्तपंचचतुर्यो
जनविस्तीर्णानि ततो हानिवशाल्लोकाग्रे अष्टास्वपि दिग्विदिक्पार्श्वेषु प्रत्येकं
ण्यपि वलयानि पंचचतुस्त्रियोजनविस्तीर्णानि दंडवलयानि ततः पर्यंतेष्वत्री
ण्यप्युपरि लोकाग्रे घनोदधेर्द्विगव्यूती घनानिलस्य क्रोशः तनुवातस्य देशोनः
क्रोशो विस्तारः अधः कलंकलपृथ्वीपर्यंते घनोदधेः सप्त घनानिलस्य पंच त
नुवातस्य चत्वारि योजनानि विस्तारः अधोलोकमूले दिग्विदिक्षु विष्कंभः स
प्तरज्जवस्तिर्यग्लोके रज्जुरेका ब्रह्मलोके पंच ततो लोकाग्रे रज्जुरेका लोकमध्या
दधो रज्जुमवगाह्य शर्करांते अष्टास्वपि दिक्षु विदिक्षु विष्कंभः रज्जुरेका रत्ना
श्च षट् सप्तभागास्ततो रज्जुमवगाह्य वालुकांते द्वे रज्जू रत्नाश्च पंच सप्तभागास्त
तो रज्जुमवगाह्य पंकांते तिस्रो रज्जवः रत्नाश्चत्वारः सप्तभागास्ततो रज्जुमवगा-
ह्य धूमांते चतस्रो रज्जवः रत्नाश्च त्रयः सप्तभागास्ततो रज्जुमवगाह्य तमः
पंच रज्जवः रत्नाश्च द्वौ सप्तभागौ ततो रज्जुमवगाह्य तमस्तमः प्रभांते षड्रज्ज

वः॥समभागश्चैकस्ततोरज्जुमवगाह्यकलंकलातेविष्कंभः समरज्जवः वज्रतलद
परिरज्जुमक्रम्यविष्कंभोद्वेरज्जूरत्नाश्चएकः समभागः॥ततोरज्जुमक्रम्यतिस्रो
रज्जवः॥रत्नाश्चद्वौसमभागौततोरज्जुमक्रम्यचतस्रोरज्जवः रत्नाश्चत्रयः समभा
गाः॥ततोर्द्धरज्जुमक्रम्यरज्जवः॥पंचततोर्द्धरज्जुमक्रम्यचतस्रोरज्जवः रत्नाश्च
त्रयः समभागाः॥ततोरज्जुमक्रम्यतिस्रोरज्जवः॥रत्नाश्चद्वौसमभागौततोरज्जु
मक्रम्यद्वेरज्जूरत्नाश्चएकः समभागः॥ततोरज्जुमक्रम्यलोकांतेरज्जुरेकाविष्कं
भः॥एषरज्जुविधिः हेतेर्गमिक्रियत्वात्संभूयात्मप्रदेशानांचबहिरुद्धमनंसमुद्घा
तः॥ससप्तविधः वेदनाकषायमारणांतिकतेजोविक्रियाहारकाकेवलिविषयभेदा
त्तत्र॥वातिकादिरोगविषादिद्रव्यसंबंधः॥संतापापादितवेदनाकृतोवेदनासमुद्घा
तः॥द्वितयप्रत्ययप्रकर्षोत्पादितक्रोधादिकृतः कषायसमुद्घातः॥ऊपक्रमिकान
पक्रमायुषः॥क्षयाचिर्भूतिमरणांतप्रयोजनोमारणांतिकसमुद्घातः॥जीवानुग्रहोप
घातप्रवयात्तेजः॥शरीरनिर्वर्त्तनार्थस्तेजस्समुद्घातः॥एकत्वपृथक्त्वनानाविधि

विक्रियशरीरवाक्प्रचारप्रहरणादिविक्रियाप्रयोजनो वैक्रियसमुद्घातः ॥ अर्थोक्ति
विधिनाऽल्पसावद्यसूक्ष्मार्थग्रहणप्रयोजनाहारकशरीरनिर्वृत्त्यर्थः ॥ आहारक
समुद्घातः वेदनीयस्य बहुत्वादल्पत्वाच्चाप्रयोगेनाभोगपूर्वकमायुःसमकरणार्थं
द्रव्यस्वभावत्वात्सुराद्रव्यस्य फेनवेगबुद्बुदाविर्भावोपशमनवद्देहस्थात्मप्रदेशा
नां वहिः समुद्घातनं केवलिसमुद्घातः आहारकमारणांतिकसमुद्घातावेकदि
कौ यतः आहारकशरीरमात्मानिर्वर्त्तयन् श्रेणिगतित्वादेकदिक्कानात्मप्रदे
शानसंख्यातान्निर्गमय्याहारकशरीरं रत्निमात्रं निवर्त्तयति अन्यक्षेत्रसमुद्घा
तं तेनान्यक्षेत्रेतस्तावेकदिक्कौ शेषाः पंचसमुद्घाताः षड्दिक्काः ॥ यतो वेदना
दिसमुद्घातवशाद्बहिर्निस्सृतानामात्मप्रदेशानां पूर्वपरदक्षिणोत्तरोर्द्ध्वाधोदि
क्षु गमनमिष्टं श्रेणिगतित्वादात्मप्रदेशानां वेदनाकषायमारणांतिकतेजोवै
क्रियिकाहारकसमुद्घाताः षट् संख्येयसमयिकाः ॥ केवलिसमुद्घातः अ
ष्टसमयिकः दंडकपाटप्रतरलोकपूरणानि चतुर्षु समयेषु ॥ पुनः लोकपू

रणानि चतुर्थसमयेषु। पुनः लोकपूरणप्रतरकपाटदंडकस्वशरीरगतप्रवे
शाश्चतुर्ष्विति। रविशशिग्रहनक्षत्रतारागणानां चारोपपादगतिविपर्ययफला
निशाकुनव्याहृतमर्हद्बलदेववासुदेवचक्रधरादीनां गर्भावतरणादिमहाक
ल्याणानि च यत्रोक्तानि तत्कल्याणनामधेयं। कायचिकित्साद्यष्टांग आयुर्वेदः
भूतिकर्मजांगुलिप्रक्रमः। प्राणापानविभागोपि यत्र विस्तरेण वर्णितस्तत्प्रा
णावायं। लेखादिकाः कलाद्वासप्ततिर्गुणाश्चतुःषष्टिः स्त्रैणाः। शिल्पानिका
व्यगुणदोषक्रियाछंदोविचितिक्रियाफलोपभोक्तारश्च यत्र व्याख्याताः
तत्क्रियाविशालं। यत्राष्टौ व्यवहाराश्चत्वारि बीजानि परिकर्मराशिक्रियाविभा
गश्च सर्वश्रुतसंपदुपदिष्टा तत्खलु लोकबिंदुसारं। आरातीयाचार्यकृतांगार्थ
प्रत्यासन्नरूपमंगबाह्यं। यद्गणधरशिष्यप्रशिष्यैरारातीयैरधिगतश्रुतार्थत
त्त्वैः कालदोषादल्पमेधायुर्बलानां प्राणिनामनुग्रहार्थमुपनिबद्धं संक्षिप्तां
गार्थवचनविन्यासं तदंगबाह्यं तदनेकविधं कालिकोत्कालिकादिविकल्पा

तद्गवाद्यमनेकविधं कालिकमुत्कालिकमित्येवमादिविकल्पः स्वाध्याका
लेनियतकालं कालिकं अनियतकालमुत्कालिकं तद्भेदा उत्तराध्ययनाद्य
अनेकविधाः॥ अत्राह अनुमानादीनां पृथगनुपदेशः किमर्थः॥
पृथगनुपदेशः श्रुतावरोधाद्यस्मादेतान्यनुमानादीनि श्रुते अंतर्भवंति।
पृथगुपदेशो न क्रियते। तद्यथा। प्रत्यक्षपूर्वकं त्रिविधमनुमानं पूर्वव
मान्यतोदृष्टं चेति। तत्र येनाग्नेर्लिंगस्य पूर्वं धूमो दृष्टः स तत्रासिद्धाग्निधूमसंबंधा
हितसंस्कारः पश्चाद्धूमदर्शनादस्त्यत्राग्निरिति पूर्ववदग्निं गृह्णातीति पूर्व
मानं। तथा येन पूर्वं विषाणविषाणिनोः संबंध उपलब्धस्तस्य विषाणस्योपद
र्शनाद्विषाणिन्यनुमानं शेषवत्। तथा देवदत्तस्य देशांतरप्राप्तिं गतिपूर्विकां
दृष्ट्वा संबंध्यंतरे सवितरि देशांतरप्राप्तिदर्शनाद्गतेरत्यंतपरोक्षायाः
सामान्यतोदृष्टं तदेतत्त्रितयमपि स्वप्रतिपत्तिकालेऽनक्षरं श्रुतं परप्रतिप
त्तिकाले अक्षरश्रुतं यथा गौस्तथा गवयः केवलं सास्नारहितः इत्युपमानमपि

स्वपरप्रतिपत्तिविषयत्वादक्षरानक्षरश्रुतेऽन्तर्भवति तथाशाब्दमपिप्रमाणं
श्रुतमेवेति अस्य च इतीह सभगवान्वृषभः इतिपरंपरीणगुरुवागमाऽह्य
नद्यतिश्रुतेंतर्भावः प्रकृतिपुरुषौद्विवानंऽके अथचजीवतीत्यर्थापत्ते
रात्रौभुंक्ते इत्यर्थापत्तिश्चत्वारः प्रस्था आढकमिति संभवस्थाने आढके दृष्टे
संभवत्यर्द्धाढकं कुडवौवेति प्रतिपत्तिसंभवः स्थाणोतस्मादीनास्तीह परीक्षं
लाद्यभावदृष्टात्समीयते नूनमत्र न वृष्टः पर्जन्य इत्यभाव एतेषामप्यर्था
पत्त्यादीनामनुक्तानामनुमानसमानमिति पूर्ववच्छ्रुतांतर्भावः आख्यातं परो
क्षं प्रत्यक्षमिदानीं वक्तव्यं तद्द्विधा देशप्रत्यक्षं सर्वप्रत्यक्षं च देशप्रत्यक्षम
वधिमनःपर्ययज्ञाने सर्वप्रत्यक्षं केवलं यद्येवमिदमेव तावदवधिज्ञानं
त्रिप्राकारप्रत्यक्षस्यार्द्यंग्याक्षेपतामित्यत्रोच्यते आख्यातमस्यलक्षणं
आत्मप्रसादविशेषसत्यत्वर्षसंज्ञाकरणादवधीयते तदित्यवधिज्ञान
मिति यद्येवंतस्येदानीं भेदोवक्तव्यः उच्यते द्विविधोवधिः भवप्रत्य

त्ययसर्वशब्दस्यनिरवशेषवाचित्वात्सर्वावधिमपेक्ष्यपरमावधेर्देशावधित्वमेवेति
वक्ष्यामः तत्रयोसौभवप्रत्ययस्तत्प्रतिपादनार्थमाह ॥ भवप्रत्ययोवधिर्देवना
रकाणां ॥ भवइत्युच्यतेकोनामभवः ॥ आयुर्नामकर्मोदयविशेषापादितपर्यायो
आत्मनोभवः ॥ पर्यायः ॥ आयुषोनाम्नश्चउदयविशेषात्तेषकारणापेक्ष
विर्भवतिसाधारणलक्षणोभवइत्युच्यतेप्रत्ययशब्दस्यानेकार्थसंभवेविवक्षा
तोनिमित्तार्थगतिः ॥ अयंप्रत्ययशब्दोनेकार्थः क्वचित्ज्ञानेवर्त्तते ॥ यथार्थाभि
धानप्रत्ययाइति ॥ क्वचिच्छपथेवर्त्ततेयथापरद्रव्यहरणादिषुसत्युपालंभेप्र
नेनकृतइति ॥ क्वचिद्धेतौवर्ततेयथाविद्याप्रत्ययाः ॥ संस्काराइतितत्रेह विवक्षातो
निमित्तार्थोविदितव्यः ॥ भवप्रत्ययोभवनिमित्तइतिक्षयोपशमाभावइतिचेन्नत
स्मिन्सतितत्सद्भावात्पक्षिपतत्रिगतिवत् ॥ स्यादेतद्यदितत्रभवनिमित्तोवधिः क
र्मणः क्षयोपशमोनर्थकइतितन्नकिंकारणंतस्मिन्सतितस
वत्यथाकाशेसतिपक्षिणोगतिर्भवतितथावधिज्ञानावरणक्षयोपशमेनरंगे

हेतौ सत्यवधेर्भवो भवस्तु बाह्यो हेतुः इतरथा ह्यविशेषप्रसंगः। यदि हि भवगहेतुः
स्यात्सर्वेषां देवनारकाणां तुल्यः स्यादवधेरविशेषप्रसंगः। स्यादिष्यते च प्रकर्षा
प्रकर्षभावेनवृत्तिः कथं पुनर्भवो हेतुरिति चेद्व्रतनियमाद्यभावाद्यथा तिर
श्चां मनुष्याणां चाहिंसादि। व्रतनियमाहेतुको वाधिर्न तथा देवानां नारकाणां
चाहिंसादिव्रतनियमाभिसंधिरस्ति कुतो भवं प्रतीत्य कर्मोदयस्य तथाभावा
त्तस्मात्तत्र भव एव बाह्यसाधनं प्रधानमित्युच्यते। अविशेषात्सर्वप्रसंग इति
चेन्न। सम्यगधिकारात् स्यादेतद्देवनारकाणामित्यविशेषवचनान्मिथ्यादृष्टी
नामप्यवधिप्रसंग इति तन्न किं कारणं सम्यगधिकारात्सम्यग्दर्शनं सम्यग्ज्ञानं
मिति वर्त्तते संबंधात्सम्यग्दृष्टीनामवधिर्मिथ्यादृष्टीनां विभंगो वेदितव्यः। अथ
वा वक्ष्यमाणाभिसंबंधान्न सर्वप्रसंगः वक्ष्यते ह्येतन्मतिश्रुतावधयो विपर्ययश्चे
ति। अथवा व्याख्यानाद्विशेषप्रतिपत्तिः। आगमप्रसिद्धेर्नारकशब्दस्य पूर्वनि
पात इति चेन्नोभयलक्षणप्राप्तत्वाद्देवशब्दस्य स्यादेतन्नारकशब्दस्य पूर्वनिपा

नद्गतिचेन्नोभयलक्षणप्राप्तत्वाद्देवशब्दस्यस्यादेतन्नारकशब्दस्यपूर्वनिपातेनभ
वितव्यं कुतः आगमेप्रसिद्धेः आगमेहिजीवस्थानादिसदादिष्वनुयोगद्वारे
णादेशवचनेनारकाणामेवादौसदादिप्ररूपणाकृता ततोनारकशब्दस्यपू
र्वनिपातेनभवितव्यमितितन्नकिंकारणंउभयलक्षणप्राप्तत्वाद्देवशब्दस्य
देवशब्दोहिअल्पाजभ्यर्हितश्चेतिद्वन्द्वेपूर्वप्रयोगार्हः आगमोवाक्यविष
योनिर्देशानुवृत्तिनास्तिनियमः आहोर्कंभवनेष्वतेप्रकर्षाप्रकर्षभावेनवृत्ति
रितित्कथमितिचेदुच्यते देवेषुतावद्भवनवासिनांदशप्रकाराणामपिजघन्यो
वधिः पंचविंशतियोजनान्युत्कृष्टोसुराणांअसंख्यातायोजनकोटीकोट्योध
ऊर्ध्वंमरुतुविमानस्योपरिपर्यंतोनागादिकुमाराणांनवविधानामप्युत्कृष्टो
वधिरधोसंख्यातानियोजनसहस्राणिपूर्ध्वंमंदरचूलिकायाः उपरिपर्यंतस्ति
र्यगसंख्यातानियोजनसहस्राणिव्यंतराणामष्टविधानांजघन्योवधिः पंच
विंशतियोजनानि उत्कृष्टोस्पसंख्यातानियोजनसहस्राणिधः उर्ध्वस्व

व्य

नस्योपरिपर्यंतस्तिर्यगसंख्याता योजनकोटीकोट्यः॥ ज्योतिष्काजघन्योवधे
रंघः॥ संख्येयानियोजनान्युत्कृष्टस्त्वासंख्येयानियोजनसहस्राण्यूर्द्ध मात्मी
यविमानस्योपरिपर्यंतः॥ तिर्यगसंख्याता योजनकोटीकोट्यः वैमानकेषु
सौधर्मैशानीयानां जघन्योवधिर्ज्योतिष्कउत्कृष्टः रत्नप्रभायाअधस्थ्यरम
उत्कृष्टः सानत्कुमारमाहेंद्राणां जघन्योवधिः रत्नप्रभायाः॥ अधस्थरमः उ
त्कृष्टः॥ शर्कराप्रभायाअधस्थरमः॥ ब्रह्मब्रह्मोत्तरलांतवकापिष्टानां जघ
न्योवधिः॥ शर्कराप्रभाया॥ अधस्थरमउत्कृष्टोवालुकाप्रभायाअधस्थ
रमः शुक्रमहाशुक्रसतारसहस्राराणां जघन्योवधिर्वालुकप्रभाया॥ अ
धस्थरमनुत्कृष्टपंकप्रभाया॥ अधस्थरमउत्कृष्टपंकप्रभाया॥ अधस्थरमः
आनतप्राणतारणाच्युतानां जघन्योवधिपंकप्रभायाअधस्थरमः॥ उत्कृष्टो
धूमप्रभायाअधस्थरमः॥ उत्कृष्टः नवानांग्रैवेयकानां जघन्योवधिर्धूम
प्रभायाअधस्थरमः॥ उत्कृष्टः तमः प्रभायाअधस्थरमः नवानामनुदि

राजवा॰
९६

दिशामांपंचानुत्तरविमानवासिनांचलोकनालिपर्यंतोवधिः सौधर्मादीनामं
नुत्तरांतानाऊर्द्ध्वंस्वविमानस्योपरिपर्यंतास्तिर्यगसंख्यातायोजनकोटीकोट्यः
॥थैषांकालद्रव्यभावेष्ठु॥कोवधिरित्यत्रोच्यते॥यस्ययावत्क्षेत्रावधिस्त
स्यतावदाकाशप्रदेशपरि॥छिन्नेकालद्रव्येभवतः॥तावत्सुसमयेष्वतीते
ष्वनागतेष्ठुचप्रानेवर्त्तते॥तावदसंख्यातभेदेष्वनंतप्रदेशेषु॥पुद्गलस्कंधे
षुजीवेष्ठुचसकर्मकेषुभावतः॥स्वविषयपुद्गलस्कंधानांरूपादिविकल्पे
षुजीवपरिणामेषुचऊदयिकौपशमिकक्षायोपशमिकेषु॥योजनमर्द्धग
व्यूतहीनमागव्यूतानित्वथारत्नप्रभायांयोजनमवधिरधः॥द्वितीयायामधो
र्द्धचतुर्थानिगव्यूतानित्रितीयायामधः॥त्रीणिगव्यूतानिचतुर्थ्यामधोर्द्धतृ
तीयानिगव्यूतानिपंचम्यांद्वेगव्यूतेषष्ठ्यामधोर्द्धाधिकंगव्यूतं॥सप्तम्यामधो
गव्यूतं॥सर्वासुपृथिवीषुनारकाणामवधिरुपरि॥आत्मीयनरकावासो
र्यगसंख्यातायोजनकोटीकोट्यःकालद्रव्यभावपरिमाणंपूर्ववद्वेदितव्यंय

द्भिवप्रत्ययोवधिर्देवनारकाणामस्याक्षयोपशमहेतुका। केषामित्यतआह॥
क्षयोपशमनिमित्तः षड्विकल्पः॥ शेषाणां॥ अवधिज्ञाना॥वरणस्यदेशघाति
स्पर्द्धकानामुदयेसतिसर्वघातिस्पर्द्धकानामुदयाभावः॥ सशेषाणांवेदितव्यः
केपुनः शेषाः मनुष्यास्तिर्यंचश्चशेषास्तत्रतेषामविशेषात्सर्वेषांतिरश्चांम
नुष्याणांचावधिप्रसंगइतितन्नकिंकारणंतत्सामर्थ्यविरहात्असंज्ञिना
मपर्याप्तकानांचतत्सामर्थ्यमस्तिसंज्ञिनांपर्याप्तकानांचसर्वेषांकेषांतर्हिय
थोक्तनिमित्तसंनिधानेसतिशांतक्षीणकर्मणांतस्योपलब्धेः॥ यथोक्तसम्य
ग्दर्शनादिनिमित्तसंनिधानेसतिशांतक्षीणकर्मणांतस्योपलब्धिर्भवतिनतुस
र्वस्यक्षयोपशमनिमित्तस्तत्रकिमुच्यते क्षयोपशमनिमित्तः शेषाणामिति
सर्वस्यक्षयोपशमनिमित्तत्वेतद्वचनंनियमार्थमब्भक्षवत् यथानकश्चिदपो
नभक्षयतीत्यवग्रहणंनियमार्थंक्रियते अपएवभक्षयतीतितथासर्वक्षयो
पशमनिमित्तग्रहणंनियमार्थं क्षयोपशमनिमित्तएवनभवनिमित्तइति

राजवा·
६०

सएषोवधिः षड्विकल्पः कुतः अनुगाम्यननुगामिवर्द्धमानहीयमानावस्थि
तानवस्थितभेदात्षड्विधः कश्चिदवधिर्भास्करप्रकाशवद्गच्छंतमनुगच्छति क
श्चिन्नानुगच्छतितत्रैवातिपततिउन्मुखप्रश्नादेशिकपुरुषवचनवत् अप
रोवधिररणिनिर्मथनोत्पन्नशुष्कपत्रोपचीयमानेंधननिचयसमिद्धपावक
वत्सम्यग्दर्शनादिगुणविशुद्धिपरिणामसंनिधानाद्यत्परिमाणउत्पन्नस्तोवर्द्ध
ते आ असंख्येयलोकेभ्यः अपरोवधिः परिच्छिन्नोपादानसंतत्यग्निशिखा
वत्सम्यग्दर्शनादिगुणहानिसंक्लेशपरिणामविवृद्धियोगाद्यत्परिमाणउत्पन्नस्त
तोहीयते आ अंगुलस्यासंख्येयभागात् इतरोवधिः सम्यग्दर्शनादिगुणाव
स्थानाद्यत्परिमाणउत्पन्नस्तत्परिमाणएवावतिष्ठतेनहीयते नापिवर्द्धतेलिं
गवदाभवक्षयादाकेवलज्ञानोत्पत्तेर्वा अन्योवधिः सम्यग्दर्शनादिगुणवृद्धि
हानियोगात् यत्परिमाणउत्पन्नस्ततोवर्द्धतेयावदनेनवर्द्धितव्यंहीयतेचयाव
दनेनहातव्यंवायुवेगप्रेरितजलोर्मिवदेवंषड्विकल्पोवधिर्भवति पुनरपरेव

धेस्त्रयोभेदाः। देशावधिः। परमावधिः सर्वावधिश्चेति। तत्र देशावधिस्त्रेधा जघ
न्योत्कृष्टः। अजघन्योत्कृष्टश्चेति, तथा परमावधिरपि त्रिधा। सर्वावधिरविक
ल्पत्वादेक एव उत्सेधाङ्गुलासंख्येयभागक्षेत्रो देशावधिर्जघन्यः। उत्कृष्टः कृ
त्स्नलोकस्तयोरंतराले संख्येयविकल्पः। अजघन्योत्कृष्टः। परमावधिर्जघन्य
एकप्रदेशाधिकलोकक्षेत्रः। उत्कृष्टोऽसंख्येयलोकक्षेत्र। अजघन्योत्कृष्टो
मध्यमक्षेत्रः। उत्कृष्टपरमावधिक्षेत्राद्बहिरसंख्यातक्षेत्रः सर्वावधिर्वर्द्धमानो
हीयमान। अवस्थितः। अनवस्थितः। अनुगाम्यननुगामी अप्रतिपाती प्रतिपाती
ति एते अष्टौ भेदा देशावधेर्भवंति हीयमानप्रतिपातिभेदवर्ज्जा इतरे षड्भेदा भवं
ति परमावधेरवस्थितो अनुगाम्यननुगाम्यप्रतिपाती त्येते चत्वारो भेदाः सर्वावधे
स्तत्र षडन्या उक्तलक्षणाः प्रतिपातीति विनाशी विद्युत्प्रकाशवत् तद्विपरीतो
अप्रतिपाती तत्र देशावधेः सर्वजघन्यस्य क्षेत्रमुत्सेधांगुलस्यासंख्येयभागः। आ
वलिकाया असंख्येयभाग। कालः अंगुलस्यासंख्येयभागक्षेत्रप्रदेशप्रमाणं

राजवा०

द्रव्यं तत्प्रमाणपरिच्छिन्नेष्वसंख्येयेषु स्कंधेष्वनंतप्रदेशेषु ज्ञानं वर्त्तते स्वविषय
स्कंधगमानंतवर्णादिविकल्पो भावस्तस्य वृद्धिरुच्यते प्रदेशांतरक्षेत्रवृद्धिर्नास्ति
एकजीवस्य नानाजीवानां तु प्रदेशांतरक्षेत्रे वृद्धिर्भवति आसर्वलोकादेकजीव
स्यांगुलासंख्येयभागादूर्द्ध्वं विशुद्धिवशान्मंडूकप्लुत्यांगुलासंख्येयभागक्षेत्रे
वृद्धिर्भवत्यासर्वलोकान्नानाजीवा अपि प्रदेशांतरवृद्ध्या नावहूयंते यावदंगु
लस्यासंख्येयभागः कालवृद्धिरेकजीवस्य नानाजीवानां वा मौलादावलिकाला
ख्येयभागात् ॥ कश्चिदेकसमयोत्तरा कश्चिद्द्विसमयोत्तरा कश्चित्संख्येयसम
योत्तरा यावदावलिकाया असंख्येयभागः ॥ सेयं क्षेत्रकालवृद्धिः कया वृद्ध्या चतु
र्विधयासंख्येयभागवृद्ध्या संख्येयगुणवृद्ध्या असंख्येयगुणवृद्ध्या वा एवं द्रव्यमपि
वर्द्धमानं चतुर्विधया वृद्ध्या वर्द्धते भाववृद्धिः षोढा अनंतभागवृद्धिरसंख्येयभाग
॥ संख्येयभागवृद्धिः संख्येयगुणवृद्धिरसंख्येयगुणवृद्धिरनंतगुणवृद्धि
रिति अनयोः क्षेत्रकालद्रव्यभाववृद्ध्योक्तया ॥ आसर्वलोका

रपितष्ठेवयोंगुलसंख्येयभागक्षेत्रोवधिस्तस्यावलिकायासंख्येयभागः।कालः
श्चंगुलसंख्येयभागक्षेत्राकाशप्रदेशप्रमाणेद्रव्यभावः।पूर्वोदनंतोवास्यादसं
ख्येयोवास्यात्संख्येयोवास्याद्योंगुलमात्रक्षेत्रोवधिस्तस्यपद्भिन्नावलिकाका
ल।द्रव्यभावौपूर्ववद्योंगुलपृथक्त्वक्षेत्रोवधिस्तस्यावलिकाकालः।द्रव्यभावौ
पूर्ववद्योहस्तप्रमाणक्षेत्रोवधिस्तस्यावलिकापृथक्त्वंकाल।द्रव्यभावौपूर्वव
द्योगव्यूतिमात्रक्षेत्रोवधिस्तस्यसाधिकोच्छासः।काल।द्रव्यभावौपूर्ववत्।यो
योजनमात्रक्षेत्रोवधिस्तस्यभिन्नमुहूर्त्तःकालः।द्रव्यभावौपूर्ववद्य।पंचविं
शतियोजनप्रमाणक्षेत्रोवधिस्तस्यपद्नोदिवसः।कालः।द्रव्यभावौपूर्ववद्यो
भरतक्षेत्रमात्रोवधिस्तस्यार्द्धमासकाल।द्रव्यभावौपूर्ववत्।योजंबूद्वीपमात्रक्षे
त्रोवधिस्तस्यसाधिकोमासः।कालः।द्रव्यभावौपूर्ववद्योमनुष्यलोकमात्रक्षे
त्रोवधिस्तस्यसंवत्सरः।कालः।द्रव्यभावौपूर्ववत्।योरुचकांतप्रमाणक्षेत्रो
वधिस्तस्यसंवत्सरपृथक्त्वंकालः।द्रव्यभावौपूर्ववत्।यःसंख्येयद्वीपसमुद्र

क्षेत्रोवधिस्तस्यासंख्येयाः संवत्सराः कालः द्रव्यभावौपूर्ववत्तयोसंख्येयद्वीपसमु
द्रक्षेत्रोवधिस्तस्यासंख्येयाः संवत्सराकालः द्रव्यभावौपूर्ववत् एवंजघन्यो
त्कृष्टस्तिर्यग्नराणांदेशावधिरुक्तः आभ्यांतिरश्चामुत्कृष्टदेशावधिरुच्यते
क्षेत्रमसंख्येयाद्वीपसमुद्राः कालोप्यसंख्येयाः संवत्सरांस्तेजः शरीर
गांद्रव्यं कियच्चतदसंख्येयद्वीपसमुद्राकाशप्रदेशपरिछिन्नाभिरसंख्ये
याभिस्तेजःशरीरद्रव्यवर्गणाभिर्निर्वर्तितंतावदसंख्येयस्कंधानन्तं तत्र
देशान्ता नातीत्यर्थः भावः पूर्ववत्तिरश्चांमनुष्याणांचजघन्योदेशाव
धिर्भवतितिरश्चांतुदेशावधिरेवनपरमावधिर्नापिसर्वावधिः अथम
नुष्याणामुत्कृष्टोदेशावधिरुच्यते क्षेत्रमसंख्येयाद्वीपसमुद्राः कालो
प्यसंख्येया संवत्सराः द्रव्यंकार्माणद्रव्यंकियच्चतदसंख्येयद्वीपसमुद्राका
शप्रदेशपरिछिन्नान्यसंख्येयाज्ञानावरणादिकार्मणद्रव्यवर्गणाभावःपू
र्ववद्देवदेशावधिरुत्कृष्टोमनुष्याणांसंयतानांभवतिपरमावधिरुच्यते

जघन्यस्यपरमावधे॥क्षेत्रंप्रदेशाधिकोलोकः॥कालः प्रदेशाधिकलोकाकाशप्रदे
शावच्छन्नप्रमाणाः॥अविभागिनः समयास्तेचासंख्याताः संवत्सराः द्रव्यंप्रदेशा
धिकलोकाकाशप्रदेशावच्छन्नप्रमाणंभावः पूर्ववदनः॥परक्षेत्रवृद्धिर्नानाजीवे
कजीवानामविशेषेणविशुद्धिवशादसंख्येयालोकाः॥एवंतावदसंख्येयालोका
वृद्धिर्यावदुत्कृष्टपरमावधिक्षेत्रंकियंतश्चतेऽसंख्येयाः॥आवलिकायाः॥असं
ख्येयभागप्रमाणाः॥कालद्रव्यभावाः॥पूर्ववदुत्कृष्टपरमावधे॥क्षेत्रंसलोकालोक
प्रमाणाअसंख्येयालोका॥किंयंतस्तेऽग्निजीवतुल्याः॥कालद्रव्यभावाः॥पूर्वव
त्सएषत्रिविधोपिपरमावधिरुत्कृष्टचारित्रयुक्तस्यैवभवतिनान्यस्यवर्द्धमानोभ
वतिनहीयमानः॥अप्रतिपातिनप्रतिपातियस्ययावतिसलोकेलोकप्रमाणासंख्ये
यलोकक्षेत्रेजातस्तस्यतावत्यवस्थानादवस्थितोभवत्यनवस्थितश्चवृद्धिप्रतिन
हानिमैहलौकिकदेशांतरगमनादनुगामिपारलौकिकदेशांतरानुगमनाभावाद
ननुगामिसर्वावधिरुच्यते॥असंख्येयानामसंख्येयभेदत्वादुत्कृष्टपरमावधिक्षेत्र

मसंख्येयलोकगुणितमस्यक्षेत्रंकालद्रव्यभावाः॥ पूर्ववत्सएषनवर्द्धमानोनान
हीयमानोनानवस्थितोनप्रतिपातिप्राकंयत्तभवक्षयादवस्थितोऽप्रतिपातिभ
वांतरंप्रत्यननुगामिदेशांतरंप्रत्यनुगामि॥ सर्वशब्दस्यसाकल्यवाचित्वाद्द्रव्यक्षे
त्रकालभावैः सर्वावधेरंतः॥ यातिपरमावधिः॥ अतः परमावधिरपिदेशावधि
रपिदेशावधिरेवेतिद्विविधएवावधिः॥ सर्वावधिदेशावधिस्त्री कायोवृद्धौयदा
कालवृद्धिस्तदाचतुर्णामपिवृद्धिर्नियताक्षेत्रवृद्धौकालवृद्धिर्भाज्यास्यात्कालवृ
॥ स्यान्नेतिद्रव्यभावयोस्तुवृद्धिर्नियताद्रव्यवृद्धौभाववृद्धिर्नियताक्षेत्रकालवृ
द्धिः॥ पुनर्भाज्यास्याद्वानवेतिभाववृद्धावपिद्रव्यवृद्धिर्नियताक्षेत्रकालवृद्धिर्भा
साएषोवधिज्ञानोपयोगोद्विधाभवति॥ एकक्षेत्रोनेकक्षेत्रश्चश्री
वत्साद्यन्यतमोपयोगोपकरणएकक्षेत्रः तदनेकोपकर
णोपयोगोनेकक्षेत्रःआयद्येवंपरायत्तत्वात्परोक्षत्वप्रसंगः नेंद्रियेभ्यपरत्वस्फुटेइं
द्रियाणिपराण्याहुरिंद्रियेभ्यः परंमनः मनसस्तुपराबुद्धिर्बुद्धेः॥ परतरोहिसइत्ये

वंबहुधाव्याख्यातंअवधिज्ञानंमनःपर्य्ययस्येदानीमवसरप्राप्तस्यभेदपुरःसरं
लक्षणंव्याचिख्यासुरिदमाह॥ ऋजुविपुलमतीमनःपर्ययः॥ ऋज्वीनिर्वर्त्ति
ताप्रगुणाचकस्मान्निर्वर्त्तितवाक्कायमनस्कृतार्थस्यपरमनोगतस्यविज्ञानादृ
ज्वीमतिर्यस्यसोयमृजुमतिः॥ अनिवर्त्तिता कुटिलाचविपुलाकस्मादनिवर्त्तितवा
क्कायमनस्कृतार्थस्यपरकीयमनोगतस्यविज्ञानाद्विपुलामतिरस्यसविपुलमतिः
ऋजुमतिश्चविपुलमतिश्चऋजुविपुलमतीएकस्यमतिशब्दस्यगतार्थत्वादप्र
योगः॥ अथवाऋजुश्चविपुलाचऋजुविपुले॥ ऋजुविपुलेमतीययोस्तौ॥ ऋजु
विपुलमती॥ इतिसएषमनःपर्ययोद्विधा॥ ऋजुमतिर्विपुलमतिरिति॥ अत्रोक्तोभे
दः लक्षणमस्येदानींवक्तव्यमित्यत्रोच्यतेमनःसंबंधेनलब्धवृत्तिर्मनःपर्ययःवी
र्यांतरायमनःपर्ययज्ञानावरणक्षयोपशमांगोपांगनामलाभोपष्टंभादात्मीयप
रकीयमनःसंबंधेनलब्धवृत्तिरुपयोगोमनःपर्ययः मतिज्ञानप्रसंगइतिचेन्ना
न्यदीयमनोपेक्षामात्रत्वादभ्रचंद्रव्यपदेशवत्स्यान्मतंयथामनश्चक्षुरादिसं

बंधा। चक्षुरादिज्ञानमाविर्भवतितन्मतिज्ञानंतथामनः पर्ययोपिमनः संबंधा
ल्लब्धवृत्तिरितिमतिज्ञानंप्राप्नोतीतितन्नकिंकारणं। अन्यदीयमनोपेक्षामा
त्रत्वात्कथमभ्रेचंद्रव्यपदेशवद्यथाभ्रेचंद्रमसंपश्येति। अत्रमपेक्षाकारण
मात्रंभवतिनचचक्षुरादिवन्निर्वर्तकं। चंद्रज्ञानस्यतथान्यदीयमनोप्यपेक्षा
कारणमात्रंभवतिपरकीयमनसिव्यवस्थितमर्थंजानातिमनःपर्ययइतित
तोनास्यतदायत्तं। प्रभवइतिनयतिज्ञानप्रसंगः स्वमनदेशेवातदावरणकर्मक्ष
योपशमव्यपदेशाचक्षुष्यवधिज्ञाननिर्देशवत्। अथवाचक्षुर्देशस्थानां
मात्मप्रदेशानामवधिआवरणक्षयोपशमाद्यथाचक्षुष्यवधिज्ञानव्यपदेश
इष्ट नचावधिर्मतिर्भवतितथामनःपर्ययज्ञानावरणक्षयोपशमात्स्वम
नोदेशस्थानामात्मप्रदेशानांमनःपर्ययव्यपदेशोनचास्यमतित्वंमनःप्रति
बंधज्ञानादनुमानप्रसंगइतिचेन्नप्रत्यक्षलक्षणविरोधात् स्या
धूमप्रतिबंधाद्धूमसंपर्केस्यादनुमानं। तथान्यदीयमनःप्रतिबंधात्तन्मनः

संप्रत्यक्षानर्थाज्ज्ञानन्मनःपर्ययोनुमानमितितन्नकिंकारणंप्रत्यक्षलक्षणा-
विरोधात्प्रत्यक्षलक्षणमुक्तमिंद्रियानिंद्रियनिरपेक्षमतीतव्यभिचारंसा
कारग्रहणंप्रत्यक्षमितितेनाविरोधोनमनः। पर्ययोऽनुमानंहितेनविरुध्य
ते। उपदेशपूर्वकत्वाच्चक्षुरादिकरणनिमित्तत्वाच्चानुमानस्यउपदेशाद्धिअय
मग्निरयंधूमइत्युपलभ्यपश्चाद्धूमदर्शनादग्नावनुमानंकरोतिचक्षुरादिक
रणसंबंधाच्चततोस्योक्तंप्रत्यक्षलक्षणंविरुध्यतेनचतथामनः। पर्ययउप
देशंचक्षुरादिकरणसंबंधंचापेक्षते। सद्वेधाऋजुविकल्पात्समनःपर्य
योद्वेधाकृतःऋजुविकल्पाहृजुमतिर्विपुलमतिरिति। आद्यस्त्रेधाऋजुमनोवा
क्कायविषयभेदादृजुमतिमनः। पर्ययस्त्रेधाकृतः। ऋजुमनोवाक्कायवि
षयभेदादृजुमनस्कृतार्थज्ञः ऋजुवाक्कृतार्थज्ञः ऋजुकायकृतार्थज्ञश्चे
तद्यथामनसार्थव्यक्तंसंचिंत्यवाचंवाधर्मादिप्रयुक्तामसंकीर्णामुच्चार्यकाय
प्रयोगंचोभयलोकफलनिष्पादनार्थमंगोपांगप्रत्यंगनिपातना। कुंचनप्र

राजवा·
१०२

स्मरणादिलक्षणांकृत्वापुनरनंतरसमयेकालांतरेवातमेवार्थंचिंतितंमुक्तंकृतंवावि
स्मृतत्वान्नशक्नोतिचिंतयितुंतमेवंविधमर्थंऋजुमतिमनःपर्यय।पृष्टो।पृष्टो
वाजानाति॥अपरमसावर्थंअनेनविधिनात्वयाचिंतितः।उक्तःकृतोवेतिकथमे
यमर्थोलभ्यतेआगमाविरोधात्आगमेह्युक्तंमनसामनः।परिच्छिद्यपरेषांसंज्ञादी
न्जानातीतिमनसात्मात्मनेत्यर्थः परमनःसमंताद्धित्वापरिच्छिद्यमनसाचिं
तितस्यसचेतनेतरस्यार्थस्यमनस्यवस्थानात्मनोव्यपदेशः॥मंचस्थानांपुरुषा
णांमंचव्यपदेशवमात्मनाआत्मावबुध्यात्मनः।परेषांचचिंताजीवितमरणसुख
दुःखलाभालाभादीन्विजानातिव्यक्तमनसांजीवानामर्थं।जानातिनाव्यक्तम
नसांव्यक्तःस्फुटीकृतोर्थः।चिंतयासुनिवर्तितःयेतेजीवाव्यक्तमनसस्तैरर्थं
चिंतितंऋजुमतिर्जानातिनेतरैः कालतोजघन्येनजीवानामात्मनश्चद्वित्री
णिउत्कर्षेणसप्ताष्टानिभवग्रहणानिगत्यागत्यादिभिःप्ररूपयतिक्षेत्रतोज
व्यूतिपृथक्त्वस्याभ्यंतरंनवहिरुत्कर्षेणयोजनपृथक्त्व

वहि। द्वितीयः॥ षोढा ऋजुवक्रमनोवाक्कायविषयभेदाद्द्वितीयो विपुलमतिः षोढाभि
धीयते कुतः ऋजुवक्रमनोवाक्कायविषयभेदादृजुविकल्पा उक्ता वक्रविकल्पा
श्च तद्विपरीता योज्याः॥ तथात्मनः परेषां च चिंताजीवितमरणसुखदुःखलाभा
लाभादीन् व्यक्तमनोभिर्व्यक्तमनोभिश्च चिंतितान् जानाति विपुलमतिः॥ काल
तो जघन्येन सप्ताष्टानि भवग्रहणानि उत्कर्षेणासंख्येयानि गत्यागतिभिः॥ प्ररू
पयति क्षेत्रतो जघन्येन योजनपृथक्त्वमुत्कर्षेण मानुषोत्तरशैलाभ्यंतरे न बहि
रेवं द्विभेदो मनः॥ पर्ययो वर्णितस्तस्य किं परस्परतो विशेषो नेत्युक्ते नास्तीत्यत आह
विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः॥ तदावरणकर्मक्षयोपशमे सति आत्मनः
प्रसादो विशुद्धिः प्रतिपतनं प्रतिपातः॥ उपशांतकषायस्य चारित्रमोहोद्रेकात्प्र
च्युतसंयमशिखरस्य प्रतिपातो भवति क्षीणकषायस्य प्रतिपातकारणाभावाद
प्रतिपातः॥ विशुद्धिश्च अप्रतिपातश्च विशुद्ध्यप्रतिपातौ ताभ्यां विशुद्ध्यप्रतिपात
भ्यां तयोर्विशेषस्तद्विशेषः॥ पूर्वस्तत्र स्वतयोर्विशेषो निरुक्तिः॥ किमर्थं पुनरिदमुच्य

तौ॥ विशेषांतरप्रतिपत्त्यर्थं पुनर्वचनं॥ पूर्वसूत्रे विशेष उक्तस्तावतास्य न परितोष
स्ततो विशेषांतरप्रतिपत्त्यर्थं पुनरिदमुच्यते॥ चशब्दप्रसंग इति चेन्न प्राथमक
र्मभेदाभावात्॥ यथा मनः॥ पर्ययस्य ऋजुविपुलमती भेदौ तथा विशुद्ध्यप्रतिपा
तावपि तस्यैव यदि भेदौ स्यातां प्रयुक्तश्चशब्दः स्यात् न तु विशुद्ध्यप्रतिपातौ ऋजु
विपुलमत्योर्विशेषो न भेदावतश्चशब्दाप्रसंगस्तत्र विशुद्ध्या तावदृजुमतेर्वि
लमतिर्द्रव्यक्षेत्रकालभावैर्विशुद्धतरः॥ कथमिह यत्र॥ कार्म्मणद्रव्यानंतभागोन्त्यः
सर्वावधिना ज्ञातस्तस्य पुनरनंतभागीकृतस्य मनः॥ पर्ययज्ञेयोनंतभागोनंतस्यानं
तभेदत्वात् ऋजुमतिकार्म्मणद्रव्यानंतभागात् दूरविप्रकृष्टोन्त्यो यानंनंतभागो विपु
लमतेर्द्रव्यक्षेत्रकालविशुद्धिरुक्ता भावतो विशुद्धिरुक्ता भावतो विशुद्धिः॥ सूक्ष्म
तरद्रव्यविषयत्वादेव वेदितव्या प्रकृष्टक्षयोपशमविशुद्धिभावयोगात् अप्रतिपा
तेनापि विपुलमतिर्विशिष्टः॥ स्वामिनां प्रवर्द्धमानचारित्रोदयत्वात् ऋजुमति॥ पुनः
प्रतिपाती स्वामिनां कषायोद्रेकाद्धीयमानचारित्रोदयत्वाद्ध्यस्य मनःपर्यय

स्यप्रत्यात्ममयंविशेषः।।अथानयोरवधिमनः।।पर्यययोःकुतोविशेषइत्यतआ
ह।।विशुद्धिक्षेत्रस्वामिविषयेभ्योवधिमनःपर्यययोः।।विशुद्धिःप्रसादःक्षे
त्रंयत्रस्थान्भावान्प्रतिपद्यतेस्वामीप्रयोक्ताविषयोज्ञेयः।।अवधिज्ञानान्मनः।।
पर्ययस्यविशुद्धभावोल्पद्रव्यविषयत्वादितिचेन्नभूय।पर्ययज्ञानात्स्याल्प
तमवधिज्ञानान्मनः।।पर्ययोविशुद्धतरःकुतः।।अल्पद्रव्यविषयत्वाद्यतःसर्वा
वधिरूपिद्रव्यानंतभागोमनःपर्ययद्रव्यमितितन्माकिंकारणंभूयःपर्ययज्ञाना
द्यथाकश्चिद्बहुनिशास्त्राणिव्याचष्टेएकदेशेननसाकल्येनतद्गतमर्थंशक्नोति
वक्तुं।।अपरस्त्वेकंशास्त्रंसाकल्येनव्याचष्टेयावंतस्तस्यार्थास्तान्सर्वान्शक्नोति
वक्तुं।।अयंपूर्वस्माद्विशुद्धतरविज्ञानोभवतितथावधिज्ञानविषयानंतभागस्यो
पिमनः।।पर्ययोविशुद्धतरः।।यतस्तमनंतभागंरूपादिभिर्बहुभिः।।पर्ययैःप्ररू
पयतिक्षेत्रमुक्तंविषयोवक्ष्यते।।स्वामित्वंप्रत्युच्यतेविशिष्टसंयमग्रहणोकार्यस
मवाधिमनः।।पर्ययः।।विशिष्टःसंयमगुणोयत्रविद्यतेतत्रैववर्त्ततिमनः।।पर्यय

विर्भवतिनदेवनारकतिर्यग्योनेषुमनुष्येषुचोत्पद्यमानोगर्भजेषूत्पद्यतेनसंमू
र्छनजेषुगर्भजेषूत्पद्यमानः।कर्मभूमिजेषूत्पद्यतेनाकर्मभूमिजेषुकर्मभूमिजे
षूत्पद्यमानःपर्याप्तकेषूत्पद्यतेनापर्याप्तकेषूपजायमानः।सम्यग्दृष्टिषूपजा
यतेनमिथ्यादृष्टिसासादनसम्यग्दृष्टिसम्यग्मिथ्यादृष्टिषुसम्यग्दृष्टिषूपजायमा
नःसंयतेषूपजायतेनासंयतसम्यग्दृष्टिसंयतासंयतेषुसंयतेषूपजायमानः।
प्रमत्तादिषुक्षीणकषायांतेषूपजायतेनोत्तरेषुतत्रोचोपजायमानः
चारित्रेषूपजायतेनहीयमानचारित्रेषुसप्रवर्द्धमानचारित्रेषुपजायमानःस
मविधान्यतमर्द्धिप्राप्तेषुजायतेनेतरेषुऋद्धिप्राप्तेषुपकेषुचिन्नसर्वेष्वितिवि
शिष्टसंयमग्रहणांवाक्योक्तमवधिः।पुनश्चानुगामिकेष्वितिस्वामिभेदादप्यन
योर्विशेषः।इदानींकेवलज्ञानलक्षणाभिधानंप्राप्तकालंतदुल्लंघ्यज्ञाना
षयनिर्बंधपरीक्ष्यते।कृतस्तस्यमोहक्षयाज्ञानदर्शनावरणांतरायक्षयाच्चके
वलमित्यत्रवक्ष्यमाणत्वाद्यद्येवमाद्ययोरेवतावन्मति-

च्यतामित्यत आह ॥ मतिश्रुतयोर्निबंधो द्रव्येष्वसर्वपर्यायेषु ॥ निबंधनं निबं
धः ॥ कस्य मतिश्रुतविषयस्य तत्तर्हि विषयग्रहणं कर्त्तव्यं न कर्त्तव्यं प्रत्यासत्तेः
प्रकृतविषयग्रहणाभिसंबंधः ॥ प्रकृतं विषयग्रहणं मतिकं प्रकृतं विशुद्धि
क्षेत्रस्वामिविषयेभ्य इति तत्र प्रत्यासत्तेः ॥ विषयग्रहणमिहाभिसंबध्यते तेन न च स-
विभक्तेतरनिर्द्दिष्टेन शक्यत इह संबंधुं अर्थवशाद्विभक्तिपरिणामः ॥ यथा उच्चानि
देवदत्तस्य गृहाणि आमंत्रयस्वैनं देवदत्तमिति गम्यते ॥ देवदत्तस्य गावोऽश्वा हिर
ण्यमाढ्यो वैधव्ये यो देवदत्त इति गम्यते ॥ एवमिहापि निबंधः कस्य विषयस्येत्यभि
संबध्यते ॥ अथ द्रव्येष्विति बहुत्वनिर्द्देशः ॥ किमर्थः द्रव्येष्विति बहुत्वनिर्द्देशः सर्व
द्रव्यपर्यायसंग्रहार्थं जीवधर्माकाशकालपुद्गलाभिधानानि षड् द्रव्याणि ते
षां सर्वेषां संग्रहार्थं ॥ द्रव्येष्विति बहुत्वनिर्द्देशः ॥ क्रियत्तेन हि शेषणार्थमसर्वप
र्यायग्रहणं तेषां द्रव्याणां मविशेषेण मतिश्रुतयोर्विषयभावप्रसंगेन हि शेषणा
र्थमसर्वपर्यायग्रहणं क्रियते ॥ तानि द्रव्याणि मतिश्रुतयोर्विषयभावमापद्य

मानानिकतिपयैरेवपर्यायैर्विषयभावमास्कंदंतिनसर्वपर्यायैरनंतैरपीतितत्कथमिति
मतिश्चक्षुरादिकरणनिमित्ताद्रूपाद्यालंबनासायस्मिन्रूपेरूपादयोवर्त्तंतेनतत्र
सर्वान्पर्यायानवगृह्णातिचक्षुरादिविषयानेवालंबतेश्रुतमपिशब्दलिंगशाब्दा
श्चसर्वेसंख्येयाएवद्रव्यपर्यायाःपुनःसंख्येयानंतभेदाःनतेसर्वेविशेषाकारे
णतेविषयीक्रियंते उक्तंच पण्णवणिज्जाभावाअणंतभागोदुअणभिलप्पा
णंपण्णवणिज्जाणंपुणअणंतभागोसुदणिबद्धोत्ति अतींद्रियेषुमतेरभावात्स
र्वद्रव्यासंप्रत्ययइतिचेन्न नोइंद्रियविषयत्वात्स्यान्मतं धर्मास्तिकायादिषु
मतेरभावोऽतींद्रियत्वान्नतेमतिः सर्वद्रव्यविषयनिबंधेतिलक्षणमयुक्तमि
तितन्नकिंकारणंनोइंद्रियविषयत्वात् नोइंद्रियावरणक्षयोपशमलब्ध्यपेक्षं
नोइंद्रियंतेषुव्याप्रियते अथहितत्रनवर्त्ततावधिनास्यहानिर्दिष्टिपेतद्रूपिष्वव
वृत्तेः अथमतिश्रुतयोरनंतरनिर्देशार्हस्यावधेःकोविषयनिबंधइत्यत्रआ
ह ॥ रूपिष्ववधेः ॥ रूपशब्दस्यानेकार्थत्वेसामर्थ्याच्छुक्लादिग्रहणंअथवारू

पमनंतस्वभावमितिन चेहसामर्थ्याच्चक्षुर्विषयेष्वस्त्कादौवर्त्तमानोग्रह्यते यदिस्वभाव
वाचिनोग्रहणंस्यादनर्थकंस्यान्नहिकस्यचित्स्वभावोनास्तीतिन्नमात्रनेकार्थत्वे
भवेन्नित्ययोगोभिधानवशात्तद्यपिमत्वर्थीयस्यभूमादयोर्थाबहवःसंभवंति इ
हाभिधानवशान्नित्ययोगोवेदितव्यः नित्याहिपुद्गलाभक्तारूपरसेतियथाक्षी
रिणोवृक्षाइतियद्येवमबाधिस्थानस्यपुद्गलास्तूपभक्तेनैवविषयभावंप्रतिपद्ये
रन्नरसादिभक्तेनतैषदोषस्तदुपलक्षणार्थत्वात्तदविनाभाविरसादिग्रहणं
तद्रूपंद्रव्यस्योपलक्षणत्वेनोपादीयते अतस्तदविनाभाविनोरसादयोपिगृ
ह्यंते यद्येवंतज्ज्ञानेषुसर्वेष्वनंतेष्वपर्यायेष्ववधेर्विषयनिबंधः प्राप्नोतीत्य
तआह असर्वपर्यायग्रहणाद्वृत्तेर्न्नसर्वगतिः असर्वपर्यायेष्वितिएत
द्ग्रहणमनुवर्तते यथादेवदत्तायगौर्हीयतां जिनदत्तायकंबलइतिदीयतौ
मित्यभिसंबंध्यतेएवमिहाप्यसर्वपर्यायेष्वित्यभिसंबंधात्तसर्वगतिर्भवति
ततोरूपिषुपुद्गलेषुप्राप्तकन्द्रव्यादिपरिमाणेषुजीवपर्यायेषुऔदयिको

पशमिकक्षायोपशमिके उत्पद्यते अवधिज्ञानरूपिद्रव्यसंबंधात्क्षायिकपा
रिणामिकेषु नापि धर्मास्तिकायादिषु तत्संबंधाभावात्। अथ मनःपर्ययस्य
विषयनिबंध इत्यत आह ॥ तदनंतभागे मनःपर्ययस्य ॥ यद्रूपिद्रव्यं सर्वा
वधिज्ञानस्य विषयत्वेन समर्थितं तस्यानंतभागीकृतस्य एकस्मिन्भागे मनःपर्यय
प्रवर्त्तते। अथांते यन्निर्दिष्टं केवलज्ञानं तस्य को विषयनिबंध इत्यत आह ॥ स
र्वद्रव्यपर्यायेषु केवलस्य ॥ अत्राह किं द्रव्यं स्वपर्यायान्द्रवति द्रूयते वा तैरिति
द्रव्यं आत्मना पर्यायान्द्रवति गच्छतीति द्रव्यं बहुलापेक्षया कर्तरि साधुत्वं द्रूयते
वा तैरिति द्रव्यं कथंचिद्भेदसिद्धौ तत्कर्तृकर्मव्यपदेशसिद्धिः द्रव्यस्य पर्यायाणां
च कथंचिद्भेदस्तूक्तः कर्तृकर्मव्यपदेशसिद्धिरिति इतरथा हि तदप्रसिद्धेरत्यंता
व्यतिरेकाद्यनेकांते नैकत्वमवधार्य तस्य कर्तृकर्मव्यपदेशाप्रसिद्धिः स्यात् कुतः
अत्यंताव्यतिरेकान्नहि तदेव निर्विशेषमेकं शक्यं नयापेक्षया विना कर्तृकर्म च
भवितुमर्हति। अथ कः पर्यायस्तस्य मिथ्याभवनं प्रति विरोध्यविरोधिनां धर्माणां

रुपात्तानुपात्तहेतुकानांशब्दांतरात्मलाभनिमित्तत्वादर्पितव्यवहारविषयोव
स्याविशेषः। पर्यायः। मिथोभवनंप्रतिकेचिद्धर्माविरोधिनःकेचिद्विरोधिनःत
त्रजीवस्यतावदनादिपारिणामिकचैतन्यजीवत्वभव्याभव्योर्द्ध्वगतिस्वभावास्ति
त्वादिभिरौदयिकादयोभावायथासंभवंयुगपद्भावादविरोधिनोविरोधिनस्त्वना
रकतैर्यग्योनदेवमनुष्यस्त्रीपुंनपुंसकएकद्वित्रिचतुःपंचेंद्रियबाल्यकौमा
रकोपप्रसादादयः। सहानवस्थानात्तथापौद्गलिका। अनादिपारिणामिकाःरू
परसगंधस्पर्शशब्दसामान्यास्तित्वादयः। शुक्लादिपंचकतिक्तादिपंचकगंध
द्वयस्पर्शाष्टकशब्दषट्कपर्यायैःप्रत्येकमेकद्वित्रिचतुःपंचादिसंख्येयानंतगु
णपरिणामिभिर्यथासंभवंयुगपद्भावादविरोधिनोविरोधिनस्त्वशुक्लकृष्णनील
तिक्तकटुकसुरभेतरगंधादयः। प्रायोगिकाःवैस्रसिकश्चपरमाणुस्कंधेषु
चसहानवस्थानादेवंधर्मास्तिकायादिष्वप्यमूर्त्तत्वाचेतनत्वासंख्येयप्रदेशत्व
गतिकारणस्वभावास्तित्वादयःअनंतभेदागुरुलघुगुणहानिवृद्धिविकारैः

प्रत्ययैः॥ परप्रत्ययैश्चागतिकारणात्वविशेषादिभिरविरोधिनः॥ परस्परविरोधि
नश्च ज्ञेयाः तेषु केषुचिदुपात्तहेतुकाद्रव्यक्षेत्रकालभावनिमित्ताऽऽदयिकाद
यश्चानुपात्तहेतुकाश्च त्रिषु कालेष्वविकारिणः॥ पारिणामिकाश्चैतन्यादयस्ते
षांविरोध्यविरोधिनांधर्माणामुपात्तानुपात्तहेतुकानांशब्दांतरात्मलाभान्नि
मित्तत्वाद्वेतनो नारको बालक इत्यर्पितव्यवहारविषयइति व्यवहारश्चसूत्रः
त्रिविधशब्दनयात्मकः॥ द्रव्यार्थिकानर्पणात्पर्यायार्थिकेनार्पितस्त्वविष
यस्तस्य द्रव्यस्यावस्थाविशेष॥ पर्यायइत्युच्यते॥ नयोरितरेतरयोगलक्षणो
नयोरितरेतरयोगलक्षणो द्वंद्वो वेदितव्यः द्रव्याणि च पर्यायाश्च द्रव्यपर्यायाः इ
तिद्वंद्वे न्यत्वं प्लक्षन्यग्रोधवदितिचेन्न॥ तस्य कथंचिद्भेदेपिदर्शनाद्गोत्वगोपिंडव
त्स्यान्मतं यदि द्वंद्वः प्लक्षन्यग्रोधवदन्यत्वं द्रव्यपर्यायाणां प्राप्नोतीति तन्न किं
कारणं तस्य कथंचिद्भेदेपिदर्शनात् गोत्वगोपिंडवद्यथा गोत्वंच गोपिंडश्च गो
पिंडावितिअनन्यत्वेपिद्वंद्वो भवति तथा द्रव्यपर्यायेष्विति ननु सामान्यविशेष

योरन्यत्वात्साध्यसमेतादितिनैषदोषः॥ उक्तमेतदनन्यत्वेसामान्यविशेषयोर्द्रव्य
ग्रहणंपर्यायविशेषणंचेन्नानर्थक्यात्स्यादेतद्द्रव्याणांपर्यायाः द्रव्यपर्यायाइति
द्रव्यग्रहणंपर्यायविशेषणमितितन्नकिंकारणमानर्थक्यादेवंसतिद्रव्यग्रहण
मनर्थकंस्यान्नह्यद्रव्यस्यपर्यायाःसंतीतेद्रव्याज्ञानप्रसंगाच्चकेवलेनपर्याय
एवज्ञायंतेनद्रव्याणीतिद्रव्याज्ञानंप्राप्नोतिउत्तरपदार्थप्रधानत्वात्॥ अथमत
मेतत्सर्वेषुपर्यायेषुज्ञातेषुनकिंचिदज्ञातमस्तिततोव्यतिरिक्तस्याद्रव्यस्याभावा
दप्येवंद्रव्यग्रहणमनर्थकमित्युक्तंपुरस्तात्तस्मात्साधूक्तंद्वंद्वोयमितिनतद्वंद्वं
द्वेपिद्रव्यग्रहणमनर्थकंपर्यायव्यतिरेकेणानुपलब्धेरितिनैषदोषः॥ संज्ञास्वा
लक्षणादिभेदाद्भेदोपपत्तेः॥ अथसर्वग्रहणंकिमर्थंननुबहुवचननिर्देशादेव
बहुत्वसंप्रत्ययसिद्धेः॥ सर्वग्रहणंनिरवशेषप्रतिपत्त्यर्थंयेलोकालोकभेदभि
न्नास्त्रिकालविषयाद्द्रव्यपर्यायाअनंतास्तेषुनिरवशेषेषुकेवलज्ञानविषय
निबंधइतिप्रतिपत्त्यर्थंसर्वग्रहणंयावांल्लोकालोकस्वभावोनंतस्तावंतोनंता

नतो॥यद्यपिसर्वाण्यपिज्ञानानिआत्मनःस्वसामर्थ्यमस्तीत्यपरिमितमाहात्म्यंतत्केवलज्ञा
नेवेदितव्यं॥आहविषयनिबंधोवक्तव्योमत्यादीनामिदंतुननिज्ञातंएकस्मिन्ना
त्मनिस्वनिमित्तसंनिधानोपजनितवृत्तीनिज्ञानानियौगपद्येनकतिभवंतीत्य
तउच्यते॥एकादीनिभाज्यानियुगपदेकस्मिन्नाचतुर्भ्यः॥३०॥ एकइतिकोयं
शब्दः अनेकार्थसंभवेविवक्षातः प्राथम्यवचनएकशब्दः॥अयमेकशब्दः
नेकस्मिन्नर्थेदृष्टप्रयोगः॥क्वचित्संख्यायांवर्त्ततेएकोद्वौबहवइतिक्वचिदन्य
त्वेएकेआचार्याअन्येआचार्याइतिक्वचिदसहायेएकाकिनस्तेविचरंतिवीराइ
तिक्वचित्प्राथम्येएकमागमनंप्रथममागमनमिति॥क्वचित्प्राधान्येएकहस्तासे
नांकरोमिप्रधानहस्तासेनांकरोमीत्यर्थः॥तत्रेहविवक्षातःप्राथम्यवचनएकशब्दो
वेदितव्यः॥आदिशब्दश्चावयववचनः॥आदिशब्दश्चायमनेकार्थसंभवेविव
क्षातइहावयववचनोवेदितव्यः क्वचिद्व्यवस्थायांवर्त्ततेब्राह्मणादयश्चत्वारोव
र्णाः ब्राह्मणाव्यवस्थाः ब्राह्मणक्षत्रियविट्शूद्रा इत्यर्थः॥क्वचित्प्र

दयासरिहर्त्तव्याः भुजंगप्रकाराविषवंतइत्यर्थः॥ क्वचित्सामीप्येनंद्यादीनिश्छे
त्राणिनदीसमीपानीत्यर्थः॥ क्वचिदवयवेस्रगादिमध्यीतेस्रगवयवमध्यीत्तइत्य
र्थः॥ तेनैतदुक्तंभवति॥ एकस्मादिरेकादिः प्रथमावयवइतिकस्यप्रथमस्यपरोक्ष
स्यकः पुनरवयव॥ मतिज्ञानंसामीप्यवचनोवा॥ अथवा अयमादिशब्दः समी
प्यवचनोद्रष्टव्यस्तेनप्रथमस्यमतिज्ञानस्यश्रुतंसमीपमित्युक्तंभवतिमतेर्वाहिर्भाव
प्रसंगइतिचेन्नानयो॥ सदाव्यभिचारात्तस्यादेतदेवंसतिमतेर्वाहिर्भवि॥ प्राप्नोतीति
तन्नकिंकारणमनयो॥ सदाव्यभिचारादेहिमतिश्रुतेसर्वकालमव्यभिचारिणीना
रदपर्वतवत्तस्मादनयोरन्यतरग्रहणेइतरस्यग्रहणंसंन्निहितंभवति॥ ततोन्यव
दार्थवृत्तावेकस्यादिशब्दस्यनिवृत्तिरुष्ट्रमुखवद्यथानद्यूमंरवंउष्ट्रमुखवन्मुख
मस्येतिवृत्तावेकस्यमुखशब्दस्यनिवृत्तिरेवमिहापिएकादियेषांतानीमान्येकादी
नीतिएकस्यादिशब्दस्यनिवृत्तिरवयवेनाविग्रहसमुदायोवृत्त्यर्थः॥ अवयवेनवि
ग्रहः॥ क्रियतेवृत्त्यर्थः॥ समुदायोभवतितेनैकादीन्यभ्यंतरीकृत्यभाज्यानीत्यर्थः

राजवा॰ त्यर्थं॥ किंसर्वाणिनेत्याह॥ आचतुर्भ्यः कुतएतत् केवलस्यासहायत्वादित
१०६ यौगपद्याभावः॥ यत्केवलंज्ञानंक्षायिकंतदसहाय
मितराणिचज्ञानानिक्षयोपशमनिमित्तान्यतो
॥नाभावोभिभूतत्वादहनिनक्षत्रवदितिचेन्नक्षायिक
देतन्नाभावः॥ क्षायोपशमिकानांज्ञानानांकेवलिनि किंतुकेवलज्ञानेनमहता
ऽभिभूतानिस्वप्रयोजनेनव्याप्रियंतेभास्करप्रभाभिभूतनक्षत्रवदितितन्न किंका
रणात्संक्षीणसकलज्ञानावरणेभगवत्यर्हतिकथंक्षायोपशमिका
ज्ञानानांसंभवः॥ नहिपरिशुद्धमसर्वशुद्धौपदेशप्रदेशाशुद्धिरस्ति॥ इंद्रियवत्वादितिचे
न्नार्षार्थानवबोधात्॥ स्यादेतदेवमागमः॥ प्रवृत्ताः पंचेंद्रियाः॥ असंज्ञिपंचेंद्रिया
दारभ्य आयोगिकेवलिनइति अतइंद्रियवत्वात्तत्कार्येणापिज्ञानेनभवितव्या
तितन्न किंकारणमार्षार्थानवबोधात् आर्षेहिसयोगायोगिकेवलिनोःपंचेंद्रि
यत्वमुक्तंनभावेंद्रियंप्रति॥ यदिहिभावेंद्रियमभविष्यदपितर्ह्यसंक्षीणसक

लावरणत्वात्सर्वज्ञत्वेनैवास्यन्यवर्त्तिष्यत:॥ तस्मादेतदुक्तंभवति॥ एकस्मिन्नात्म
निद्वेमतिश्रुतेकस्मिंश्चित्त्रीणिमतिश्रुतावधिज्ञानानिमतिश्रुतमनः॥ पर्ययज्ञाना
निवाक्कचिच्चत्वारिमतिश्रुतावधिमनः॥ पर्ययज्ञानानिनपंचैकस्मिन्युगप
त्संभवंतीति॥ संख्यावचनोचैकशब्दः॥ अथवासंख्यावचनोयमेकशब्दएकमादि
र्येषांतानीमानिएकादीनिकथंमतिज्ञानंएकस्मिन्नात्मनिएकंयक्षरश्रुतंद्व
नेकद्वादशभेदमुपदेशपूर्वकंतद्भजनीयंस्याद्वानवेतिद्वतत्पूर्वंचदपरःआह॥ अ
संख्यासहायप्राधान्यवचनेएकशब्देसतिएकादीनिकेवलादीनीत्यर्थः॥ एकस्मि
न्नात्मन्येकंकेवलज्ञानंक्षायिकत्वात्॥ द्वेमतिश्रुतेइत्यादिपूर्ववत्॥ अथोक्तानिम
त्यादीनिज्ञानान्यपदेशमेवंलभंतेउतान्यथापीत्यतआह॥ मतिश्रुतावधयो
विपर्ययश्च॥ विपर्ययोन्यथाकृतः सम्यगधिकाराच्चशब्दः समुच्चयार्थः॥ वि
पर्ययश्चासम्यक्केतिकुतएनरेषांविपर्ययः॥ मिथ्यादर्शनपरिग्रहात्मत्यादि
विः॥ पर्यय॥ योसौदर्शनमोहनीयोदयेसतिमिथ्यादर्शनपरिणामः॥ तेनसहै

राजवा॰
१५७

कार्यसमवायान्मत्यादीनांविपर्य्ययोभवति।ननुचमणिकनकादीनांवर्चोगृहग
तानामपिस्वभावविनाशोनभवतितद्वन्मत्यादीनामपिस्यान्नैषदोषः।सरजस
कटुकालांबूगतदुग्धवत्स्वगुणाविनाशात्यथासरजसकटुकालाबूभाजने
निहितंदुग्धंस्वगुणांपरित्यजतितथामत्यादीन्यपिमिथ्यादृष्टिभाजनगतानि
दुष्यंतीति।आधारस्यदोषाद्धि।आधेयस्यदोषोजायते।ननुचनायमेकांतउ
क्तमेतन्मणिकनकादयोवर्चोगृहगताअपिस्वभावंनत्यजंतीतितत्रकथमे
तदवसीयते।आलंबूदुग्धवद्दुष्यंतिमत्यादीनिनतुमण्यादिवन्नदुष्यंती
तिपरिणामशक्तिविशेषात्परिणामकस्यहिवस्तुनः।शक्तिविशेषादन्यथाभा
वोभवतियथालांबूद्रव्यंदुग्धंविपरिणामयितुंशक्तोतितथामिथ्यादर्शनम
पिमत्यादीनामन्यथात्वकर्त्तुमलंतदुदयेअन्यथानिरूपणाद्दर्शनाद्वर्चोगृहे
तुमण्यादीनांविकारंम्यास्यादयंतुमलंविपरिणामकद्रव्यसंनिधानेतेषाम
पिभवत्येवान्यथात्वंयदातसम्यग्दर्शनंप्रादुर्भूतंतदा

भावात्तेषां मत्यादीनां सम्यक्त्वमतः सम्यग्दर्शनमिथ्यादर्शनोदयविशेषात्तेषां
त्रयाणां द्विधाकृतिर्भवति ज्ञानं मत्यज्ञानं श्रुतज्ञानं श्रुताज्ञानं अवधिज्ञानं
विभंगज्ञानमिति। अत्राह रूपादिविषयोपलब्धिव्यभिचाराभावाद्विपर्यया
भावः। यथैव मतिज्ञानेन सम्यग्दृष्टयो रूपादीनुपलभंते तथा मिथ्यादृष्टयो
पि मत्यज्ञानेन यथैव घटादिषु रूपादीन् श्रुतेन निश्चिन्वंत्युपदिशंति च परे
भ्यस्तथा श्रुताज्ञानेनापि। यथैवावधिना रूपिणोर्थानवयंति तथा विभंगेना
पीति तस्मान्नास्ति विपर्यय इति अत्राह ॥ सदसतोरविशेषाद्यदृच्छोपल
ब्धेरुन्मत्तवत् ॥ सच्छब्दस्यानेकार्थसंभवे विवक्षातः प्रशंसार्थग्रहणं अ
ये सच्छब्दोनेकार्थ इति आख्यातः। तस्येह विवक्षातः प्रशंसार्थस्य ग्रहणं वे
दितव्यं प्रशस्तं तत्त्वज्ञानमित्यर्थः। असदज्ञानं तयोः सदसतोरविशेषेण
यदृच्छयोपलब्धेः विपर्ययो भवति कथमुन्मत्तवत् यथोन्मत्तो दोषोदयादु
पहतेंद्रियमतिर्विपरीततया ही भवति सोऽश्वं गौरित्यध्यवस्यति गां वा अश्व

इतिलोष्टंसुवर्णंसुवर्णंलोष्टमितिलोष्टंलोष्टमितिसुवर्णंसुवर्णमितितस्यैवमवि
शेषेणाध्यवस्यतः अज्ञानमेवभवति नहिमिथ्यादर्शनोपहतेन्द्रियमतेर्मति
श्रुतावधयोपिअज्ञानमेवभवतीतिभवत्यर्थग्रहणंवा अथवासच्छब्दोयंभ
वत्यर्थेवेदितव्यः सद्विद्यमानमित्यर्थः असदविद्यमानंतयोरविशेषेणयदृ
च्छोपलब्धेः विपर्ययोभवतिकदाचिद्रूपादिसदप्यसदितिप्रतिपद्यतेअसदपि
सदितिकदाचित्सत्सदेवअसदप्यसदेवेति कुतः प्रवादिपरिकल्पनाभेदाद्वि
पर्ययग्रहः प्रवादिनांकल्पनाभेदाद्विपर्ययग्रहोभवति तद्यथाकेचित्तावदाहुः
द्रव्यमेवनरूपादयइति अपरआहुः रूपादयएवनद्रव्यमिति अपरेषांदर्शनं
अन्यद्द्रव्यंअन्येचरूपादयइतिकथमेषांविपर्ययग्रहणमुच्यतेयदिद्रव्यमेव
नरूपादयः लक्षणाभावाल्लक्ष्यानवधारणप्रसंगः किंचइन्द्रियाणांसन्नि
कर्षमणोद्रव्यंरूपाद्यभावेसर्वात्मनासन्निकर्षेततत्सर्वात्मनाग्रहणप्र
संगः करणभेदाभावप्रसंगश्च नचासौदृष्टइष्टोवा

एवमपिनिराधारत्वादभावप्रसंगः॥ किंचपरस्परविलक्षणानांरूपादीनांसमु
दयेपिसतिएकानर्थांतरभावात्समुदयस्यसर्वभावः॥ परस्परतोर्थांतरभूत
त्वादर्थद्यन्यद्द्रव्यमन्येरूपादयः॥ एवमपितेषांलक्षणाभावाभावः॥ परस्प
तोरर्थांतरत्वात्दंडिदंडवत्॥ लक्ष्यलक्षणाभावइतिचेन्नवैप्राप्यान्यथत्व
तोल्लक्ष्यलक्षणाभावोयुक्तोनासतोरिति किंचरूपादिषुगुणेष्वमूर्त्तेषुद्र
व्यार्थांतरभूतेषुनेंद्रियसंनिकर्षोयतस्तेषांज्ञानाभावः॥ नचार्थांतरभू
तंद्रव्यंकारणंभवितुमर्हति किंचामूलकारणविप्रतिपत्तेः॥ एषांचरूपा
दीनांमूलकारणेप्रवादिनांविप्रतिपत्तिस्तच्चयथाकेचिदाहुः॥ अव्यक्तान्मह
दहंकारतन्मात्रेंद्रियमहाभूतमृत्पिंडादिनिर्वृत्तिक्रमेणघटादेर्विश्वरूप
स्यजगतउत्पादइतितद्युक्तं॥ नहिप्रधानस्यामूर्त्तनिरवयवत्वात्निःक्रियत्वा
तींद्रियत्वानित्यत्वापरप्रयोज्यत्वादिविशेषोपेतस्यतद्विलक्षणोघटादिःका
र्यंभवितुमर्हत्यदृष्टत्वान्नवापरप्रयोज्यस्यप्रधानस्यस्वयमेवाभिप्रायरहि

र्वकत्वसर्वक्रमोयुक्तः पुरुषस्यापि निष्क्रियत्वान्नमहदादिसर्गा
र्थेप्रधानप्रयुक्तेस्वयंचनिष्क्रियत्वात्प्रधानेनात्मानंमहदादिसर्गार्थेप्रयोक्तुम
। नहिस्वयंगतिविकलः पंगुरात्मानमेवान्यंवा छायगच्छन्दृष्टः । किंचात्र
योजनस्यप्रधानस्यमहदादिसर्गोनघटते किमानपुरुषभोगः प्रयोजनमितिचेन्न
त्यस्यविभोरात्मनभोगपरिणामाभावात् किंवाचेतनत्वादिहलो
केचेतनश्चैत्रः उदनार्थी क्रियाफलसाधनज्ञस्तदर्थंज्वलितेसंधुक्षणादिषुप्र
वर्तमानोदृष्टः । नचतथाप्रधानंचेतनमंतोस्यमहदादिक्रियासुसवक्रमाभावः न
क्रमस्यप्रयोजकोनिः क्रियत्वादयरश्चाह परमाणुभ्य इतिनि
यतपार्थिवादिजातिविशिष्टेभ्यः अदृष्टादिसंनिधानेसतिसंहतेभ्यः अर्थांत
कार्यात्मलाभइतितदप्युक्तं नित्यत्वादणूनांकार्यारंभशक्त्यभावा
तंचारंभेनित्यत्वहानेर्नचार्थांतरभूतस्यकार्यस्यारंभोयुक्तः व्यतिरेकात्तुफल
श्चेरूपलब्धोवायुमहत्वाभावः नचजातिप्रतिनियमात् भिन्नजाती

रंभदर्शनाद्भिन्नजातीयेष्वसमुदयमात्रमिति चेत्तुल्यजातीयेष्वपि तत्प्रसंगात् नचात्मनो घटाद्यारंभे कर्तृत्वमुपपन्नं निःक्रियत्वात् निःक्रियत्वाच्च नात्मनः कारणस्यादृष्टादेर्निःक्रियत्वादेव न च निःक्रियोऽर्थांतरे क्रियाहेतुर्दृष्टः अन्ये मन्यंते वर्णादिपरमाणुसमुदयात्मकाः रूपपरमाणवोऽतींद्रियाः समुदिताः संतः इंद्रियग्राह्यत्वमनुभूय घटादिकार्यनिर्भासहेतुत्वं प्रतिपद्यंत इति तदयुक्तं प्रत्येकं रूपपरमाणूनामतींद्रियत्वात् ततोऽन्यस्य कार्यस्याप्यतींद्रियत्वप्रसंगात् ततश्च दृश्यविषयप्रमाणाभासविकल्पाभावः कार्याभावाच्च तल्लिंगकारणस्याप्यभावः किंच क्षणिकत्वात् निःक्रियत्वाच्च कार्यारंभाभावः विविक्तक्षणानां परस्पराभिसंबंधाभावश्च नचान्योऽर्थश्चेतनस्तेषां संबंधस्य कर्तास्ति तदभावात् संबंधाभाव एवमन्येष्वपि प्रवादिषु सत्यसदिति असत्यपि सदिति विपर्ययो मिथ्यादर्शनोदयवशाद्वेदितव्यः पित्तोदयाकुलितरसनेंद्रियविपर्ययवत् ननु च युक्तं रूपादिविषयोपलब्धिव्यभिचाराभावात् न मिथ्यादृष्टेर्ज्ञानं त्रयमज्ञानमिति तदसम्यक् आख्यातं ज्ञानं लक्ष

राजवा०
११३

यादिभिरिति नीचारित्रं निर्दिष्टं तत्कृत्स्नं ध्यानया उच्यते। कस्मान्मोक्षविधाने तस्य
वक्ष्यमाणत्वात्कृतः। पुनस्तन्मोक्षविधौ वक्ष्यत इति चेन्मोक्षं प्रति प्रधानकारण
त्वात्किं कृतं प्राधान्यं कृत्स्नकर्मेधननिर्दहनं कृतं यत आत्मा व्युपरतक्रियाध्यानावि
भूतामवलः। कृत्स्नकर्मेधननिर्दहनसमर्थो भवति ननु क्षायिकसम्यक्त्वकेव
लज्ञानोपेतोपि। यदि स्यात्क्षायिककेवलज्ञानोत्पत्त्यनंतरमेव कृत्स्नकर्मक्षयः
व्युपरतक्रियाध्यानोत्पत्त्यनंतरमेव भवति तस्यौत्तमं चारित्रं कर्मादानहेतुक्रिया
रित्याम इति वचनात् यदीह तदुच्यते मोक्षविधानेपि तदुक्तमासीति गौर
वस्यादेवमपि जीवादयो निर्दिष्ट आउच्यंते प्रमाणेप्रमाणैकदेशानयाः
तदनंतरवचनात् हानयाद्येवं केते नया इत्यत आह
नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता नयाः॥ शब्दपेक्षया
एकादिसंख्येयविकल्पा नयाः तत्रातिसंक्षेपादप्रतिपत्तिरतिविस्तरेचल्पप्र
नामननुग्रह इति मध्यमतया प्रतिपत्त्या सप्तनयाः सूत्रे उच्यंते। तेषां सामान्यविशे

षलक्षणंवक्तव्यंतत्र।सामान्यलक्षणमुच्यते।प्रमाणप्रकाशितार्थविशेषप्ररूपको
नयः।प्रकर्षेणमानंप्रमाणंसकलादेशइत्यर्थः।तेनप्रकाशितानांनप्रमाणाभासप
रिगृहीतानामित्यर्थस्तेषामर्थानामस्तित्वनास्तित्वनित्यत्वानित्यत्वाद्यनंतात्मनांजी
वादीनांयेविशेषाःपर्यायास्तेषांप्रकर्षेणरूपकःप्ररूपकनिरूढदोषानुषंगद्वा
रेणेत्यर्थः।सचलक्षणोनयस्तस्यद्वौमूलभेदौद्रव्यास्तिकःपर्यायास्तिकश्च।द्रव्य
मस्तीतिमतिरस्यद्रव्यभवनमेवनातोन्येभावविकारानाप्यभावस्तद्व्यतिरेकेणानुप
लब्धेरितिद्रव्यास्तिकः।पर्यायएवास्तीतिमतिरस्यजन्मादिभावविकारमात्रमेवभव
नंनततोन्यद्द्रव्यमस्तितद्व्यतिरेकेणानुपलब्धेरितिपर्यायास्तिकः।अथवाद्रव्यमे
वार्थोस्यनतुगुणःकर्म्मणितदवस्थारूपादितिद्रव्यार्थिकः।पर्यायएवार्थोस्यरूपा
द्युत्क्षेपणादिलक्षणोनततोन्यद्द्रव्यमितिपर्यायार्थिकः।अथवार्यतेगम्यतेनिष्प
द्यतइत्यर्थः।कार्यंद्रवतिगच्छतीतिद्रव्यंकारणंद्रव्यमेवार्थोस्यकारणमेवकार्यं
नार्थांतरंनचकार्यकारणयोःकश्चिद्रूपभेदः।तदुभयमेकाकारमेवपर्वांगुलिद्र

राजवा॰
११३

व्यवदितिद्रव्यार्थिकः परिसमंताद्यायः पर्यायः पर्यायएवार्थः॥ कार्यमस्यनद्रव्यमतीता
नागतयोर्विनष्टानुत्पन्नत्वेव्यवहाराभावात्सएवैकः॥ कार्यकारणव्यपदेशभागिति
पर्यायार्थिकः अथवार्यतेअर्थः प्रयोजनंद्रव्यमेवार्थोस्यप्रत्ययाभिधानानुप्रवृ
त्तिलिंगदर्शनस्यनिन्होतुमशक्यत्वादितिद्रव्यार्थिकः पर्यायोर्थ प्रयोजनमस्य
वाग्विज्ञानव्यावृत्तिनिबंधव्यवहारप्रसिद्धेरितिपर्यायार्थिकः॥ तद्भेदानैगमाद
य एषांविशेषलक्षणमुच्यते॥ अर्थसंकल्पमात्रग्राहीनैगमः॥ निगच्छंत्यस्मिन्नि
तिनिगमनमात्रंवानिगमः॥ निगमेकुशलोभवोवानैगमस्तस्यलोकेव्यापारः॥ अ
र्थसंकल्पमात्रग्रहणप्रवृत्तंद्रव्यहणगम्यादिविधानंयथा कश्चित्पुरुषंपरशुंपुरु
षंगच्छंतमभिसमीक्ष्याहकिमर्थंगच्छतिभवानितिसतस्मैआचष्टेप्रस्थार्थमिति
एवमिहएधोदकाद्याहरणेपितथाकत्तरोत्रगमीत्युक्तेआचष्टेअहंगमीतिसंप्रत्यगच्छत्य
पिगमीतिव्यवहारः एवंप्रकारोन्योपिनैगमनयस्यविषयः॥ भाविसंज्ञाव्यवहारइति
चेन्नभूतद्रव्यासन्निधानात्स्यादेतन्नायंनैगमनयविषयः भाविसंज्ञाव्यवहारइ

तितन्नकिंकारणंभूतद्रव्यासंनिधानाद्भूतंहिकुमारतंडुलादिद्रव्यमाश्रित्यराजौदना
दिकाभाविनीसंज्ञाप्रवर्त्ततेनचतथानैगमनयविषयेकिंचिद्भूतंद्रव्यमस्तियदाश्रया
भाविनीसंज्ञाविज्ञायेत॥उपकारेउपलंभात्संव्यवहारानुपपत्तिरितिचेन्नाप्रतिज्ञाना
त्स्यादेतन्नैगमनयवक्तव्येउपकारोनोपलभ्यतेभाविसंज्ञाविषयेतुराजादावुपल
भ्यतेततोनायंयुक्तइतितन्नकिंकारणंअप्रतिज्ञानान्नैतदस्माभिः॥प्रतिज्ञातंउपका
रेसतिभवितव्यमितिकिंतर्ह्यस्यनयस्यविषयःप्रदर्श्यतेअपिचउपकारंप्रत्यभिमु
खत्वादुपकारवानेव॥स्वजात्यविरोधेनैकत्वोपनयात्समस्तग्रहणंसंग्रहः॥अभिधा
नानुप्रवृत्तिलिंगसादृश्यंस्वरूपानुगमोवाजातिसाचेतनाचेतनाध्यात्मिकाशब्दप्र
वृत्तिनिमित्तत्वेनप्रतिनियमात्स्वार्थव्यपदेशभाक्स्वाजातिः॥स्वाजातिःअप्रच्यवन
मविरोधः॥स्वजातेरविरोधःस्वजात्यविरोधः॥तेनस्वजात्यविरोधेनैकत्वोपनयात्के
षांभेदानांसमस्तग्रहणंसंग्रहः॥यथासद्द्रव्यंघटइत्यादिसदित्युक्तेसत्तासर्वंग्राही
णांद्रव्यपर्यायतद्भेदप्रभेदानांतद्व्यतिरेकात्तेनैकेनसंग्रहः॥द्रव्यमितिवोक्तेजी

रुजवा·
११६

वाजीवद्भेदप्रभेदानंद्रव्यत्वाविरोधात्तेनैवसंग्रहः। घटइतिचोक्तेनामादिभेदात्स्वसुव
र्णादिकारणविशेषाद्वर्णसंस्थानादिकिविकाराच्चभिन्नानांघटशब्दवाच्यानांतदव्य
तिरेकादेकत्वेनसंग्रह एवमितरेष्वपीतितत्राभिधानप्रत्ययोःसामान्यंनिराकृतवि
शेषभावादाहसत्ताद्यर्थांतरभूतमस्तिनदभिर्सर्वंअस्तसदादिव्यपदेशः इतितन्न
उभयथाउपपत्तेरिदमिहसंप्रधार्यंसत्तासंबंधात्प्राग्द्रव्यादिषुसदित्यभिधानप्रत्य
यश्चस्याद्वानवेतियदिस्यात्सत्तासंबंधवैयर्थ्यंप्रकाशितप्रकाशनवैयर्थ्यवसत्ताहू
यप्रसंगश्चएकाकुर्भ्यंतरीअपरावाद्येत्यत्तश्चसमषविरोधः।
षलिंगाभावाच्चेकोभावइति। अथनास्तिखरविषाणादिष्वतिप्रसंगः।
यविशेषइतिचेन्नतस्यप्रतिषिद्धत्वात्किंचरात्तेत्तायाःसदितिव्यपदेशस्यसत्तांतद
हेतुकत्वाहेतुकत्वयोरनवस्थाप्रतिज्ञाहानिदोषप्रसंगः अथपदार्थशक्तिप्रति
नियमाद्द्रव्यादिषुसदितिव्यपदेशोनिमित्तांतरहेतुकःसत्तायांस्वतएवेतिचेत्संस
र्गवादत्याग इच्छामात्रकल्पनाप्रसंगश्च। किंचसत्तादेःपदार्थो

वृत्तिः सोस्येतिवास्यात्सोयमितिवायदिसोस्येतिवृत्तिर्मत्वर्थीयेनभवितव्यंसत्तावद्द्र
व्यमितियथागोमानुयवमानित्यतोमत्वर्थस्यभावार्थस्यचनिवृत्तिर्वक्तव्या॥अथसो
यमित्यभिसंबंधेनवृत्तिःसत्ताद्रव्यमितिप्राप्नोतियथायष्टिःपुरुषइतिनसद्द्रव्यमि
तितत्रभावार्थस्यनिवृत्तिर्वक्तव्या किंचवृत्त्यंताभावान्नह्येकेकिंचिदनेकसंबंधि
वृत्तंयदियदितिसमीक्ष्यसत्तैकानेकः॥संबंधिनीगम्येत नीलीद्रव्यवदितिचेन्नत
स्यानेकत्वान्नीलित्ववदितिचेन्नतस्यासिद्धत्वात् अतोविधिपूर्वकमवहरणंव्यवहा
रः एतस्मादतः कुतःसंग्रहात्संग्रह नयाक्षिप्तानामर्थानांविधिपूर्वकमवहरणंव्य
वहारः कोविधिःसंग्रहगृहीतोर्थस्तदानुपूर्व्येणैवव्यवहारःप्रवर्त्तनइत्ययंविधिस्त
द्यथासर्वसंग्रहेणसत्संगृहीतंतच्चानपेक्षितविशेषंनालंसंव्यवहारायेतिव्यवहार
नयआश्रीयतेयत्सत्तद्द्रव्यंगुणोवेतिद्रव्येणापिचसंग्रहाक्षिप्तेनजीवविशेषानपे
क्षेणानशक्यसंव्यवहार इतिजीवद्रव्यमजीवद्रव्यमितिवाव्यवहारआश्रीयतेजीवा
जीवावपिचसंग्रहाक्षिप्तौनालंसंव्यवहारायेतिप्रत्येकंदेवनारकादिघटादिश्चव्य

वहारेणाश्रीयतेकषायोभैषज्यमित्युक्तेचसामान्यस्यविशेषात्मकत्वात्तैयग्रोधादिवि
शेषसामर्थ्येनाहिशक्यं ऽभ्यणापिचक्रमन्ततासव: कषायसमाहारकर्त्तृनामस्थापना
द्रव्याणिचसंग्रहोभातानिनालंव्यवहारायेतिभावस्वग्रच्यते एवमयंनयस्तावत्वर्त्त
तेयावत्पुनर्नास्तिविभाग सूत्रपातवत्ऋजुसूत्र:। यथाऋजु:सूत्रपातस्तथाऋ
जुप्रगुणंसूत्रयतितंत्रयतिऋजुसूत्र सर्वोस्त्रिकालविषयानतिशय्यवर्त्तमानका
लविषयमादत्ते अतीतानागतयोर्विनष्टानुत्पन्नत्वेनव्यवहाराभावात्समवायमात्र
मस्यनिर्दिधिक्षितंकषायोभैज्यमित्यत्रचसंजातरसकषायोभैषज्येनग्राह्यमिक
कषायोऽल्पोनभिव्यक्तरसत्वादस्यविषय: पच्यमान: पक्क: पक्वस्तुस्यात्पच्य
मान: स्यादुपरतपाकइत्यसदेतद्विरोधात्पच्यमानइतिवर्त्तमान: पक्वइति अतीत
स्तयोरेकस्मिन्नवरोधोविरोधीतिनैषदोष पचनस्याद्यावयविभागसमयेकश्चिद्दृष्टा नि
र्वृत्तोवान्वायदिननिर्वृत्तस्तद्वितीयादिष्वपिअनिर्वृत्ते: पाकाभाव: स्यात्ततोभिनिर्वृत्ति
स्तदपेक्षयापच्यमान पक्वइतरथाहिसमयस्यत्रैविध्यप्रसंग सएवौदन:

नत्वस्युच्यते। पक्तुरभिप्रायस्यानिर्वृत्तेः पक्कं हि सुविशदस्सुखिन्नोदने पक्काभिप्राय
स्यादुपरतत्याकद्इति चोच्यते कस्यचित्पक्तुरस्तावतैव कृतार्थत्वादेव क्रियमाणं कृत
भुज्यमानभुक्तवध्यमानवद्धसिद्ध्यत्सिद्धादयो योज्यास्तथा प्रतिष्वंते स्मिन्निति प्र
स्था। यद्देवाभिमीतेती तानागतधीन्यमानासंभवात्कुंभकाराभाव। शिवकादिपर्या
यकरणे तदभिधानाभावात्कुंभपर्यायसमये वस्त्रावयवेभ्य एव निर्वृत्ते। स्थितप्र
ज्ञे च कुतो द्यागच्छसीति निकृतश्चिदित्ययमन्यते तत्कालक्रियापरिणामाभावाद्य
मेवाकाशप्रदेशमवगाढुं समर्थ आत्मपरिणामं वा तत्रैवास्य वसतिर्न्न कृष्णकाकः
उभयोरपि स्वात्मकत्वात्कृष्ण। कृष्णात्मकेन काकात्मकः यदि काकात्मकः स्याद्भ्र
मरादीनामपि काकत्वप्रसंगः काकस्य काकात्मकेन कृष्णात्मक। यदि कृष्णात्मक
स्तु कृष्णकाकाभावः स्यात्पंचवर्णत्वाच्च पित्तास्थिरुधिरत्वादीनां पीतशुक्लरक्तादिव
र्णत्वात्तद्व्यतिरिक्तेणाकाकाभावाच्च न सामानाधिकरण्यमेकस्य पर्यायेभ्यो नन्यत्वा
त्पर्याया एव विविक्तशक्तयो द्रव्यं नाम न किंचिदस्तीति कृष्णत्वाप्राधान्यादिति चे

न्नाऽस्तिरक्तादिध्वनिप्रसंगात्कषायमधुरेचमध्वनिविरोधादप्रत्यक्षेवाख्यायमाने
काकविशेषश्येनकेनचित्द्वीपांतरनिवासिन्युपलब्धेकृष्ण
काकविशेषेपुरुषेप्रतिपाद्यमानेसंशयोजायतेकिमयंकाकस्यकार्ष्ण्योत्प्रा
धान्यादंचक्षेत्वस्यैववातथापरिणामादित्यतः पलालादिदाहाभावः प्रतिवि
शिष्टकालपरिग्रहादस्यहिनयस्याविभागोवर्तमानसमयोविषयः अग्निसंबं
धनदीपनज्वलनदहनान्यसंख्येयसमयांतरालानियतोस्यदहनाभावः किंच य
स्मिन्समयेदाहः नतस्मिन्पलालंभस्मताभिनिर्वृत्तेः यस्मिंश्च पलालंनतस्मिन्दा
हइतियत्पलालंतद्दहतीतिचेन्नसावशेषात्समुदायाभिधायिनांशब्दानामवय
वेष्ववृत्तिदर्शनाद्दोषइतिचेन्न तदवस्थत्वादेकदेशदाहाभावस्योक्तत्वान्निरव
शेषदाहासंभवादितिचेन्नवचनविरोधात्तदवस्थत्वाच्चवचनविरोधस्तावद्यदिनि
रवशेषस्यपलालस्यदाहस्यासंभवइत्येकदेशदाहात्पलालदाहोनादाहः ननुभ
वद्वचनस्यनिरवशेषपरपक्षदूषकत्वाभावात्परपक्षैकदेशस्यदूषकत्वमतः

कदेशाद्दूषकत्वात्कृत्स्नमयीदंदूषकमेवेत्यस्यसाधकत्वासामर्थ्यभावइतिनद्व
स्थूलमप्येकसमयेदाहाभावइत्युक्तत्वादवयवानेकत्वेयद्यवयवदाहात्सर्वत्रदा
हः अवयवांतरादाहात्तसर्वदाहाभावः अथदाहः सर्वत्रकस्मान्नादाहः अतो
नदाहएवंपानभोजनादिव्यवहाराभावः नष्टः कृत्स्नीभवत्युभयोर्भिन्नकाला
वस्थत्वात्प्रत्युत्पन्नविषयेनिवृत्तपर्यायानभिसंबंधात्सर्वसंव्यवहारलोपइति
चेन्नविषयमात्रप्रदर्शनात्पूर्वनयवक्तव्यत्वात्संव्यवहारसिद्धिर्भवतिशपत्यर्थमा
ह्वयतिप्रत्याययतीतिशब्दउच्चारितः शब्दः कृतसंगतेः पुरुषस्याभिधेयंप्र
त्ययादधातीतिशब्दइत्युच्यते सचलिंगसंख्यासाधनादिव्यभिचारनिवृत्तिपरः
लिंगंस्त्रीत्वपुंस्त्वनपुंसकत्वानिसंख्याएकत्वद्वित्वबहुत्वानिसाधनमस्मदाद्येवमा
दीनांव्यभिचारोनन्याय्यइतितन्निवृत्तिपरोयंनयस्तद्यथा लिंगव्यभिचारस्तावत्स्त्री
लिंगेपुल्लिंगाभिधानंतारकास्वातिरितिपुंल्लिंगेस्त्र्यभिधानमवगमोविद्येतिस्त्री
त्वेनपुंसकाभिधानंवीणाआतोद्यमितिनपुंसकेस्त्र्यभिधानंआयुधंशक्तिरितिपुंल्लिं

राजवा०
११८

गेनपुंसकाभिधानं पटो वस्त्रमिति नपुंसके पुल्लिंगाभिधानं द्रव्यं परशुरिति संख्याव्य
भिचारः एकत्वे हि बहुत्वं नक्षत्रं पुनर्वसू इत्येकत्वे बहुत्वं नक्षत्रे शतभिषजा इति द्वित्वे ए
कत्वं गोदौ ग्राम इति द्वित्वे बहुत्वं पुनर्वसू पंचतारकाः इति बहुत्वे एकत्वं आम्राव
नमिति बहुत्वे द्वित्वं देवमनुष्या उभौ राशी इति साधनव्यभिचारः एहि मन्ये रथेन या
स्यसि न हि यास्यसि यातस्ते पितेति आदिशब्देन कालादिव्यभिचारो गृह्यते विश्वदृ
श्वास्य पुत्रो जनिता भावि कृत्यमासीदिति कालव्यभिचारः संतिष्ठते अवतिष्ठते वि
रमत्युपरमत्युपग्रहव्यभिचारः एवमादयो व्यभिचारा अयुक्ताः कृतः अन्यार्थ
स्यान्यार्थेन संबंधाभावात् यदि स्यात् घटः पटो भवतु पटो वा प्रासाद इति तस्माद्यथा
लिंगं यथासंख्यं यथासाधनादि च न्याय्यमभिधानं लोकसमयविरोध इति चेद्वि
रुध्यतां तत्त्वं मीमांस्यते न भेषजमातुरेच्छानुवर्ति नानार्थसमभिरोहणात्समभिरूढः यतो
नानार्थान्समतीत्यैकमर्थमाभिमुख्येन रूढः ततः समभिरूढः कुतो वस्त्वंतर
संक्रमेणात्मनिष्ठत्वात् कथमवितर्कध्यानवद्यथात्मनी यं चश्रुतं सूक्ष्मक्रियम

वितर्कमविचारंध्यानमर्थव्यंजनयोगसंक्रान्त्यभावात्सूक्ष्मकाययोगनिष्ठत्वात्त
वाग्गौरित्ययंशब्दोवागादिषुवर्त्तमानोगव्यभिरूढः एवंशेषेष्वपिरूढिशब्दोस्य
विषयश्चअथवार्थगत्यर्थः॥शब्दप्रयोगइतितत्रैकस्यार्थस्यैकेनगतत्वात्पर्याय
शब्दप्रयोगोनर्थकः॥शब्दभेदश्चेदस्तिअर्थभेदेनाप्यवश्यंभवितव्यमितिना
नार्थसमभिरोहणात्समभिरूढः इंदनादिन्द्रःशकनाच्छक्रःपूर्दारणात्पुरंद
रइत्येवंसर्वत्रअथवायोयत्राभिरूढः सतत्रसमेत्याभिमुख्येनारोहणात्समभि
रूढः यथाक्वभवानास्तेस्वात्मनीतिकुतः वस्त्वंतरेवृत्त्यभावात्यद्यन्यस्यान्य
त्रवृत्तिःस्यात्ज्ञानादीनांरूपादीनांचाकाशेवृत्तिःस्यात्येनात्मनाभूतस्ते
नैवाध्यवसाययतीत्येवंभूतः येनात्मनायेनाभिधेयेनभूतःशब्दस्तेनैवा
ध्यवसाययतियथेंद्रशब्दःपरमेश्वरत्वाभिधेयःसपरिणामोयत्रयदावर्त्त
तेतत्रतदैवयुक्तोननामस्थापनाद्रव्येषुतत्परिणामाभावादित्येवमितरेष्वपिशब्दे
षुस्वाभिधेयक्रियापरिणतिक्रियाक्षणएवयुक्तिर्नान्यदेतिअथवायेनात्मनायेन

पेणाभूतोर्थस्तेनैवाध्यवसाययतियथागच्छतीतिगौरितियदैवगच्छतितदैव
गच्छतितदैवगौरितिनस्थितोनशायितइतिपूर्वोत्तरकालयोस्तदर्थाभावाद्दंडिवत्
एवमितरेष्वपि॥अथवायेनात्मनायेनज्ञानेनभूतःपरिणतस्तेनैवाध्यवसा
ययतियथाइंद्राग्निज्ञानपरिणतआत्मैवेंद्रोग्निश्चेत्येवंभूतार्थप्रत्यायनाच्छब्द
एवंभूतः तत्कार्यत्वाच्छब्दासिद्धेः दाहकत्वाद्यतिप्रसंगइतिचेत्तदव्यतिरेकादप्र
स्यादेतदग्न्यादिव्यपदेशोयद्यात्मनिक्रियतेदाहकत्वाद्यतिप्रस
ज्यतेतदव्यतिरेकादप्रसंगस्तानिनामादीनियेनरूपेणाव्यपदिश्यंतेततस्तेषाम
व्यतिरेकःप्रतिनियतार्थवृत्तित्वात्सुमाणांततोनोआगमभावाग्नौवर्त्तमानंदाहक
त्वंकथमागमभावाग्नौवर्त्ततउक्तानैगमादयोनयाः॥उत्तरोत्तरसूक्ष्मविषयत्वादे
षांक्रमःपूर्वपूर्वहेतुकत्वाच्च॥एवमेतेनयाःपूर्वमितेनयाःपूर्वपूर्वविरुद्धमहावि
षयाउत्तरोत्तरानुकूलाल्पविषयाद्रव्यस्यानंतशक्तेःप्रतिशक्तिभिद्यमानाब
पा जायंते॥एतेगुणप्रधानतयापरस्परतंत्राःसम्यग्दर्शनहेतवःपुरु

घार्थक्रियासाधनसामर्थ्यात्तंत्वादयस्तद्वयथोपायं विनिवेश्यमानाः पटादिसंज्ञाः
स्वतंत्राश्चासमर्थास्तंत्वादिवदेव विषमउपन्यासः॥ तंत्वादयो निरपेक्षा अपि कां
चिदर्थमात्रां जनयंति हि काश्चित्प्रत्येकं तंतुस्त्वक्त्राणे समर्थ एकश्च वल्कजो वं
धने समर्थः॥ इमे पुनर्नया निरपेक्षाः संतः न कांचिदपि सम्यग्दर्शनमात्रां प्रा
दुर्भावयंतीति नैष दोषः॥ अभिहितानवबोधादभिहितमर्थमनवबुध्य परेणोद
मुपालभ्यते॥ एतदुक्तं निरपेक्षेषु तंत्वादिषु पटादिकार्यं नास्तीति यत्तु तेनोप
दर्शितं न तत्पटादिकार्यं किं तर्हि तंत्वादिकार्यमपि तंत्वाद्यवयवेषु नास्त्येवेत्यस्म
त्पक्षसिद्धिरेवाथ तंत्वादिकार्यं शक्त्यापेक्षयास्तीत्युच्यते नयेष्वपि निरपेक्षेषु बु
द्ध्यभिधानरूपेषु कारणवशात्सम्यग्दर्शनहेतुत्वविपरिणतिसद्भावात्शक्त्यात्म
नास्तित्वमिति साम्यमेवोपन्यासस्य॥ ज्ञानदर्शनयोस्तत्त्वं नयानां चैव लक्षणं ज्ञा
नस्य च प्रमाणत्वमध्यायेस्मिन्निरूपितमिति॥ इति तत्त्वार्थाधिगमालं
कारे प्रथमोऽध्यायः॥

प्रभावतीति प्रवदंतिसंतः २ तस्यामभूद्धिम्बजनीनवृत्तिर्दानांबुवाहो भुवि हीरपाख्यः स्वगोत्रविस्तारन
भोंशुमाली मान्यक्रमत्ना भरणार्चितांघ्रिः ३ तस्योपरोधवशतो विशदोरुकीर्तेर्माणिक्यनंदिकृततशा
स्त्रमगाधबोधम् ॥ स्पष्टीकृतं कतिपयैर्वचनैरुदारैर्बालप्रबोधकरमेतदनंतवीर्यैः ४ इति परीक्षामु
खलघुवृत्तौ समाप्तम्

गूढपदप्रायं यत्र माहुरनाकुलमिति इदानीमात्मनः प्रारब्धनिर्वहणमौद्धत्यपरिहारं च दर्शयन्नाह परी -
मुखमादर्शहेयोपादेयोस्तत्वयोः संविदे मादृशोबालः परीक्षादक्षवद्व्यधां ॥१॥ व्यधां कृतवानस्मि किमर्थं
संविदे कस्य मादृशः अहं च कथंभूत इत्याह बालोमंदमतिः ॥ अनौद्धत्यसूचकं वचनमेतत् ॥ तत्वज्ञत्वं च प्रार
ब्धनिर्वहणादेवावसीयते किं तत्परीक्षामुखं तदेव निरूपयति आदर्शमिति कयोः हेयोपादेयतत्वयोः
वादर्शआत्मनोलंकारमंडितस्य सौरूप्यं वैरूप्यं वा प्रतिबिंबोपदर्शनद्वारेण सूचयति तथेदमपि हेयो
पादेयतत्वं साधनदूषणोपदर्शनद्वारेण निश्चाययतीत्यादर्शत्वेन निरूप्यते कथं इव परीक्षादक्षवत् परी
क्षादक्षइव यथा परीक्षादक्षः स्वप्रारब्धशास्त्रं निरूढवांस्तथाहमपीत्यर्थः अकलंकशशांकैर्यत् प्रकटीकृत
मखिलमाननिभं निकरं तत्संक्षिप्तं सूरिभिरुरुपपत्तिभिर्व्यक्तिमेतेन ॥ इति परीक्षामुखलघुवृत्तौप्रमाणा
समुद्देशः षष्ठः परिच्छेदः ॥ श्रीमान्वैजेयनामाभूदग्रणीर्गुणशालिनां बदीपालवंशालिव्यो
मद्युमणिरूर्जितः १ तदीयपत्नीभुवि विश्रुतासीन्नाणांबनामागुणशालिधामा यां रेवतीति प्रथितांबिकां

मारगतत्वान्नयस्वरूपं शास्त्रांतरप्रसिद्धम् विचारणीयमिहयुक्तया प्रतिपत्तव्यं तत्रमूलनयौ द्वौ द्रव्यार्थिकपर्यो
यार्थिकभेदात् तत्र द्रव्यार्थिकस्त्रेधा नैगमसंग्रहव्यवहारभेदात् पर्यायार्थिकश्चतुर्धा ऋजुसूत्रशब्दसमभिरूढैवं
भूतभेदात् अन्योन्यगुणप्रधानभूतभेदाभेदप्ररूपणो नैगमः नैकंगमो नैगम इति निरुक्तेः सर्वथाभेदवाद
स्तदाभासः प्रतिपक्षव्यपेक्षा सन्मात्रग्राही संग्रहः ब्रह्मवादस्तदाभासः संग्रहगृहीतभेदको व्यवहारः कल्प
निकोभेदस्तदाभासः शुद्धपर्यायग्राही प्रतिपक्षसापेक्षः ऋजुसूत्रः क्षणिकैकांतनयस्तदाभासः कालकारक
लिंगानां भेदाच्छब्दस्य कथंचिदर्थभेदकथनं शब्दनयः अर्थभेदं विना शब्दानानात्वैकांतस्तदाभासः पर्याय
भेदात् पदार्थनानात्वनिरूपकः समभिरूढः पर्यायनानात्वमंतरेणापींद्रादिभेदकथनं तदाभासः क्रियाश्रये
णभेदप्ररूपणमित्थंभावः क्रियानिरपेक्षत्वेन क्रियावाचकेषु कल्पनिको व्यवहारस्तदाभास इति इतिनयतदाभा
सलक्षणं संक्षेपेणोक्तं विस्तरेण नयचक्रात् प्रतिपत्तव्यं अथवा संभवद्विद्यमानमत्र द्वादशलक्षणं यत्र ल
क्षणं वान्यत्रोक्तमिह द्रष्टव्यं तथा चाह समर्थवचनं वाद इति प्रसिद्धावयवं वाक्यं स्वेष्टस्यार्थस्य साधकं साधु

सं दूषयन्नाह भेदेत्वात्मांतरवत्तदनुपपत्तेः अथ यत्रैवात्मनि प्रमाणं समवेतं फलमपि तत्रैव समवेतमिति
समवायिलक्षणप्रत्यासत्त्या प्रमाणफलव्यवस्थितिनात्मांतरे तत्प्रसंग इति चेतपि न सत्कमित्याह समवायेति प्र
इति समवायस्य नित्यत्वाद्व्यापकत्वाच्च सर्वात्मनामपि समवायसमवायसमानधर्मकत्वान्न ततः प्रतियम
इत्यर्थः इदानीं स्वपरपक्षसाधनदूषणव्यवस्थामुपदर्शयति प्रमाणतदाभासौ दुष्टतयोद्भावितौ परिहृतादो
वादिनः साधनतदाभासौ प्रतिवादिनो दूषणभूषणे च वादिना प्रमाणमुपन्यस्तं तच्च प्रतिवादिना दुष्टत
योद्भावितम् पुनर्वादिना परिहृतं तदेव तस्य साधनं भवति प्रतिवादिनश्च दूषणमिति यदा तु वादिना प्रमाणा
म् प्रतिवादिना तथैवोद्भावितम् वादिना च परिहृतं तदा तद्वादिनः साधनाभासो भवति प्रतिवा
मिति अथोक्तप्रकारेणाशेषविप्रतिवादिना तथैवोद्भावितम् वादिनापरिहृतम् तदा तद्वादिनः
भासो भवति वादिनश्च भूषणमिति अथोक्तप्रकारेणाशेषविप्रतिपत्तिनिराकरणद्वारेण प्रमाणतत्वं स्वप्र
तिज्ञातं परीक्षनयादितत्वमन्यत्रोक्तमिति दर्शयन्नाह संभवदन्यद्विचारणीयमिति संभव विद्यमानमन्य

च्चकिंचनदेकमात्मकं तत्वम् स्वयंसमर्थैवाकारित्वात् प्रथमपक्षे दूषणमाह समर्थस्यकरणे सर्वदोत्पत्तिरनपेक्ष
त्वात् सहकारिसांनिध्यात्तत्कारणान्नेति चेत्तत्राह परापेक्षणेपरिणामित्वमन्यथा तदभावात् विशुकावस्था
यामकुर्वतः सहकारिसमवधानवेलायां कार्यकारिणः पूर्वेतराकारपरिहारावाप्तिस्थितिलक्षणपरिणा
मोपपत्तेरित्यर्थः अन्यथाकार्यकारणाभावात् प्राग्भावावस्थायामिवेत्यर्थः अथसिद्धितीयपक्षेदोषमाह
स्वयमसमर्थस्य अकारकत्वात्पूर्ववत् अथफलाभासं प्रकाशयन्नाह फलाभासंप्रमाणादभिन्नं भिन्नमेववा
कुतः पक्षद्वयेपि तदाभासत्वेत्याशंकायामाद्यपक्षे तदाभासत्वे हेतुमाह अभेदे तद्व्यवहारानुपपत्तेः फल
मेवप्रमाणमेववाभवेदितिभावः व्यावृत्त्यासंवृत्त्यपरनामधेयया तत्कल्पनास्त्विस्याह व्यावृत्त्यापिनतत्कल्प
नाफलांतरात्वप्रसंगात् द्वयमत्रेपिथाफलाद्विजातीयात् फलस्यव्यावृत्त्याफलव्यवहारस्तथाफलांतराद
दपिसजातीयाद्व्यावृत्तिरप्यस्तीफलत्वमत्रेवाभेदपक्षेदृष्टांतमाह प्रमाणांतराद्व्यावृत्तेवाप्रमाणत्वस्येति
अत्रापिप्राक्तन्येवप्रक्रियायोजनीया अभेदपक्षंनिराकृत्याचार्यउपसंहरति तस्माद्वास्तवोभेदइति भेदेप

संख्याभासमिति दर्शयति सौगतसांख्ययोगप्राभाकरजैमिनीयानां प्रत्यक्षानुमानागमोपमानार्थापत्त्य
भावैरेकैकाधिकैर्व्याप्तिवत् यथा प्रत्यक्षादिभिरेकैकाधिकैर्व्याप्तिः प्रतिपत्तुं न शक्यते सौगतादिभिस्तथा प्रत्यक्षे
णालोकायतिकैः परबुद्ध्यादिरपीत्यर्थः अथ परबुद्ध्यादिप्रतिपत्तिः प्रत्यक्षेण माभूदन्यस्माद्भविष्यतीइ
त्याशंक्याह अनुमानादेस्तद्विषयत्वे प्रमाणांतरत्वं तच्छब्देन परबुद्ध्यादिरभिधीयते अनुमानादेः परबुद्ध्या
दिविषयत्वे प्रत्यक्षैकप्रमाणवादो हीयत इत्यर्थः अत्रोदाहरणमाह तर्कस्येव व्याप्तिगोचरत्वे प्रमाणांतर
त्वं अप्रमाणस्याव्यवस्थापकत्वात् सौगतानामिति शेषः किंच प्रत्यक्षैकप्रमाणवादिना प्रत्यक्षाद्येकैकाधि
कप्रमाणवादिभिश्च स्वसंवेदनेंद्रियप्रत्यक्षभेदोनुमानभेदश्च प्रतिभासभेदेनैव कथ्यो गत्यंतराभावात् स
च तद्वदेव लोकायतिकप्रतिपक्षानुमानयोरितरेषां व्याप्तिज्ञानप्रत्यक्षादिप्रमाणेष्विति सर्वेषां प्रमाणसंख्या
विघटते एतदेव दर्शयति प्रतिभासभेदस्य च भेदकत्वादिति। इदानीं विषयाभासमुपदर्शयितुमाह विषया
भासः सामान्यं विशेषो द्वयं वा स्वतंत्रमिति कथमेषां तदाभासतेत्याह तथाऽप्रतिभासनात् कार्याकारणा

उदाहरणमाह यथा नद्यास्तीरे मोदकराशयः संति धावध्वं माणवकाः कश्चिन्माणवकैराकुलीकृतचेतास्तत्संगपरिजि
हीर्षया प्रतारणवाक्यं नद्यादेशं तान् प्रस्थापयतीत्याप्तोक्तेरन्यत्वादागमाभासत्वं प्रथमोदाहरणमात्रेणानु
घ्यन्नुदाहरणांतरमाह अंगुल्यग्रे हस्तियूथशतमास्ते इति अत्रापि सांख्यपशुः स्वदुरागमजनितवासनाहि
तचेता दृष्टेष्टविरुद्धं सर्वं सर्वत्र विद्यत इति मन्यमानस्तथोपदिशतीत्यनाप्तवचनत्वादिदमपि तथेत्यर्थः कथ
मनंतरयोर्वाक्ययोस्तदाभासत्वमित्यारेकायामाह विसंवादात् अविसंवादरूपप्रमाणलक्षणाभावान्न तद्वि
शेषरूपमपीत्यर्थः इदानीं संख्याभासमाह प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्याभासं प्रत्यक्षपरोक्षभे
दात्ते द्वैविध्यमुक्तं तद्विपरीत्येन प्रत्यक्षमेव प्रत्यक्षानुमाने एतेषाद्यवधारणं संख्याभासं प्रत्यक्षमेवैकमिति
कथं संख्याभासमित्याह लौकायतिकस्य प्रत्यक्षतः परलोकादिनिषेधस्य परबुद्ध्यादेश्चासिद्धेरतद्विषयत्वात्
अतद्विषयत्वात् अप्रत्यक्षविषयत्वादित्यर्थः शेषं सुगमं प्रपंचितमेवैतत्संख्याविप्रतिपत्तिनिराकरणइ
ति नेह पुनरुच्यते इतरवादिप्रमाणेयत्तावधारणमपि विघटत इति लौकायतिकदृष्टांतद्वारेण तन्मतेपि सं

पादितं तद्विपरीतदर्शनमपि तदाभासमित्याह विपरीतान्वयश्च यदपौरुषेयं तदमूर्तं कुतोस्य
विद्युदादिनातिप्रसंगादिति तस्याप्यमूर्तताप्राप्तेरित्यर्थः व्यतिरेकोदाहरणाभासमाह व्यतिरेके
सिद्धताव्यतिरेकः परमाण्विन्द्रियसुखाकाशवदिति अपौरुषेयः शब्दोमूर्तत्वादित्यत्रैवासिद्धा साध्यसाधनो
यव्यतिरेका यत्रेति विग्रहः तत्रासिद्धसाध्यव्यतिरेकः परमाणुस्तस्यापौरुषेयत्वादिन्द्रियसुखमसिद्धसा
व्यतिरेकं आकाशत्वसिद्धोभयव्यतिरेकमिति साध्याभावे साधनव्यावृत्तिरिति व्यतिरेकोदाहरणप्रघट्टके
ख्यापितं तत्र तद्विपरीतमपि तदाभासमित्युपदर्शयति विपरीतव्यतिरेकश्च यन्नामूर्तं तन्नापौरुषेयमि
बालव्युत्पत्त्यर्थं तत्त्रयोपगम इत्युक्तमिदानीं तान्प्रत्येव कियद्धीनतायां प्रयोगाभासमाह बालप्रयोगा
पंचावयवेषु कियद्धीनता तदेवोदाहरणं अग्निमानयं देशो धूमवत्वादिदं तदि[illegible] यथा महानसमित्यवय
विपर्यासितत्वमाह तस्मादग्निमान्धूमवांश्चायमिति कथमवयवविपर्यये प्रयोगाभास इत्याशंकायामाह स्पष्ट
तया प्रकृतप्रतिपत्तेरयोगात् इदानीमागमाभासमाह रागद्वेषमोहाक्रान्तपुरुषवचनाज्जातमागमाभासम्

शंक्याह आकाशे नित्येप्यस्य निश्चयात् शंकितवृत्तिमुदाहरति शंकितवृत्तिस्तु नास्ति सर्वज्ञो वक्तृत्वादिति अ
स्यापि कथं विपक्षे वृत्तिराशंक्यतेत्यत्राह सर्वज्ञेन वक्तृत्वाविरोधादिति अविरोधश्च ज्ञानोत्कर्षे वचनानामपकर्षा
दर्शनादिति निरूपंतमाय अकिंचित्कर स्वरूपं निरूपयति सिद्धे प्रत्यक्षादिबाधिते च साध्ये हेतुरकिंचित्करइ
ति उदाहरति सिद्धः श्रावणः शब्दः शब्दत्वादिति कथमस्याकिंचित्करत्वमित्याह किंचिदकरणादिति अ
परं भेदं प्रथमस्य दृष्टांतीकरणद्वारेणोदाहरति यथानुष्णोग्निर्द्रव्यत्वादित्यादौ किंचित्कर्तुमशक्यत्वादकिंचित्क
रत्वमिति शेषः अयं च दोषो हेतुलक्षणविचारावसर एव न वादकाल इति व्यक्तीकुर्यान्नाह लक्षण एवासौ
दोषो व्युत्पन्नप्रयोगस्य पक्षदोषैव दुष्टत्वादिति दृष्टांतोन्वयव्यतिरेकभेदाद्द्विविध इत्युक्तं तत्रान्वयदृष्टांता
भासमाह दृष्टांताभासा अन्वये असिद्धसाधनोभयाः साध्यं च साधनं चोभयं च साध्यसाधनोभयानि अ
सिद्धानि तानि येष्विति विग्रहः एताननेकत्रानुमाने दर्शयति अपौरुषेयः शब्दोमूर्तत्वादिंद्रियसुखपरमाणु
घटवत् इंद्रियसुखमसिद्धसाध्यं तस्य पौरुषेयत्वात् परमाणुरसिद्धसाधनं दर्शनीयामिति दृष्टांतावसेय

न्नाह हेत्वाभासा असिद्धविरुद्धानैकान्तिका किंचित्कराः येषां यथा क्रमेण लक्षणं सोदाहरणमाह अ
सत्सत्ता निश्चयो सिद्धः सत्ता च यस्य सत्ता निश्चयो असंतो सत्ता निश्चयो यस्य भवत्य सत्सत्ता निश्चयः तत्र प्रथ
म भेदमाह अविद्यमानसत्ताकः परिणामी शब्दः चाक्षुषत्वात् प्रथमस्यासिद्धत्वमाह गच्छ स्वरूपेणासत्वात्
द्वितीयासिद्धभेदमुपदर्शयति अविद्यमाननिश्चयो मुग्धबुद्धिं प्रत्यग्निरत्र धूमादिति अस्याप्यसिद्धता कथ
मित्याशंकायामाह सांख्यं प्रति परिणामी शब्दः कृतकत्वादिति अस्यासिद्धतायाः कारणमाह तेनाज्ञातत्वा
दिति तेन सांख्येनाज्ञातत्वात्तन्मते ह्याविर्भावतिरोभावावेव प्रसिद्धौ नोत्पत्यादिरिति अस्याप्यनिश्चयाद
सिद्धत्वमित्यर्थः विरुद्धहेत्वाभासमुपदर्शयन्नाह विपरीतनिश्चिताविनाभावो विरुद्धः अपरिणामी शब्दः कृत
कत्वात् कृतकत्वस्य परिणामविरोधिना परिणामेन व्याप्तिरिति अनैकान्तिकत्वे हेत्वाभासमाह विपक्षेप्यविरुद्ध
वृत्तिरनैकान्तिकः अपिशब्दान्न केवलं पक्षसपक्षयोरिति द्रष्टव्यं स च द्विविधो विपक्षे निश्चितवृत्तिः शंकितवृत्ति
श्चेति तत्राद्यं दर्शयन्नाह निश्चितवृत्तिरनित्यः शब्दः प्रमेयत्वात् घटवदिति कथमस्य विपक्षे निश्चिता वृत्तिरित्या

अनुमानाभासमाह इदमनुमानाभासं इदंवक्ष्यमाणमितिभावः तत्रतदवयवाभासोपदर्शनेनसमुदायरू
पानुमानासमुपदर्शयितु कामःप्रथमावयवाभासमाह तत्रापिनिष्टादिः यत्राभासः इष्टमबाधितमित्यादि
तल्लक्षणमुक्तमिदानींतद्विपरीतं तदाभासमितिकथयति अनिष्टोमीमांसकस्यानित्यःशब्दः असिद्धाद्विप
रीतं तदाभासमाह सिद्धःश्रावणःशब्दइति अनुमानागमलोकस्ववचनैः एतेषांक्रमेणोदाहरणमाह तत्रप्र
त्यक्षादिबाधितोयथा अनुष्णोग्निर्द्रव्यत्वाज्जलवत् स्पर्शनप्रत्यक्षेण्युष्णःस्पर्शात्मकोग्निरनुभूयते अनु
बाधितमाह अपरिणामीशब्दः कृतकत्वात् घटवत् इति अत्रपक्षोपरिणामीशब्दःकृतकत्वादित्यनेनबाध्य
ते आगमबाधितमाह प्रेत्यासुखप्रदोधर्मः पुरुषाश्रितत्वादधर्मवदिति आगमेहिपुरुषाश्रितत्वाविशेषे
पिपरलोकेधर्मस्यसुखहेतुत्वमुक्तं लोकबाधितमाह शुचिनरशिरःकपालंप्राण्यंगत्वाच्छंखशुक्तिवदिति
लोकेहिप्राण्यंगत्वेपिकस्यचिच्छुचित्वमशुचित्वंचतत्रनरकपालादीनामशुचित्वमेवेतिलोकबाधितत्वंस्व
वचनबाधितमाह मातामेवंध्यापुरुषसंयोगेप्यगर्भत्वात्सिद्धवंध्यावदिति इदानींहेत्वाभासानुक्रमाप

सतिभवति नचक्रमप्राप्तोप्रमाणांतरमस्तितैजसत्वमस्तीतिचेन्न तस्यासिद्धेः अथचक्षुः तैजसंरूपादी
नांमध्येरूपस्यैवप्रकाशकत्वात् प्रदीपेतितद्यपर्यायोचिताभिधानंमन्यंजनादेः पार्थिवत्वेपिरूपप्रकाशत्वदर्श
नात् प्रथिव्यादिरूपप्रकाशकत्वेप्रथिव्यादौरवत्वप्रसंगाच्च तस्मात्संनिकर्षस्याव्यापकत्वान्नप्रमाणत्वंमु
कारणज्ञानेनव्यवधानाच्चेतिप्रत्यक्षाभासमाह अवैशद्येप्रत्यक्षंतदाभासंबौद्धस्याकस्माद्धूमदर्शनाद्वह्निवि
ज्ञानवदिति परोक्षाभासमाह वैशद्येपिपरोक्षंतदाभासंमीमांसककरणज्ञानवदिति प्राक्प्रपंचितमेतत्
परोक्षभेदाभासमुपदर्शयन् प्रथमक्रमप्राप्तंस्मरणाभासमाह अतस्मिंस्तदितिज्ञानंस्मरणाभासंजिनद
त्तेसदेवदत्तोयथेति अतस्मिन् अननुभूतइत्यर्थःशेषंसुगमं प्रत्यभिज्ञाभासमाह सदृशेतदेवेदंतस्मिन्ने
वतेनसदृशंयमलकवदित्यादि प्रत्यभिज्ञानाभासंद्विविधंप्रत्यभिज्ञानाभासमुपदर्शितमेकत्वनिबंधनंसादृ
श्यनिबंधनंचतितत्रैकत्वेसादृश्यावभासः सादृश्येचैकत्वावभासस्तदाभासमितितर्काभासमाह असंबद्धे
तितज्ज्ञानंतर्काभासंयावांस्तत्पुत्रःसश्यामइतियथायावत् ज्ञानमितिव्याप्तिलक्षणंसंबंधज्ञानमित्यर्थः इदानीं

प्रमाणमितरत्तदाभासमिति संशयादयश्च प्रसिद्धा एव तत्र संशय उभयकोटिसंस्पर्शी स्थाणुर्वा पुरुषो वेति प

रामर्शो विपर्ययः पुनरतस्मिंस्तदिति विकल्पः विशेषानवधारणमनध्यवसायः कथमेषामस्वसंविदितादीनां

तदाभासतेति आह स्वविषयोपदर्शकत्वाभावादिति गतार्थमेतत् अत्र दृष्टांतं यथाक्रममाह पुरुषांतरपूर्वा

र्थगच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् पुरुषांतरं च पूर्वार्थश्च गच्छत्तृणस्पर्शश्च स्थाणुपुरुषादिश्च तेषां ज्ञानं

तद्विवत्तद्वत् अपरं च संनिकर्षवादिनं प्रति दृष्टांतमाह चक्षूरसयोर्द्रव्ये संयुक्तसमवायवाच्च अयमर्थः यथा

चक्षूरसयोः संयुक्तसमवायः सन्नपि न प्रमाणं तथा चक्षूरूपयोरपि तस्मादयमपि प्रमाणाभास एवेति उपलक्ष

णमेतत् अतिव्याप्तिकथनमव्याप्तिश्च संनिकर्षप्रत्यक्षवादीनां चक्षुषि संनिकर्षस्यासंभवात् अथ चक्षु

प्राप्तार्थपरिच्छेदकं व्यवहितार्थानामप्रकाशकत्वात् प्रदीपादिवदिति तत्सिद्धिरिति मतं तदपि न साधीयः का

चाभ्रपटलादिव्यवहितार्थानामपि चक्षुषा प्रतिभासनं हेतोरसिद्धेः शाखाचन्द्रमसोरेककालदर्शनानुपप

त्तिप्रसक्तेश्च न तत्र क्रमेऽपि यौगपद्याभिमान इति वक्तव्यं कालव्यवधानानुपलब्धेः किंच क्रमप्रतिपत्तिः व्याप्तिनिश्चये

क्षत्वायोमर्थ्यकर्मत्वेनाप्रतीयमानादप्रत्यक्षत्वं नहि फलज्ञानस्याप्रत्यक्षतानत एव स्यात् अथ फलत्वेन प्रतिभा
नान्नो चेत्करणज्ञानस्यापि करणत्वेनावभासनात्प्रत्यक्षमस्तु अथ करणस्य चक्षुरादेः प्रत्यक्षत्वेपि रूपप्राकट्या
इति चेन्न भिन्नकर्तृकरणस्यैव तद्व्यभिचारादभिन्नकर्तृके करणे सति कर्तृप्रत्यक्षतायां तदभिन्नस्यापि
करणस्य कथंचित् प्रत्यक्षत्वेनाप्रत्यक्षैकान्तविरोधात्प्रकाशात्मनो प्रत्यक्षत्वेपि प्रदीपप्रत्यक्ष्यविरोधवदिति ग्र
ग्रहिधारावहिज्ञानं गृहीतार्थं दर्शनं सौगताभिमतम् निर्विकल्पं तज्ञस्त्वविशयानुपदर्शकत्वादप्रमाणं व्य
।यस्यैव तज्जनितस्य तदुपदर्शकत्वाद्व्यवसायस्य प्रत्यक्षाकारेणानुरक्तत्वामतः प्रत्यक्षस्यैव प्रमाण्यं व्य
गृहीतग्राहित्वादप्रमाणमिति तन्न सुभाषितम् दर्शनस्याविकल्पस्यानुपलक्षणानुपलक्षणात तद्भाव
सद्भावेवा नीलादाविवक्षयादावपि तदुपदर्शकत्वप्रसंगात्तत्र विपरीतसमारोपान्नेति चेत् तर्हि सिद्धं नीला
रोपविरोधिग्रहणलक्षणा तत्सद्भावायोगात् सद्भावेवा नीलादाविव क्षणक्षयादावपि तदुपदर्शकत्वप्र
गात्तत्र विपरीतसमारोपान्नेति चेत् तर्हि सिद्धं नीलादौ समारोपविरोधिग्रहणलक्षणो निश्चय इति तदात्मकमेव

प्रमाणात्तदिहोदितं ॥ इति परीक्षामुखस्य लघुवृत्तौ फलसमुद्देशः पंचमः ॥५॥ अथेदानीमुक्तप्रमाणस्वरूपादि
चतुष्टयाभासमाह ततोन्यत्तदाभासमिति ततः उक्तात् प्रमाणस्वरूपसंख्याविषयफलभेदादन्यद्विपरीतं
तदाभासमिति तत्र क्रमप्राप्तं स्वरूपाभासं दर्शयति अस्वसंविदितगृहीतार्थदर्शनसंशयादयः प्रमाणाभासाः
अस्वसंविदितं च गृहीतार्थं च दर्शनं च संशयः आदिर्येषां ते संशयादयश्चेति सर्वेषां द्वंद्वः आदिशब्देन विपर्य
यानध्यवसाययोरपि ग्रहणं तत्र स्वसंविदितं ज्ञानं ज्ञानांतरप्रत्यक्षत्वादिति नैयायिकाः तथाहि ज्ञानं स्व
व्यतिरिक्तवेदनवेद्यं वेद्यत्वात् घटवदिति तदसंगतं धर्मिज्ञानस्य ज्ञानांतरवेद्यत्वे साध्यांतःपातित्वेन धर्मित्वा
योगात् स्वसंविदितत्वे तेनैव हेतोरनेकांतात् महेश्वरज्ञानेन च व्यभिचारात् व्याप्तिज्ञानेनाप्यनेकांतादर्थप्रति
पत्त्ययोगाच्च नहि ज्ञापकमप्रत्यक्षं ज्ञाप्यं गमयति शब्दलिंगादीनामपि तथैवागमकत्वप्रसंगात् तदनंतरभाविज्ञा
नग्राह्यकत्वे तस्याप्यगृहीतस्य पराज्ञापकत्वात् अनंतरं कल्पनीयं तत्रापि तदंतरमित्यनवस्था तस्मान्नायं पक्षः
श्रेयान् एतेन करणज्ञानस्य परोक्षत्वेनास्वसंविदितत्वं ब्रुवन्नपि मीमांसकः प्रत्युक्तः तस्यापि ततोर्थप्रत्य

मास्वेदहन्मितिरेवस्थितः द्वितीयंविशेषभेदमाह अर्थांतरगतोविसदृशपरिणामोव्यतिरेकोगोमहि
षादिवदिति वैसादृश्यंहिप्रतियोगिग्रहणेसत्येवभवति नचापेक्षत्वादस्यावस्तुत्वमवस्तुनपेक्षिकत्वा
योगादपेक्षायावस्तुनिष्ठत्वात् स्यात्कारलांछितमबाध्यमनंतधर्मसंदेहवर्मितमशेषमपिप्रमेयं देवैःप्र
माणावलितंनिरवादितंच संक्षिप्तमेवमुनिभिर्विवृतं मयेतत् ॥९॥ इतिपरीक्षामुखस्यलघुवृत्तौविषय
समुद्देशश्चतुर्थः ॥४॥ अथेदानीं फलविप्रतिपत्तिनिरासार्थमाह अज्ञाननिवृत्तिर्हानोपादानोपेक्षाश्चफलं
साक्षात्त्वादज्ञाननिवृत्तिः पारंपर्येणहानादिकमिति प्रमेयनिश्चयोत्तरकालभावित्वात्तस्येति तद्द्विधमपिफलंप्रमा
णाद्भिन्नमेवेतियोगः अभिन्नमेवेतिसौगतास्तन्मतद्वयनिरासेनस्वमतंव्यवस्थापयितुमाह प्रमाणादभिन्नंच
कथंचिदभेदसमर्थनार्थंहेतुमाह यःप्रमिमीतेसएवनिवृत्ताज्ञानोजहात्यादत्तउपेक्षतेचेतिप्रतीतेः अयमर्थोयस्यैवा
त्मनःप्रमाणाकारेणपरिणतिस्तस्यैवफलरूपतयापरिणामइत्येकप्रमात्रपेक्षयाप्रमाणफलयोरभेदः करणक्रियाप
रिणामभेदाद्भेदः इत्यस्यसामर्थ्यसिद्धत्वान्नोक्तंपारंपर्येणसाक्षाच्चफलंद्विधाभिधायितत् देवैर्भिन्नमभिन्नंच॥

नापिपृथिव्यादिचतुष्टयात्मेकत्वमात्मनः संभाव्यते अचेतनेभ्यश्चैतन्योत्पत्तियोगात् धारणेरणद्रवो
क्तालक्षणान्वयाभावाच्च तदहर्जातबालकस्य स्तन्यादावभिलाशाभावप्रसंगाच्च अभिलाषोहिप्रत्य
भिज्ञानेभवति तच्च स्मरणे स्मरणंचानुभवेभवतीति पूर्वानुभवः सिद्धः मध्यदशायां तथैव याक्षेः मृतानां
रक्षोयक्षादिकूलेषु स्वयमुत्पन्नत्वेन कथयतां दर्शनात् केषांचित्भवस्मृतेरुपलंभाच्चानादिश्चेतनसिद्धु
एव तथा चोक्तम् तदहर्जस्तनेहानुरक्षोदृष्टेर्भवस्मृतेः भूतानन्वयनात्सिद्धिः प्रकृतिज्ञः सनातनइति
॥२॥ नच स्वदेहप्रमितिरात्मेत्यत्रापि प्रमाणाभावात्सर्वत्र संशय इति वक्तव्यम् तत्रानुमानस्य सद्भाव
त् तथाहि देवदत्तात्मा तद्देह एव तत्र सर्वत्रैव च विद्यते तत्रैव सर्वत्रैव स्वासाधारणगुणाधारतयोप
लंभात् योयत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलभ्यते सर्वत्रैवसतत्रैव तत्र च विद्यते यथा
देवदत्तग्रेह एव सर्वत्रैव च उपलभ्यमानः स्वासाधारणभासुरत्वादिगुणः प्रदीपः तथाचायं तस्मा
त्तथेति तदसाधारणगुणाज्ञानदर्शनसुखवीर्यलक्षणास्तेच सर्वांगिणास्तत्रैव चोपलभ्यंते सुख
मात्ल्हादनाकारं विज्ञानं मेयबोधनशक्तिः क्रियानुमेयास्याप्रतः कांतासमागम इति वचनात् तस्माद्

परिमाणसामान्याधिकरणत्वमात्मन इत्युक्तं तच्चानुपपन्नं व्यधिकरणासिद्धिप्रसंगात् नहिपरिमा
णसामान्यमात्मनि व्यवस्थितम् किन्तु परिमाणव्यक्तिष्वेवेति नचावांतरमहापरिमाणद्वयाधारत
यात्मन्यप्रतिपन्ने परिमाणमात्माधिकरणता तत्र निश्चेतुं शक्या दृष्टांतश्च साधनविकलः आकाशस्य
महापरिमाणाधिकरणतया परिमाणमात्राधिकरणत्वायोगात् नित्यद्रव्यत्वं च सर्वथासिद्धं नित्यस्य
क्रमाक्रमाभ्यामर्थक्रियाविरोधादिति प्रसज्यपक्षेपि भावस्य ग्रहणोपायासंभवात् नच विशेषणत्वेन
वा गृहीतविशेषणमनागृहीतविशेषणाविशेष्यबुद्धिरिति वचनात् नच प्रत्यक्षं तद्ग्रहणोपायः संबंधाभा
वात् इन्द्रियार्थसन्निकर्षजं हि प्रत्यक्षं त्वन्मते सिद्धं विशेषणविशेष्यभावकल्पनायामभावस्यनागृही
तस्य विशेषणत्वमिति तदवदूषणं तस्मात् नव्यापकमात्मद्रव्यं नापि वटकणिकामात्रं कमनीयकां
ताकुचजघनसंस्पर्शकाले प्रतिलोमकूपमाह्लादनाकारस्य सुखस्यानुभवात् अन्यथा सर्वांगीणरोमांचा
दिकार्योदयायोगात् आशुवृत्त्यालातचक्रवत्क्रमेणोत्पन्नं सुखमित्यनुपपन्नं परापरान्तःकरणसम्बंधस्य
तत्कारणस्य परिकल्पनायां व्यवधानप्रसंगात् अन्यथा सुखस्य मानसप्रत्यक्षादित्वायोगादिति

त्तायाकारव्याप्तिर्वेदकस्यक्रमभाविपरिणामिव्यापित्वमित्यर्थः विशेषस्यापिद्वैविध्यमितिदर्शयति वि

शेषस्यापिद्वैविध्यमितिदर्शयति विशेषश्चेतिद्वेधेत्यभिक्रियमाणेनाभिसंबंधः तद्देवप्रतिपादयति प

र्यायव्यतिरेकभेदादिति प्रथमविशेषभेदमाह एकस्मिन्द्रव्येक्रमभाविनः परिणामाः पर्याया आत्मनि ह

र्षविषादादिवदिति अत्रात्मद्रव्यं स्वदेहप्रमितमात्रमेव नव्यापकं नापिवटकणिकामात्रं नचकाया

कारपरिणतभूतकदंबकमिति तत्रव्यापकत्वेपरेषामनुमानमात्माव्यापकः द्रव्यत्वेसत्यमूर्तत्वादाकाशवदि

ति तत्रयद्रूपादिलक्षणंमूर्तत्वं तत्प्रतिषेधोमूर्तत्वं तन्मनसानेकांतः अर्थसर्वगतद्रव्यपरिमाणं

मूर्तत्वं तन्निषेधस्तथाचेत्परंप्रतिसाध्यसमोहेतुः यच्चापरमनुमानमात्माव्यापकः अणुपरिमाणानधिकर

णत्वेसतिनित्यद्रव्यत्वादाकाशवदिति तदपिनसाधनमणुपरिमाणानधिकरणत्वमित्यत्रकिमयंनञ

र्थः पर्युदासः प्रतिषेधोवाभवेत् तत्राद्यपक्षेअणुपरिमाणामाप्रतिषेधेनमहापरिणामावान्तरपरिमा

णाधिकरणत्वंयद्व्यापकत्वमेवसाधयतीति परिमाणमात्रं चेत्परेणासमान्येमंगीकर्तव्यं तथाचाणु

ताकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तेश्चेति अनुवृत्ताकारोहिंगोगौरित्यादिप्रत्ययः
व्यावृत्ताकारः श्यामः शवलइत्यादिप्रत्ययस्तयोर्योगोचरस्तस्य भावस्तत्वंतस्मादेनेनतिर्यक्सामान्यव्यतिरे
कलक्षणविशेषद्वयात्मकंवस्तुसाधितं पूर्वोत्तराकारयोर्यथासंख्येन परिहारावाप्तीताभ्यांस्थितिः सैव
लक्षणंयस्यसचासौपरिणामस्तेनार्थक्रियोपपत्तेश्चेत्यनेनऊर्द्ध्वतासामान्यपर्यायाख्यविशेषद्वयरूपंव
स्तुसमर्थितंभवति अथप्रथमोद्दिष्टसामान्यभेदंदर्शयन्नाह सामान्यंद्वेधातिर्यगूर्द्ध्वताभेदात् प्रथम
भेदंसोदाहरणमाह सदृशपरिणामस्तिर्यक्खंडमुंडादिगोत्ववत् नित्यैकरूपस्यगोत्वादेः क्रमयौगपद्या
भ्यामर्थक्रियाविरोधात् प्रत्येकंपरिसमाप्त्याव्यक्तिषुवृत्त्ययोगाच्चानेकसदृशपरिणामात्मकमेवेतितिर्य
क्सामान्यमुक्तंद्वितीयभेदमपिसदृष्टांतमुपदर्शयति परापरविवर्तव्यापिद्रव्यमूर्द्ध्वतामृदिवस्थासादि
ष्वितिसामान्यमितिवर्ततेनायमर्थः ऊर्द्ध्वतासामान्यंभवति किंतद्द्रव्यं तदेवविशिष्यते तदेवविशिष्यतेपरा
परविवर्तव्यापीति पूर्वापरकालवर्तित्रिकालानुयायीत्यर्थः चित्रज्ञानस्यैकस्ययुगपद्भाव्यनेकस्वगतनी

नित्यद्रव्येभ्य इति किंच समवायस्यानाश्रितत्वे संबंधरूपतैयेव न घटते तथा च प्रयोगः समवायो न संबंधः अनाश्रित
त्वात् दिगादिवदिति अत्र समवायस्य धर्मिणः कथंचित्तादात्म्यरूपस्यानेकस्य चापरैः प्रतिपन्नत्वाद्धर्मिग्राहकप्र
माणबाधा आश्रयासिद्धश्च न बाध्येति तस्याश्रितत्वेप्यनदभिधीयते न समवायि एकः संबंधात्मके सत्याश्रित
त्वात् संयोगवत् सत्तयानेकांत इति संबंधविशेषणं अथ संयोगे विरोन निबिड सिथलादि प्रत्ययत्वानानात्वाना
त्वं नान्यत्र विसर्पयादिति चेत् न समवायेप्युत्पतिमत्वनश्वरत्वप्रत्ययनानात्वस्य सुलभत्वात् संबंधिभेदाद्भेदो
न्यत्रापि समान इति नैकत्रैव पर्यनुयोगो युक्तस्त्यात्म समवायस्य योगपरिपरकल्पितस्य विचारासहत्वान्न द्रव्य
गुणयादिष्व भेदप्रतीतिः अथ भिन्नप्रतिभासादवयवावयव्यादीनां भेद एवेति चेन्न भेदप्रतिभासस्याभेदा
विरोधात् घटपटादीनामपि कथंचिदभेदोपपत्तेः सर्वथाप्रतिभासतद्भेदस्यासिद्धेश्च इदमित्याद्यभेदप्रतिभास
स्यापि भावात् ततः कथंचिद्भेदाभेदात्मकं द्रव्यपर्यायात्मकं सामान्यविशेषात्मकं च तत्वं नीरादर्शिसकुनिन्यायेन्यायात
मित्यलमितिप्रसंगेन इदानीमनेकांतात्मकं वस्तुसमर्थनार्थमेव हेतुद्वयमाह अनुवृत्तव्यावृत्तप्रत्ययगोचरत्वात् पूर्व

नेन सामान्यविशेषदृष्टांतेन च परिहृतो ऽथ तत्र तथाप्रतिभासनं परस्यापि वस्तुनि तथैव प्रतिभासोऽस्तु तस्य पक्ष
पाताभावात् निर्णीतिसंशयोपि न युक्तः तस्य चलितप्रतिपत्तिरूपत्वादचलितप्रतिभासे दुर्घटत्वात् प्रतिपन्नेव
स्तुन्यप्रतिपत्तिरित्यतिसाहसं उपलब्धमिथानादनुपलंभोपि न सिद्धस्ततो नाभाव इति दृष्टेष्टाविरुद्धमनेकांतशा
सनं सिद्धं तेनावयवावयविनोर्गुणगुणिनोः कर्मतद्वतोश्च कथंचिदभेदो प्रतिपादितो बोद्धव्यो ऽथ समवाय
वशाद्भिन्नेष्वप्यभेदप्रतीतिरनुत्पन्नप्रमतु[?]ाख्यज्ञानस्येति चेन्न तस्यापि ततोभिन्नस्य व्यवस्थापयितुमशक्तेः
तथा हि समवायवृत्तिः स्वसमवायिषु वृत्तिमती स्यादवृत्तिर्वा वृत्तिमत्वे नैव वृत्त्यंतरेण चानवतावदाद्यः पक्षः समवाय
समवायानभ्युपगमात् पंचानां समवायित्वमिति वचनात् वृत्त्यंतरकल्पनायां तदपि स्वसंबंधिषु वर्तते न वेति कल्पना
यां वृत्त्यंतरपरंपराप्राप्तेरनवस्था वृत्त्यंतरस्य स्वसंबंधिषु वृत्त्यंतरानभ्युपगमान्नानवस्थेति चेत् तर्हि समवायेपि वृत्त्यंतरं
माभूत् अथ समवायिषु सत्त्वेव समवायप्रतीतेस्तस्याश्रितत्वमुपकल्प्यते तर्हि मूर्तद्रव्येषु सत्स्वेव दिग्लिंगस्येद
मतः पूर्वेणेत्यादिभस्य काललिंगस्य च परादिप्रत्ययस्य सद्भावतयोरपि तदाश्रितत्वं स्यात् तथा चायुक्तमेतदन्यत्र द्रव्य

कत्वेचवस्तुनोसाधारणाकारेणनिश्चेतुमशक्तेः संशयस्तत्रश्चाप्रतिपत्तिस्ततोभावः इत्यनेकांतात्मकमपि नसौख्यमा
भजतीतिकेचित् तेपीनप्रातीतिकवादिनः विरोधस्यप्रतीयमानयोरसंभवादनुपलंभसाध्योहिविरोधस्तत्रोपलभ्य
मानयोः कोविरोधः यच्च शीतोष्णस्पर्शयोरिवेतिदृष्टांततयोक्तं तच्चधूपदहनाद्येकावयविनः शीतोष्णस्पर्शस्वभा
वस्योपलब्धेरयुक्तमेव एकस्यचलालचरक्तावृतादिविरुद्धधर्माणांयुगपदुपलब्धेश्च प्रकृतयोरपिनविरोधइति ए
तेनवैयधिकरण्यमप्यपास्तं तयोरेकाधिकरणत्वेनप्रतीतेरत्रापिप्रागुक्तनिदर्शनान्येवबोद्धव्यानि यच्चानवस्था
नंदूषणंतदपिस्याद्वादिमतानभिज्ञैरेवापादितं तन्मतेहिसामान्यविशेषात्मकेवस्तुनिसामान्यविशेषावेवभेद
ध्वनिनातयोरेवाभिधानाद्द्रव्यरूपेणाभेदइतिद्रव्यमेवाभेदः एकानेकात्मकत्वाद्वस्तुनः यद्वाभेदनयप्राधान्येन
वस्तुधर्माणामानंत्यान्नानवस्था तथाहि यत्सामान्यंयश्चविशेषस्तयोरनुवृत्तव्यावृत्ताकारेणभेदस्तयोश्चार्थक्रि
याभेदात्तद्भेदश्चशक्तिभेदात्सोपिसहकारिभेदादित्यनंतधर्माणामंगीकरणात् कुतोनवस्था तथाचोक्तं मूलक्षतिक
रीमाहुरनवस्थाहिदूषणं वस्त्वानंत्येप्यशक्तौचनानवस्थाविचार्यतइतियौचसंकरव्यतिकरौ तावपिमेचकज्ञाननिदर्श

युक्तंप्रसंगसाधनात् प्रागभावादौ हि सत्वाद्भेदो सत्वेन व्याप्तउपलभ्यते ततश्च व्याप्यस्य द्रव्यादावभ्युपगमो व्यापका
भ्युपगमनांतरीयकइतिप्रसंगसाधनं अस्य दोषस्याभावादेतेन द्रव्यादीनामप्यद्रव्यादित्वं द्रव्यत्वादेर्भेदे चिंतितं
वेद्रव्यं कथं नाम मुगपदार्थानां परस्परं भेदप्रतिनियतस्वरूपव्यवस्था द्रव्यस्य हि द्रव्यमिति व्यपदेशस्य द्रव्यत्वाभि
संबंधाद्विधाने ततः पूर्वं द्रव्यस्वरूपं किंचिद्वाच्यं येन सह द्रव्यत्वाभिसंबंधः स्यात् द्रव्यमेव स्वरूपमिति चेन्न तस्यापि
सतासंबंधादेव तद्व्यपदेशकारणादेवं गुणादिष्वपि वाच्यं केवलं सामान्यविशेषसमवायानामेव स्वरूपसत्वेन तथा
व्यपदेशोपपत्तेः तत्र यव्यवस्थैव स्यात् ननु जीवादिपदार्थानां सामान्यविशेषात्मकं स्याद्वादिभिरभिधीयेत न
योश्च वस्तुनो भेदाविति तौ च विरोधादिदोषोपनिपातान्नैकत्रयंभविताविताविति तथा हि भेदाभेदयो विधिप्र
तिशेधयोरेकत्राभिन्नवस्तुन्यसंभवः शीतोष्णसंस्पर्शयोरिवेति भेदस्यान्यदधिकरणमभेदस्य चान्यदिति वैयधि
करण्यं यमात्मानं तु पुरोधाय भेदो पंच समाश्रित्य अभेदस्तावात्मानौ भिन्नौ चाभिन्नौ च तत्रापि तथा परिकल्पनाद
नवस्था येन रूपेण भेदस्तेन भेदश्चाभेदश्चेति संकरः येन भेदस्तेनाभेदो येनाभेदस्तेन भेद इति व्यतिकरः भेदाभेदात्म

सहकारिभावइति नस्वभावभेदइष्यते तर्हि नित्यस्यैकरूपस्यापि वस्तुनः क्रमेणानानाकार्यकारिणः स्वभावभेदः का
र्येसांकार्यमाभूत् अक्रमाक्रमिणामनुत्पत्तेर्नैवमिति चेदेकानंशाकारणाद्युगपदनेककारणसाध्यानेककार्यविरोधा
त् क्रमिणोपि नर्मिकस्यकार्यकारित्वमिति किंचभवत्पक्षे सतोसतोवाकार्यकारित्वं सतः कार्यकर्तृत्वे सकलकालक
लाव्यापिक्षणानामेकक्षणावृत्तिप्रसंगः द्वितीयपक्षे खरविशाणादेरपि कार्यकारित्वमसत्वाविशेषात्खलु लक्षणास्य
व्यभिचारश्च तस्मान्न विशेषैकांतपक्षः श्रेयान् नापि सामान्यविशेषौ परस्परानपेक्षाविति योगमपि तमप्युक्ति
युक्तमवभाति तयोरन्योन्यभेदे द्वयोरन्यतरस्यापि व्यवस्थापयितुमशक्तेः तथाहि विशेषास्तावद्द्रव्यगुणकर्मात्म
नः सामान्यंतु परापरभेदाद्द्विविधं तत्र परसामान्यात्सत्तालक्षणाद्भेदे सत्वापतिरिति तथाच द्रव्ययोगः द्रव्यगुण
कर्माण्यसद्रूपाणि सत्वादत्यंतं भिन्नत्वात्प्रागभावादिति नसामान्यविशेषसमवायैर्व्यभिचारः तत्र स्वरूप
सत्वस्याभिन्नस्य परैरभ्युपगमात् ननु द्रव्यादीनां प्रामाणोपपन्नत्वे धर्मिग्राहकप्रमाणबाधितो हेतुर्येन हि प्रमा
णेन द्रव्यादयो निश्चियंते तेन तत्सत्वमपीति अयमप्रमाणप्रतिपन्ना द्रव्यादयस्तर्हि हेतोराश्रयासिद्धिरिति तद

त्यभिज्ञानस्य बहुलमुपलंभात्तथाएयस्यचप्रागेवोक्तत्वादुत्तरकार्येन्यिथानुपपत्तेश्चसिद्धत्वात् पश्चान्यत्साधनेस
त्त्वाख्यं तदपि विपक्षवत्स्वपक्षेपि समानत्वा साध्यसिद्धिनिबंधनं न तथाहि सत्वमर्थक्रियया समर्थक्रियाचक्रमयौ
गपद्याभ्यां चे क्षणिकान्निवर्तमाने स्वव्याप्यामर्थक्रियामादायनिवर्तते साच निवर्तमाना स्वव्याप्यं सत्वमिति
नित्यस्येव क्षणिकस्यापि खरविषाणवदसत्वमिति न सत्वव्यवस्थानं च क्षणिकस्य वस्तुनः क्रमयौगपद्याभ्यामर्
थक्रियाविरोधो सिद्धस्तस्यदेशकृतस्य कालकृतस्य वाक्रमस्यासंभवात् अवस्थितस्यैकस्य हि नानादेशकालकाल
व्यापित्वं देशक्रमः कालक्रमश्चाभिधीयते नच क्षणिकेसोस्ति योयत्रैव सतत्रैव योयदैव तदैव सः न देशकालयो
व्याप्तिर्भावानामिह विद्यते इति स्वयमभिधानात् न च पूर्वोत्तरक्षणानामेकत्वेन क्रमायोगात्क्षणिकत्वेनैव सत्वादिसा
धनमनैकांतिकं अवास्तवत्वेन तदपेक्षक्रमोयुक्तइति नापि यौगपद्येन तत्रार्थक्रिया संभवति युगपद्येन तत्रार्थक्रिया
संभवति युगपदेकस्वभावेन नानाकार्यकरणे तत्कार्येकत्वस्यान्नानास्वभावकल्पनायांते स्वभावास्तेन व्यापनीयास्त
त्रैकेन स्वभावेन तद्व्याप्तौ तेषामेकस्वरूपता नानास्वभावेन चेदनवस्था अथैकस्यात्रैकस्योपादानस्वभाव एवान्यत्र
संतानापेक्षया क्रमसंभवति॥ संतानस्य वास्तवत्वेन स्यात् क्षणिकत्वेन

रूपेण वृत्तिरवसीयते तत्र यथोक्तदोषाणामनवकाशाद्विरोधादिदोषश्चाग्रे प्रतिशेत्स्य इति नेह प्रतन्यते यच्चोक्तक्ष
णस्थायित्वे साधनं यो यद्भावं प्रतीत्यादि प्रोक्तं तदप्यसाधनं असिद्धादिदोषदुष्टत्वात् तत्रान्यानपेक्षत्वं तावद
सिद्धं घटाद्यभावस्य मुद्गराद्यादिव्यापारान्वयव्यतिरेकानुविधायित्वात्तत्कार्यत्वोपपत्तेः कपालादिपर्यायांतरभा
वो हि घटादेरभावस्तुच्छाभावस्य सकलप्रमाणागोचरातिक्रांतत्वात् किंचाभावो यदि तत्रो भवेत्तदान्यानपेक्षत्वं
विशेषणं युक्तं नच सौगतमते सौगतमते सोस्ति इति हेतुप्रयोगाचसात्तिक्रांतत्वात् ॥ नच सौगतमते सोस्ति इति हेतुप्रयोगा
नवतारएवानैकांतिकश्चेदं शालिबीजस्य कोद्रवांकुरजननं प्रत्यन्यानपेक्षत्वे तज्जननस्वभावानियतत्वात्तत्स्वभावत्वे
सतीति विशेषणान्न दोष इति चेन्न सर्वथा पदार्थानां विनाशस्वभावासिद्धेः पर्यायरूपेणैव हि भावानामुत्पादविनाशावंगी
क्रियेते न द्रव्यरूपेण समुदेति विलयमृच्छति भावो नियमेन पर्यायनयस्य नोदेति नो विनश्यति भावनया लिंगितो नित्यं इति
वचनात् नहि निरन्वयविनाशे पूर्वक्षणस्य ततो मृताच्छिखिनः केकाइतस्येवोत्तरक्षणस्योत्पत्तिर्घटते द्रव्यरूपेण कथंचिद
सुरूपस्यासंभवात् न सर्वथा भावानां विनाशस्वभावत्वं युक्तं नच द्रव्यरूपस्य गृहीतुमशक्यत्वादभावः तद्ग्रहणोपायस्य

तिवालविलसितंनिर्विकल्पबोधस्यानुपलक्षणात् गृहीनेहि निर्विकल्पकेनरयोर्भेदे अन्याकारानुरागस्यान्यत्रक
ल्पनायुक्ता स्फटिकजपाकुसुमयोरिवनान्यथेति एतेन तयोर्युगपद्वृत्तेः लघुवृत्तेर्वा तदेकत्वाध्यवसायैइतिभरसं
तस्यापिकोशपानप्रत्ययत्वादिति केनचात्तयोरेकत्वाध्यवसायोनतावद्विकल्पेन तस्याविकल्पवार्तानभिज्ञत्वात् ना
प्यनुभवेन तस्यविकल्पागोचरत्वात् नचतदुभयाविशयाविशयं तदेकत्वाध्यवसायेसमर्थमतिप्रसंगात् ततोनप्र
त्यक्षबुद्धौ तथाविधविशेषावभासः नाप्यनुमानबुद्धौ तद्विनाभूतस्वभावकार्यलिंगाभावादनुपलंभोसिद्धस्ववा
नुवृत्ताकारस्यस्थूलाकारस्यचोपलब्धेरुक्तत्वात् यदप्यपिपरमाणूनामेकदेशेन सर्वात्मनावासंबंधोनोपपद्यते इतित
त्रानुगम्यएवपरिहारः स्निग्धरूक्षाणांसजातीयानांच द्व्यधिकगुणानांकथंचित् स्कंधाकारपरिणामात्मकस्यसं
बंधस्याभ्युपगमात् यच्चावयविनिवृत्तिविकल्पादिबाधकमुक्तं तत्राय विनोवृत्तिरवयविनोपपद्यते तदानवर्ततेइत्य
भिधातव्यं नेकदेशादिविकल्पस्तस्य विशेषांतर नांतरीयकत्वात् तथाहि नैकदेशेनवर्तते नापिसर्वात्मनेत्युक्तेप्रकारां
तराद्वृत्तिरित्यभिहितंस्यादन्यथा नवर्ततइत्येववक्तव्यं इतिविशेषप्रतिशेधस्यशेषाभ्यनुज्ञानरूपत्वात्कथंचितास्य

कदोषइतिचेतदपिनसाधुसंगतं नित्यस्य समर्थस्य परापेक्षायोगात् गेः सामर्थ्यकरणेनित्यताहानिः तस्माद्भिन्न
मेवसामर्थ्यं तैर्विधीयतइतिननित्यताहानिरितिचेतर्हि नित्यमकिंचित्करमेवस्यात् सहकारिजनितसामर्थ्यस्यै
वकार्यकारित्वात्तत्संबधात्तस्यापिकारित्वेतत्संबधस्यैकस्वभावित्वेसामर्थ्यनानात्वाभावान्नकार्यभेदः अनेकस्व
भावित्वेक्रमवत्वेचकार्यवत्तस्यापिसांकार्यमितिसर्वभावतेत इतिचक्रकप्रसंगः तस्मान्नक्रमेणकार्यकारित्वं नि
त्यस्य नापियुगपदशेषकार्याणांयुगपदुत्पत्तौ द्वितीयक्षणे कार्याकारणादनर्थक्रियाकारित्वेनावस्तुत्वप्रसंगादितिन
नित्यस्यक्रमयौगपद्याभावः सिद्धएवेतिसौगतः प्रतिपेदिरे नैयायिकयुक्तवादिनः सजातीयेतरव्यावृत्तात्मनांविशे
षामनंशानांग्राहकस्यप्रमाणस्याभावात् प्रत्यक्षस्यास्थिरस्थूलसाधारणाकारवस्तुग्राहकत्वेन निरंशवस्तुग्रहणायो
गात् नहिपरमाणवः परस्परासंबद्धाश्चक्षुरादिबुद्धौप्रतिभांति तथासत्यविवादप्रसंगात्यानुभूयतएवाप्रथमंतथा
क्षणः पश्चात्तुविकल्पवासनाबलादांतरालानुपलंभलक्षणाद्वा यद्यपिविद्यमानोपिस्थूलाद्याकारोविकल्पबुद्धौचका
स्तिसचतदाकारेणानुरज्यमानःस्वव्यापारंतिरस्कृत्यप्रत्यक्षव्यापारपुरस्सरत्वेनप्रवृत्तत्वात् प्रत्यक्षायतइति तदप्य

ता
करणे घटस्यास्थितिरेवस्यादयविनाशसंबंधान्नष्ट इति व्यपदेश इति चेद्भावाभावयोः कः संबंधो नतावद्भेदास्यं न
योर्भेदान्नापि तदुत्पत्तिरभावस्य कार्याधारत्वाघटादभिन्नस्य करणे घटादिरेव कृतः स्यात्तस्य च प्रागेव निःपन्नत्वा
दर्थकरणमित्यन्यानपेक्षत्वं सिद्धमिति विनाशस्वभाव नियतत्वं साधयत्येव सिद्धे वा नित्यानां नत्स्वभावनियतत्वे
नदितरेषामात्मादीनां विमत्यधिकरणभावापन्नानां सत्वादिना साधनेन दृष्टांतावद्भवत्येव क्षणस्थितिस्वभावत्वं
तथाहि यत्सत्तत्सर्वमेकक्षणस्थितिस्वभावं यथा घटः संतश्चामी भावा इति अथवा सत्वमेव विपक्षे बाधकप्रमाणमि
मिति नहि नित्यस्य क्रमेण युगपद्वा संभवति नित्यस्यैकेनैव स्वभावेन पूर्वापरकालभाविकार्यद्वयं कुर्वतः कार्या
भेदकत्वात्तस्यैवस्वभावत्वात् तथाहि कार्यनानात्वे अन्यत्र कार्यभेदात्कारणभेदकल्पना विफलैव स्यात् तादृशमेकमे
व किंचित्कारणं कल्पनीयं येनैकेन स्वभावेनैव चराचरमुत्पद्यत इति अथ स्वभावनानात्वमेव तस्य कार्यभेदादिष्य
त इति चेत्तर्हि ते स्वभावास्तस्य सर्वदा संभविनस्तदा कार्यैर्नो चेत्तदुत्पत्तिकारणं वाच्यं तस्मादेव मित्येकस्वभावानां क्र
दुत्पत्तौ तत्स्वभावानां सदा संभवात्सैव कार्याणां युगपत्प्राप्तिः सहकारिक्रमापेक्षया तत्स्वभावानां क्रमेणाभावान्नो
यसाध्य

तदुक्तं एकत्र दृष्टो भावो हि क्वचिन्नान्यत्र दृश्यते तस्मान्न भिन्नमस्त्येतत्सामान्यं बुद्ध्यभेदत इति तेच विशेषाः परस्परा

संबद्धा एव न तत्संबंधस्य विचार्यमाणस्यायोगात् एकदेशेन संबंधे अणुशब्देन युगपद्योगादणोः षडंशतापत्तेः सर्वात्मना

भिसंबंधे पिंडस्याणुमात्रतापत्तेः अवयव निरोधाज्ञासंबंधत्वमेषामुपपद्यत एव तन्निरोधश्च वृत्तिविकल्पादिबाधना

त् तथा हि अवयवा अवयवि विनिवर्तत इति नाभ्युपगतमवयवी चावयवेषु वर्तमानः किमेकदेशेन वर्तते सर्वात्मना वा ए

कदेशेन वृत्त्यावयवांतरप्रसंगस्तत्राप्येकदेशांतरेणावयविनो वृत्तावनवस्था सर्वात्मना वर्तमानोपि प्रत्यवयवं स्वभावभेदे

न वर्तिता हो स्वरूपेणेति प्रथमपक्षे अवयवि बहुत्वापत्तिः द्वितीयपक्षेन्ववयवानामेकरूपतापत्तिरिति प्रत्येकं प

रिसमाप्त्यापत्तावप्यवयवि बहुमिति तथा यद्दृश्यं सन्नोपलभ्यते तन्नास्त्येव यथा गगनेन्दीवरं नोपलभ्यते चावयवे

ष्ववयवीति तथा पटग्राहे पटबुद्धिभावस्तंतोभावार्थांतरं यथा वृक्षाग्रे ह वनमिति नतश्च निरंशा एवान्योन्यासंस्पर्शि

नो रूपादिपरिमाणवः तेचैकक्षणस्थायिनो न नित्या विनाशं प्रत्यन्यानपेक्षणात् प्रयोगश्च यो यद्भावं प्रत्यन्यानपे

क्षस्तत्स्वभावनियतो यथान्त्या कारणसामग्री स्वकार्ये नाशो हि मुद्गरादिना क्रियमाणस्ततो भिन्नो वा क्रियेत भिन्नस्य

मानप्रधानसंसर्गाद्यस्मिन्नोपितथाप्रतिभासइतितदप्यनुपन्नमप्रतिभासमानस्यापिसंसर्गकल्पनायांतत्वेयत्तायानिश्चेतुम
शक्तेः तदुक्तंसंसर्गादिविभागश्चेद्योगोलकवह्निवत् भेदाभेदव्यवस्थैवमुच्छिन्नासर्ववस्तुष्विति यदपिपरिमाणाख्यंसाधनं
तदप्येकप्रकृतिकेषु घटघटीशरावोदंचनादिष्वनेकप्रकृतिकेषुपटमुकुटशकटादिषुचोपलंभादनैकांतिकमिति नततःप्रकृति
सिद्धिः तदेवंप्रधानगृहणोपायासंभवात् संभवेवाततःकार्योदयायोगाच्च यदुक्तंपरेणाप्रकृतेर्महान् ततोहंकारः तस्माद्गुण
श्चषोडषकस्तस्मादपिषोडशकांसंचभ्यःपंचभूतानीतिसृष्टिक्रमोमूलप्रकृतिरविकृतिर्महदाद्याःप्रकृतिविकृतयःसप्तषोड
शकश्चविकारोनप्रकृतिःपुरुषइतिस्वरूपाख्यानंचवंध्यासुतसौरूप्यवर्णनमिवासद्विषयत्वादुपेक्षामर्हति अमूर्तस्याकाश
स्यमूर्तस्यपृथिव्यादेश्चैककारणकत्वायोगाच्च अन्यथा अचेतनादपिपंचभूतकदंबकाच्चैतन्यसिद्धिश्चार्वाकमतसिद्धिप्रसंगा
त्सांख्यमलगन्धएवनभवेत् सत्कार्यवादप्रतिषेधश्चान्यत्रविस्तरेणोक्तइतिनेहोच्यते संक्षेपरूपत्वादस्येति तथा विशे
षाएवतत्वं तेषामसमानेरविशेषात्मनाविश्लेषात्मकत्वात्सामान्यस्यैकस्यानेकत्रसर्वात्मनावर्तमानस्यसंभवाभावाच्च
तस्यैकव्यक्तिनिष्ठस्यसामस्त्येनोपलब्धेस्तद्व्यक्तिवदन्यथाव्यक्तयोपिभिन्नामाभूवन्निति ततोबुद्ध्यभेदएवसामान्यं

तत्रसांख्यैःप्रधानंसामान्यमुक्तंत्रिगुणमविवेकिविषयः सामान्यमचेतनंप्रसवधर्मिव्यक्तंतथाप्रधानंतद्विपरीतस्त
थाचपुमानितिवचनात् तच्चकेवलंप्रधानंमहदादिकार्यनिःपादनायप्रवर्तमानंकिमप्यपेक्ष्यप्रवर्तते निरपेक्षंवाप्रथम
पक्षेतन्निमित्तंवाच्यं यदपेक्ष्यप्रवर्तते ननुपुरुषार्थएवतत्रकारणंपुरुषार्थेनहेतुनाप्रधानंप्रवर्तते पुरुषार्थश्चद्वेधाशब्दा
द्युपलब्धिर्गुणपुरुषांतरविवेकदर्शनंचेत्यभिधानादितिचेत् सत्यंतथाप्रवर्तमानमपि[illegible]पुरुषंप्रतिकिंचि
दुपकारंसमासादयत्प्रवर्तेतानासादयद्वाप्रथमपक्षेसउपकारस्तस्माद्भिन्नोभिन्नोवायदिभिन्नःतदातस्येतिव्य
पदेशाभावः संबंधाभावात्तदभावश्चसमवायादेरनभ्युपगमात् तादात्म्यंचभेदविरोधीति अथाभिन्नउपकारइति
पक्षआश्रीयतेतदाप्रधानमेवतेनकृतंस्यात् अथोपकारनिरपेक्ष्यमेवप्रधानंप्रवर्तते तर्हिमुक्तात्मानंप्रत्यपिप्रवर्तेता
विशेषादनेननिरपेक्षप्रवृत्तिपक्षोपिप्रयुक्तस्ततएव किंचसिद्धेप्रधानेसर्वमेतदुपपन्नंस्यान्नचतत्सिद्धिःकुतश्चिन्नि
श्चीयतेइतिननुकार्याणामेकान्वयदर्शनादेककारणभवत्वंभेदानांपरिणामदर्शनाच्चेतितदप्यचारुचर्चितंसुखदुःख
मोहरूपतयाघटादेरन्वयाभावादंतस्तत्त्वस्यैवतयोपलंभात् अथातस्तत्त्वस्यनसुखादिपरिणामः किंतुतथापरिणाम

त्वभावकार्ययोरसंभवात् किंचगोशब्दस्यागोपोहाभिधायित्वे गोरित्यत्र गोशब्दस्य किमभिधेयं स्यादज्ञानस्य विधि
निषेधयोरनधिकारात् अगोनिवृत्तिरिति चेदितरेतराश्रयत्वम् अगोव्यवच्छेदो हि अगोनिश्चये भवति स चागोगोनि
वृत्यात्मा गौश्चागोव्यवच्छेदरूप इति अगोरित्यत्रोत्तरपदार्थोप्यनयैव दिशा चिंतनीयः ननु गोरित्यत्रान्य एव विधि
रूपो गोशब्दाभिधेयस्तदापोहशब्दार्थ इति विघटेन तस्माद्योहस्योक्तयुक्त्या विचार्यमाणस्यायोगान्नान्यापोहशब्दार्थ
इति स्थितं सहजयोग्यतावशाच्छब्दादयो वस्तुप्रतिपत्तिहेतव इति स्मृतिरनुपहतेयं प्रत्यभिज्ञानवत्प्रमितिनिरत
न्वितालैंगिकं संगतार्थप्रवचनं यन्निश्चितं देववाचारचितमुचितवाग्मिनध्यमेतेन गीतं ॥ इति परीक्षामुखस्य लघुवृत्तौ
परोक्षप्रपंचस्तृतीयः समुद्देशः ॥३॥ अथ स्वरूपसंख्याविप्रतिपत्तिं निराकृत्य विषयविप्रतिपत्तिनिरासार्थमाह सामा
न्यविशेषात्मा तदर्थो विषयः तस्य प्रमाणस्य ग्राह्योर्थो विषय इति यावत् स एव विशिष्यते सामान्यविशेषात्मा सा
मान्यविशेषौ वक्ष्यमाणलक्षणौ तावात्मानौ यस्येति विग्रहः तदुभयग्रहणं आत्मग्रहणं च केवलस्य सामान्यस्य वि
शेषस्य तदुभयस्य वा स्वतंत्रस्य प्रमाणविषयत्वप्रतिषेधार्थं तत्र सन्मात्रदेहस्य परब्रह्मणो निरस्तत्वात् तदितरद्विचार्यं

लैकनानास्वादि विकल्पानां प्रतीतेः भेदकाजभावस्य वस्तुतापत्ति तल्लक्षणात्वादवस्तुत्वस्य न चापोहलक्षणः संबंधिभेदा
द्भेदः प्रमेयाभिधेयादिशब्दानामप्रवृत्तिप्रसंगात् व्यवच्छेद्यस्यातद्रूपेणाप्यप्रमेयादिरूपत्वे ततोव्यवच्छेदायोगात्
कथं तत्र संबंधिभेदाद्भेदः किंच शाबलेयादिषु को पोहो[redacted]सज्येत किंतु प्रतिव्यक्तिभिन्न एव स्यादन्यसांबलेयादय न
स्तन्न भिदंति तर्ह्यश्वादयोपि भेदका माभूवन् प्रत्यासत्त्यंगाः शाबलेयादयो न भेदकास्तस्याश्वादयो भेदका इत्यनि
साहसं वस्तुनोपि संबंधिभेदाद्भेदो नोपलभ्यते किमुतावस्तुनि तथा ह्येक एव देवदत्तादिः कटककुंडलादिभिरभिसंवध्य व
मानो ननात्वमापत्तिध्रुवानः समुपलभ्यंत इति भवतु वा संबंधिभेदाद्भेद एवं तथापि न वस्तुभूतसामान्यमंतरेणान्यापोहा
श्रयः संबंधी भवति भवितुमर्हति तथाहि यादिशाबलेयादिषु वस्तुभूतसारूप्याभावो श्वादिपरिहारेण तत्रैव विशिष्ट
ता
भिधानप्रत्ययो कथं स्यातां ततः संबंधिभेदाद्भेदमिच्छतापि सामान्यं वास्तवमंगीकर्तव्यमिति किंचापोहशब्दार्थेप
क्षे संकेत एवानुपपन्नस्तद्ग्रहणोपायासंभवात् न प्रत्यक्षं तद्ग्रहणसमर्थं तस्य वस्तुविषयत्वादन्यापोहस्य चावस्तुत्वा
दनुमानमपि न तद्भावमवबोधयति तस्य कार्यस्वभावलिंगसंपाद्यत्वापोहस्य निरुपाख्यत्वे नार्थक्रियाकारित्वेन च

धात् नहि गवादिशब्दश्रवणादेव गवादिव्यावृत्तिः प्रतीयते ततस्सास्नादिमत्यर्थे प्रवृत्तिदर्शनाद् गवादिबुद्धिजन
कं तत्र शब्दांतरं मृग्यं मैथे करमादेव गोशब्दादर्थद्वयस्यापि संभावनान्नार्थः शब्दांतरे गोतिचेन्नैवमेकस्य परविरुद्ध
र्थद्वयप्रतिपादनविरोधात् किंच गोशब्दस्यागोव्यावृत्तिविषयत्वे प्रथमं गौरिति प्रतीयेत नचैवमतो नान्यापो
हः शब्दार्थः किंचापोहाख्यं सामान्यं वाच्यत्वेन प्रतीयमानं पर्युदासरूपं प्रसज्यरूपं वा प्रथमपक्षे गोत्वमेव ना
मांतरेणोक्तं स्याद्भावाभावस्य भावांतरस्य भावेन व्यवस्थितत्वात् कश्चायमश्वादिनिवृत्तिलक्षणो भावोऽभिधीयते न
तावत्स्वलक्षणरूपस्तस्य सकलविकल्पागोचरातिक्रांतत्वान्नापि शाबलेयादिव्यक्तिरूपस्तस्यासामान्यत्वप्र
संगात् तस्मात्सकलगोव्यक्तिष्वनुवृत्तप्रत्ययजनकं तत्रैव प्रत्येकं परिसमाप्त्यावर्तमानं सामान्यमेव गोशब्दवाच्यं त
स्यापोह इति नामकरणे नाममात्रं भिद्येत नार्थ इति अतो नाद्यः पक्षः श्रेयान् नापि द्वितीयो गोशब्दादेः क्वचिद
प्यर्थे प्रवृत्तियोगात् तुच्छाभावाभ्युपगमे परमतप्रवेशप्रसंगाच्च किंच गवाद्यो ये सामान्यशब्दा ये च शाबलेयादयस्तेषां
भवदभिप्रायेण पर्यायतास्याद् अर्थभेदाभावाद् वृक्षपादपादिशब्दवत् नखलु तुच्छाभावस्य भेदो युक्तो वस्तुन्येव संसृष्ट

इति तदप्ययुक्तं पराभिप्रायापरिज्ञानात् नास्माभिर्वक्तुरभावे वेदस्य प्रामाण्याभावः समुद्भाव्यते किंतु तद्व्याख्याता
णां मतीन्द्रियार्थदर्शनाद्गुणाभावे ततो दोषाणामनपोदितत्वान्नप्रामाण्यनिश्चय इति ततो पौरुषेयत्वेपि वेदस्य
प्रामाण्यनिश्चयायोगात् नानेन लक्षणस्याव्यापित्वमसंभवित्वं वेत्यलमतिजल्पितेन ननु शब्दार्थयोः संबंधाभावा
दन्यापोहमात्राभिधायित्वादाप्तप्रणीतादपि शब्दात् कथं वस्तुभूतार्थावगम इत्यत्राह सहजयोग्यतासंकेतवशाद्धि
शब्दादयो वस्तुप्रतिपत्तिहेतव इति सहजा स्वभावभूता योग्यता शब्दार्थयोर्वाच्यवाचकशक्तिस्तस्यां संकेतस्तद्वशाद्धि
स्फुटं शब्दादयः प्रागुक्ता वस्तुप्रतिपत्तिहेतव इति उदाहरणमाह यथा मेर्वादयः संतीति ननु यत एव शब्दास्ते तत्पृष्ठे
ष्ठास्त एवार्थाभावेपि दृश्यंते तत्कथमर्थाभिधायकत्वमिति तदप्ययुक्तमनर्थकेभ्यो शब्देभ्योर्थवतामन्यत्वान्न चान्य
स्य व्यभिचारेन्यस्यासावयुक्तोतिप्रसंगादन्यथा गोपालघटिकान्तर्गतस्य धूमस्य पावकस्य च व्यभिचारे पर्वतादिधूम
स्यापि तत्प्रसंगात् यत्नतः परीक्षितं कार्यं कारणं नातिवर्तते इत्यन्यत्रापि समानं सुपरीक्षितो हि शब्दोर्थं न व्य
भिचरति तथा चान्यापोहस्य शब्दार्थत्वकल्पनं प्रयासमात्रमेव न चान्यापोहः शब्दार्थो व्यवतिष्ठते प्रतीतिविरो

कप्रतिपादितत्वादभावप्रमाणोत्थानायोगात् प्रमाणपंचकाभावे भावप्रमाणप्रवृत्तेः प्रमाणपंचकं यत्र वस्तुरूपेण जायते व
स्तुस्वभाववोधार्थं तत्राभावप्रमाणतेति परैरभिधानात् ततोनवादिनः कर्तुरस्मरणमुपपन्नं नापिप्रतिवादिनः स्मरणा
त् ननु प्रतिवादिनावेदेष्टकाद्यो वहवः कर्तारः स्मर्यंते अतस्तत्स्मरणस्य विवादविशयत्वाप्रामाण्याद्वेदेव सर्व
स्य कर्तुरस्मरणमिति चेन्न कर्तृविशेषविशय एवासौ विवादो न कर्तृसामान्ये ततः सर्वस्य कर्तुरस्मरणमप्यसिद्धं सर्वात्मज्ञा
नविज्ञानरहितो वा कथं सर्वस्य कर्तुरस्मरणमवैति तस्मादपौरुषेयत्वस्य वेदे व्यवस्थापयितुमशक्यत्वान्न तदुक्तशास्त्र
व्यापकत्वमसंभवित्वं वा संभवति पौरुषेयत्वे पुनः प्रमाणानि वहूनि संत्येव सजन्ममरणर्षिगोत्रचरणादिनामश्रुते
रनेकपदसंहतिप्रतिनियमसंदर्शनात् अपौरुषेयत्वेपि वा न प्रामाण्यं वेदस्योपपद्यते तद्धेतूनां गुणानामभावात्
ननु न गुणाकृतमेव प्रामाण्यं किंतु दोषाभावप्रकारेणापि स च दोषाश्रयपुरुषाभावेपि निश्चीयते न गुणसद्भावएवेति
तथा चोक्तं शब्दे दोषोद्भवस्तावद्वक्त्रधीनमिति स्थितं तदभावः क्वचित्तावद्गुणवद्वक्तृकत्वतः तद्गुणैरपकृष्टानां क
शब्दे दोषोद्भवस्तावद्वक्त्रधीनमिति इति स्थितं तदभावः संक्रांत्यसंभवात् यद्वा वक्तुरभावेन नस्युर्दोषानिराश्रयाः

गसाधनाद्दोष इति चेन्न परं प्रति साध्यसाधनयोर्व्याप्यव्यापकभावाभावादिदानीमपि देशान्तरे वेदकारस्याष्टकादेः सौगतादि
भिरभ्युपगमात् यदप्यपरं वेदाध्ययनमित्यादि तदपि विपक्षेपि समानं भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकं तदध्ययनवा
च्यत्वादनु[illegible]नाध्ययनं यथेति यच्चान्यदुक्तमनवच्छिन्नसंप्रदायत्वे सत्यस्मर्यमाणकर्तृकत्वादिति तज्जीर्णकूपारामादि
भिर्व्यभिचारनिवृत्त्यर्थमनवच्छिन्नसंप्रदायत्वविशेषणेपि विशेष्यस्यास्मर्यमाणकर्तृकत्वस्य विचार्यमाणस्यायोगाद
साधनत्वं कर्तुरस्मरणं हि वादिनः प्रतिवादिनः सर्वस्य वा आदिमश्चेदनुपलब्धेरभावाद्वा आद्ये पक्षेपि टकत्रयेपि स्याद
नुपलब्धेरविशेषात्तत्र परैः कर्तुरंगीकरणान्नो चेदत एवात्रापि न तदस्तु अभावादिति चेदस्मात्तदभावसिद्धावितराश्र
यत्वं सिद्धे हि तदभावे नान्निर्बंधनं तदस्मरणमस्माच्च तदभाव इति प्रामाण्यान्यथानुपपत्तेस्तदभावान्नेतरेतराश्रयत्वमिति
चेन्न प्रामाण्येनाप्रामाण्यकारणस्यैव पुरुषविशेषस्य निराकरणात् पुरुषमात्रस्यानिराकृतेः अथातीन्द्रियार्थदर्शिनो
भावादन्यस्य च प्रामाण्यकारणत्वानुपपत्तेः सिद्ध एव सर्वथा पुरुषाभाव इति चेन्न कृतं सर्वज्ञभावो विभावितः प्रामाण्यान्य
थानुपपत्तेरिति चेदितरेतराश्रयत्वं कर्तुरस्मरणादिति चेच्चक्रकप्रसंगः अभावप्रमाणादिति चेन्न तत्साधकस्यानुमानस्या

सत्यार्थ एव वेदोवसीयत इति चेत् न किंचिज्ज्ञानामतींद्रियार्थेषु निःसंशयव्याख्यानायोगात् अंधेनाकृष्यमाणस्यांध
स्य परिहारेणाभिमतमार्गप्राप्त्यनुपपत्तेः किंचानादिव्याख्यानपरंपरागतत्वेपि वेदार्थस्य गृहीतविस्मृतस
र्ग
नाकौशलदुष्टाभिप्रायतया व्याख्यानस्यान्यथैव करणाद्विसंवादायोगाद्भ्रमा एवमेव स्यात् दृश्यंते ह्यधुना
ख्या
ज्योतिःशास्त्रादिषु रहस्यं यथार्थमवयंतोपि दुरभिसंधेरन्यथा व्याचक्षाणाः ॥ केचिज्जानंतोपि वचनाकौशला
थोपदिशंतः केचिच्च विस्मृतिसंबंधाः अयाथातथ्यमभिदधाना इति कथमन्यथा भावनाविधिनियोगवाक्यार्थ
प्रतिपत्तिः वेदस्य मन्वाद्याश्वलायनादीनां श्रुत्यर्थानुसारि स्मृतिनिरूपणायां वा तस्मादनादिप्रवाहपतितत्वेपि
मयार्थत्वमेव स्यादिति स्थितम् ॥ यच्चोक्तमतीतानागताविल्यादि तदपि स्वमतनिर्मूलनहेतुत्वेन विपरीतसाधनात्तदा
स्तामेवेति तथाहि अतीतानागतौ कालौ वेदार्थज्ञविवर्जितौ कालशब्दाभिधेयत्वादधुनातनकालवदिति किंच काल
शब्दाभिधेयत्वमतीतानागतयोः कालयोर्ग्रहणे सति भवति तद्ग्रहणं च नाध्यक्षतस्तयोरतींद्रियत्वादनुमानतद्ग्रहे
पि न साध्येन संबंधस्तयोर्निश्चेतुं पार्यते प्रत्यक्षगृहीतस्यैवासंबंधाभ्युपगमान्न च कालाख्यं द्रव्यं मीमांसकस्यास्ति

उत्प्रदीपदृष्टांताभ्यां कारकव्यंजकपक्षयोर्विशेषसिद्धेरित्यलमितिजल्पितेन यच्चान्यत् प्रवाहनित्यत्वेदस्यापौरुषेयत्वमिति
तत्र किं शब्दमात्रस्यानादिनित्यत्वमुत विशिष्टानामिति आद्यपक्षे य एव शब्दा लौकिकास्त एव वैदिका इत्यल्पमिदमभिधीय
यते वेद एवापौरुषेय इति किंतु सर्वेषामपि शास्त्राणां अपौरुषेयत्वमिति अथ विशिष्टपूर्विका एव शब्दा अनादित्वेनाभिधीयंते
तत्रैषामवगतार्थानामनवगतार्थानां वा अनादिता स्यादादितावदुत्तरः पक्षस्तदा ज्ञानलक्षणमप्रामाण्यमनुषज्यते अथ
आद्यः पक्ष आश्रीयते तद्व्याख्यातारः किंचिज्ज्ञाः भवेयुः सर्वज्ञा वा प्रथमपक्षे दुरधिगमः संबंधनामन्यथाप्यर्थस्य कल्पयि
तुं शक्यत्वात् मिथ्यात्वलक्षणमप्रामाण्यं स्यात् तदुक्तं । अयमर्थो नायमर्थ इति शब्दा वदंति न कल्प्योयमर्थः पुरुषैस्ते च रागादि
विप्लुताः किंच किंचिज्ज्ञता व्याख्यातारो विशेषादग्निहोत्रं जुहुयात् स्वर्गकाम इत्यस्य श्वमांसमित्यपि वा क्वार्थः किं न स्या
त् संशयलक्षणमप्रामाण्यं वा अथ सर्वविद्विदितार्थ एव वेदोऽनादिपरंपरायात इति चेत् हंत धर्मचोदनैव प्रमाणमि
ति हतमेतत् अतींद्रियार्थप्रत्यक्षीकरणसमर्थस्य पुरुषस्य सद्भावे च तद्वचनस्यापि चोदनावदवबोधकत्वेन प्रामाण्या
द्वेदस्य पुरुषाभावसिद्धौ तत्प्रतिबंधकं स्यात् अथ तद्व्याख्यातृणां किंचिज्ज्ञोपि यथार्थज्ञानपरंपरया [illegible] संतानत्वेन

लंभेन न शक्यते निश्चेतुं नच प्रत्यभिज्ञानबलेनैवांतराले सत्ता संभवस्तस्य सादृश्यादपि संभवाविरोधात् नच घटादावेवं प्रसं
गस्तस्योत्पत्तावपरापरमृत्पिंडांतरलक्षणास्या कारणस्यासंभाव्यमानत्वे नांतराले सत्तायाः साधयितुं शक्यत्वादत्र तु कारणानां
म पूर्वेषां व्यापारसंभावनतो नांतराले सत्तासंभव इति यच्चान्यदुक्तं संकेतान्यथानुपपत्तेः शब्दस्य नित्यत्वमितीदमप्यनाम
ज्ञभाषितमेवानित्येपि योजयितुं शक्यत्वात् तथाहि गृहीतसंकेतस्य दंडस्य प्रध्वंसे सत्यगृहीतव्याप्तिसंकेत इदानीमन्य एव दंडः स
मुपलभ्यते इति दंडीति नस्यात् तथा धूमस्यापि गृहीतव्याप्तिकस्य नाशे अन्यधूमदर्शनाद्वह्निविज्ञानभावस्य अथ सादृश्यात्त
थाप्रतीतिर्निर्दोष इति चेदत्रापि सादृश्यवशादर्थप्रत्ययेको दोषो येन नित्यत्वेन्न दुरभिनिवेश आश्रीयते तथा कल्पनायामंतराले स
त्त्वमप्यदृष्टं न कल्पितं स्यादिति यच्चान्यदभिहितं व्यंजकानां प्रतिनियतत्वान्न युगपच्छ्रुतिः तदप्यशिक्षितलक्षितम् समानेंद्रि
द्रियग्राह्येषु समानदेशेषु विषयविशेषेषु नियमायोगात् तथाहि श्रोत्रं समानदेशं समानेन्द्रियग्राह्यसमानधर्मापन्नानामर्था
नां ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्यं न भवतीन्द्रियत्वात् चक्षुर्वत् शब्दा वा प्रतिनियतसंस्कारकसंस्कार्या न भवंति समानदे
शसमानेन्द्रियग्राह्यसमानधर्मापन्नत्वे सति युगपदिंद्रियसंबद्धत्वात् घटादिवत् उत्पत्तिपक्षेप्ययं दोषः समान इति न वाच्यम् मृत्ति

घटः सर्वगतश्चक्षुरादिसंनिधानादनेकत्र देशे प्रतीयत इती ननु घटोऽप्येकस्य मृत्पिंडादेरनेकस्योपलंभादनेकत्वमेमत्व तथा म
दृष्टपरिमाणासंभवाच्चेति तच्च वर्णेष्वपि समानं तत्रापि प्रतिनियततात्वादिकारणकलापतो आदिधर्मभेदस्य च संभवाविरोध
तू तात्वादीनां व्यंजकत्वमत्रैव निषेत्स्यत इत्यास्तां तावदेतत् अथ व्यापित्वेपि सर्वत्र सर्वात्मना शक्तमत्वान्न दोषोयमिति चे
न्न तथा सति सर्वथैकत्व विरोधान्नहि देशभेदेन युगपत्सर्वात्मना प्रतीयमानस्यैकत्वमुपपन्नं प्रमाणविरोधात् तथा च प्रयोगः
प्रत्येकं गकारादिवर्णोनेक एव युगपद्भिन्नदेशतया तथैव सर्वात्मनोपलभ्यमानत्वात् घटादिवत् न सामान्येन व्यभि
चारः तस्यापि सदृशपरिणामात्मकस्यानेकत्वात् नापि पर्वताद्यनेकप्रदेशस्थतया युगपदनेकदेशस्थिततया पुरुषपरिच्छिद्य
मानेन चन्द्रार्कादिना व्यभिचारः तस्यातिदविष्टतयैकदेशस्थितस्यापि भ्रांतवशादनेकदेशस्थत्वेन प्रतीतेः न चाभ्रांतस्य
भ्रान्तेन व्यभिचारकल्पना युक्तेति नापि जलपात्रप्रतिबिंबेन तस्यापि चन्द्रार्कादिसन्निधमपेक्ष्य तथा परिणममानस्यानेक
त्वात् तस्यानेकप्रदेशेषु युगपत्सर्वात्मनोपलभ्यमान विशयस्यैकस्यासंभाव्यमानत्वात् तत्र प्रवर्तमानं प्रत्यभिज्ञानं न प्रमाण
मिति स्थितम् तथा नित्यत्वमपि न प्रत्यभिज्ञानेन निश्चियत इति नित्यत्वं हि एकस्यानेकक्षणव्यापित्वं तच्चांतराले सत्तानुप

नाद सन्निकृष्टेर्थे बुद्धिरित्यभिधानात् नाप्यर्थापत्तेस्तत्सिद्धिरनन्यथाभूतस्यार्थस्याभावहुपमानोपमेययोरप्रत्यक्षत्वाच्च
नाप्युपमानं साधकं केवलमभावप्रमाणमेवावशिष्यते तच्च तदभावसाधकमिति नचपुरुषसद्भाववदस्यापि दुःसाध्य
त्वात्संशयापत्तिस्तदभावसाधकप्रमाणानां सुलभत्वात् अधुना हि तदभावे प्रत्यक्षमेवातीतानागतयोः कालयोः अनुमा
नं तदभावसाधकमिति तथा चातीतानागतौ कालौ वेदकारविवर्जितौ कालशब्दाभिधेयत्वादिदानींतनकालवत् वेदस्या
ध्ययनं सर्वं तदध्ययनपूर्वकं वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथेति तथापौरुषेयो वेदः अनवच्छिन्नसंप्रदायत्वे सति
सत्यसमर्थ्यमाणकर्तृकत्वात् आकाशवत् अर्थापत्तिरपि प्रमाणलक्षणस्यार्थस्यान्यथाभूतस्य दर्शनात्तदभावे निश्री
यते धर्माद्यतींद्रियार्थविशयस्य वेदस्यार्वाग्भागदर्शिनः कर्तुमशक्यत्वात् अतींद्रियार्थदर्शिनश्चाभावात् प्रामाण्य
मपौरुषेयतामेव कल्पयतीति अत्र प्रतिविधीयते यत्तावदुक्तं वर्णानां व्यापित्वे नित्यत्वे च प्रत्यभिज्ञा प्रमाणमिति तदसत्
प्रत्यभिज्ञायास्तत्र प्रमाणत्वायोगात् देशांतरेपि तस्यैव वर्णस्य सत्वे खंडशः प्रतिपत्तिस्यात् नहि सर्वत्र व्याप्तावर्तमान
स्यैकस्मिन् प्रदेशे सामस्त्येन ग्रहणमुपपत्तियुक्तमव्यापकत्वप्रसंगात् घटादेरपि व्यापकत्वप्रसंगः शक्यं हि वक्तुमेव

श्रवणप्रसंगः सर्वदा तदभिव्यक्तेरसंभवश्चाभिव्यंजकवायूनां प्रतिनियतत्वात् नचैतेषामनुपपन्नत्वं प्रमाणप्रतिपन्न
त्वात् तथाहि वक्तृमुखनिकटदेशवर्तिभिः स्पर्शनेनाध्यक्षेणाभ्यंजका वायवो गृह्यंते दूरदेशस्थितेन मुखसमीपस्थित
तूलचलनादनुमीयन्ते श्रोतृश्रोत्रदेशशब्दश्रवणान्यथानुपपत्तेरर्थापत्त्या विनिश्चीयंते किंचोत्पत्तिपक्षे [illegible] नायं दोष
स्तथाहि वाय्वाकाशसंयोगादसमवायिकारणादाकाशाच्च सम[illegible]णादिदिशाद्यविभागेनोत्पद्यमानोयं शब्दो न
सर्वैरनुभूयते अतु नियतदिग्देशस्थैरेव तथाभिव्यज्यमानेपि नाप्यभिव्यक्तिसाकार्यमुभयत्रापि समानत्वादियं तथा
हि अन्यैस्ताल्वादिसंयोगैर्यथान्यो वर्णो निष्क्रियते तथान्यैस्तरसारिभिस्ताल्वादिभिरन्यो ध्वनिर्निरभ्यते इत्युत्प
भिव्यक्त्योः समानत्वे नैकत्रैव पर्यनुपर्यनुयोगावसर इति सर्वं स्वस्थं माभूद्गुणानां तदात्मकस्य वा शब्दस्य कौटस्थ्यनित्यत्वं
तथाप्यनादिपरंपरायातत्वेन वेदस्य नित्यत्वात् प्रकृतलक्षणस्याव्यापकत्वं नच प्रवाहनित्यत्वमप्रमाणकमेवास्ये
तियुक्तं वक्तुमधुना तत्कर्तुरनुपलंभादतीतानागतयोरपि कालयोस्तदनुमापकस्य लिंगस्याभावात् तदभावोपि सर्वदाप्यतीं
द्रियसाध्यसाधनसंबंधस्येन्द्रियग्राह्यत्वायोगात् प्रत्यक्षप्रतिपन्नमेव हि लिंगमनुमानं हि गृहीतसंबंधस्यैकदेशसंदर्श

म्नि प्रति रेत्तनेहेतुना पक्षस्तदाधारसूचनाय साध्यव्याप्तसाधनाद्याधारसूचनीयोक्तरजतो यदुक्तं परेण तद्भावोहि दृष्टांते तदवेदिनः
व्याप्येति विदुषां वाच्यो हेतुरेवहि केवल इति तन्निरस्तं तस्मात्प्रतियथोक्तहेतुप्रयोगो पि पक्षप्रयोगाभावे साधनस्य नियताधा
प्र
रतानवधारणात् अथानुमानस्वरूपं प्रतिपाद्येदानीं क्रमप्राप्तमागमस्वरूपं निरूपयितुमाह आप्तवचनादिनिबंधनमर्थज्ञा
नमागम इति यो यत्रावंचकः स तत्राप्तः आप्तस्य वचनमादिशब्देनांगुल्यादिसंज्ञापरिग्रहः आप्तवचनआदिर्यस्य स तत
थोक्तं तन्निबंधनं यस्यार्थज्ञानस्येति आप्तशब्दोपादानादपौरुषेयत्वव्यवच्छेदः अर्थज्ञानमित्यनेनायोग्यज्ञानस्याभिप्रा
यसूचनस्य च निरासः ननु संभवीदं लक्षणं शब्दस्य नित्यत्वेनापौरुषेयत्वादाप्तप्रणीतत्वायोगान्नित्यत्वं च तदवयवानां व
र्णानां व्यापकत्वान्नित्यत्वाच्च तच्च व्यापकत्वमसिद्धमेकत्र प्रयुक्तस्य गकारादेः प्रत्यभिज्ञया देशांतरेपि ग्रहणात् स एवायं गका
र इति नित्यत्वमपि तयैवावसीयते कालांतरेपि तस्यैव गकारादेर्निश्चयात् इतो वा नित्यत्वं शब्दस्य संकेतान्यथानुपपत्तेरिति
तथा हि गृहीतसंकेतस्य प्रध्वंसस्य गृहीतसंकेतः शब्द इदानीमन्य एवोपलभ्यत इति तत्कथमर्थप्रत्ययः स्यात् न चासौ न भवती
ति स एवायं शब्द इति प्रत्यभिज्ञानस्यात्रापि सुलभत्वाच्च नच वर्णानां शब्दस्य वानित्यसत्वे सर्वदा श्रवणप्रसंगः सर्वदा

यथा प्रकृतमपी

उनस्यहि कारणंमृगस्तस्य विरोधिमृगारिस्तस्यकार्यं तच्छब्दमिति इदं यथा विरुद्धकार्योपलब्धावंतर्भवति यथाप्रकृतमपी

स्यर्थः बालव्युत्पत्त्यर्थं पंचावयवप्रयोग इत्युक्तं व्युत्पन्नं प्रति कथं प्रयोगनियम इति शंकायामाह व्युत्पन्नप्रयोगस्तु तथोपपत्त्या

न्यथानुपपत्त्यैव वा व्युत्पन्नस्य व्युत्पन्नाय वा प्रयोगः क्रियत इति शेषः तथोपपत्त्या तथा साध्ये सत्येवोपपत्तिस्तया अन्यथा

नुपपत्त्यैव वा अन्यथा साध्याभावे नुपपत्तिस्तस्या तामेवानुमानमुद्रामुन्मुद्रयति अग्निमानयं देशस्तथैव धूमवत्त्वोपपत्तेः धू

मत्वान्यथानुपपत्तेर्वेति ननु दृष्टांतादिरपि व्याप्तिप्रतिपत्त्यनुपयोगित्वात् व्युत्पन्नापेक्षया कथं तदप्रयोग इत्याह हे

तुप्रयोगो हि यथा व्याप्तिग्रहणं विधीयते सा तु तावन्मात्रेण व्युत्पन्नैरवधार्यते इति हि शब्दो यस्मादर्थे यस्माद्यथा व्याप्तिर

हणं व्याप्तिग्रहणानतिक्रमेणायं हेतुप्रयोगो विधीयते सा च तावन्मात्रेण व्युत्पन्नैस्तथोपपत्त्यान्यथानुपपत्त्यावधार्यते दृष्टांतादिक

मंतरेणैवेत्यर्थः यथा दृष्टांतादेर्व्याप्तिप्रतिपत्तिं प्रत्यनंगत्वं तथा प्राक्प्रपंचितमिति नेह पुनः प्रतन्यते नापि दृष्टांतादिप्रयोगः

साध्यसिध्यर्थं फलवानित्याह तावता च साध्यसिद्धिः चकार एवकारार्थे निश्चितविपक्षासंभवे हेतुप्रयोगमात्रेण साध्यसिद्धिरि

त्यर्थः तेन पक्षप्रयोगोऽपि सफल इति दर्शयन्नाह तेन पक्षस्तदाधारसूचनायोक्तः यतः तथोपपत्त्यन्यथानुपपत्तिप्रयोगमात्रेण व्या

भवात् विरुद्धकार्याद्यनुपलब्धिर्विधौ संभवतीति विरुद्धकारणकार्यस्वभावानुपलब्धिरिति तत्र विरुद्धकार्यानुपलब्धिमाह यथास्मि
न्प्राणिनि व्याधिविशेषोस्ति निरामयचेष्टानुपलब्धेरिति व्याधिविशेषस्य हि विरुद्धस्तदभावस्तस्य कार्यं निरामयचेष्टा तस्या अनुपलब्धे
रिति विरुद्धकारणानुपलब्धिमाह अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् दुःखविरोधि सुखं तस्य कारणमिष्टसंयोगस्त
दनुपलब्धिरिति विरुद्धस्वभावानुपलब्धिमाह अनेकान्तात्मकं वस्त्वेकान्तस्वरूपानुपलब्धेः अनेका
न्तात्मकविरोधि नित्याद्येकान्तं न पुनस्तद्विषयविज्ञानं तस्य मिथ्याज्ञानरूपतयोपलंभसंभवात् तस्य स्वरूपमात्मा तत्त्वाकारस्तस्या
नुपलब्धिः ननु च व्यापकविरुद्धकार्यादीनां परंपरया विरोधिकार्यादिलिंगानां च बहुलमुपलंभसंभवात्तान्यपि किमिति ना
चार्यैरुदाहृतानीत्याशंकायामाह परंपरया संभवत्साधनमत्रैवान्तर्भावनीयं अत्रैवैतेषु कार्यादिष्वित्यर्थः तस्यैव साध
नस्योपलक्षणार्थमुदाहरणद्वयं प्रदर्शयति अभूदत्र चक्रे शिवकः स्थासात् एतच्च किंसंज्ञिकं कान्न भवतीत्यारेकायामाह
कार्यकार्यमविरुद्धकार्योपलब्धावन्तर्भावनीयमिति संबन्धः शिवकस्य हि कार्यं छत्रं तस्य कार्यं स्थासः इति दृष्टान्तद्वारेण
द्वितीयमुदाहरन्ति नास्त्यत्र गुहायां मृगक्रीडनं मृगारिसंशब्दनात् कारणविरुद्धकार्यं विरुद्धकार्योपलब्धौ यथेति मृगक्री

शल्यमपि विरुद्धपूर्वचरमाह नोदेष्यति मुहूर्तान्ते शकटं रेवत्युदयात् शकटोदयविरुद्धो ह्यश्विन्युदयस्तत्पूर्वचरो रेवत्यु
दय इति विरुद्धोत्तरचरलिंगमाह नोदगाद्भरणिर्मुहूर्तात्पूर्वं पुष्योदयात् भरण्युदयविरुद्धो हि पुनर्वसूदयः तदुत्तरचरः पु
ष्योदय इति विरुद्धसहचरमाह नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागदर्शनादिति परभागाभावस्य विरुद्धः सद्भावस्तत्
सहचरोऽर्वाग्भाव इति अविरुद्धानुपलब्धिभेदमाह अविरुद्धानुपलब्धिः प्रतिषेध्यसम्बन्धा स्वभावव्यापककार्यकारणपू
र्वोत्तरसहचरानुपलंभभेदादुदाहरणमाह नास्त्यत्र भूतले घटोऽनुपलब्धेः अत्र पिशाचपरमाण्वादिभिः व्यभिचारपरिहारा
र्थमुपलब्धिः लक्षणप्राप्तत्वे सतीति विशेषणमुन्नेयं व्यापकानुपलब्धिमाह नास्त्यत्र शिंशपा वृक्षानुपलब्धेः शिंशपा
त्वं हि वृक्षत्वेन व्याप्तं तदभावे तद्व्याप्यशिंशपाया अप्यभावः कार्यानुपलब्धिमाह नभविष्यति मुहूर्तान्ते शकटं कृत्तिको
दयानुपलब्धेः उत्तरचरानुपलब्धिमाह नोदगाद्भरणिर्मुहूर्तात्प्राक् तत एव तत एव कृत्तिकोदयानुपलब्धेरेवेत्यर्थः सहचरा
नुपलब्धिः प्राक्कालेत्याह नास्त्यत्र समतुलायामुन्नामो नामानुपलब्धेः विरुद्धकार्याद्यनुपलब्धिविधौ संभवती सा
चक्षाणस्तदुदाहरणयत्वेति तत्रैव प्रदर्शयितुमाह विरुद्धानुपलब्धिर्विधौ त्रेधा विरुद्धकार्यकारणस्वभावानुपलब्धि
नास्त्यत्राप्रतिबद्धसामर्थ्यो ऽग्निर्धूमानुपलब्धेः ।। अप्रतिबद्धसामर्थ्यं हि कार्यं कृत्यनुपहत ... कत्व ... पते
तदभावश्च कार्यानुपलंभादिति । कारणानुपलब्धिमाह ।। नास्त्यत्र धूमोऽग्नेः पूर्वचरानुपलब्धिमाह ।।

णामीशब्दः कृतकत्वाद्य एवं स एवं दृष्टांतो यथा घटः कृतकश्चायं तस्मात्परिणामीति यस्तु न परिणामी स न कृतको दृष्टो
वंध्यास्तनंधयः कृतकश्चायं तस्मात्परिणामीति स्योत्पत्तौ आश्रयोक्षिप्तपरव्यापारो हि भावः कृतक उच्यते तच्च कृत
कत्वं न कूटस्थानित्यपक्षे नापि क्षणिकपक्षे किंतु परिणामित्वे सत्येवेत्यग्रे वक्ष्यते कार्यहेतुमाह अस्त्यत्र देहिनि बुद्धिर्व्या
हारादेः कारणहेतुमाह अस्त्यत्र छाया छत्रात् अथ पूर्वचरहेतुमाह उदेष्यति शकटं कृत्तिकोदयात् मुहूर्तान्त इति
संबंधः अथोत्तरचरः उदगाद्भरणिः प्राक्तन एव अत्रापि मुहूर्तात् प्रागिति संबंधनीयं तत एव कृत्तिकोदयादित्यर्थः
सहचरलिंगमाह अस्त्यत्र मातुलिंगे रूपं रसात् विरुद्धोपलब्धिमाह विरुद्धतदुपलब्धिः प्रतिषेध्यतयेति प्रतिषेध्ये सा
ध्ये प्रतिषेध्येन विरुद्धानां संबंधिनस्ते व्याप्यादयः तेषामुपलब्धय इत्यर्थः तयेति षोढेति भावः तत्र साध्यविरुद्धव्या
प्योपलब्धिमाह नास्त्यत्र शीतस्पर्श औष्ण्यादिति शीतस्पर्शप्रतिषेध्येन हि विरुद्धोऽग्निस्तद्व्याप्यमौष्ण्यमिति विरुद्ध
कार्योपलंभमाह नास्त्यत्र शीतस्पर्शो धूमात् अत्रापि प्रतिषेध्यस्य साध्यस्य शीतस्पर्शस्य विरुद्धोऽग्निस्तस्य कार्यं धूम
धूम इति विरुद्धकारणोपलब्धिमाह नास्मिन्शरीरिणि सुखमस्ति हृदयशल्यात् सुखविरुद्धो दुःखं तस्य कारणं हृदय

दात्म्यसंभवादनंतरयोरेव पूर्वेतिरक्षणयोर्हेतुफलभावस्य दृष्टत्वात् व्यवहितयोस्तदघटनात् ननु कालव्यवधानेपि कार्य
कारणभावो दृश्यत एव यथा जागृत्प्रबुद्धदशाभाविप्रबोधयोर्मरणारिष्टयोर्वेति तत्परिहारमाह भाव्यती तयोर्मरणजा
गृत्प्रबोधयोरपि नारिष्टोद्बोधं प्रति हेतुत्वं सुगमेमेनन् जैत्रैवोपपत्तिमाह तद्व्यापाराश्रितं हि तद्भावभावितं हिशब्दो यस्मा
दर्थे यस्मात्तस्य कारणस्य भावे कार्यस्य भावित्वं तद्भावभावित्वं तच्च तद्व्यापाराश्रितं तस्मान्न प्रकृतयोः कार्यकारण
भाव इत्यर्थः अयमर्थः अन्वयव्यतिरेकसमधिगम्यो हि सर्वत्र कार्यकारणभावः तौ च कार्यं प्रति कारणव्यापारव्यपेक्षा
वेवोपपद्येते कुलालस्येव कलशं प्रति न चातिव्यवहितेषु तद्व्यापाराश्रितत्वमिति सहचरस्याप्युक्तहेतुघनं तभावं दर्शयति
सहचारिणोरपि परस्परपरिहारेणावस्थानात्सहोत्पादाच्च हेतुत्वं तरत्वमिति शेषः अयमभिप्रायः परस्परपरिहारिणोः पर
भातादात्म्यसंभवात्स्वभावाहेतावनंतभावि सहोत्पादाच्च न कार्यकारणेवेति न च समानसमवर्तिनोः कार्यकारणभा
वः सव्येतरगोविषाणवत् कार्यकारणयोः प्रतिनियमाभावप्रसंगाच्च तस्माद्धेतुत्वं तरत्वमेवेति इदानीं व्याप्यहेतुं
क्रमप्राप्तमुदाहरन् सकान्वयव्यतिरेक [illegible] शयवशात् प्रतिपादितप्रतिज्ञाद्यवयवपंचकं दर्शयति परि

तयाविद्यमानस्यापि निश्चेतुमशक्यत्वादितितदसमीक्षिताभिधानमितिदर्शयितुमाह रसादेकसामग्र्यनुमानेनरूपानु
मानमिवद्भिरिष्टमेवकिंचित्कारणंहेतुर्यत्रसामर्थ्याप्रतिबन्धकारणांतरावैकल्येइति आस्वाद्यमानाद्धिरसात्तज्जनिका
सामग्र्यनुमीयते ततोनुमानंभवति प्राक्तनोहिरूपलक्षणः सजातीयंरूपलक्षणांतरलक्षणंकार्यंकुर्वन्नेवविजातीयंरसलक्षणं
कार्यंकरोतिरूपानुमानमिच्छद्भिरिष्टमेवकिंचित्कारणंहेतु प्राक्तनस्यरूपलक्षणस्यसजातिरूपलक्षणांतराव्यभिचारात्
रससमानकालरूपप्रतिपत्तेरयोगात् नह्यनुकूलमात्रमंत्यक्षणप्राप्तंवकारणंलिंगमीष्यते येनमणिमंत्रादिनासाम
प्रतिबन्धात् कारणांतरवैकल्येनवाकार्य्यव्यभिचारः स्यात् द्वितीयक्षणेकार्यप्रत्यक्षीकरणेनानुमानार्थक्यंवाकार्याविना
भावितयानिश्चितस्यविशिष्टकारणस्यछत्रादेः लिंगत्वेनांगीकरणात् यत्रसामर्थ्याप्रतिबन्धकारणांतरावैकल्यंचनिश्च
तस्यैवलिंगत्वंनान्यस्येतिनोक्तदोषप्रसंगः इदानींपूर्वोत्तरचरयोः स्वभावकार्यकारणाभ्यनंतरभावाद्दूदातरत्वमेवेतिद
यति नचपूर्वोत्तरचारिणोस्तादात्म्यंतदुत्पत्तिर्वाकालव्यवधानेतदनुपलब्धेरितितदात्म्यसंबंधेसाध्यसाधनयोः स्वभावहेतो
र्वेः तदुत्पत्तिसंबंधेचकार्यकारणंवांतर्भावोविभाव्यते नचतदुभयसंभवः कालव्यवधानेतदनुपलब्ध्येसहभाविनोरेवता

संबधः अस्मिन्पक्षे कार्यकारणयोरुपचारइति शेषः वचनस्यानुमानत्वेच प्रयोजनं अनुमानावयवाः प्रतिज्ञाद्यइति शास्त्रव्यव
हारएव ज्ञानात्मन्यनंशेन तद्व्यवहारस्याशक्यकल्पत्वात् तदेवं साधनात्साध्यविज्ञानमनुमानमित्यनुमानसामान्यलक्षणं
तदनुमानं द्वेधेत्यादिना तत्प्रकारं च सप्रपंचमभिधाय साधनमुक्तलक्षणमपि संक्षेपेणाभिधानं द्विविधमित्य
पदर्शयति संहेतुर्द्वेधोपलब्ध्यनुपलब्धिभेदादिति सुगमेतत् तत्रोपलब्धिर्विधिकेवानुपलब्धिः प्रतिषेधसाधिकेवेति प
रस्यनियमं विघटयन्नुपलब्धेरनुपलब्धेश्चाविशेषेण विधिप्रतिषेधनत्वमाह उपलब्धिविधिप्रतिषेधयोरनुपलब्धिश्चेतिगता
र्थमेतत् इदानीमुपलब्धेरपि संक्षेपेण विरुद्धाविरुद्धभेदात् द्वैविध्यमुपदर्शयन् विरुद्धोपलब्धेर्विधौ साध्ये विस्तरतोभेदमा
ह अविरुद्धोपलब्धिर्विधौ षोढा व्याप्यकार्यकारणपूर्वोत्तरसहचरभेदादिति पूर्वंचोत्तरं च सह चेति द्वंद्वः पूर्वोत्तरसहइत्य
तिथ्यश्चरं इत्यनुकारणनिर्देशः द्वंद्वात्परूयमाणश्चरशब्दः प्रत्येकमभिसंबध्यते नायमर्थः पूर्वचरोत्तरचरसहचराइति पश्च
व्याप्यादिभिः सह द्वंद्वः अत्राह सौगतः विधिसाधनं द्विविधमेवस्वभावकार्यभेदात् कारणस्यतु कार्याविनाभावाभावा
दलिंगत्वं नावश्यं कारणानि कार्यवंती वचनात् अप्रतिबद्धसामर्थ्यस्य कार्यं प्रतिगमकत्वमित्यपिनोत्तरं सामर्थ्यस्यातीन्द्रि

नशक्यते इतितत्स्वरूपमपिशास्त्रेऽभिधातव्यमेवेति तदेवंमतभेदेनद्वित्रिचतुःपंचावयवरूपमनुमानंद्विप्रकारमेवेतिदर्श
यन्नाह तदनुमानंद्वेधा तद्वैविध्यमेवाह स्वार्थपरार्थभेदादिति स्वपरविप्रतिपत्तिनिरासफलत्वाद्विविधमेवेतिभावः स्वा
र्थानुमानभेदंदर्शयन्नाह स्वार्थमुक्तलक्षणं साधनात्साध्यविज्ञानमनुमानमितिप्रागुक्तंलक्षणंयस्यतत्तथोक्तमित्य
र्थः द्वितीयमनुमानभेदंदर्शयन्नाह परार्थंतुतदर्थपरामर्शिवचनाज्जातमिति तस्यस्वार्थानुमानस्यार्थः साध्यसाध
नलक्षणः तंपरामृशतीत्येवंशीलंतदर्थपरामर्शि तच्चतद्वचनंचतस्माज्जातमुत्पन्नंविज्ञानंपरार्थानुमानमिति ननु
वचनात्मकंपरार्थानुमानंप्रसिद्धं तत्कथंतदर्थप्रतिपादकवचनजनितज्ञानस्यपरार्थानुमानत्वमभिदधतानसंगृहीतमितिन
वाच्यमचेतनस्यसाक्षात्प्रमितिहेतुत्वाभावेननिरुपचरितप्रमाणाभावात् मुख्यानुमानहेतुत्वेन तस्योपचरितानुमान
व्यपदेशोनबाध्यतएवदेवोपचरितंपरार्थानुमानत्वंतद्वचनस्याचार्यः आह तद्वचनमपितद्धेतुत्वादिति उपचारोहि
मुख्याभावेसतिप्रयोजनेनिमित्तेचप्रवर्तते तत्रवचनस्यपरार्थानुमानत्वेनिमित्तंतद्धेतुत्वं तस्यप्रतिपाद्यानुमानस्यहे
तुस्तद्धेतुस्तस्यभावस्तत्त्वंतस्मान्निमित्तात्तद्वचनमपिपरार्थानुमानंहेतुर्यस्यतत्तद्धेतुस्तस्यभावस्तत्त्वंततस्तद्वचनमितितथेति

भेदेन प्रमाणं द्वैधं प्रथमभेदं व्याख्यायेतरं व्याचष्टे परोक्षमितरदिति उक्तप्रतिपक्षमितरशब्दो ब्रूते: ततः प्रत्यक्षादितरदि
ति लभ्यते तत्र परोक्षमिति तस्य च सामग्री स्वरूपे निरूपयन्नाह प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभे
दमिति प्रत्यक्षादिनिमित्तमित्यादिशब्देन परोक्षमपि गृह्यते तच्च यथावसरं निरूपयिष्यते प्रत्यक्षादिनिमित्तं यस्येति
विग्रहः तत्र स्मृतिं प्रक्रमप्राप्तां दर्शयन्नाह संस्कारोद्बोधनिबंधना तदित्याकारा स्मृतिरिति संस्कारस्योद्बोधः प्राक[illegible]
स निबंधनं यस्याः सा तथोक्ता तदित्याकारा तदित्युल्लेखिनी एवंभूता स्मृतिर्भवतीति शेषः उदाहरणमाह स देवदत्तो यथे
ति प्रत्यभिज्ञानं प्राप्तकालमाह दर्शनस्मरणकारणकं संकलनं प्रत्यभिज्ञानं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्या
दि अत्र दर्शनस्मरणकारणकत्वात् सादृश्यादिविषयस्यापि प्रत्यभिज्ञानत्वमुक्तं तेषां तु सादृश्यविषयमुपमानाख्यं प्र
माणांतरं तेषां वैलक्षण्यादिविषयं प्रमाणांतरमनुषज्येत तथा चोक्तं उपमानप्रसिद्धार्थसाधर्म्यात्साध्यसाधनं तद्वैधर्म्यात्
प्रमाणं किं स्यात्संज्ञिप्रतिपादनं इदमल्पं महद्दूरमासन्नं प्रांशु नेति वा व्यपेक्षातः समक्षेऽर्थे विकल्पः साधनांतरमिति
एषां क्रमेणोदाहरणं दर्शयन्नाह यथा स एवायं देवदत्तः गोसदृशो गवयः गोविलक्षणो महिषः इदमस्माद्दूरं वृक्षोऽयमित्या

नित्समर्थकारणे कार्यस्यावश्यंभावात् अन्यथा क्रमेणापि सा ततो न स्यात् अथ स्वभावादसौ जगन्निर्मिनोति यथाग्निर्द
हति वायुर्वातीमतं तदपि बालभाषितमेव पूर्वोक्तदोषाः निवृत्तेः तथाहि क्रमवर्ति विवर्त्तजातमपि युगपदुत्पद्यतापेक्षणी
यस्य सहकारिणोपि तत्साध्यत्वेन यौगपद्यसंभवात् उदाहरण वैषम्यं च वह्न्यादेः कदाचित्कस्वहेतुजनितस्य नियतश
क्त्यात्मकत्वोपपत्तेरन्यत्र नित्यव्यापिसमर्थैकस्वभावकारणजन्यत्वे तद्देशकालप्रतिनियमस्य कार्येऽनुपपादात् तदेवं आप्त
णो सिद्धो वेदानां तत्सुप्तप्रबुद्धावस्यात्वप्रतिपादनं परमपुरुषस्य महाभूतनिःश्वासिताभिधानं च गगनारविंदमकरंदव्या
वर्णनवदनवधेयार्थविशयत्वादुपेक्षामर्हति यच्चागमः प्रमाणं सर्वे वै खल्विदं ब्रह्मेत्यादि ऊर्णनाभइत्यादि च तत्सर्वमु
क्तविधिना ऽहंती विरोधीति नावकाशं लभते न चापौरुषेय आगमो लोकेऽप्रपंचद्रश्यते तस्मात्पुरुषोत्तमोपि विचार
णं प्राचति प्रत्यक्षेतरभेदभिन्नममलं मानं द्विधोदितं देवैर्दीप्तगुणैर्विचार्य विधिसंख्यातनेः संग्रहात् मानानामि
ति तद्धि गण्यमिहितं श्रीरत्ननंद्याख्यैस्तद्व्याख्यानमतो विशुद्धधिषणैर्बोद्धव्यमाहतं सुखसंव्यवहाराभ्यां प्रत्यक्षमुपदर्शि
तं देवाकमुपजीवद्भिः सुरभिर्ज्ञापितम् ॥ इति परीक्षामुखस्य लघुवृत्तौ द्वितीयः समुद्देशः ॥ अथेदानीमुद्दिष्टप्रत्यक्षेतर

पंचवर्णे भवेद्धृते
दीति आदिशब्देन पयोंबुजदीहंसः स्यात् षट्पादे भ्रमरः स्मृतः सप्तपर्णे लुनत्वं ज्ञेो विज्ञेयो विशामच्छदः पंचवर्णे भवेद्धृते
मेचकाख्यं पृथुस्तनी युवतीभेक शृंगोपि गंडकः परिकीर्तितः शरभो प्यष्टभिः पादे हिंसः वाहसदान्वितः इत्येवमादिश
च्छ्रवणात्तया विधानेन मरालादीनवलोक्य तथा सत्यापयति यदा तदा तत्संकलनमपि प्रत्यभिज्ञानमुक्तं दर्शनस्मरण
कारणत्वाविशेषात् परेषां तु तत्प्रमाणांतरमेवोपपद्यते उपमानादौ तस्यांतर्भावाभावात् अथावसरप्राप्तं इत्याह उ
पलंभानुपलंभनिमित्तं व्याप्तिज्ञानमूहः इदमस्मिन् सत्येव भवत्यसति न भवत्येवेति च उपलंभः प्रमाणमात्रमत्र गृ
ह्यते यदि प्रत्यक्षमेवोपलंभशब्देनोच्यते तदा साधनेष्वनुमेयेषु व्याप्तिज्ञानं न स्यात् अथ व्याप्तिः सर्वोपसंहारेण प्र
तीयते सा कथमतीन्द्रियस्य साधनस्यातीन्द्रियेण साध्येन भवेदिति नैवं प्रत्यक्षविषये इवानुमानविषयेष्वपि व्याप्ते
र्विरोधात् तल्लक्षणस्याप्रत्यक्षत्वाभ्युपगमात् उदाहरणमाह यथाग्नावेव धूमस्तदभावे न भवत्येवेति च न इदानीम
नुमानं क्रमायातमिति तल्लक्षणमाह साधनात्साध्यविज्ञानमनुमानमिति साधनस्य लक्षणमाह साध्याविनाभावि
त्वेन निश्चितो हेतुरिति ननु त्रैरूप्यमेव हेतोर्लक्षणं तस्मिन्सत्येव हेतोरसिद्धादिदोषपरिहारोपपत्तेः तथा हि पक्ष

धर्मत्वमसिद्धत्वव्यवच्छेदार्थमभिधीयते सपक्षेसत्वंतु विरुद्धत्वापनोदार्थं विपक्षेचासत्वमेवानैकान्तिकव्युदासार्थ
मिति तदुक्तं हेतोस्त्रिष्वपि रूपेषु निर्णयस्तेन वर्णितः असिद्धविपरीतार्थव्यभिचारविपक्षतः इति यदप्युक्तं अविनाभाव
नियमनिश्चयादेव दोषत्रयपरिहारोपपत्तेः अविनाभावो ह्यन्यथानुपपन्नत्वं तच्चासिद्धस्य नसंभवत्येव अन्यथानु
पपन्नत्वमसिद्धस्य नसिध्यतीत्यभिधानात् नापि विरुद्धस्य तल्लक्षणस्योपपत्ति र्विपरीतनिश्चिताविनाभाविनो
यथोक्तसाध्याविनाभावनियमलक्षणस्यानुपपत्तेः विरोधात् व्यभिचारिण्यनप्रकृतलक्षणावकाश इत एव ततोन्य
थानुपपत्तिरेव श्रेयसि न त्रिरूपता तस्यां सत्यामपि यथोक्तलक्षणाभावे हेतोर्गमकत्वानुदर्शनात् तथाहि श्यामस्तत्पु
त्रत्वादितरतत्पुत्रवदित्यत्र त्रैरूप्यसंभवेपि न गमकत्वमुपलक्ष्यते अथ विपक्षाद्व्यावृत्तिर्नियमवती तत्र न गमकत्वमिति
तदपि मुग्धविलसितमेव तस्या एवाविनाभावरूपत्वात् इतररूपसद्भावेपि तदभावे हेतोः स्वसाध्यसिद्धं प्रतिगमकत्वा
निष्टेः [illegible] प्रधानं लक्षणमस्तु मुपलक्षणीयमिति तत्सद्भावे चेतररूपद्वयनिरपेक्षतया गमकत्वोपपत्तेश्च यथासंस
द्वैतवादिनोपि प्रमाणं निष्ठा निष्ठसाधनदूषणान्यथानुपपत्तेर्न चात्र पक्षधर्मत्वं सपक्षान्वयो वास्ति केवलमविनाभावमा

न्निरागमकत्वप्रतीतेः यदप्यपरस्तुक्तं परैः पक्षधर्मताभावेपि काकस्य कार्ष्ण्याद्धवलः प्रासादइत्यस्यापि गमकत्वापत्तिरिति त
दप्यनेन निरस्तमन्यथानुपपत्तिबलेनैवापक्षधर्मस्यापि साधुत्वाभ्युपगमान्न चेह सास्ति ततो ऽविनाभावहेतोः प्रधानं
लक्षणमभ्युपगंतव्यं तस्मिन्सत्यसति त्रिलक्षणत्वेपि हेतोर्गमकत्वदर्शनादिति नैत्ररूप्यं हेतुलक्षणमव्यापकत्वात् स
र्व[illegible]क्षणिकत्वे साध्ये सत्वादेः साधनस्य सपक्षे सतोपि स्वयं सौगतैर्गमकत्वाभ्युपगमात् एतेन पंचलक्षणत्वमपि यो
गपरिकल्पितम् नहेतो रूपयतिमियत्तस्याभिहितं वेदितव्यं पक्षधर्मत्वे सत्यन्वयव्यतिरेकावबाधितविशयत्वमसत्प्रतिपक्ष
त्वं पंच चैतिलक्षणानि तेषामप्यविनाभावप्रपंचत्वेनं बाधितविशयस्याविनाभावयोगात् न प्रतिपक्षस्यैवेति साध्या
भात्विशयत्वे नासम्यग्हेतुत्वाच्च यथोक्तपक्षविशयत्वाभावात् दोषेणैवदुष्टः त्वात् अतः स्थितं साध्याविनाभावित्वे
न निश्चितो हेतुरिति इदानीमविनाभावभेदं दर्शयन्नाह सहचारिणोः व्याप्यव्यापकयोश्च सहभाव इति सहचारिणो
रूपरसयोर्व्याप्यव्यापकयोश्च वृक्षत्वशिंशपात्वयोरितिसप्तम्या विशयो निर्दिष्टः क्रमभावनियमस्य विशयं दर्शयन्ना
ह पूर्वोत्तरचारिणोः कार्यकारणयोश्च क्रमभावः पूर्वोत्तरचारिणोः कृत्तिकोदयशकटोदययोः कार्यकारणयोश्च धूमधूमध्व

तोधे॥

नयोः क्रमभावः नन्वेवंभूतस्याविनाभावस्य न प्रत्यक्षेण ग्रहणं तस्य सन्निहितविषयत्वात् नाप्यनुमानेन शक्यता परानु
मानकं नयामि तेरेतुराश्रयत्वानवस्थावतारादागमादेरपि भिन्नविषयत्वेन सुप्रसिद्धत्वान्न ततोपि तत्प्रतिपत्तिरित्याश
कायामाह इष्टमबाधितमसिद्धं साध्यमिति अत्रापरे दूषणमाचक्षते आसनशयनभोजनपाननिधुवनादेरपीष्ट
त्वात्तदपि साध्यमनुषज्यत इति तेप्यतिबालिशाः अप्रस्तुतप्रलापित्वात् अत्र हि साधनविषयत्वेनेप्सितमिष्ट
मुच्यते इदानीं स्वाभिहितसाध्यलक्षणस्य विशेषणानि सफलयन्नसिद्धविशेषणसमर्थयितुमाह संदिग्धवि
पर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यसिद्धपदं तत्र संदिग्धं स्थाणुर्वा पुरुषो वेत्यनवधारणेनोभयकोटिप
रामर्षि संशयाकलितं वस्तु उच्यते विपर्यस्तं तु विपरीतावभासविपर्ययज्ञानविषयभूतं रजतादि अव्युत्पन्नं तु नामजा
ते संख्यादिविशेषापरिज्ञानेणानीतविषयानवध्यवसायग्राह्यमेषां साध्यत्वप्रतिपादनार्थमसिद्धपदोपादान
मित्यर्थः अधुनेष्टाबाधितविशेषणद्वयस्य साफल्यं दर्शयन्नाह अनिष्टाध्यक्षादिबाधितयोः साध्यत्वं माभूदिति
बाधितवचनं अनिष्टो मीमांसकस्यानित्यः शब्दः प्रत्यक्षादिबाधितयोः साध्यत्वं श्राश्रावणत्वादिः आदि

शब्देनानुमानागमलोकस्ववचनबाधितानां ग्रहणं चाकिंचित्करस्य हेत्वाभासस्य निरूपणावसरे स्वयमेव ग्रन्थकारः प्रपं
चयिष्यतीत्युपरम्यते तत्रासिद्धपदं प्रतिपाद्यापेक्षमेवेष्टपदं तु वाद्यपेक्षयेति विशेषमुपदर्शयितुमाह नचासिद्धवदि
ष्टं प्रतिवादिनमिति अयमर्थो नहि सर्वं सर्वापेक्षया विशेषणमपि तु किंचित्कमप्युद्दिश्य भवतीति असिद्धवदिति व्यतिरे
कमुखेनोदाहरणं यथा असिद्धं प्रतिवाद्यपेक्षया न तथेष्टमित्यर्थः कुत एतदित्याह प्रत्यायनाय ह्रीच्छा वक्तुरेव इच्छया
खलु विषयीकृतमिष्टमुच्यते प्रत्यायनाय ह्रीच्छा वक्तुरेवेति तच्च साध्यं धर्मः किंवा तद्विशिष्टो धर्मीति पृष्टे तद्द्वैदं दर्शयन्ना
ह साध्यं धर्मः क्वचित्तद्विशिष्टो वा धर्मी सोपस्काराणि वाक्यानि भवंति ततो मर्थो लभ्यते व्याप्तिकालापेक्षया तु साध्यं ध
र्मः क्वचित्प्रयोगकालापेक्षया तु तद्विशिष्टो धर्मी साध्यः अस्यैव धर्मिणो नामान्तरमाह पक्ष इति यावत् ननु धर्मधर्मिस
मुदायः पक्ष इति पक्षस्वरूपस्य पुरातनैर्निरूपितत्वाद्धर्मिणस्तद्वचने कथं न राद्धान्तविरोध इति नैवं साध्यधर्माधारतया
विशेषः स्तस्य धर्मिणः पक्षत्ववचनेपि दोषानवकाशात् रचनावैचित्र्यमात्रेण तात्पर्यस्यानिराकृतत्वात्सिद्धान्ताऽवि
रोधात् अत्राह सौगतः भवतु नाम धर्मी पक्षव्यपदेशभाक् तथापि सविकल्पबुद्धौ परिवर्तमान एव न वास्तवः सर्व एवा

नुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन [न] बहिः सदसत्त्वमपेक्षत इत्यभिधानादिति तन्निरासार्थमाह प्रसिद्धो
धर्मीति अयमर्थः नेयं विकल्पबुद्धिर्बहिरन्तर्वा नासादितालंबनभावा धर्मिणं व्यवस्थापयति तद्वास्तवत्वे न तदाधार
साध्यसाधनयोरपि वास्तवत्वानुपपत्ते तद्धेतुः पारंपर्येणापि वस्तुव्यवस्थानिबंधनत्वायोगात् ततो विकल्पेनान्येन वा
व्यवस्थापितः पर्वतादिर्विषयभावं भजन्नेव धर्मितां प्रतिपद्यत इति स्थितं प्रसिद्धो धर्मीति नन्वसिद्धिश्च क्वचिद्विकल्प
तः क्वचित्प्रमाणतः क्वचिच्चोभयत इति नैकान्तेन विकल्पादिरूढस्य प्रमाणाप्रसिद्धस्य वा धर्मित्वं ननु धर्मिणो विक
ल्पात् प्रतिपत्तौ किं नवमित्याशंक्याह विकल्पसिद्धे तस्मिन्सत्तेतरे साध्ये तस्मिन् धर्मिणि विकल्पसिद्धे सत्ता
वा तदपेक्षयेतरा सत्ता च ते द्वे अपि साध्ये सुनिर्णीतासंभवद्बाधकप्रमाणबलेन योग्यानुपलब्धिबलेन चेति शेषः अत्रो
दाहरणमाह अस्ति सर्वज्ञो नास्ति खरविषाणमिति सुगमं ननु धर्मिण्यसिद्धसत्ताके भावो भावोभयधर्मिणामसिद्धविरुद्ध
नैकान्तिकत्वादनुमानविषयत्वायोगात् कथं तत्र तयोः साध्यत्वं तदुक्तं असिद्धो भावधर्मश्चेद्व्यभिचार्युभयाश्रितः
विरुद्धो धर्मोऽभावस्य सा सत्ता साध्यते कथमिति यदुक्तं मानसप्रत्यक्षे भावरूपस्यैव धर्मिणः प्रतिपन्नत्वात् कथम्

नचतात्त्विकोत्सत्त्वस्यापि प्रतिपन्नत्वात् अर्थमनुमानं तदभ्युपेतमपि वैयात्याद्यदा परेण प्रतिपद्यते तदानुमानस्य सा
फल्यात् नचमानसज्ञानाद्गगनकुसुमादेरपि सद्भावसंभावनतोतिप्रसंगः तज्ज्ञानस्य बाधकप्रत्ययव्यपाकृतसत्ताकव
स्तुविषयतया मानसप्रत्यक्षाभासत्वात् कथं तर्हि तुरगशृंगादेः धर्मित्वमिति न चोद्यं धर्मिप्रयोगकाले बाधकप्रत्ययानुदया
त् सत्वसंभावनोत्पत्तेः नच सर्वज्ञादौ साधकप्रमाणासत्वेन सत्वं प्रति संशीतिः सुनिश्चितासंभवद्बाधकप्रमाणत्वेन सु
खादाविव सत्वनिश्चयात् तत्र संशयायोगात् इदानीं प्रमाणोभयसिद्धे धर्मिणि किं साध्यमित्याशंक्याह प्रमाणो
भयसिद्धे तु साध्यधर्मविशिष्टता साध्येइति शब्दः प्राग्द्विवचनांतोप्यर्थवशादेकवचनतया संबध्यते प्रमाणं चोभयं च
विकल्पद्वयं ताभ्यां सिद्धे धर्मिणि साध्यधर्मविशिष्टता साध्या अयमर्थः प्रमाणप्रतिपन्नमपि वस्तु विशिष्टधर्माधारतया
विवादपदमारोहतीति साध्यतां नातिवर्तत इति एवमुभयसिद्धेपि योज्यं प्रमाणोभयसिद्धं धर्मिद्वयं क्रमेण दर्शयन्नाह अ
ग्निमानयं देशः परिणामी शब्द इति यथेति देशो हि प्रत्यक्षेण प्रसिद्धः शब्दस्तूभयसिद्धः न हि प्रत्यक्षेणार्वाग्दर्शिभिरनिय
तदिग्देशकालावच्छिन्नाः सर्वे शब्दाः निश्चेतुं पार्यंते सर्वदर्शिनस्तु तन्निश्चयेपि तं प्रत्यनुमानानर्थक्यात् प्रयोगकालापेक्ष
या धर्मविशिष्टधर्मिणः साध्यत्वमभिधाय व्याप्तिकालापेक्षया साध्यनियमं दर्शयन्नाह व्याप्तौ तु साध्यं धर्म एवेति सुगमं

धर्मिणोपि साध्यत्वे को दोष इत्यत्राह अन्यथा तदघटनादिति उक्तविपर्यये ऽन्यथाशब्दः धर्मिणः साध्यत्वे तदघटनात् व्या
घटनादिति हेतुः नहि धूमदर्शनात् सर्वत्र पर्वतो ऽग्निमानिति व्याप्तिः शक्या कर्तुं प्रमाणविरोधात् नन्वनुमाने पक्षप्रयोग
संभवात् प्रसिद्धो धर्मीत्यादिवचनमयुक्तं तस्य सामर्थ्यलब्धत्वात् तथापि तद्वचने पुनरुक्तत्वप्रसंगात् अर्थादापन्नस्या
पि पुनर्वचनं पुनरुक्तमित्यभिधानादिति सौगतः तत्राह साध्यधर्माधारसंदेहापनोदाय गम्यमानस्यापि पक्षस्य वचनं सा
धर्मस्तस्याधारस्तत्र संदेहो महानसादिः पर्वतादिर्वेति तस्यापनोदो व्यवच्छेदः तदर्थं गम्यमानस्यापि साध्यसाध
व्यस्त व्यापकभावप्रदर्शनान्यथानुपपत्तेस्तदाधारस्य गम्यमानस्यापि पक्षस्य वचनं प्रयोगः अत्रोदाहरणमाह सा
णि साधनधर्मावबोधनाय पक्षधर्मोपसंहारवत् ॥ साध्येन विशिष्टो धर्मी पर्वतादिस्तत्र साधनधर्मावबोधनाय पक्षध
र्मोपसंहारवत् पक्षधर्मस्य हेतोरुपसंहार उपनयः तद्वत् इति अयमर्थः साध्यव्याप्तसाधनप्रदर्शनेन तदाधारावगतावपि नि
यतधर्मिसंबंधिताप्रदर्शनार्थं यथोपनयस्तथा साध्यस्य विशिष्टधर्मिसंबंधितावबोधनाय पक्षवचनमपीति किंच हेतुप्रयोगे
ऽपि समर्थनावश्यं वक्तव्यमसमर्थितस्याहेतुत्वायोगात् तथा च समर्थनोपन्यासादेव हेतोः सामर्थ्यसिद्धत्वात् हेतुप्रयोगो ऽनर्थ
स्यात् हेतुप्रयोगाभावे कस्य समर्थनमिति चेत् पक्षप्रयोगाभावे क्व हेतुर्वर्ततामिति समानमेतत् तस्मात्कार्यस्वभावानुपलंभ

भेदेन पक्षधर्मत्वादितिभेदेन च त्रिधा हेतुमुक्त्वा समर्थयमानेन पक्षप्रयोगोऽप्यभ्युपगन्तव्य एवेति अमुमेवार्थमाह त्रिधा

हेतुमुक्त्वा समर्थयमानो न पक्षयतीति को वा वादी प्रतिवादी चेत्यर्थः किलार्थे वा शब्दः युक्त्या पक्षप्रयोगस्यावश्यंभावे

कः किल न पक्षयति पक्षं न करोत्यपि तु करोत्येव किं कुर्वन् समर्थयमानः किं कृत्वा हेतुमुक्त्वा न पुनरमुक्त्वेत्यर्थः समर्थ

नं हि हेतोरसिद्धत्वादिदोषपरिहारेण स्वसाध्यसाधनसामर्थ्यप्ररूपणावचनं तच्च हेतुप्रयोगोत्तरकालं परेणांगीकृत

मित्युक्तेति वचनं ननु भवतु पक्षः प्रयोगः तथापि पक्षहेतुदृष्टान्तभेदेन त्र्यवयवमनुमानमिति सांख्यः प्रतिज्ञा

हेतूदाहरणोपनयभेदेन चतुरवयवमिति मीमांसकाः प्रतिज्ञाहेतूदाहरणोपनयनिगमनभेदात्पंचावयवमिति यौ

गः तन्मतमपाकुर्वन् स्वमतसिद्धमवयवद्वयमेवोपदर्शयन्नाह एतद्द्वयमेवानुमानाङ्गं नोदाहरणमिति एतयोः

पक्षहेत्वोः द्वयमेव नातिरिक्तमित्यर्थः एवकारेणोदाहरणादिव्यवच्छेदे सिद्धेऽपि परमतनिरासार्थं पुनर्नोदाहरण

मित्युक्तं तद्धि किं साध्यप्रतिपत्त्यर्थमुत स्विद्धेतोरविनाभावनियमार्थमाहोस्वित् व्याप्तिस्मरणार्थमिति विकल्पत्रयम

ाद्यं निराह नहि तत्साध्यप्रतिपत्तौ यथोक्तस्य साध्याविनाभावित्वेन निश्चितस्य हेतोर्व्यापारादिति द्वितीयविकल्पं

तदुदाहरणं साध्यप्रतिपत्तेरंगं कारणं इति सर्वेषां तत्र साध्यप्रतिपत्तौ यथोक्तस्य सा[illegible] [illegible]भावि[illegible]

प्रमाणाब्दा

क्रोशयन्नाह तदविनाभावनिश्चयार्थं वा विपक्षे बाधकादेव तत् सिद्धेः तदिति वर्तते तेनेति च तेनायमित्यर्थः तदुदाहरण
साध्येनाविनाभावनिश्चयार्थं वा न भवतीति विपक्षे बाधकादेव तत्सिद्धेरविनाभावनिश्चयसिद्धेः किंच व्यक्ति
रूपं निदर्शनं तत्कथं सकलेन व्याप्तिं गमयेत् व्यक्त्यंतरेषु व्याप्त्यर्थं पुनरुदाहरणांतरं मृग्यं तस्यापि व्यक्तिरूपत्वे
न व्याप्तेरवधारयितुमशक्यत्वात् अपरापरदृष्टांतरापेक्षयामनवस्था स्यात् एतदेवाह व्यक्तिरूपं च निदर्शनं सामा
न्येन तु व्याप्तिस्तत्रापि तद्विप्रतिपत्तावनवस्थानं स्याद्दृष्टांतांतरापेक्षणात् तत्रापि उदाहरणेऽपि तद्विप्रतिपत्तौ सामा
न्यव्याप्तिविप्रतिपत्तावित्यर्थः शेषं व्याख्यातं तृतीयविकल्पे दूषणमाह नापि व्याप्तिस्मरणार्थं तथापि विधिहे
तुप्रयोगादेव तत्स्मृतेः गृहीतसंबंधस्य हेतुप्रदर्शनेनैव व्याप्तिसिद्धिरगृहीतसंबंधस्य दृष्टांतशतेनापि न तत्स्मरणम
ननुभूतविषयत्वात् स्मरणस्येति भावः तदेवमुदाहरणप्रयोगस्य साध्यार्थं प्रति नोपयोगित्वं प्रत्युत संशयहेतुत्व
मेवेति दर्शयति तत्परमभिधीयमानं साध्यधर्मिणि साध्यसाधने संदेहयति तदुदाहरणं परं केवलमभि
धीयमानं साध्यधर्मिणि साध्यसाधने संदेहयति संदेहवती करोति दृष्टांतः धर्मिणि साध्यव्याप्तिसाधनोपदर्शने

वाक्य ति

पि साध्यधर्मिणि तन्निर्णयस्य कर्तुमशक्यत्वात् इति शेषः अनुमेवार्थं व्यतिरेकमुखेन समर्थयमानः प्राह कुतोऽन्य
थोपनयनिगमने अन्यथा संशयहेतुत्वाभावे कस्माद्धेतोरुपनयनिगमने प्रयुज्येते अपरः प्राह उपनयनिगम
नयोरप्यनुमानांगत्वमेव तदप्रयोगे निस्वरूपसाध्यसंवित्तेरयोगादिति तन्निषेधार्थमाह नचैते तदंगे साध्यधर्मि
णि हेतुसाध्ययोर्वचनादेवासंशयात् ॥ उपनयनिगमने अपि वक्ष्यमाणलक्षणे न तस्यानुमानस्यांगे न भवतः साध्यध
र्मिणि हेतुसाध्ययोर्वचनादेवेत्येवकारेण दृष्टांतादिकमंतरेणेत्यर्थः किंचाविधायापि दृष्टांतादिकं समर्थनं भवत्य
वश्यमसमर्थितस्याहेतुत्वादिति तदेव वरं हेतुरूपमनुमानावयवो वास्तु साध्यसिद्धौ तस्यैवोपयोगान्नोदाहरणा
दिकमेतदेवाह समर्थनं वा वरं हेतुरूपमनुमानावयवो वास्तु साध्ये तदुपयोगादिति प्रथमो वा शब्द एवकारार्थे द्विती
यस्तु पक्षांतरसूचने शेषं सुगमं ननु दृष्टांतादिकमंतरेण मंदधियामवबोधयितुमशक्यत्वात् कथं पक्षहेतुप्रयोगमा
त्रेण तेषां साध्यप्रतिपत्तिरिति तत्राह बालव्युत्पत्त्यर्थं तत्त्रयोपगमे शास्त्र एवासौ न वादेऽनुपयोगादिति बालानाम
ल्पज्ञानां व्युत्पत्त्यर्थं तेषामुदाहरणादीनां त्रयोपगमे शास्त्र एवासौ तत्त्रयोपगमो न वादे नहि वादकाले शिष्याः व्युत्पा

ग्राः व्युत्पन्नानामेव तत्राधिकारादिति बालव्युत्पत्त्यर्थं तत्रयोपगम इत्यादिना शास्त्रेऽभ्युपगतमेवोदाहरणादि
त्रयमुपदर्शयति दृष्टांतो द्विधा अन्वयव्यतिरेकभेदादिति दृष्टावंतौ साध्यसाधनलक्षणौ धर्मावन्वयमुखेन
तिरेकद्वारेण वा यत्र स दृष्टांत इत्यन्वर्थसंज्ञाकरणात् सद्विधैवोपपद्यते तत्रान्वयदृष्टांतं दर्शयितुमाह साध्य
व्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टांतः साध्येन व्याप्तं नियतं हेतुः यत्र प्रदर्श्यते व्याप्तिपूर्वकतयेति भावः
तीयभेदमुपदर्शयति साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टांतः असत्यसद्भावो व्यतिरेकः
नो दृष्टांतो व्यतिरेकदृष्टांतः साध्याभावे साधनस्याभाव एवेति सावधारणं द्रष्टव्यं क्रमप्राप्तमुपनयस्वरूपं निरूप
ति हेतोरुपसंहार उपनयः। पक्ष इत्याद्याहारः तेनायमर्थः हेतोः पक्षधर्मतोपसंहार उपनय इति निगमनस्वरूपमुपदर्श ५
यति। प्रतिज्ञायास्तु निगमनमिति। उपसंहार इति वर्तते प्रतिज्ञाया उपसंहारः साध्यधर्मविशिष्टत्वेन प्रदर्शनं नि
मित्यर्थः ननु शास्त्रे दृष्टांतादयो वक्तव्या एवेति नियमानभ्युपगमात् कथं तत्र [illegible]मिह सूरिभिः प्रपंचितमिति न चोद्यं
यमनमभ्युपगमेऽपि प्रतिपाद्यानुरोधेन जिनमतानुसारिभिः प्रयोगपरिपाट्याः प्रतिपन्नत्वात् साक्षाज्ज्ञानतत्त्वसंवेदकं तु

वा प्रस्तुतसाधकत्वमेव न बाधकत्वमित्यलमतिप्रसंगेन तथा सौगतस्य प्रमाणसंख्या विरोधिविध्वस्तबाधंतर्क्य

मुपयैकृतएव नंचैतत्प्रत्यक्षेतभवति साध्यसाधनयोर्व्याप्यकभावस्य साकल्येन प्रत्यक्षाविप्रत्यक्षाविषयत्वा

त् नहि तदस्मितोव्यापारान् कर्तुं शक्नोमि अविचारकत्वात् संनिहितविषयत्वाच्च नाप्यनुमाने तस्यापिदेशादिवि

षयविशिष्टत्वेन व्याप्त्यविषयत्वात् तद्विषयत्वेवाप्रकृतानुमानांतरविकल्पद्वयानतिक्रमात् तत्रप्रकृतानुमानेन

व्याप्तिप्रतिपत्ताविनरेतराश्रयत्वप्रसंगः व्याप्तौ हि प्रतिपन्नायामानुमाननिर्विकल्पकत्वात्प्रमासाद्यति तदात्म

लाभेच व्याप्तिप्रतिपत्तिरिति अनुमानांतरेणाविनाभावप्रतिपत्तावनस्थाचेसूतिपरपरस्तुपूर्वंच भीति नानुमानगम्या

व्याप्तिः नापिसंख्यादिपरिकल्पितैरागमोपमानार्थापत्त्यभावैः साकल्येनाविनाभावावगतिः तेषांसमयसेगृहीत

सादृश्यान्यथाभूताभावविशयत्वेन व्याप्त्यविशयत्वात् परैस्तथानभ्युपगमाश्च अन्यप्रत्यक्षपृष्ठभावविकल्पा

त् साकल्येन साध्यसाधनभावप्रतिपत्तेर्न प्रमाणांतरमभिमृगमित्यपरः सोपिनयुक्तवादी विकल्पस्याध्यक्षगृहीतवि

विषयस्यैवातद्धवस्यापकत्वमाधेपक्षदर्शनस्यैव तदनंतरभाविनिर्णयस्यापि नियतविशयत्वेन व्याप्त्यगोच

रत्वात् द्वितीयपक्षेपि विकल्पद्वयमुपैर्येकत एव तद्विकल्पज्ञानं प्रमाणमन्यथा वेति प्रथमपक्षे प्रमाणांतरम्
मंतव्यं प्रमाणद्वयेऽनंतर्भावात् उत्तरपक्षे तु न ततोनुमानव्यवस्था न हि व्याप्तिज्ञानस्याप्रामाण्ये तत्पूर्व
मनुमानं प्रमाणमास्कंदति संदिग्धादिलिंगादप्युत्पद्यमानस्य प्रामाण्यप्रसंगात् ततो व्याप्तिज्ञानं सविक
मपि संवादकं च प्रमाणद्वयादन्यदभ्युपगम्यमिति। न सौगताभिमतप्रमाणसंख्यानियमः एतेनानुपलं
त्कारणव्यापकानुपलंभाच्च कार्यकारणव्यापकभावसंवित्तिरिति वदन्नपि प्रयुक्तः अनुपलंभस्य प्रत्यक्षवि
शेषत्वेन कारणाद्यनुपलंभस्य च लिंगत्वेन तज्जनितस्यानुमानत्वात् प्रत्यक्षानुमानाभ्यां व्याप्तिग्रहणपक्षोपक्षि
प्तानुसंगात् एतेन प्रत्यक्षफलेनोहापोहविकल्पज्ञानेन व्याप्तिप्रतिपत्तिरित्यप्यपास्तं प्रत्यक्षफलस्यापि प्रत्य
क्षानुमानयोरन्यतरत्वे व्याप्तेरविषयीकरणात् तदन्यत्वे च प्रमाणांतरत्वमनिवार्यमिति अथ व्याप्तिविक
ल्पत्वान्न प्रामाण्यमिति न युक्तं फलस्यानुमानलक्षणफलहेतुतया प्रमाणत्वाविरोधित्वात् यथा संनिकर्षफ
लस्यापि विशेषणज्ञानस्य विशेष्यज्ञानलक्षणफलापेक्षया प्रमाणत्वमिति नैयायिकाभ्युपगतोहापोहवि

रूपादिगोचरचारित्वेन चरितार्थत्वाच्च नाप्यदृष्टसहकारिसव्यपेक्षमिंद्रियमेकत्वविशयमुत दोषादेव किंचादृष्टसंस्क
दिसव्यपेक्षादेवात्मनः स्तुद्धिज्ञानमिति किं न कल्प्यते दृश्यते हि स्वप्नसारस्वतपांडलिकास्थिविद्यासंस्कृतादात्मनो वि
शिष्टज्ञानोत्पत्तिरिति न चांजनादिसंस्कृतमपि च क्षुद्रशतिशयमपुलक्षतइति चेत् न तस्य स्वार्थानतिक्रमेणैवातिश
योपलब्धेन विशयांतरग्रहणलक्षणातिशयस्य यथा चोक्तं यत्राप्यतिशयो दृष्टः स स्वार्थानतिलंघनात् दूरसूक्ष्मा
दिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तितः इति नन्वयं वार्तिकस्य सर्वज्ञप्रतिषेधपरत्वाद्विशमो दृष्टांत इति
चेन्न नह्यिन्द्रियाणां विशयांतरप्रवृत्तावतिशयाभावमात्रे सादृश्यात् दृष्टांतत्वोपपत्तेः नहि सर्वो दृष्टांतधर्मो दृष्टांति
के भवितुमर्हत्यन्यथा दृष्टांत एव न स्यादिति ततः स्थितं प्रत्यक्षानुमानाभ्यामर्थांतरप्रत्याभिज्ञानं सामग्रीस्वरूपभेद
विति न चैतदप्रमाणं ततोर्थं परिच्छिद्य प्रवर्तमानस्यार्थक्रियायामविसंवादात् प्रत्यक्षवदिति न चैकत्वापलापे बंध
मोक्षादिव्यवस्था अनुमानव्यवस्था वा एकत्वाभावे बहुस्यैव मोक्षादेर्गृहीतसंबंधस्यैव लिंगस्यादर्शनादनुमानस्य
चाव्यवस्थायोगादिति न चास्य विशये बाधकप्रमाणसद्भावादप्रामाण्यं न हि विषये प्रत्यक्षस्य लैंगिकस्य चाप्रवृत्तेः प्रवृत्तौ

त्यक्षं भिज्ञानमपि सौगतीयप्रमाणसंख्या विघटयत्येव तथापि प्रत्यक्षानुमानयोरन्तर्भावात् ननु तदितिस्म
रणं मिदमिति प्रत्यक्षमिति ज्ञानद्वयमेव नताभ्यां विभिन्नं प्रत्यभिज्ञानाख्यमवयं प्रतिपद्यमानं प्रमाणान्तरमुपल
भामहे ततः कथं तेन प्रमाणसंख्या विघटनमिति तदप्यघटितमेव यतः स्मरणप्रत्यक्षाभ्यां प्रत्यभिज्ञानविशय
स्यार्थस्य गृहीतमशक्यत्वात् नापि प्रत्यक्षेणातस्य वर्तमानविवर्तवर्तित्वात् यदप्युक्तं ताभ्यां भिन्नमन्यद्ज्ञानं
नास्तीति तदप्ययुक्तमभेदपरामर्शरूपतया भिन्नस्यैवावभासनात् नच तयोरन्यतरस्य वाभेदपरामर्शात्मक
त्वमस्ति विभिन्नविषयत्वात् नचैतरस्य वाभेदपरामर्शान्वित्वकत्वमस्ति विभिन्नविशयत्वात् नचैतत्प्रत्यक्षे तभव
त्यनुमाने वा तयोः पुरोवस्थितार्थविशयत्वेनानुभूतलिंगसंभाविषयत्वेन च॥ पूर्वापरविकारव्याप्येकत्वाविषयत्वात् न विना
पि स्मरणे नेनापि तदेकत्वस्याविशयीकरणात् अथ संस्कारस्मरणसहकृतमिन्द्रियमेव प्रत्यभिज्ञानं जनयतीन्द्रिय
जं चाध्यक्षमेवेति न प्रमाणान्तरमित्यपरः सोप्यतिवालिश एव स्वविशयाभिमुख्येन प्रवर्तमानस्येन्द्रियस्य सहकारिशत
समवधानेपि विशयान्तरप्रवृत्तिलक्षणातिशयायोगात् विशयान्तरं चातीतसांप्रतिकावस्थाव्याप्येकद्रव्यमिंद्रियाणां

पूर्वापरविवर्तिनत्यैकद्रव्यं हि प्रत्यभिज्ञानविषयः। नच तत्स्मरणेनोपलक्ष्यते तस्यानुभूतविषयत्वात् ४

तः पातित्वान्न ततोऽनुमानं नह्यहि भावेनैव हेतोर्व्यभिचारः अप्रतिभासमानत्वेपि तद्व्यवस्थाभावात् ततो नानुमानमिमि
अथानाद्यविद्याविजृंभितत्वात्सर्वमितरसंबंधनित्यनन्यतमो विलसितं अविद्यायामप्युक्तदोषानुषंगात् सकलविक
ल्पविकलत्वात्तस्या नैव दोष इत्यप्यभिमुग्धभाषितम् केनापि रूपेण तस्याः प्रतिभासाभावे तत्स्वरूपानवधारणात् ।
अपरमन्यत्र विस्तरेण देवागमालंकारे तन्निमित्तिनेप्रतन्यते यत्तु परब्रह्मविवर्तत्वमखिलभेदानामित्युक्तं तत्राप्येकरूपे
णान्वितत्वं हेतुरन्वेत्रन्वीयमानद्वया विनाभावित्वेन पुरुषाद्वैतं प्रतिबध्नातीति स्वेष्टविघातकारित्वाद्विरुद्धः अन्वित
त्वमेकहेतुके घटादावनेकहेतुके स्तंभकुंभांभोरुहादावप्युपलभ्यत इत्यनैकांतिकः अक्रिमर्थं चेदं कार्यमसौ विदधाति ।
अन्येन प्रयुक्तत्वात् कृपावशात् क्रीडावशात् स्वभावाद्वा अन्येन प्रयुक्तत्वे स्वातंत्र्यहानिर्द्वैतप्रसंगश्च कृपावशादिति मान
रं कृपायां दुःखिनामकरणाप्रसंगात् परोपकरणनिष्ठत्वात्तस्याः सृष्टेः प्रागनुकंपाविषयप्राणिनामभावाच्च न
सायुज्यते कृपापरस्य प्रलयविधानायोगाच्च अदृष्टवशात्तद्विधाने स्वातंत्र्यहानिः कृपापरस्य पीडाकारणादृष्टव्यपेक्षा
योगाच्च क्रीडावशात् प्रवृत्तौ न प्रभुत्वं क्रीडोपायव्यपेक्षणाद्बालकवत् क्रीडोपायस्य तत्साध्यस्य च युगपदुत्पत्तिप्रसंगश्च स

गमोप्यस्ति उगोनाभइवांशूनां चन्द्रकांतइवांभसां प्ररोहाणामिव प्लक्षः संहेतुः सर्वजन्मनामिति तदेतन्मदिरा

गद्गदस्तोदितमेव मदनकोद्रवाद्युपयोगजनितव्यामोहमुग्धविलसितमिव निखिलमवभासते विचारासहत्व

तथाहि यत्तावदस्य सत्ताविशेषत्वमभिहितम् तत्र किं निर्विशेषसत्ताविशेषत्वं सविशेषसत्तावबोधकत्वं वानंता

रस्त्यः पक्षः सत्तायाः सामान्यरूपत्वाद्विशेषनिरपेक्षतया नवभासनात् शाबलेयादिविशेषानवभासते गोत्वा

वभासवत् निर्विशेषं हि सामान्यं भवेच्छशविषाणवदित्यभिधानात् सामान्यरूपत्वं च सत्तायाः तत्सद्दित्यन्वय

विशेषत्वेन सुप्रसिद्धमेव जयपाश्चात्यः पक्षः कक्षीक्रियते तदानपरमपुरुषसिद्धिः परस्परव्यावृताकारविशेषा

मध्यक्षतोवभासनात् यदपि साधनमभ्यधायि प्रतिभासमानत्वं तदपि न साधु विचारासहत्वात् तथाहि प्रतिभा

नत्वं स्वतः परतो वा न तावत्स्वतो सिद्धत्वात् परतश्चेद्विरुद्धं परतः प्रतिभासमानत्वं हि परं विना नोपपद्यते प्रतिभा

मात्रमपि न सिद्धिमधिवसति तस्य तद्विशेषनांतरीयकत्वात् तद्विशेषाभ्युपगमे द्वैतप्रसक्तिः किं च धर्महेतुदृष्टांता

मानोपायभूताः प्रतिभासं तेनं वेत्ति प्रथमपक्षे प्रतिभासांतः प्रविष्टः प्रतिभासि वहिर्भूता वा यद्याद्यः पक्षस्तदा साध्यं

नापि ब्रह्मणः ॥ तस्यापि सद्भावावेदकप्रमाणाभावात् न तावत्प्रत्यक्षं तदावेदकमविशतिप्रसंगात् नचानुमानमवि
नाभाविलिंगाभावात् ननु प्रत्यक्षं तद्ग्राहकमस्त्येवाक्षविस्फालनानंतरं निर्विकल्पकस्य सन्मात्रविधिविषयतयोत्प
तेः सत्तायाश्च परब्रह्मरूपत्वात् तथा चोक्तं अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकं बालमूकादिविज्ञानसदृशं
शुद्धवस्तुजं नच विधिवत् परस्परव्यावृत्तिरप्यध्यक्षतः प्रतीयते इति द्वैतसिद्धिः तस्य निषेधाविषयत्वात् तथा चोक्तं
आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः नैकत्वे आगमस्तेन प्रत्यक्षेण न बाध्यते अनुमानादपि तत्सद्भावो विभाव्य
त एव तथाहि ग्रामारामादयः पदार्थाः प्रतिभासांतःप्रविष्टाः प्रतिभासमानत्वात् यत्प्रतिभासते तत्प्रतिभासांतः
प्रविष्टं यथा प्रतिभासस्वरूपं प्रतिभासंते च विवादापन्ना इति तदागमनामपि पुरुष एवेदं यद्भूतं यच्च भाव्यमिति व
हुलमुपलंभात् सर्वं वै खल्विदं ब्रह्म नेह नानास्ति किंचन ॥ आरामं तस्य पश्यंति न तं पश्यति कश्चनेति श्रुतेश्च ननु प
ब्रह्मण एव परमार्थसत्त्वे कथं घटादिभेदोवभासते इति न चोद्यं सर्वस्यापि तद्विवर्त्ततयावभासनात् नचाशेषभेदस्य त
द्विवर्त्तत्वमसिद्धं प्रमाणप्रसिद्धत्वात् तथाहि विवादाध्यासितं विश्वमेककारणपूर्वकमेकरूपान्वितं च निखिलं वस्त्वि

नुविधायित्वं च कारणमात्रापेक्षया यदीष्यते तदा विरुद्धं साधनं कारणविशेषापेक्षया चेदितरेतराश्रयत्वं सिद्धे
हि कारणविशेषे बुद्धिमती तदपेक्षया कारणव्यापारानुविधायित्वं कार्यत्वं ततः स्तद्विशेषसिद्धिरिति संनिवेशविशि
ष्टत्वमपि तेनोपादितत्वं चोक्तदोषदुष्टत्वान्न पृथक् चिंत्यते स्वरूपभागासिद्धत्वादेस्तत्रापि सुलभत्वात् विरुद्धाश्चामी हेतवो
दृष्टान्तानुग्रहेण सशरीरासर्वज्ञपूर्वकत्वसाधनात् न धूमात्पावकानुमानेप्ययं दोषः तत्र तार्णपार्णादिविशेषाधारा
नि मात्रव्याप्तधूमस्य दर्शनात् नैवमत्र सर्वज्ञाकर्तृविशेषाधिकरणं तत्सामान्येन कार्यत्वस्य व्याप्तिः सर्वज्ञस्य कर्तुरे
तोनुमानादागमसिद्धत्वात् व्यभिचारिणश्चामी हेतवः बुद्धिमत्कारणमंतरेणापि विद्युदादीनां प्रादुर्भावसंभवात् स्व
प्नाद्यवस्थायामबुद्धिपूर्वकस्यापि कार्यस्य दर्शनात् तदेवं तत्रापि भगीरथ्यं कारणमस्तीति मुग्धविलसितं तद्व्याप
रस्याप्यसंभवादशरीरत्वाज्ज्ञानमात्रेण कार्यकारित्वाघटनादिच्छाप्रयत्नयोः शरीराभावेसंभावातुदर्शंभवश्च
पुरातनैर्विस्तरेणाभिहितमाप्तपरीक्षादौ अतः पुनरत्र नोच्यते यच्च महेश्वरस्य क्लेशादिभिरपराभृष्टत्वं निरतिशयत्व
मैश्वर्याधिपतित्वं तत्सर्वमपि गगनाब्जसौरभ्यव्यावर्णनमिव निर्विशयत्वादुपेक्षामर्हति तेनोन्महेश्वरस्याशेषत्वं तत्त

अथप्रथमपक्षेअवयवसामान्येनानेकांतात् द्वितीयपक्षेसाध्याविशिष्टत्वात् अथसंनिवेशएवसावयवत्वंतद्धटादि
वत् पृथिव्यादावुपलभ्यत इत्यभूताभावित्वमभिधीयते तदप्यपेशलं संनिवेशस्यापिविचारासहत्वात् सह्यवयव
संबंधोभवेद्रचनाविशेषोवा यद्यवयवसंबंधस्तदागमनादिनानेकांतः सकलमूर्तिमद्द्रव्यसंबंधस्याप्युपचरितत्वात्
द्विगतत्वमप्युपचरितंस्यात् श्रोत्रस्यार्थकारित्वंनचस्यात् उपचरितप्रदेशरूपत्वात् धर्मादिनासंस्कारात ततःसेस
युक्तं उपचरितस्यासद्रूपस्यतेनोपकारायोगात् खरविषाणस्येवततोनकिंचिदेतत् अथरचनाविशेषः तदापरम
निभागासिद्धत्वं तदवस्थमेवेति नाभूत्वाभावित्वंविचारंसहते नाप्यक्रियादर्शिनोपि कृतबुद्ध्युत्पादकत्वं तद्धिकृत
समयस्यवाभवेत् कृतसमयस्यचेत् गगनादेरपिबुद्धिमद्धेतुकत्वंस्यात् तत्रापिखननोत्सेचनात् कृतमितिगृहीतसंके
स्यकृतबुद्धिसंभावात् सामिथ्येतिचेत् वदीयापिकिंनस्यात् वाधासद्भावस्यप्रतिप्रमाणाविरोधस्यचान्यत्रापिक
तुरग्रहणात् क्षित्यादिकंबुद्धिमद्धेतुकत्वंनभवति असमदाद्यनवग्राह्यपरिमाणाधारत्वात् गगनादितिप्रमाणस्यस
धारणत्वात् तन्नकृतसमयस्यकृतबुद्ध्युत्पादकत्वंनाप्यकृतसमयस्यासिद्धत्वात् अविप्रतिसंगाच्चकारणव्यापारा

र्भतदुपादानमित्यपि वार्त्तं वस्त्वात्मापेक्षया अभिव्यक्तेरघटनात् वस्त्वपेक्षयाभिव्यक्तौ कारणसंपातात्प्रागपि कार्यवस्तु
सद्भावप्रसंगात् उत्पादस्याप्यभिव्यक्तिरसंभाव्या स्वकारणसत्तासंबंधलक्षणस्योत्पादस्यापि कारणव्यापारात्
प्राक्सद्भावे वस्तुसद्भावप्रसंगात् न ह्युक्षणत्वाद्वस्तुसत्त्वस्य प्राक्सत एव हि केनचित्तिरोहितस्याभिव्यंजकेनाभि
व्यक्तिरस्तु मस्ति रोहितस्य घटस्येव प्रतिपादितेति तन्नाभिव्यक्त्यर्थं कारणोपादानं युक्तं तन्न स्वकारणसत्तासंबंधः
कार्यत्वं नाप्यभूत्वाभावित्वं तस्यापि विचारासहत्वात् अभूत्वाभावित्वं हि भिन्नकालक्रियाद्वयाधिकरणभूते कर्तरि सि
द्धमसाध्यं स्वेकांतपदविशेषितवाक्यार्थत्वात् भुक्त्वा व्रजति इत्यादिवाक्यार्थवत् न चात्र भावनाभवनयोराधारभूतस्य
कर्तुरनुभवोस्ति अभवनाधारस्याविद्यमानत्वेन भावनाधारस्य च विद्यमानतया भावाभावयोरेकाश्रयविरोधात् अ
विरोधे च तयोः पर्यायमात्रेणैव भेदो न वास्तव इति अस्तु वा यथा कथंचिदभूत्वाभावित्वं तथापि तन्वादीनां सर्वदाभ्युपगमा
द्भावासिद्धं न हि महीधराकूपारारामादयः प्रागभूत्वा भवंतोभ्युपगम्यंते परैस्तेषां तैः सर्वदावस्थानाभ्युपगमात् अथ
सावयवत्वेन तेषामपि सादित्वं प्रसाध्यते तदप्यशिक्षितलक्षितं अवयववृत्तेरवयवारभ्यत्वेन च सावयवत्वानुपपत्तेः

समुत्पन्नानां भवेदुत्पद्यमानानां सत्तासमवायो न तावदसतां खरविषाणादेरपि तत्प्रसंगात् सतो चेत् सत्तासमवायात् स्व
तो वा न तावत्सत्तासमवायादनवस्थाप्रसंगात् प्रागुक्तविकल्पद्वयानतिवृत्तेः स्वतः सतां तु सत्तासमवायानर्थक्ये अथोत्प
द्यमानानां सत्तासंबंधः नित्यसंबंधयोरेककालत्वाभ्युपगमादिति मतं तदा सत्तासंबंध उत्पादाद्भिन्नः इति यदि भिन्नस्तदो
त्पत्तेरसत्त्वाविशेषवदुत्पद्यमानावस्थायाः किंकृतो भेदः अथोत्पत्तिसमाक्रांतवस्तुसत्त्वेनोत्पत्तिरपि तथा व्यपदिश्यते इति मतं तद
प्युत्पत्तिजाग्यवलितं नैवोत्पत्तिसत्त्वं प्रति सत्त्वं प्रति विवादे वस्तुसत्त्वस्यातिदुर्घटत्वात् इतरेतराश्रयदोषश्च इत्युत्पत्तिसत्त्वेव
स्तुनि तदेककालीनसत्तासम्बंधावगमस्तदवगमे च तत्रत्यसत्त्वेनोत्पत्तिसत्त्वनिश्चय इति अथैतद्दोषपरिजिहीर्षया तयोरैक्य
मभ्युनुज्ञायते तर्हि तत्संबंध एव कार्यत्वमिति ततो वृद्धिमेवैतुकत्वे गगनादिभिरनैकांतः एतेन स्वकारणसंबंधोपि चिंतितः उ
भयसंबंधकार्यत्वमितिभक्तिः सापि न युक्ता तत्संबंधस्यापि कदाचित्कत्वे समवायस्यानियमत्वप्रसंगात् घटादिवत् अकदा
चित्कत्वे सर्वदोपलंभः प्रसंगः अथ वस्तुत्वात्तत्कारणानां संनिधानाभावान्न सर्वदोपलंभनप्रसंगः ननु वस्तुसम्बंधे कारणा
नां व्यापारः उत्पादश्च स्वकारणसत्तासमवायः स च सर्वदाप्यस्ति इति तदर्थं कारणोपादानमनर्थकमेव स्यात् अभिव्यक्त

त्वादीनामुपलंभात् अथ तादृशः प्रासादादेः संनिवेशविशेषो दृष्टान्त तादृशस्य कस्यचिदप्यभावात् सातिशयं सं
हिसांतिशयं कर्तारं गमयति प्रासादादिवत् नच दृष्टकर्तृकादृष्टकर्तृकाभ्यां बुद्धिमंतमितेतरत्वसिद्धिः कृत्रिमेनेशामुक्ता
दिभिर्व्यभिचारात् एतेनाचेतनोपादानत्वादिकमपि समर्थितमिति सूक्तं बुद्धिमद्धेतुकत्वं ततश्च सर्ववेदित्वमिति तदे
वमनुमानमुद्रविशारदैरिदं वचनमेव कार्यत्वादेः असम्यग्धेतुकत्वेन तज्जनितस्य मिथ्यारूपत्वात् तथाहि कार्यत्वं स्वका
रणसत्तासमवायः स्यादभूत्वा भावित्वमक्रियादर्शिनोपि कृतबुद्ध्युत्पादकत्वं कारणव्यापारानुविधायित्वं वा स्याद्गत्यं
तराभावात् अथाद्यः पक्षः तदा योगिनामशेषकर्मपक्षे प्रध्वंसांतःपातिनि हेतोः कार्यत्वलक्षणस्य प्रवृत्तेर्भागासिद्धः
नच तत्र सत्तासमवायः स्वकारणसमवायो वास्ति तस्य प्रध्वंसरूपत्वेन सत्तासमवाययोरभावात् सत्ताया
गुणक्रियाधारत्वाभ्यनुज्ञानात् समवायस्य च परैः द्रव्यादिषु पंचपदार्थवृत्तियोगत्वाभ्युपगमात् अथाभावपरित्यागेन
भावैकदेशे विवादाध्यासितस्य पक्षीकरणान्नायं दोषः प्रवेशभागीति चेत् नहि मुक्त्यर्थिनां तदर्थमीश्वराराधनमनर्थकमेव
स्यात् तत्र स्वकृतकिंचित्करत्वात् सत्तासमवायस्य विचारमधिरोहतः शतधा विशीर्यमाणत्वात् स्वरूपासिद्धं च कार्यत्वं

संबाहुभ्यां धमति संपतित्रैर्द्यावा भूमी जनयन् देव एकः तथा व्यासवचनं च अज्ञो जंतुरनीशोयमात्मनः सुख
दुःखयोः ईश्वरप्रेरितो गच्छेत्स्वर्गं वाश्वभ्रमेव वा नचाचेतनेनैव परमाण्वादिकारणेः पर्याप्तत्वाद्बुद्धिमतःका
रणस्यानर्थक्यं अचेतनानां स्वयं कार्योन्मुखो व्यापारायोगात् तुर्यादिवत् नचैवं चेतनस्यापि चेतनांतर पूर्वकत्व
दनवस्था तस्य सकलपुरुषज्येष्ठत्वान्निरतिशयत्वात् सर्वज्ञबीजस्य क्लेशकर्मविपाकाशयैरपरामृष्टत्वादनादि
भूतानश्वरज्ञानसंभवाच्च यदाह पतंजलिः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषः सर्वज्ञः सपूर्वेषामपि गुरुः का
लेनविच्छेदादिति च ऐश्वर्यमप्रतिहतं सहजो विरागः तृप्तिर्निसर्गजनिता वशितेन्द्रियेषु आत्यंतिकं सुखम
मनावरणा च शक्तिर्ज्ञानं च सर्वविषयं भगवतस्तवैवेत्यवधूतवचनाच्च नचात्रकार्यत्वमसिद्धं सावयवत्वेन कार्यत्व
सिद्धं विपक्ष एव वृत्त्यभावात् नाप्यनैकांतिकं विपक्षे परमाण्वादावप्रवृत्तेः प्रतिपक्षसिद्धिनिबंधनस्याभावात् न
प्रकरणसमं अथ तन्वादिकं बुद्धिमद्धेतुकं नभवति दृष्टकर्तृकप्रासादादिलक्षणत्वादाकाशादिवदित्यस्येव
प्रतिपक्षसाधनमिति नेत्यक्तं हेतोरसिद्धत्वात् सन्निवेशविशिष्टत्वेन प्रासादादिसमानजातीयत्वेन न

ज्ञस्मरणे च सर्वज्ञनास्तिताज्ञानमभावप्रमाणं युक्तं नापरथा नकस्यचिदर्वाग्दर्शिनस्त्रिजगत्त्रिकालज्ञानमुप
सर्वज्ञस्यातीन्द्रियस्य वा सर्वज्ञत्वं हि चेतो धर्मस्तया सतीन्द्रियं तदपि न प्राकृतपुरुषविषयं इति कथमभावप्रमाण
य मासादयेत् असर्वज्ञस्य तदुत्पादसामग्र्या असंभवात् असंभवे तथा ज्ञातुरेव सर्वज्ञत्वमिति अत्राधुना तद
व साधनमित्यपि न युक्तं सिध्यसाध्यतानुषंगात् ततः सिद्धं मुख्यतीन्द्रियज्ञानमशेषतो विशदं सार्वज्ञज्ञानस्या
तीन्द्रियत्वाद्दस्युच्चादिदर्शनं तद्रसास्वादनदोषोपि परिहृत एव कथमतीन्द्रियज्ञानस्य वैशद्यमिति चेत् तथा सत्य
स्वप्नज्ञानस्य भावनाज्ञानस्य चेति दृश्यते हि भावनाबलादतद्देशवस्तुनोपि विशददर्शनमिति पिहिते कारणा
सिचस्त्रीमुखाग्रहमेग्रमयि च निमिलितनयते तथापि कांतानन्नं व्यक्तमिति बहुलमुपलंभात् ननु च नावरणाविश्ले
षोशज्ञत्वमपि तु तनुकरणभुवनादिनिमित्तत्वेन न चाग्रतन्वादीनां बुद्धिमद्धेतुकत्वमसिद्धमनुमानादेस्तस्य सुप्रसिद्ध
त्वात् तथा हि विकल्पादिकरणभावापन्नं पर्यायविभेनरूतन्वादिकं बुद्धिमद्धेतुकं कार्यत्वादचेतनोपादानत्वात्संनिवेश
विशिष्टत्वाद्वा वस्त्रादिवदिति आगमोपि तदावेदकः श्रूयते विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतः पात्

कमिति सिद्धं सकलपदार्थसाक्षात्कारित्वं कस्यचित्पुरुषस्यातोऽनुमानादिति न प्रमाणपंचकाविशयत्वमशेषज्ञस्य अथा
स्मिन्ननुमानेऽर्हतः सर्वविन्मनर्हतो वा अनर्हतश्चेदर्हद्वाक्यमप्रमाणं स्यात् अर्हतश्चेत्सोपि नश्रुत्यासामर्थ्येन वावगंतु
पार्यते स्वशक्त्या दृष्टांतानुग्रहेण वा हेतोः पक्षांतरेपि तुल्यवृत्तित्वादिति नैतत्परेशं स्वव्यधाय कस्योत्थापनमेवं वि
धिनिशेधप्रश्नस्य सर्वज्ञसामान्याभ्युपगमपूर्वकत्वात् अन्यथा नकस्याप्यशेषज्ञत्वमित्येवं वक्तव्यं प्रसिद्धानुमानेप्य
स्य दोषस्य संभवो न जात्यंतरत्वाच्च तथाहि नित्यः शब्दः प्रत्यभिज्ञायमानत्वादित्युक्ते व्यापकः शब्दो नित्यः नि
त्यः प्रसाध्यते अव्यापको वा यद्य व्यापकः तदाव्यापकत्वे नोप्यकत्समानो न किंचिदर्थं पुष्णाति अथ व्यापकः
सोपि नश्रुत्यासामर्थ्येन वावगम्यते स्वशक्त्या दृष्टांतानुग्रहेण वा पक्षांतरेपि तुल्यवृत्तित्वादिति सिद्धमतो निर्दोषात्सा
धनाद्शेषज्ञत्वमिति यच्चाभावप्रमाणसत्ताकवलितमशेषज्ञस्येति यदुक्तमेवानुमानस्य तद्ग्राहकस्य सद्भावे सति प्रमा
णपंचकाभावमूलस्याभावप्रमाणस्योच्छानायोगात् गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनं मानसं नास्तिताज्ञा
नं जायतेऽक्षानपेक्षयेति च भावात् कं दर्शनं तथा च कालत्रय त्रिलोकलक्षणवस्तुसद्भावग्रहणे अन्यत्रान्यदाग्रहीतसर्व

शक्तेः मदिरामदनकोद्रवादिभिरावरणोपपत्तेः नचेंद्रियस्यैतैरावरणमिन्द्रियाणामचेतनानामप्यनावृतप्रसक्त्वा
त् स्मृत्यादिप्रतिबंधायोगात् नापि मनसस्तैरावरणमात्मव्यतिरेकेणापरस्य मनसो निषेत्स्यमानत्वात् ततो नामू
र्तस्यावरणाभावः अतो नासिद्धं तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वं नापि विरुद्धं विपरीतनि
श्चिताविनाभावाभावात् नाप्यनैकांतिकं देशतः सामस्त्येन वा विपक्षे वृत्त्यभावात् विपरीतार्थोपस्थाभावात् ज
थेदमस्त्येव विवादापन्नः पुरुषो नाशेषज्ञो वक्तृत्वात् पुरुषत्वात् पाण्यादिमत्वाच्च रथ्यापुरुषवदिति नैतच्चारु वक्तृत्वा
देरसम्यग्घेतुत्वात् वक्तृत्वं हि दृष्टेष्टविरुद्धार्थवक्तृत्वं तदविरुद्धवक्तृत्वं वक्तृत्वसामान्यं वा गत्यंतराभावात् न प्रथमः पक्षः
सिद्धसाध्यतानुषंगान्नापि द्वितीयः पक्षः विरुद्धत्वात् तदविरुद्धवक्तृत्वं हि ज्ञानातिशयमंतरेण नोपपद्यत इति वक्तृत्व
सामान्यमपि विपक्षाविरुद्धत्वात् न प्रकृतसाधनायालम् ज्ञानप्रकर्षे वक्तृत्वापकर्षादर्शनात् प्रत्युत ज्ञानातिशयवतो
वचनातिशयवतोस्यैव संभवात् एतेन पुरुषत्वमपि निरस्तं पुरुषत्वं हि रागादिदोषदूषितं तदा सिद्धसाध्यता तद्दूषि
तं तु विरुद्धं वैराग्यविज्ञानादिगुणयुक्तपुरुषत्वस्याशेषज्ञत्वमंतरेणायोगात् पुरुषत्वसामान्यं तु संदिग्धविपक्षव्यावृत्ति

शयत्वमशेषज्ञस्येति यदुक्तं तद्ग्राहकस्यानुमानस्य संभवात् तथाहि कश्चित्पुरुषः सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभा
वत्वे सति प्रक्षीणप्रतिबंधप्रत्ययत्वात् यद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबंधप्रत्ययं तत्साक्षात्कारि यथापगततिमि
रं लोचनं रूपसाक्षात्कारि तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबंधप्रत्ययश्च विवादापन्नः कश्चिदिति सकलार्थग्रहण
स्वभावत्वं चेदश्चनात्मनोऽसिद्धं चोदनातः सकलपदार्थपरिज्ञानस्यान्यथायोगादंधस्येवादर्शाद्रूपप्रतीतेरिति व्या
प्तिज्ञानोत्पत्तिबलाच्चाशेषविषयज्ञानसंभवः केवलं वैशद्ये विवादः तत्र चावरणापाय एव कारणं रजोनीहाराद्यावृता
र्थज्ञानस्येव तदपगम इति प्रक्षीणप्रतिबन्धप्रत्ययत्वं कथमिति चेदुच्यते दोषावरणे क्वचिन्निर्मूलं प्रलयमुपव्रजतः
प्रकृष्यमाणहानिकत्वात् यस्य प्रकृष्यमाणा हानिः स क्वचिन्निर्मूलं प्रलयमुपव्रजति यथाग्निपुटपाकापसारितकिट्ट
कालिकाद्यंतरंगबहिरंगमलद्वयात्मनि हेम्नि मलमिति निर्ह्रासातिशयवती च दोषावरणे इति कथं पुनर्विवादाध्या
सितस्याज्ञानस्यावरणं सिद्धं प्रतिषेधस्य विधिपूर्वकत्वात् इति अत्रोच्यते विवादापन्नं सावरणं मविशय तया स्ववि
शयावबोधकत्वाद्रजोनीहाराद्यंतरितार्थज्ञानवत् न चात्मनो मूर्तत्वादावारकात् न संयोगः अमूर्तोयाऽपि चेतना

द्धवर्तमानविशयत्वाच्च नचाशेषवेदी संबद्धो वर्तमानश्चेति नाप्यनुमानात्तत्सिद्धिरनुमानं हि गृहीतसंबंधस्यैकदेश
दर्शनादसंन्निकृष्टेऽर्थे बुद्धिः नचसर्वज्ञसद्भावाविनाभाविकार्यलिंगंस्वभावलिंगंवासंपश्यामः तद्धि पूर्वं तत्स्वभावस्य त
त्कार्यस्यवा तत्सद्भावाविनिभाविनो निश्चेतुमशक्तेः नाप्यागमात्तत्सद्भावः सहि नित्योऽनित्योवा तत्सद्भावं भावयेत् नताव
न्नित्यः तस्यार्थवादरूपस्य कर्मविशेषावबोधकत्वायोगात् अनादेरागमस्यादिमत्पुरुषवाचकत्वाघटनाच्च ना
नागमः सर्वज्ञं साधयति तस्यापि तत्प्रणीतस्य तन्निश्चयमंतरेण प्रामाण्यानिश्चयात् इतरेतराश्रयत्वाच्च इतरप्रणी
तत्वेनासाविति प्रमाणाभावस्याशेषज्ञप्ररूपणसमर्थत्वं नितरामसंभाव्यमिति सर्वज्ञसदृशस्य परस्याग्रहणात्संभा
वनोपमानमनन्यथाभूतस्यार्थस्याभावान्नार्थापत्तिरपि सर्वज्ञावबोधिकेति धर्माद्युपदेशस्य व्यामोहादपि संभवात्
द्विधा ह्युपदेशः सम्यङ्मिथ्योपदेशभेदात् तत्र मन्वादीनां सम्यगुपदेशो यथार्थज्ञानोदयवेदमूलत्वात् बुद्धादीनां
व्यामोहपूर्वकः तदमूलत्वात् तेषामवेदार्थज्ञत्वात् ततः प्रमाणपंचकाविशयत्वादभावप्रमाणस्यैव प्रवृत्तिः तेन चाभाव
एव ज्ञायते सर्वज्ञस्य प्रत्यक्षादिप्रमाणपंचकस्याव्यापारादिति अत्र प्रतिविधीयते यत्तावदुक्तं प्रत्यक्षादिप्रमाणावि

कारणादिनाव्यभिचारइति कारणादिकारणं न परिच्छेद्यमिति तेन व्यभिचारः न ब्रूमः कारणत्वात् परिच्छेद्यत्वमपितु परिच्छे
द्यत्वमपि परिच्छेद्यत्वमपि परिच्छेद्यत्वात्कारणत्वमिति चेन्न तथापि केशोण्डुकादिना व्यभिचारात् इदानीमतीन्द्रियप्रत्य
क्षं व्याचष्टे सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यं सामग्री द्रव्यक्षेत्रकालभावलक्षणा तस्या
विशेषः समग्रता लक्षणस्तेन विश्लेषितानि अखिलान्यावरणानि येन तत्तथोक्तं किं विशिष्टं अतीन्द्रियमिन्द्रियाण्यतिक्रा
न्तं पुनरपि कीदृशमेवतः सामस्त्येन विशदं अशेषतो विशदे किं कारणमिति चेत् प्रतिबन्धाभाव इति ब्रूमः तत्रापि किं कारणमि
ति चेत् अतीन्द्रियत्वमनावरणत्वं चेति ब्रूमः एतदपि कुत इत्याह सावरणत्वे करणजन्यत्वे च प्रतिबन्धसंभवात् नन्ववधिम
नः पर्ययोरनेनासंग्रहादव्यापकमेतल्लक्षणमिति न वाच्यं तयोरपि स्वविषये अशेषतो विशदत्वादिधर्मसंभवान्नैवं सति
श्रुतयोरित्यतिव्याप्तिपरिहारः तदेतदिन्द्रियमवधिमनः पर्ययकेवलप्रभेदात्त्रिविधमपि मुख्यं प्रत्यक्षमात्मसंनिधिमा
त्रापेक्षत्वादिति नन्वशेषविषयविशदावभासित्वं तस्य तद्धतो वा प्रत्यक्षादिप्रमाणं पंचकाविषयत्वेनाभावप्रमाणवि
षयविध्वस्तशंकाकत्वात् कस्य मुख्यत्वं तथाहि नाध्यक्षमशेषज्ञविषयं तस्य रूपादिनीयतगोचरचारित्वात् सं

पीत्यर्थः उभयत्रापि प्रदीपस्यातज्जन्यस्यातदाकारधारिणोपि तत्प्रकाशकत्वं तथा ज्ञानस्यापीत्यर्थः ननु यद्यर्थादिज्ञा

स्यार्थरूपाननुकारिणो ज्ञानस्यार्थसाक्षात्कारित्वं तदा नियतदिग्देशकालवर्तिपदार्थप्रकाश

सर्वविज्ञानमप्रतिनियतविषयं स्यादिति शंकायामाह स्वावरणक्षयोपशमलक्षणयोग्यतया हि प्रतिनियतमर्थं

व्यवस्थापयति स्वानि च तान्यावरणानि च स्वावरणानि तेषां क्षय उदयाभावः तेषामेव सद्वस्था उपशमः ताविव

यस्याः योग्यतायाः तया हेतुभूतया प्रतिनियतमर्थं व्यवस्थापयति प्रत्यक्षमिति शेषः हि यस्मादर्थे यस्मादेव

कारणादित्यर्थः इदमत्र तात्पर्यं कल्पयित्वापि ताद्रूप्यं तदुत्पत्तिं तदध्यवसायं च योग्यतावश्याभ्युपगंतव्या ताद्रूप्यस्य

समानार्थैस्तदुत्पत्तेरिन्द्रियादिभिस्तद्द्वयस्यापि समानार्थसमनंतरप्रत्ययैर्व्यभिचारस्यापि शुक्ले शंखे पीतिका

नेन व्यभिचाराद्योग्यताश्रयणमेव श्रेय इति एतेन यदुक्तं परेण अर्थेन घटयत्येनां नहि मुक्त्वार्थरूपतां तस्मात्प्रमेया

प्रमाणरूपतेति तन्निरस्तं समानार्थाकारनानाज्ञानेषु मेयरूपतायाः सद्भावात् नच परेषां सारूप्यं नास्ति वस्तुभूत

ति योग्यतयैवार्थप्रतिनियम इति स्थितं इदानीं कारणं वा परिच्छेद्योऽर्थ इति मतं निराकरोति कारणस्य परिच्छेद्यत्वे

संग्रहाद्विनेयव्यामोह एव स्यात्तदियत्तानवधारणात् न च भगवतः परमकारुणिकस्य चेष्टा तद्व्यामोहाय एवं प्रभव
तीत्याशंकायामुच्यते नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवत् सुगममेतत् ननु यथालोकाभावाविनाभावितमसो
न्यस्याभावात्साधनविकलो दृष्टान्त इति नैवमेवं सति वा आलोकस्यापि तमोभावादन्यस्यासंभवात्तेजोद्रव्यसं
संभव इति विस्तरेणैतदलंकारे प्रतिपादितं बोद्धव्यं अत्रैव साध्ये हेत्वन्तरमाह तदन्वयव्यतिरेकानुविधानाभावा
च अत्र व्याप्तिः अयस्यान्वयव्यतिरेकौ नानुविधत्ते न तत्कारणकं यथा केशोण्डुकज्ञानं नानुविधत्ते च ज्ञानम
र्थान्वयव्यतिरेकाविति तथा आलोकेपि एतावान् विशेषस्तनक्तंचरदृष्टान्त इति नक्तंचरा मार्जारादयः ननु विज्ञान
मर्थजनितमर्थाकारं चार्थस्य ग्राहकम् तदुत्पत्तिमन्तरेण विषयं प्रतिनियमायोगात् तदुत्पत्तेरालोकादाविशिष्ट
त्वात्तद्रूपसहितायाः एव तस्यास्तं प्रति नियमहेतुत्वात् भिन्नकालत्वेपि ज्ञानज्ञेययोर्ग्राह्यग्राहकभावाविरोधात्
तथा चोक्तं भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः हेतुत्वमेव युक्तिज्ञास्तदाकारार्पणक्षममित्याशंकाप्रणेणं यामि
दमाह अतज्जन्यमपि तत्प्रदीपवत् प्रकाशकम् अर्थजन्यमप्यर्थप्रकाशमित्यर्थः अतज्जन्यत्वमुपलक्षणं तेन तदाका

कमिति अर्थः समीचीनः प्रवृत्तिनिवृत्तिरूपो व्यवहारः संव्यवहारः तत्रभवं सांव्यवहारिकं भूयः किंभूतमिन्द्रि
निन्द्रियनिमित्तं इंद्रियं चक्षुरादि अनिंद्रियं मनः तेनिमित्तं कारणं यस्य समस्तं व्यस्तं च कारणमभ्युपगंतव्यं
इंद्रियप्रधान्यादनिन्द्रियबलाधानादुपजातमिन्द्रियप्रत्यक्षमनिन्द्रियादेव विशुद्धिसाव्यपेक्षादुपजाय
मानमनिंद्रियप्रत्यक्षं तेनेन्द्रियप्रत्यक्षमवग्रहादिधारणापर्यंततया चतुर्विधमपि बह्वादिद्वादशभेदमष्टच
रिंशतसंख्यं प्रतीन्द्रियं प्रतिपत्तव्यमनिंद्रियप्रत्यक्षस्य चोक्तप्रकारेणाष्टचत्वारिंशद्भेदेन मनोनयन
नां चतुर्थमपीन्द्रियाणां व्यंजनावग्रहस्याष्टचत्वारिंशद्भेदेन च समुदितस्येन्द्रियानिन्द्रियप्रत्यक्षस्य षट्त्रि
दुत्तरात्रिशतीसंख्या प्रतिपत्तव्या ननु स्वसंवेदनभेदमन्यदपि प्रत्यक्षमस्य तत्कथं नोक्तमिति न वाच्यं
सुखादिज्ञानस्वरूपसंवेदनस्य मानसप्रत्यक्षत्वात् इंद्रियज्ञानरूपसंवेदनस्य चेन्द्रियसमक्षत्वादन्यथा
स्वव्यवसायायोगात् स्मृत्यादिस्वरूपसंवेदनं मानसमेवेति नापरं स्वसंवेदनं नामाध्यक्षमस्ति ननु प्रत्यक्षस्यो
द्भवकारणं वदतां ग्रंथकारेण यथा निन्द्रियवदर्थालोकावपि किं न कारणत्वेनोक्तौ तदवचने कारणानां साकल्यस्या

कल्पप्रमाणान्तरत्वमतिवर्तेत एतेन त्रिचतुःपंचषट्प्रमाणवादिनोपि सांख्याक्षपादप्रभाकरजैमिनीयाः स्वप्र
माणसंख्यानव्यवस्थापयितुंक्षमा इति प्रतिपादितमवगंतव्यमुक्तन्यायेन स्मृतिप्रत्यभिज्ञानतर्काणां वदभ्यु
पगतप्रमाणसंख्यापरिपंथित्वादिति प्रत्यक्षेतरभेदाद्वे एव प्रमाणे इति स्थितं ॥२॥ अथेदानीं प्रथमप्रमाण
भेदस्य स्वरूपं निरूपयितुमाह विशदं प्रत्यक्षमिति ज्ञानमिति वर्तते प्रत्यक्षमिति धर्मनिर्देशः विशदज्ञानात्म
कं साध्यं प्रत्यक्षादिति हेतुः तथाहि प्रत्यक्षं विशदज्ञानात्मकं एव प्रत्यक्षत्वात् यन्न विशदज्ञानात्मकं तन्न प्र
त्यक्षं यथा परोक्षं प्रत्यक्षं च विवादापन्नं तस्माद्विशदज्ञानात्मकमिति प्रतिज्ञार्थैकदेशासिद्धो हेतुरिति चेत् कः पु
नः प्रतिज्ञा तदेकदेशो वा धर्मिधर्मिसमुदायः प्रतिज्ञा तदेकदेशो धर्मी धर्मो वा हेतुः प्रतिज्ञार्थैकदेशासिद्ध इति
चेन्न धर्मिणो हेतुत्वे असिद्धत्वायोगात् धर्मिणो हेतुत्वे अनन्वयदोष इति चेत् न विशेषस्य धर्मित्वात् सामान्य
स्य च हेतुत्वात् तस्य विशेषमुममो विशेषनिष्ठत्वात् तस्य सामान्यस्य अथ साध्यधर्मस्य हेतुत्वे प्रतिज्ञार्थैकदे
शासिद्धत्वमिति तदप्यसंमतं साध्यस्य स्वरूपेणैवासिद्धत्वात् न प्रतिज्ञार्थैकदेशासिद्धत्वेन तस्यासिद्धत्वं धर्मिणो

व्यभिचारात् सपक्षेवृत्त्यभावाद्धेतोरनन्वयत्वस्यप्यसत् सर्वभावानां क्षणभंगसंगममेवांगत्रंगारमंगीकुर्वतां
तथागतानां सत्वादिहेतुनामनुदयप्रसंगात् विपक्षेबाधकप्रमाणाभावात् पक्षव्यापकत्वाच्चान्वयवत्वं प्रतिज्ञ
तेपिसमानं इदानीं स्वोक्तमेव विशदत्वं व्याचष्टे प्रतीत्यंतराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यमिति
एकस्याप्रतीतेरन्याप्रतीतिः प्रतीत्यंतरं तेनव्यवधानं तेनप्रतिभासनं वैशद्यं यद्यप्यवायस्यावग्रहेहाप्रतीतिभ्यां
व्यवधानं तथापिनपरोक्षत्वं विशयविशयिणोभेदेनाप्रतीतेः यत्र विशयविशयिणोभेदेसति व्यवधानंतत्रपरोक्ष
त्वं तर्हि अनुमानाध्यक्षविशयस्यैकात्मग्राह्यस्याग्नेरभिन्नस्योपलंभाद्ध्यक्षस्य परोक्षतेतितदप्ययुक्तंभि
न्नविशयत्वाभावात् विसदृशसामग्रीजन्याभिन्नविषयाप्रतीतिः प्रतीत्यंतरमुच्यते नान्यदितिनदोषः नकेव
लमेतदेव विशेषवत्तया वा प्रतिभासनं सविशेषवर्णसंस्थानादिग्रहणं वैशद्यं तच्च प्रत्यक्षं द्वेधामुख्यसं
वहारभेदादिति मनासिकृत्य मनसा व्यवहारीकप्रत्यक्षस्योत्पादिकां सामग्रीं तद्भेदं च प्राह इंद्रियाणानिं
द्रियनिमित्तं देशतः सांव्यवहारिकमिति विशदं ज्ञानमिति चानुवर्तते देशतो विशदंज्ञानमिति सांव्यवहारि

पादयेत् परस्य प्रत्यक्षेण गृहीतमशक्यत्वात् व्याहारादिकार्यप्रदर्शनात्तं प्रतिपद्यते इति चेत् ज्ञायतां तर्हि कार्यलि
कारणानुमानं अथ लोकव्यवहारापेक्षया एत एवानुवानपि परलोकादावेवानुपगमाद भावादिति कथं तदभा
वोनुपलब्धेः इति चेत् तदानुपलब्धिलिंगजनितमनुमानं परमापतितमिति प्रत्यक्षप्रामाण्यमपि स्वभावहेतुज्ञा
नानुमितिमंतरेण नोपपत्तिमियतीति प्रागेवोक्तमित्युपरम्यते तदप्युक्तं धर्मकीर्तिना प्रमाणेतरसामान्य
स्थितेरन्यधियो गतेः प्रामाणांतरसद्भावः प्रतिषेधाच्च कस्यचिदिति ततः प्रत्यक्षमनुमानमिति प्रमाणद्वयमेवे
ति सौगतः सोपि न युक्तवादी स्मृतेरविसंवादिन्या स्मृती याया: वर्णकिं प्रतिप्रमाणं न एवादनं ततः प्रमाणभूता
याः सद्भावात् स्मृतेरप्रमाण्यं न तथाप्यनुभूते नार्थे तस्य लंबनत्वोपपत्तेः अन्यथा प्रत्यक्षस्याप्यनुभूतार्थविष
यत्वादप्रामाण्यमनिवार्यं स्यात् स्वविषयावभासने स्मरणेप्यविशिष्टमिति किंच स्मृतेरप्रामाण्येनुमानवार्ता
विदुर्लभा तया व्याप्तेरविषयीकरणे तदुच्छामायोगादिति ततः इदं वक्तव्यं स्मृतिः प्रमाणं अनुमानप्रामाण्या
न्यथानुपपत्तेरिति सैव प्रत्यक्षानुमानस्वरूपतया प्रमाणस्य द्वित्वसंख्यानियमं विघटयतीति किं नश्छिन्नया तथा प्र

थापि भावात् प्राकट्यभिचार्येव ततः प्रत्यक्षमेवैकं प्रमाणमस्यैवाविसंवादकत्वादिति तदेतद्बालविलसितमिवा
स्युपपत्तिशून्यत्वात् तथाहि किमप्रत्यक्षस्योत्पादककारणाभावादालंबनाद्वा प्रामाण्यं निषिध्यते। तत्र न तावत्प्राथ
माकनः पक्षः तदुत्पादकस्य सुनिश्चितान्यथाउपपत्तिनियमनिश्चयलक्षणस्य साधनस्य सद्भावात् नो खलु द्विती
नः पक्षः स्वालंबनस्य पावकादेः सकलविचारचतुरचेतसि सर्वदा प्रतीयमानत्वात्। यदपि स्वभावहेतोर्व्य
भिचारसंवनमुक्तं तदप्यनुचितमेव स्वभावमात्रस्याहेतुत्वात् व्याप्यरूपस्यैव स्वभावस्य व्यापकं प्रति गमक
त्वाभ्युपगमात् न च व्याप्यस्य व्यापकव्यभिचारित्वं व्याप्यत्वविरोधप्रसंगात् किंचैव वाधितो नाध्यसंप्रा
तिष्ठते तत्राप्यविवादस्यागोपालमंगनस्य प्रामाण्याविनाभावित्वेन निश्चेतुमशक्यत्वात् यच्च कार्यहेतो
र्व्यथापि संभावनं तदप्याशिक्षितलक्षितं सुविवेचितस्य कार्यस्य कारणाव्यभिचारित्वात् यादृशो
लनकार्यो भूधरनितंबादावतिबहलधवलतया प्रसर्पन्नुपलभ्यते घटिकादाविति यदप्युक्तं शक्रमूर्ध्नि धूमस्या
थापि भाव इति तत्र शक्रमूर्द्धा अग्निस्वभावो सो धूमस्तत्र कथं भवेदिति किंच प्रत्यक्षं प्रमाणमिति कथमयं प्रति

शक्रमूर्द्ध्नि अग्निस्वभावोऽन्यथा वा यद्यग्निस्वभावस्तदाग्निरेवेति क[illegible]तदुद्भूत

अथ प्रमाणस्वरूपविप्रतिपत्तिं निरस्येदानीं संख्याविप्रतिपत्तिं प्रति क्षिपन् सकलप्रमाणभेदसंदर्भसंग्रहपरं प्रमाण

यत्ताप्रतिपादकं वाक्यमाह तद्द्वयमिति तच्छब्देन प्रमाणं परामृश्यते तत्प्रमाणं स्वरूपेणावगतं द्वेधाद्विप्रकारमेव सकलप्र

माणभेदानामत्रैवांतर्भावात् तद्द्वित्वं प्रत्यक्षानुमानप्रकारेणापि संभवतीति तदाशंकानिराकरणार्थं सकलप्रमाण

भेदसंग्रह[illegible]लिनीं संख्यां प्रव्यक्तीकरोति प्रत्य[illegible]दा इति प्रत्यक्षं वक्ष्यमाणलक्षणमितरत्परोक्षं ताभ्यां भेदा

भेदात् प्रमाणस्येति शेषः नहि परपरिकल्पितैकद्वित्रिचतुःपंचषट्प्रमाणसंख्यानियमे निखिलप्रमाणभेदाना

मंतर्भावविभावना शक्याकर्तुं तथाहि प्रत्यक्षैकप्रमाणवादिनश्चार्वाकस्य नाध्यक्षे लैंगिकस्यांतर्भावो युक्तः तस्य

तद्विलक्षणत्वात् सामग्रीस्वरूपभेदात् अथ नाध्यक्षं प्रमाणमस्ति विसंवादसंभावात् निश्चिताविनाभावाल्लिंगा

ल्लिंगिनि ज्ञानमनुमानमित्यानुमानिकशासनं तत्र च स्वभावलिंगस्य बहुलमन्यथापि भावो दृश्यते तथाहि कशाय

रसोपेता नीमे तद्देशकालसंबंधिनां दर्शनेपि देशांतरे कालांतरे द्रव्यांतरसंबंधे चान्यथापि दर्शनात् स्वभावहेतुव्य

भिचारो वल्लताचूतवत् लताशिंशपादिसंभावनाच्च तथा कार्यलिंगमपि गोपालघटिकादौ धूमस्य शक्रमूर्द्धनि चान्य

विशय एव परानपेक्षत्वव्यवस्थानात् अनभ्यस्ते तु जलमरीचिकासाधारणप्रदेशे जलज्ञानं परापेक्षमेव सत्यमिदं जलं
शिष्टाकारधारित्वात् यदेवं तत्तथा यथा दृष्ट एव सरोजगन्धत्वात् परिदृष्टजलवदित्यनुमानज्ञानाद्यर्थक्रियाज्ञानाद्व
सिद्धप्रामाण्यात् प्राचीनज्ञानस्य यथार्थत्वमाकल्पमेव कल्प्यत एव यदप्यभिहितं प्रामाण्यग्रहणोत्तरकालमुत्पत्ति
परिच्छित्ते विशेषो नाभावसत इति तत्र यदभ्यस्त विषये नाभावसत इत्युच्यते तदा न हि दृश्यत एव तत्र प्रथममेव निःसंशयं
परिच्छित्ति विशेषः पूर्वं प्रमाणाप्रमाणसाधारण्या एव परिच्छित्तेरुत्पत्तिः ननु प्रामाण्यपरिच्छित्त्योरभेदात्कथं पौर्वाप
र्यमिति नैवं नहि सर्वापि परिच्छित्तिः प्रामाण्यात्मिका प्रामाण्यं तु परिच्छित्त्यात्मकमेवेति न दोषः तदप्युक्तं बाधककारण
ज्ञानाभ्यां प्रामाण्यमपोद्यत इति तदपि फल्गु भाषितमेव प्रामाण्येऽपि तथा वक्तुं शक्यत्वात् तथाहि प्रथममप्रामाण्ये
ज्ञानमुत्पद्यते पश्चाद्बाधबोधगुणज्ञानोत्तरकालं तदपोद्यत इति तस्मात्प्रामाण्यमप्रामाण्यं वा स्वकार्ये क्वचिदभ्य
नभ्यासापेक्षया स्वतः परतश्चेति निर्णेतव्यमिति देवस्य संमतमपास्तसमस्तदोषं वीक्ष्य प्रपंचरुचिरं रचितं समस्य
नंदिविभुनाशिशुबोधहेतोर्मानस्वरूपममुना स्फुटमभ्यधायि ॥ इति परीक्षामुखलघुवृत्तौ प्रमाणस्वरूपो

भ्यो दोषाणामभाव इत्यत्र किंचिन्निबंधनमुत्पत्र किंचिन्निबंधनमुपलभ्यामोन्यत्र महामोहात् अथानुमाने त्रिरूपलिं
ग मात्र जनित प्रामाण्योपलब्धिरेव तत्र हेतुरिति चेन्न उक्तोत्तरत्वात् तत्र हि त्रैरूप्यमेव गुणो यथा नैहूकत्वं दोष इति
न्यासं मतो हेतुरपि वा प्रामाण्ये वक्तुं शक्यत एव तत्र हि दोषेभ्यो गुणा नाम भावस्तदभावाच्च प्रामाण्यासत्त्वे अ
प्रमाण्यमौत्सर्गिकमास्तु इत्यप्रामाण्यं स्वत एवेति तस्य भिन्नकारणप्रभवत्ववर्णनमुन्मत्तभाषितमेव स्यात् किं
च गुणेभ्यो दोषाणामभाव इत्यभिदधता गुणेभ्यो गुणा एवेत्यभिहितं स्यात् भावांतरस्वभावत्वादभावत्वादभावस्य
ततो प्रामाण्यासत्त्वं प्रामाण्यमेवेति नैतावता परपक्षः प्रतिक्षेपः अविरोधकित्वात् तथानुमानगुणः प्रतीयं
एव तथाहि प्रामाण्यं विज्ञानकारणातिरिक्तकारणप्रभवं विज्ञानान्यत्वे सति कार्यत्वात् अप्रमाणप्रामाण्यवत्
तथा प्रमाणप्रामाण्ये भिन्नकार एव जन्ये भिन्नकार्यत्वात् घटवस्त्रवदिति च ततः स्थितं प्रामाण्यमुत्पत्तौ परापेक्ष
मिति तथा विषयपरिच्छित्तिलक्षणे प्रवृत्तिलक्षणे वास्व कार्ये स्वगृहणं नापेक्षत इति नैकांतः क्वचिदभ्यस्तवि-

यावन्नज्ञानं तावद्वस्तुविषयात्स्वरूपं निवर्तयतीति  तदेतत्सर्वमनल्पतमोविलसितं  तथाहि  न तावदप्रामाण्यो
त्पत्तौ सामग्र्यंतरापेक्षत्वमसिद्धं नाप्तप्रणीतत्वलक्षणगुणसंन्निधाने सत्येवाप्तप्रणीतवचनेषु प्रामाण्यदर्श
यद्भावाभावाभ्यां यस्योत्पत्त्यनुत्पत्ती तत्तत्कारणकमिति लोकेपि सुप्रसिद्धत्वात्  यदुक्तं विधिमुखेन कार्यमुखेन गुणा
नाम प्रतीतिरिति  तत्र तावदाप्तप्रणीतशब्देन प्रतीतिर्गुणानामित्ययुक्तमाप्तप्रणीतत्वहानिप्रसंगात् ॥ अथ
चक्षुरादौ गुणानाम प्रतीतिरित्युच्यते तदप्ययुक्तं नैर्मल्यादिभिरप्युपलब्धेः  अथ नैर्मल्यं स्वरूपमेव न गुण
स्तदविनाभाववैकल्यमपि स्वरूपविकल्पमेव न दोष इति समानं  अथ वैकल्यमेव दोषस्तर्हि लिंगस्य चक्षुरादेर्वा
तत्स्वरूपसाकल्यमेव गुणः कथं न भवेत्  आप्तोक्तेपि शब्दे मोहादिलक्षणस्य दोषस्याभावमेव यथार्थज्ञानादि
लक्षणगुणसद्भावमभ्युपगच्छन्नन्यत्र तथा नेच्छतीति कथमनुन्मत्तः  अथोक्तमेव शब्दे गुणाः संतोपि न प्रमा
णोत्पत्तौ व्याप्रियंते  किंतु दोषाभाव एवेति सत्यमुक्तं किंतु न युक्तमेतत्  प्रतिज्ञामात्रेण साध्यसिद्धेरयोगात्  नहि गुणे

व्यनान्यथेति ॥ तत एवाप्तोक्तत्वगुणसद्भावेपि न तत्कृतमागमस्य प्रामाण्यं तत्र हि गुणेभ्यो दोषाणामभावस्तदभावाच्च संश
य विपर्यासलक्षणाप्रामाण्यद्वयासत्वे प्रामाण्यमौत्सर्गिकमनयोदितमास्त एवेति ततः स्थितं प्रामाण्यमुत्पत्तौ सामग्र्यं
तरसापेक्षमिति ॥ नापि विशयच्छित्तिलक्षणे स्वकार्यग्रहणसापेक्षमगृहीतप्रमाण्यादेव ज्ञानादिशयच्छित्तिलक्षण
कार्यदर्शनात् ननु परिच्छित्तिमात्रे प्रमाणकार्यं तस्य मिथ्याज्ञानेपि सद्भावात् । परिच्छित्तिविशेषं तु नागृहीतप्रमाणं वि
ज्ञानं जनयतीति तदपि बालविलसितं नहि प्रामाण्यगृहणोत्तरकालमुत्पत्स्यवस्यातः परिच्छित्तेर्विशेषोवभासते गृ
हीतप्रामाण्यादपि विज्ञानान्निर्विशय परिच्छेदोपलब्धेः ननु परिच्छित्तिमात्रस्य शक्तिकायां रजतज्ञानेपि सद्भावा
तस्यापि प्रमाणकार्यत्वप्रसंग इति चेत् भवेदेवं यद्यर्थान्यथात्वप्रसहस्वहेतूत्थदोषज्ञानाभ्यां तन्नापोद्येत तस्माद्य
त्र कारणदोषज्ञानं बाधकप्रत्ययो वा नोदेति तत्र स्वत एव प्रामाण्यमिति नचैवमप्रामाण्येप्याशंकनीयं तस्य विज्ञा
नकारणनिरिक्तदोषस्वभावसामग्रीसमपेक्षतयोत्पत्तेः निवृत्तिलक्षणे च स्वकार्ये स्वगृहणसापेक्षत्वात् ॥ नहि या

सति अदृष्टानुपायिकरणत्वात् प्रदीपभासुराकारवत् अथ भवतु नामोक्तलक्षणलक्षितं प्रमाणं तथापि तत्प्रामाण्यं स्वतः
परतो वा न तावत्स्वतः अविप्रतिपत्तिप्रसंगात् नापि परतोऽनवस्थाप्रसंगादिति मतः द्वयमाशंक्य तन्निराकरणेन स्वमत
मवस्थापयन्नाह तत्प्रामाण्यं स्वतः परतः श्चेति सोपस्कारा हि वाक्यानि भवंति ततइदं प्रति पत्तव्यमभ्यासदशायां
स्वतः
च परत इति तेन प्रागुक्तैकान्तद्वयनिरासः न चानभ्यासदशायां परतः प्रामाण्येऽप्यनवस्था समानाज्ञानान्तरस्याभ्यस्त
विषयस्य स्वतः प्रमाणभूतस्यांगीकरणात् अथवा प्रामाण्यमुत्पत्तौ परत एव विशिष्टकारणप्रभवत्वाद्धि विशिष्टका
र्यस्येति विषयपरिच्छित्तिलक्षणे प्रवृत्तिलक्षणे वास्वकार्ये अभ्यासेतरदशापेक्षया क्वचित्स्वतः परतश्चेति निश्चीयते
ननूत्पत्तौ विज्ञानकारणातिरिक्तकारणान्तरसव्यपेक्षत्वमसिद्धं प्रामाण्यस्य तदितरस्येवाभावात् गुणाख्यमस्तीति
वाग्मात्रं विधिमुखेन कार्यमुखेन वा गुणानामप्रतीतेः नाप्यप्रामाण्यं स्वत एव प्रामाण्यं तु परत एवेति पर्ययः शक्य
ते कल्पयितुमन्वयव्यतिरेकाभ्यां हि त्रिरूपाल्लिंगादेव केवलात् प्रामाण्यमुद्यमानं दृष्टं प्रत्यक्षादिष्वपि तथैव प्रतिपत्त-

णा
रागमेव प्रतीतिरित्यन्ये तेषांमतमखिलमपि प्रतीतिबाधितमिति दर्शयन्नाह कर्मवत्कर्तृकरणक्रियाप्रतीतेः
ज्ञानविशयभूतं वस्तु कर्माभिधीयते तस्यैव ज्ञप्तिक्रियाव्याप्यत्वात् तस्यैव तद्वत् तत्साकारणं प्रमाणं क्रियाप्रमि
तिः कर्ता च करणं च क्रिया च तासां प्रतिस्तस्या इतिहेतोः काप्रागुक्तानुभवोल्लेखे यथाक्रमं तत्प्रतीतिर्द्रष्टव्या
ननु शब्दपरामर्शसाविशेषं प्रति तिर्नवस्तुतत्त्वबलोपजाते सत्याह शब्दानुच्चारणेपि स्वस्यानुभवनमर्थवत् यथा
घटादिशब्दानुच्चारणेपि घटाद्यनुभवस्तथाह महमित्यायोपमतं मुखाकारतयाभासः सशब्दानुच्चारणेपि स्वय
मनुभूयत इत्यर्थः अनुमेवार्थमुपपत्ति पूर्वकं प्रतिसाक्षुठमाचष्टे कोवा तत्प्रतिभासनमर्थमध्यक्षमिच्छंस्तदेव
तदा नेच्छेत् । कोवा लौकिकः परीक्षकोवा तेन प्रतिभासितुं शीलं यस्य स तथोक्तस्तं प्रत्यक्षमिवन् विशयि धर्मस्य
विशयेउपचारात् तदेव ज्ञानमेव तथा प्रत्यक्षत्वेनमेठन् अपि तिष्ठेदिव अन्यथा अप्रमाणिकत्वप्रसंगः स्यादि
त्यर्थः अत्रोदाहरणमाह प्रदीपवत् इदमत्र तात्पर्यं ज्ञानं स्वातिरिक्तसजातीयार्थान्तरानपेक्षं प्रत्यक्षाद्यगुणत्वे

वृक्षस्य अथेदानीं सविशेषेण मर्थग्रहणं समर्थयमानः तदेव स्पष्टीकुर्वन्नाह अनिश्चितोपूर्वार्थइति ठ यः

दिव्यवच्छेदेनानध्यवसितः सोपूर्वार्थइत्यर्थः तेनेहाज्ञान विशयस्यावग्रहादिगृहीतत्वेपिनपूर्वार्थत्वं

हादिविशयभूतार्थांतर विशेष निश्चयाभावात् अथो कम्मकार एव पूर्वार्थः किमन्योप्यस्तीत्याह दृष्टोपि

तादृगिति दृष्टोपि गृहीतोपिध्यामलिताकारतयाय न्निर्णेतुं नशक्यते तदपि कस्व पूर्वमितिव्यप।

व समारोपाव्यवच्छेदात् ननुभवतु नामापूर्वार्थव्यवसायात्मकत्वं विज्ञानस्य व्यवसायं तुनविग्रइत्यत्राह ग ठः

प्रतिभासनं स्वस्यव्यवसाय इति स्वस्योन्मुखता स्वोन्मुखतातया स्वानुभवनतया प्रतिभासनं .

: ठ अत्रदृष्टांतमाह अर्थस्येवतदुन्मुखतयेति तच्छब्देनार्थोभिधीयते यथार्थोन्मुखतया प्रति

व्यवसायस्तथा स्वोन्मुखतया प्रतिभासनं स्वस्यव्यवसायोभवति अत्रोल्लेषमाह घटमहमात्मना वेमीति ननु

मर्थमेवाध्यवस्यति नत्वात्मानं मात्मानं लभ्यत्वं वेति केचित् फ नैयायिका। कर्तृकर्मणोरेव प्रतीतिरित्यपरे कर्तृकर्म

भवतीति न चैतत्सिद्धं हितप्राप्त्ये अहितपरिहाराय च प्रमाणमन्वेशयंति प्रेक्षापूर्वकारिणो नव्यसनितया सकलप्रमाण
वादिभिर्मत्वात् अत्राह सौगतः भवतु नाम संन्निकर्षादिव्यवच्छेदेन तस्यैव प्रामाण्यं न तदस्माभिर्निशिध्यते ननु व्य
वसायात्मकमेवेत्यत्र न युक्तिमुत्पश्यामः अनुमानस्यैव व्यवसायात्मनः प्रामाण्याभ्युपगमात् प्रत्यक्षस्य तु निर्विकल्प
त्वेप्यविसंवादकत्वेन प्रामाण्योपपत्तेः इति तत्राह तन्निश्चयात्मकं समारोपविरुद्धत्वादनुमानवदिति तत्प्रमाण
त्वेनाभ्युगतं वास्त्विति धर्मिनिर्देशः व्यवसायात्मकमिति साध्यं समारोपविरुद्धत्वादिति हेतुः अनुमानवदिति दृ
ष्टांत इति अयमभिप्रायः संशयविपर्यासानध्यवसायस्वभावसमारोपविरोधग्रहणलक्षणव्यवसायात्मकत्वे सत्येवा
विसंवादित्वमुपपद्यते अविसंवादित्वे च प्रमाणत्वमिति चतुर्विधस्यापि प्रत्यक्षस्य प्रमाणत्वमभ्युपगच्छता समारो
पविरोधग्रहणलक्षणं निश्चयात्मकमभ्युगंतव्यं ननु तथापि समारोपविरोधिव्यवसायात्मकत्वयोः समानार्थ
त्वात्कथं साध्यसाधनभाव इति न मंतव्यं ज्ञानस्वभावतया तयोरभेदेपि व्याप्यव्यापकत्वधर्माधारतया भेदोपपत्तेः शिंशप त्व

सिद्धो हेतुः स्यादिति चेन्न विशेषं धर्मिणं कृत्वा सामान्यहेतुं ब्रुवतां दोषाभावात् एतेनापक्षधर्मत्वमपिप्र
युक्तं सामान्यस्याशेषविशेषनिष्ठत्वात् नच पक्षधर्मतावलेनहेतोर्गमकत्वमपि त्वन्यथानुपपत्तिवलेनेति
साचात्र नियमवती विपक्षे बाधकप्रमाणवलान्निश्चितेव एतेन विरुद्धत्वमनैकांतिकत्वंच निरा बोद्धव्यं वि
रुद्धस्य व्यभिचारिणश्चाविनाभावनिश्चयलक्षणत्वा योगादतो भवत्येव साध्यसिद्धिरिति केवलव्यतिरेकेणापि
हेतोर्गमकत्वात् सात्मकं जीवच्छरीरं प्राणादिमत्वादित्यादिवत् अथेदानीं स्वोक्तप्रमाणलक्षणस्य ज्ञानमिति
विशेषणं समर्थयमानः प्राह हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणं ततो ज्ञानमेव तत् हितं सुखं कारणंच।
:खं तत्कारणंच हितं वाहितंच हिताहिते तयोः प्राप्तिश्च परिहारश्च तत्र समर्थं हि शब्दो यस्मादर्थे तेनयं
मर्थः संपादितो भवति यस्माद्धित प्राप्तिपरिहारसमर्थं प्रमाणं ततः तत्प्रमाणत्वेनाभ्युपगतं वस्तु ज्ञानमेव भवितुमर्हति
ज्ञानरूपं संनिकर्षादि तथा च प्रयोगः प्रमाणं ज्ञानमेव हिताहितप्राप्तिपरिहारसमर्थं च विवापन्नं तस्माद्ज्ञान

त्यक्षस्य निर्विकल्पस्य प्रत्यक्षत्वेन प्रामाण्यं सौगतैः परिकल्पितं तन्निरासार्थं व्यवसायात्मकग्रहणं तथा बहिरर्थाप
ह्नोतॄणां विज्ञानाद्वैतवादिनां पुरुषाद्वैतवादिनां पश्यतोहराणां शून्यैकान्तवादिनां च विपर्यासव्युदासार्थं पद
रणं अस्य चापूर्वविशेषणं ग्रहीतग्राहिधारावाहिज्ञानस्य प्रमाणतायाः परिहारार्थमुक्तं तथा परोक्षज्ञानवादिनां
मीमांसकानामस्वसंवेदनज्ञानवादिनां ज्ञानान्तरप्रत्यक्षज्ञानवादिनां यौगानां च मतमपाकर्तुं स्वपदोपादानमित्यव्या
प्त्यसंभवदोषपरिहारात् सुव्यवस्थितमेव प्रमाणलक्षणं अस्य च प्रमाणस्य यथोक्तलक्षणत्वे साध्ये प्रमाणत्वा
दिति हेतुः अत्रैव दृष्टव्यः प्रमातस्यापि हेतुपरत्वेन निर्देशोपपत्तेः प्रत्यक्षं विशदं ज्ञानमित्यादिवत् तथाहि
प्रमाणं स्वापूर्वार्थव्यवसायात्मकं ज्ञानं भवति प्रमाणत्वात् यत्तु स्वापूर्वार्थव्यवसायात्मकं ज्ञानं न भवति न तत्प्रमाणं
यथा संशयादिघटादिश्च प्रमाणं च विवादापन्नं तस्मात्स्वापूर्वार्थव्यवसायात्मकं ज्ञानमेव भवतीति न च प्रमाणत्वमसि
द्धं सर्वप्रमाणस्वरूपवादिनां प्रमाणसामान्ये विप्रतिपत्त्यभावात् अन्यथा स्वेष्टानिष्टसाधनदूषणायोगात् अथध

दिवाकरस्य नमस्कारपरता निधीयते अर्थस्य हेयोपादेयलक्षणसंसिद्धिज्ञप्तिर्भवति कस्मात्प्रमाणात्

तुष्टयस्वरूपांतरंगलक्षणादिस्वभावाबहिरंगलक्षणाच लक्ष्मीमाद्दित्युच्यते अणानमाणः शब्दःमाकआ

णाश्च माणो प्रकृष्टो माणो यस्यासो प्रमाणः हरिहराद्यसंभवि विभूतियुक्त दृष्टेष्टाविरुद्धवाक्भगवानर्हन्नि

निधीयत इत्यसाधारणगुणोपदर्शनमेव भगवतः संस्तवनमभिधीयते तस्मात्प्रमाणादवधिभूतादर्थसं

भवति तदाभासाच्च हरिहरादेरर्थसिद्धिर्न भवति इति हेतोः सर्वज्ञतदाभासयोर्लक्ष्मलक्षणमहं वक्ष्ये

विशेषस्यादिना अथेदानीमुपक्षिप्तप्रमाणतत्त्वस्वरूपसंख्याविषय फललक्षणासु चतसृषु विप्रति

षु मध्ये स्वरूपविप्रतिपत्तिनिराकरणार्थमाह स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणमिति प्रकर्षेण संश

व्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत्प्रमाणं तस्य च ज्ञानमिति विशेषणमज्ञानरूपस्य संन्निक

नैयायिकादिपरिकल्पितस्य प्रमाणत्वव्यवच्छेदार्थमुक्तं तथाज्ञानस्यापि स्वसंवेदनेन्द्रियमनोयोगिक

वदिति सत्यं प्रमाणतदाभासपदोपादानात् तदभिधेयमभिहितमेव प्रमाणतदाभासयोरनेन प्रकरणेनाधायत सं

बंधश्चार्थात् प्रकरणतदभिधेययोर्वाच्यवाचकभावलक्षणः प्रतीयत एव तथा प्रयोजनं चोक्तलक्षणं मादि

लक्षणे श्लोकेनैव संलक्ष्यते प्रयोजनं हि द्विधा भिद्यते साक्षात् परं पर्येति तत्र साक्षात् प्रयोजनं वक्ष्यते नाभिधी

यते शास्त्रव्युत्पन्नैरेव विनेयैरन्वेषणात् पारंपर्येणातु प्रयोजनमर्थसंसिद्धिरित्यनेनोच्यते शास्त्रव्युत्पन्नानन्तर

भावित्वात् अर्थसंसिद्धेरिति ननु निःशेषविघ्नोपशमनायेष्टदेवतानमस्कारः शास्त्रकृता कथं न कृत इति नवा

च्यं तस्य मनःकायाभ्यामपि संभवात् अथवा वाचनिकोपि नमस्कारोऽनेनैवादिवाक्येनाभिहितो वेदितव्यः

केषांचिद्वाक्यानामुभयार्थप्रतिपादनपरत्वेनापि दृश्यमानत्वात् यथा श्वेतो धावति इत्युक्ते श्वा इतो धा

वति श्वेतगुणयुक्तो धावति इत्यर्थद्वयप्रतीतिः तत्रागुणत्वमसिद्धं सर्वप्रमाणस्वरूपवादिनां प्रमाणसा

मान्ये विप्रतिपत्त्यभावात् अन्यथा स्वेष्टानिष्टसाधनदूषणायोगात् अथ धर्मिण एव हेतुत्वे प्रतिज्ञार्थैक

लाघवं मतिकृत मिह गृह्यते न परिमाणकृतं नापि कालकृतं तस्य प्रति पाद्यत्व व्यभिचारात् कयोस्तल्लक्ष्मतयोः
प्रमाणतदाभासयोः कुतः यतोर्थस्य परिच्छेद्यस्य संसिद्धिः संप्राप्तिर्वा भवति कस्मात् प्रमाणात् नकेवलं
संसिद्धिर्भवति विपर्ययो भवति अर्थसंसिद्ध्यभावो भवति कस्मात्तदाभावात् इतिशब्दो हेत्वर्थे इतिहे
तोः अय मत्र समुदायार्थः यतः कारणात् प्रमाणादर्थसंसिद्धिर्भवति यस्माच्च तदाभासाद्विपर्ययो भवति
हेतोस्तयो प्रमाण तदाभासयो लक्ष्म लक्षण मह वक्ष्ये ननु संबंधाभिधेय शक्यानुष्ठानेष्ट प्रयोजनवंति
शास्त्राणि भवंति तत्रास्य प्रकरणस्याभिधेयं संबंधो वा नाभिधीयते । न तावदस्यो पादेयत्वं भवितुमर्हति
वंध्यासुतो याति इत्यादि वाक्यवत् दशदाडिमादि वाक्यवच्च तथा शक्यानुष्ठानेष्ट प्रयोजन मपि शास्त्रादाव
यवक्तव्यमेव अशक्यानुष्ठानुष्ठानस्य इष्ट प्रयोजनस्य सर्वज्वर हर तक्षकचूडारत्नालंकारोपदेशस्येव प्रेक्ष्म
नादरणीयत्वात् । तथा शक्यानुष्ठानस्याप्यनिष्टप्रयोजनस्य विद्वद्भिरवधीरणात् मातृविवाहादिप्रदर्शकवाक्य

॥श्रीवीतरागायनमः॥ ॐनमः सिद्धेभ्यः॥ नतामरशिरोरत्नप्रभाप्रोतनखत्विषे॥ नमो जिनाय दुर्वारमारवीरनखच्छि
दे॥१॥ अकलंकवचोंभोधेरुद्दध्रे येन धीमता॥ न्यायविद्यामृतं तस्मै नमो माणिक्यनंदिने॥२॥ प्रभेंदुवचनोदारचं
द्रिकाप्रसरे सति॥ मादृशाः क्वनु गण्यन्ते ज्योतिरिंगणसन्निभाः॥३॥ तथापि तद्वचोपूर्वरचनारुचिरं सतां॥ चेतोहरं
भृतं यद्वन्नद्यानवघटेजलम्॥४॥ वैजेयप्रियपुत्रस्य हीरपस्योपरोधतः॥ शांतिषेणार्थमारब्धा परीक्षामुखपंचि
का॥५॥ श्रीमन्न्यायावारपारस्यामेयप्रमेयरत्नसारस्यावगाहनमव्युत्पन्नैः कर्तुं न पार्यते॥ इति तदवगाहनाय पोतप्राय
मिदं प्रकरणमाचार्यः प्राह॥ तत्प्रकरणस्य च संबंधादित्रयापरिज्ञाने प्रेक्षावतां प्रवृत्तिर्नस्यादिति तत्त्रयानुवादपुरस्सरं
वस्तुनिर्देशपरं प्रतिज्ञाश्लोकमाह॥ प्रमाणादर्थसंसिद्धिस्तदाभासाद्विपर्ययः॥ इति वक्ष्ये तयोर्लक्ष्म सिद्धमल्पं ल
घीयसः॥ इत्यस्यार्थः अहं वक्ष्ये प्रतिपादयिष्ये किं तत् लक्ष्म लक्षणं किंविशिष्टं लक्ष्म सिद्धं पूर्वाचार्यप्रसिद्ध
त्वात् पुनरपि कथंभूतमल्पमल्पग्रन्थवाच्यत्वात् ग्रंथतोल्पमर्थतस्तु महदित्यर्थः कान् लघीयसो विनेयानुद्दिश्य

तत्किंभवतः अभिमतंनेत्याह यद्यपिकथंचिद्व्यपदेशादिभेदहेत्वपेक्षयाद्रव्यादन्येतथापि
तद्व्यतिरेकात्तत्परिणामाच्चनान्याः यद्येवंसउच्यतांकःपरिणामइतितन्निश्चयार्थमिदमु
च्यते धर्म्मादीनिद्रव्याणियेनात्मनाभवंतितद्भावः तत्त्वंपरिणामइतिआख्यायते सद्विविधो
नादिरादिमांश्चतत्रानादिर्धर्म्मादीनांगत्युपग्रहादिसामान्यापेक्षयामणादिमांश्चभवतिवि
शेषापेक्षया॥७॥ इतितत्वार्थवृत्तौसर्वार्थसिद्धिसंज्ञिकायांपंचमोध्यायःसमाप्तः॥ ५॥

लोकंव्याप्यावस्थिताः उक्तंचलोयाकासप्रदेसेएक्केजेविदाहुएक्केकारदणाणंरासीविवत्तेकाला
णूमणेदव्वरूपा दिगुणविरहादमूर्तावर्तनालक्षणस्यमुख्यकालस्यप्रमाणमुक्तंपरिणामादिग
म्यस्यव्यवहारकालस्यकिंप्रमाणमितिअतइदमुच्यते॥सोनंतसमयः॥सांप्रतिकस्यैकसमयि
कत्वेप्यतीताअनागताश्चसमयाअनंतातीता।इतिकृत्वाअनंतसमयइत्युच्यते अथवामुख्यस्यै
वकालस्यप्रमाणावधारणार्थमिदमुच्यते अनंतपर्यायवर्तनाहेतुत्वादेकोपिका[illegible]लाणुरनंतद्र
व्युपचर्यते समयः पुनः परमनिरुद्धःकालांशस्तत्प्रचयविशेषआवलिकादिरवगंतव्यः आहगु
णपर्ययवद्द्रव्यंइत्युक्तंतत्रकेगुणाइत्यत्रोच्यते॥७॥द्रव्याश्रयानिर्गुणागुणाः॥द्रव्यमाश्रयोयेषांते
द्रव्याश्रयानिः क्रांतागुणेभ्योनिर्गुणाएवं उभयलक्षणोपेता इतिनिर्गुणइतिविशेषणंद्व्यणुका
दिनिवृत्त्यर्थंतान्यपिहिकारणभूतपरमाणुद्रव्याश्रयाणिगुणवंतितत्तस्मान्निर्गुणाइतिविशेषणा
त्तानिनिवर्तितानिभवंति ननुचपर्यायाअपिघटसंस्थानादयोद्रव्याश्रयानिर्गुणाश्चतेषाम
पिगुणत्वंप्राप्नोतिःद्रव्याश्रयाइतिवचनान्नित्यंद्रव्यमाश्रित्यवर्तंतेयतेगुणाइतिविशेषणत्वात्
पर्यायाश्चनिवर्तिताभवंति तेहिकादाचित्काइतिअसकृत्परिणामशब्दउक्तः तस्यकोर्थइ
तिप्रश्नेउत्तरमाह ७ तद्भावपरिणामः अथवागुणाद्रव्यादर्थांतरभूताइतिकेषांचिद्दर्शनं(

त् व्ययोदयौ परप्रत्ययौ अगुरुलघुगुणवृद्धिहान्यपेक्षया स्वप्रत्ययौ च तथा गुणा अपि कालस्य सा
धारणासाधारणरूपाः संति तत्रासाधारणा वर्तनाहेतुत्वं साधारणाश्चाचेतनत्वामूर्तत्वसूक्ष्म
त्वागुरुलघुत्वादयः पर्यायाश्च व्ययोत्पादलक्षणा योज्याः तस्मात् द्विप्रकारलक्षणोपेतत्वात्॥
आकाशादिवत् कालस्य द्रव्यत्वं सिद्धं तस्यास्तित्वलिंगं धर्मादिवत् व्याख्यातं वर्तनालक्षणः का
ल इति ननु किमर्थमयं कालः पृथगुच्यते ननु यत्रैव धर्मादयः तत्रैवायमपि वक्तव्यः अजीव
काया धर्माकाशकाल इति पुद्गला इति नैवं शंक्यं तत्रोपदेशे सति कायत्वमस्य स्यात् नेष्यते च मु
ख्योपचारप्रदेशप्रचयकल्पनाभावात् धर्मादीनां तावत् मुख्यप्रदेशप्रचय उक्तः असंख्येयाः प्रदे
शा इत्येवमादिना अणोरप्येकदेशस्य पूर्वोत्तरभावप्रज्ञापननयापेक्षया उपचारकल्पनया प्रदेश
प्रचय उक्तः कालस्य च पुनः द्विधापि प्रदेशप्रचयकल्पना नास्तीत्यकायत्वं अपि च तत्र पाठे निःक्रि
याणि चेत्यत्र धर्मादीनां आकाशांतानां निःक्रियत्वे प्रतिपादिते इतरेषां जीवपुद्गलानां सक्रियत्व
प्राप्तिस्तावत् कालस्यापि सक्रियत्वं स्यात् अथाकाशात् प्राक् काल उद्दिश्यते आ आकाशादेकद्रव्या
णीति एकद्रव्यत्वमस्य स्यात् तस्मात् पृथगिह कालोपदेशः क्रियते अनेकद्रव्यत्वे सति किमस्य प्र
माणं लोकाकाशस्य यावंतः प्रदेशाः तावंतः कालाणवः निःक्रिया एकैकाशः प्रदेशे एकैकवृत्त्या

व्यसंकरप्रसंगःस्यात् तद्यथाजीवःपुद्गलादिभ्यःज्ञानादिगुणैर्विशिष्यतेपुद्गलादयश्चरूपादिभिः
ततश्चाविशेषेसंकरस्यात् ततःसामान्यापेक्षयान्वयिनोज्ञानादयोजीवस्यगुणाः पुद्गलादीनांचरू
पादयःतेषांविकाराद्विशेषात्मनाभिद्यमानाःपर्यायाःघटज्ञानंपटज्ञानंक्रोधोमानःवर्णोगंधः तीव्रो
मंदइत्येवमादयःतेभ्यःअन्यत्वंकथंचिदापद्यमानःसमुदायोद्रव्यव्यपदेशभाक् यदिहिसर्वथा
समुदायोऽनर्थांतरभूतमेवस्यात् सर्वाभावःस्यात् तद्यथापरस्परविलक्षणानांसमुदायेसतिए
कानर्थांतरभावात्समुदायस्यसर्वाभावःपरस्परतोर्थांतरभूतत्वाद्यदिदंरूपंतस्मादर्थांतरभूतारसा
दयःततःसमुदायोअर्थांतरभूतःयश्चरसादिभ्योर्थांतरभूतात्रूपादनर्थांतरभूतःसमुदायःसक
थंरसादिभ्योर्थांतरभूतोनभवेत् ततश्चरूपमात्रंसमुदायःप्रशक्तःनचैकरूपंसमुदायोभवितु
मर्हति ततःसमुदयाभावाच्चतदनर्थांतरभूतानांसमुदायिनामप्यभावइतिसर्वाभावःएवंरसादिष्व
पियोज्यं तस्मात्समुदायमिच्छताकथंचिदर्थांतरभावःएषितव्यः उक्तानांद्रव्याणांलक्षणनिर्देशात्
तद्विषयएवद्रव्याध्यवसायेप्रशक्तेअनुक्तद्रव्यसंसूचनार्थमिदमाह॥३॥कालश्च॥ किंद्रव्यमिति
वाक्यशेषःकुतस्तल्लक्षणोपेतत्वात्तद्विविधलक्षणमुक्तंउत्पादव्ययध्रौव्ययुक्तंसत्गुणपर्ययव
द्रव्यमितिचतदुभलक्षणंकालस्यविद्यते तद्यथा ध्रौव्यंतावत्कालस्यस्वप्रत्ययंस्वभावव्यवस्थाना

योवंधोव्याख्यातः नसमगुणविषयइत्यत आह॥छ॥वंधेधिकौपारिणामिकौच॥अधिकारा
द्गुणशब्दःसंवध्यते अधिकगुणावधिकावितिभावांतरापादानंपारिणामिकत्वंक्लिन्नगुडवत्
यथाक्लिन्नोगुडोधिकमधुररसः पतितानांरेण्वादीनांस्वगुणोपादनात्पारिणामिकः तथा अ
न्योप्यधिकगुणअल्पीयसः पारिणामिकइतिकृत्वाद्विगुणादिस्निग्धरूक्षस्यचतुर्गुणादिस्नि
ग्धरूक्षःपारिणामिकोभवति ततःपूर्वावस्थाप्रच्यवनपूर्वकंतार्तीयीकमवस्थांतरंप्रादुर्भवतिइत्येक
त्वमुपपद्यतेइतरथाहिशुक्लकृष्णतंतुवत् संयोगेसत्यपिअपारिणामिकत्वात्सर्वंविविक्तरू
पेणैवावतिष्ठते उक्तेनपारिणामिकत्वेनविधिनावंधेपुनःसतिज्ञानावरणादीनांकर्म्मणांत्रिंश
त्सागरोपमकोटीकोट्यादिस्थितिरुपपन्नाभवति उत्पादव्ययध्रौव्ययुक्तंसदितिद्रव्यलक्षणमुक्तं
पुनरपरेणप्रकारेणद्रव्यलक्षणप्रतिपत्त्यर्थमाह॥छ॥गुणपर्ययवद्द्रव्यं॥गुणाश्चपर्ययाश्चगु
णपर्ययाःतेस्यसंतीतिगुणपर्ययवद्द्रव्यंअत्रमतोरुत्पत्तावुक्तएवसमाधिः कथंचिद्भेदाभेदो
पपत्तेरिति केगुणाःकेपर्ययाःअन्वयिनोगुणाव्यतिरेकिणःपर्यायाउभयैरुपेतंद्रव्यमिति उक्तं
च गुणइतिदव्वविधाणंदव्वविकारोछपज्जओभणिदो तेहिंअणूणंदव्वंअजुदपसिद्धंहवदिनिच्च
मिदं एतदुक्तंभवति द्रव्यंद्रव्यांतराद्येनविशिष्यतेसगुणस्तेनहितद्द्रव्यंविधीयते असतितस्मिंद्

वंधदृशग्रहणं किमर्थं गुणवैषम्ये वंधप्रतिपत्त्यर्थं सदृशग्रहणं क्रियते ऽतो विषमगुणानां तु
ल्यजातीयानामतुल्यजातीयानां च ऽनियमेन वंधप्रसक्तौ विशिष्टार्थसंप्रत्ययार्थमिदमुच्यते॥ ७॥
द्व्यधिकादिगुणानां तु॥ द्वाभ्यां गुणाभ्यामधिको द्व्यधिकः कः पुनरसौ चतुर्गुणः ऽआदिशब्दः प्रकारार्थः
कः पुनरसौ प्रकारार्थः द्व्यधिकता तेन त्रिगुणपंचगुणादीनां संप्रत्ययो भवति तेन द्व्यधिकादिगुणानां
तुल्यजातीयानामतुल्यजातीयानां च वंध उक्तो भवति नेतरेषां तद्यथा द्विगुणस्निग्धस्य परमाणोः एक
गुणस्निग्धेन द्विगुणस्निग्धेन त्रिगुणस्निग्धेन वा नास्ति वंधः चतुर्गुणस्निग्धेन पुनरस्ति वंधः तस्यैव पु
नः द्विगुणस्निग्धस्य पंचगुणस्निग्धेन षट्सप्ताष्टसंख्येयासंख्येयानंतगुणस्निग्धेन न वंधो
स्ति एवं त्रिगुणस्निग्धस्य पंचगुणस्निग्धेन वंधोस्ति शेषैः पूर्वोत्तरैर्न भवति चतुर्गुणस्निग्धस्य षड्गु
णस्निग्धेन ऽस्ति वंधः शेषैः पूर्वोत्तरैर्नास्ति एवं शेषेष्वपि योज्यः तथा द्विगुणरूक्षस्य एकद्वित्रिगु
णरूक्षेण नास्ति वंधः चतुर्गुणरूक्षेण त्वस्ति वंधः तस्यैव द्विगुणरूक्षस्य पंचगुणरूक्षादिभिः उत्तरैर्ना
स्ति वंधः एवं त्रिगुणरूक्षादीनामपि द्विगुणाधिकैर्वंधो योज्यः एवं भिन्नजातीयेष्वपि योज्यः उक्तं च
णिद्धस्स णिद्धेण दुराधियेण लुक्खस्स लुक्खेण दुराधिकेण णिद्धस्स लुक्खेण उवेदि वंधो जहण्णवज्जो वि
समे समे वा तु सद्दो विशेषणार्थः प्रतिषेधं व्यावर्तयति वंधं च विशेषयति किमर्थमधिकगुणविष

॰अणवोः परस्परश्लेषलक्षणोवंधेसति द्व्यणुकस्कंधोभवति एवंसंख्येयासंख्येयानंतप्रदेशस्कंधो
योज्यः तत्रस्नेहगुणएकद्वित्रिचतुःसंख्येयासंख्येयानंतविकल्पः तथारूक्षगुणोपि तद्गुणाः परमा
णवः संतियथा तोयाजागोमहिषी उष्ट्रीक्षीरघृतेषुस्निग्धगुणः प्रकर्षाप्रकर्षेणप्रवर्तते पांशुक
णिकाशर्करादिषुचरूक्षगुणोदृष्टः तथापरमाणुष्वपिस्निग्धरूक्षगुणयोर्वृत्तिः प्रकर्षाप्रकर्षे
णानुमीयते स्निग्धरूक्षगुणनिमित्तेवंधे॰अविशेषेणप्रशक्ते॰अनिष्टगुणनिवृत्त्यर्थमाह॥ ३४॥
जघन्यगुणानां॥ जघन्योनिकृष्टगुणोभागः जघन्योगुणोयेषांतेजघन्यगुणाः तेषांजघन्यगुणा
नांनास्तिवंधः तद्यथा एकगुणस्निग्धस्य एकगुणस्निग्धेनद्व्यादिसंख्येयासंख्येयानंतगुणस्नि
ग्धेनवानास्तिवंधः तस्यचैकगुणस्निग्धस्य एकगुणरूक्षेणद्व्यादिसंख्येयासंख्येयानंतगुणरू
क्षेणवानास्तिवंधः तथा एकगुणरूक्षस्यापियोज्यमिति एतौजघन्यगुणस्निग्धरूक्षौवर्जयित्वा
॰अन्येषांस्निग्धानांरूक्षाणांचपरस्परेणवंधोभवतीत्यविशेषेणप्रसंगेतत्रापिप्रतिषेधविषय
ख्यापनार्थमाह॥ ३५॥ गुणसाम्येसदृशानां॥ सदृशग्रहणंतुल्यजातीयसंप्रत्ययार्थं गुणसाम्यग्रह
णंतुतुल्यभागसंप्रत्ययार्थं एतदुक्तंभवति द्विगुणस्निग्धानांद्विगुणरूक्षैस्त्रिगुणस्निग्धानांत्रिगुणरू
क्षैः द्विगुणस्निग्धानांद्विगुणस्निग्धैर्द्विगुणरूक्षाणांद्विगुणरूक्षैश्चेत्येवमादिषुनास्तिवंधइति यद्ये

तंप्रयोजनाभावात् सतोप्यविवक्षाभवतीत्युपसर्ज्जनीभूतमनर्पितं इत्युच्यते ॥ अर्पितं च अनर्पितं
च अर्पितानर्पिते ताभ्यां सिद्धेः तस्यार्पितानर्पितसिद्धेर्नास्तिविरोधः तद्यथा एकस्य देवदत्तस्य
पितापुत्रोभ्राताभागिनेयः इति एवमादयः संबंधाजनकत्वजन्यत्वादिनिमित्ताः नविरुध्यंते अर्प्प
णाभेदात् पुत्रापेक्षयापितापित्रपेक्षयापुत्र इत्येवमादि तथा द्रव्यमपि सामान्यार्प्पणया नित्यं वि
शेषार्प्पणयानित्यमितिनास्तिविरोधः तौ च सामान्यविशेषौ कथंचिद्भेदाभेदाभ्यां व्यवहारहेतू भ
वतः अत्राह सतोनेकनयव्यवहारतंत्रत्वात् उपपन्ना भेदसंघातेभ्यः सतां स्कंधानामेवोत्पत्तिरि
दं तु संदिग्धं किं संघातः संयोगादेव द्व्यणुकादिलक्षणो भवति उत कश्चिद्विशेषोवध्रियत इत्युच्य
ते सति संयोगे बंधादेकत्वपरिणामकात् संघातो निष्पद्यते पद्येवमिदमुच्यतां कुतो नु खलु पुद्ग
लजात्यपरित्यागे संयोगे च भवति केषांचिद्बंधोप्यन्येषां च नेत्युच्यते यस्मात्तेषां पुद्गलात्माविशेषे
प्यनंतपर्यायाणां परस्परविलक्षणपरिणामाहितसामर्थ्यात् भवन्प्रतीतः ॥ स्निग्धरूक्षत्वाद्बंधः ॥ बाह्या
भ्यंतरकारणवशात् स्नेहपर्यायाविर्भावात् स्निग्धते स्मेति स्निग्धः तथा रूक्षणाद्रूक्षः स्निग्धश्च रू
क्षश्च स्निग्धरूक्षौ तयोर्भावः स्निग्धरूक्षत्वं स्निग्धत्वं चिक्कणगुणलक्षणपर्यायः तद्विपरीतपरिणा
मो रूक्षत्वं स्निग्धत्वरूक्षत्वात् इति हेतुनिर्देशः तत्कृतो बंधो द्व्यणुकादिपरिणामः द्वयोः स्निग्धरूक्षयोः

स्त्रयैः उत्पादव्ययध्रौव्ययुक्तं सत् उत्पादव्ययध्रौव्यात्मकमिति यावत् एतदुक्तं भवति उत्पादादी
नि त्रीणि द्रव्यस्य लक्षणानि द्रव्यं लक्ष्यं तत्र पर्यायार्थिकनयापेक्षया परस्परतो द्रव्याच्चार्थान्त
रभावः द्रव्यार्थिकनयापेक्षया व्यतिरेकेणानुपलब्धेरनर्थान्तरभाव इति लक्ष्यलक्षणभावा
भावसिद्धिः आह नित्यावस्थितान्यरूपाणीत्युक्तं तत्र न ज्ञायते किं नित्यमित्यत आह ॥३०॥
तद्भावाव्ययं नित्यं ॥ तद्भाव इत्युच्यते कस्तद्भावः प्रत्यभिज्ञानहेतुता तदेवेदमिति स्मरणं प्रत्यभि
ज्ञानं तदकस्मान्न भवतीति योऽस्य हेतुः स तद्भावः भवनं भावः तस्य भावस्तद्भावः येनात्मना प्राग्दृष्टं
वस्तु तेनैवात्मना पुनरपि भावात् तदेवेदमिति प्रत्यभिज्ञायते यद्यत्यन्तनिरोधोऽभिनवप्रादुर्भाव
मात्रमेव वा स्यात् ततः स्मरणानुपपत्तिः तदधीनो लोकसंव्यवहारो विरुध्यते ततस्तद्भावेना
व्ययं नित्यमिति निश्चीयते तत्कथंचिद्वेदितव्यं सर्वथा नित्यत्वे अन्यथाभावाभावात् संसारः त
द्विनिवृत्तिकारणप्रक्रियाविरोधः स्यात् ननु इदमेव विरुद्धं तदेव नित्यं तदेवानित्यमिति यदि नित्यं व्य
योदयाभावात् अनित्यताव्याघातः अथानित्यमेव स्थित्यभावात् नित्यताव्याघात इति नैतद्विरुद्धं
कुतः ॥३१॥ अर्पितानर्पितसिद्धेः ॥ अनेकान्तात्मकस्य वस्तुनः प्रयोजनवशाद्यस्य कस्यचित्
धर्म्मस्य विवक्षया प्रापितप्राधान्यं अर्पितमुपनीतमभ्युपगतमिति यावत् तद्विपरीतमनर्पि

पिकश्चिच्चाक्षुषः कश्चिदचाक्षुषः तत्र योऽचाक्षुषः स कथं चाक्षुषो भवतीति चेदुच्यते भेदसंघा
ताभ्यां चाक्षुषः न भेदादिति कात्रोपपत्तिरिति चेद्ब्रूमः सूक्ष्मपरिणामस्य स्कंधस्य भेदे सौक्ष्म्याप
रित्यागादचाक्षुषत्वमेव सौक्ष्मपरिणामः पुनरपरः सत्यपि तद्भेदेऽन्यसंघातांतरसंयोगात् सौक्ष्म्य
परिणामोपरमे स्थौल्योत्पत्तौ चाक्षुषो भवति आह धर्मादीनां द्रव्याणां विशेषलक्षणान्युक्तानि
सामान्यलक्षणं नोक्तं तद्वक्तव्यं किं सदित्यत आह ॥२९॥ सद्द्रव्यलक्षणमिति ॥ यत्सत्तद्द्रव्यमित्यर्थः
यद्येवं तदेव तावद्वक्तव्यं किं सदित्यत आह ॥३०॥ उत्पादव्ययध्रौव्ययुक्तं सत्॥ चेतनस्याचेतनस्य वा
द्रव्यस्य स्वां जातिमजहतः निमित्तवशाद्भावांतरावाप्तिः उत्पादनमुत्पादः मृत्पिंडस्य घटपर्यायवत्
तथा पूर्वभावविगमनं व्ययः यथा घटोत्पत्तौ पिंडाकृतेः अनादिपरिणामिकस्वभावेन व्ययोद
याभावात् ध्रुवति स्थिरीभवति इति ध्रुवः ध्रुवस्य भावः कर्म वा ध्रौव्यं यथा मृत्पिंडघटाद्यवस्था
सु मृदाद्यन्वयात् तैरुत्पादव्ययध्रौव्यैर्युक्तं उत्पादव्ययध्रौव्ययुक्तं सदिति आह भेदे सति युक्तशब्दो
दृष्टः दंडेन युक्तो देवदत्त इति तथा सति तेषां त्रयाणां युक्तस्य द्रव्यस्य च अभावः प्राप्नोति नैष दोषः
अभेदेऽपि कथंचिद्भेदनयापेक्षया युक्तशब्दो दृष्टः यथा सारयुक्तः स्तंभ इति तथा सति तेषां
मविनाभावात् सद्व्यपदेशो युक्तः समाधिवचनो वा युक्तशब्दः युक्तः समाहितः तदात्मक इ

॰आह किमेषां पुद्गलानां अणुस्कंधलक्षणः परिणामो नादिरुत आदिमानित्युच्यते स खलू
त्पत्तिमत्त्वादादिमान् प्रतिज्ञायते यद्येवं तस्मादभिधीयतां कस्मान्निमित्तादुत्पद्यंत इति तत्र स्कंधा
नां तावदुत्पत्तिहेतुप्रतिपादनार्थमुच्यते ॥२६॥ भेदसंघातेभ्य उत्पद्यंते ॥ संघातानां द्वितयनिमि
त्तवशाद्विदारणं भेदः पृथग्भूतानामेकत्वापत्तिः संघातः ननु च द्वित्वात् द्विवचनेन भवितव्यं ब
हुवचननिर्देशः तृतीयसंग्रहार्थः भेदात् संघातात् भेदसंघाताभ्यां च उत्पद्यंत इति तद्यथा द्व
योः परमाण्वोः संघातात् द्विप्रदेशस्कंध उत्पद्यते द्विप्रदेशस्याणोश्च त्रयाणां वा अणूनां संघा
तात् त्रिप्रदेशः द्वयोः द्विप्रदेशयोस्त्रिप्रदेशस्याणोश्च तुर्णां चाणूनां संघाताच्चतुः प्रदेशः एवं संख्ये
यासंख्येयानंतानां अनंतानंतानां च संघातात् तावत्प्रदेशः एषामेव भेदात् द्विप्रदेशपर्यंताः स्कंधा उ
त्पद्यंते एवं भेदसंघाताभ्यामेकसमयिकाभ्यां द्विप्रदेशादयः स्कंधा उत्पद्यंते अन्यतो भेदेन अन्यस्य सं
घातेनेति एवं स्कंधानामुत्पत्तिहेतुरुक्तः अणोरुत्पत्तिहेतुप्रदर्शनार्थमाह ॥२७॥ भेदादणुः ॥
सिद्धे विधिरारभ्यमाणो नियमार्थो भवति अणोरुत्पत्तिर्भेदादेव न संघातात् नापि भेदसंघाता
भ्यामिति आह संघातादेव स्कंधानां आत्मलाभे सिद्धे भेदसंघातग्रहणमनर्थकं इति तद्ग्रह
णप्रयोजनप्रतिपत्त्यर्थमाह ॥२८॥ भेदसंघाताभ्यां चाक्षुषः ॥ अनंतानंतपरमाणुसमुदायनिष्पाद्यो

पिकश्चिच्चाक्षुषः कश्चिदचाक्षुषः तत्रयोऽचाक्षुषः स कथं चाक्षुषो भवतीति चेदुच्यते भेदसंघा
ताभ्यां चाक्षुषः न भेदादिति का तत्रोपपत्तिरिति चेद्ब्रूमः सूक्ष्मपरिणामस्य स्कंधस्य भेदे सौक्ष्म्याप
रित्यागादचाक्षुषत्वमेव सौक्ष्मपरिणा(ण)तः पुनरपरः सत्यपि तद्भेदेन्यसंघातांतरसंयोगात् सौक्ष्म्य
परिणामोपरमे स्थौल्योत्पत्तौ चाक्षुषो भवति ॥ आह धर्मादीनां द्रव्याणां विशेषलक्षणान्युक्तानि
सामान्यलक्षणं नोक्तं तदुक्तव्यं किं सदित्यत आह ॥ २९ ॥ सद्द्रव्यलक्षणमिति ॥ यत्सत्तद्द्रव्यमित्यर्थः
यद्येवं तदेव तावद्वक्तव्यं किं सदित्यत आह ॥ ३० ॥ उत्पादव्ययध्रौव्ययुक्तं सत् ॥ चेतनस्याचेतनस्य वा
द्रव्यस्य स्वां जातिमजहतः निमित्तवशाद्भावांतरावाप्तिरुत्पादनमुत्पादः मृत्पिंडस्य घटपर्यायवत्
तथा पूर्वभावविगमनं व्ययः यथा घटोत्पत्तौ पिंडाकृतेः ॥ अनादिपारिणामिकस्वभावेन व्ययोद
याभावात् ध्रुवति स्थिरीभवतीति ध्रुवः ध्रुवस्य भावः कर्म्म वा ध्रौव्यं यथा मृत्पिंडघटाद्यवस्था
सु मृदाद्यन्वयात् तैरुत्पादव्ययध्रौव्यैर्युक्तं उत्पादव्ययध्रौव्ययुक्तं सदिति ॥ आह भेदे सति युक्तशब्दो
दृष्टः दंडेन युक्तो देवदत्त इति तथा सति तेषां त्रयाणां युक्तस्य द्रव्यस्य च अभावः प्राप्नोति नैष दोषः
अभेदेपि कथंचिद्भेदनयापेक्षया युक्तशब्दो दृष्टः यथा सारयुक्तः स्तंभ इति तथा सति तेषां
मविनाभावात् सत् व्यपदेशो युक्तः समाधिवचनो वा युक्तशब्दः युक्तः समाहितः तदात्मक इ

त्वं वा रसः स पंचविधः तिक्ताम्लकटुमधुरकषायभेदात् गंध्यते गंधनमात्रं वा गंधः स द्वेधा सुरभिर
सुरभिश्च वर्ण्यते वर्णनमात्रं वा वर्णः स पंचविधः कृष्णनीलपीतशुक्ललोहितभेदात् त एते मूलभेदाः
प्रत्येकं संख्येया संख्येयानंतभेदाश्च भवंति स्पर्शश्च रसश्च गंधश्च वर्णश्च स्पर्शरसगंधवर्णाः त ए
तेषां संतीति स्पर्शरसगंधवर्णवंत इति नित्ययोगे मतुनिर्देशः यथा क्षीरिणो न्यग्रोधा इति ननु च रू
पिणः पुद्गला इत्यत्र पुद्गलानां रूपवत्त्वमुक्तं तदविनाभाविनश्च रसादयः तत्रैव परिगृहीता इति व्याख्या
तं तस्मात्तेनैव पुद्गलानां रूपादिमत्त्वसिद्धेः सूत्रमिदमनर्थकमिति नैष दोषः नित्यावस्थितान्यरूपा
णीत्यत्र धर्म्मादीनां नित्यत्वादिनिरूपणेन पुद्गलानामरूपत्वप्रसंगे तदयाकरणार्थं तदुक्तं इदं तु ते
षां स्वरूपविशेषप्रतिपत्त्यर्थमुच्यते ऽवशिष्टपुद्गलविकारप्रतिपत्त्यर्थमिदमुच्यते छ ॥ शब्दबं
धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवंतश्च ॥ शब्दो द्विविधो भाषालक्षणो विपरी
तश्चेति भाषालक्षणो द्विविधः साक्षरोऽनक्षरश्चेति ऽक्षरीकृतः शास्त्राभिव्यंजकः संस्कृत
विपरीतभेदार्यम्लेच्छव्यवहारहेतुः ऽनक्षरात्मको द्वींद्रियादीनां ऽतिशयज्ञानस्वरूपप्रतिपाद
नहेतुः स एष सर्वः प्रायोगिकः ऽभाषात्मको द्विविधः प्रायोगिको वैस्रसिकश्चेति वैस्रसिको व
लाहकादिप्रभवः प्रयोगजश्चतुर्द्धा ततविततघनसौषिरभेदात् तत्र चर्म्मतननिमित्तः पुष्करभे

दी दर्दुरादिप्रभवः ततः तंत्रीकृतवीणासुघोषादिसमुद्भववितत: तालघंटालालनाद्यभिघा
तजः घनः वंशशंखादिनिमितः सौषिरः वंधो द्विविधः वैस्रसिकः प्रायोगिकश्च पुरुषप्रयो
गानपेक्षो वैस्रसिकः तद्यथा स्निग्धरूक्षत्वगुणनिमितः विद्युदुल्काजलधराग्निंद्र धनुरादि
विषयः पुरुषप्रयोगनिमितः प्रायोगिकः ऽजीवविषयो जीवाजीवविषयश्चेति द्विधाभि
न्नः तत्राजीवविषयः जतुकाष्ठादिलक्षणः जीवाजीवविषयः कर्मनोकर्मवंधः सौक्ष्म्यं द्वि
धं ऽन्त्यमापेक्षिकंच तत्रांत्यं परमाणूनां ऽपेक्षिकं विल्वामलकवदरादीनां स्थौल्यमपि द्वि
विधं ऽन्त्यमापेक्षितंचेति तत्रांत्यं जगद्व्यापि ऽन्यत्रोक्तं मिस्रा स्कंधे ऽपेक्षिकंच वदरामल
कविल्वतालादिषु संस्थानमाकृतिः तत् द्विविधमित्थंलक्षणमनित्थंलक्षणं चेति वृत्तत्र्यस्र
चतुरस्रायतपरिमंडलादिरित्थंलक्षणं ऽतोन्यन्मेघादीनां संस्थानमनेकविधं इत्थमिति
निरूपणाभावादनित्थंलक्षणं भेदः षोढा उत्करचूर्णखंडचूर्णिकाप्रतराणुचटनविकल्पात्
तत्रोत्करः काष्ठादीनां करपत्रादिभिरुत्करणं चूरणो यवगोधूमादीनां शक्तुकणिकादिः खं
डो घटादीनां कपालशर्करादिः चूर्णिका माषमुद्गादीनां प्रतरो ऽभ्रपटलादीनां ऽणुचटनं
संतप्तायस्पिंडादिषु ऽयोघनादिषु ऽभिहन्यमानेषु स्फुलिंगनिर्गमः तमो दृष्टिप्रतिवं

धकरणं प्रकाशविरोधि छायाप्रकाशावरणनिमित्ता साद्वेधा वर्णादिप्रकारपरिणता प्रतिबिं
बमात्रात्मिका चेति आतप आदित्यादिनिमित्त उष्णप्रकाशलक्षणः उद्योतः चंद्रमणिखद्योता
दिप्रभवः प्रकाशः त एते शब्दादयः पुद्गलद्रव्यविकारास्त एतेषां संतीति शब्दबंधसौक्ष्म्यस्थौ
ल्यसंस्थानभेदतमः छायाद्योततयोवंतः पुद्गला इत्यभिसंबध्यंते चशब्देन नोदनाभिघा
तादयः पुद्गलपरिणामा आगमे प्रसिद्धाः समुच्चीयंते उक्तानां पुद्गलानां भेदप्रदर्शनार्थमाह
॥ अणवः स्कंधाश्च॥ प्रदेशमात्रभाविस्पर्शादिपर्यायप्रसवसामर्थ्येनाण्यंते शब्द्यंते इति
अणवः सौक्ष्म्यादात्मादयः आत्मामध्या आत्मांताश्च उक्तं च अत्तादि अत्तमज्झं अत्तंतं नेव
इंदियगेज्झं जं दव्वं अविभागी तं परमाणु वियाणाहि स्थूलभावेन ग्रहणनिक्षेपणादिव्यापार
स्कंधा इति संज्ञायंते रूढौ क्रिया क्वचित्सती उपलक्षणत्वेनाश्रीयत इति ग्रहणादिव्यापारायो
ग्येष्वपि द्व्यणुकादिषु स्कंधाख्या संज्ञा प्रवर्तते अनंतभेदा अपि पुद्गला अणुजात्या स्कंधजात्या
च द्वैविध्यमापद्यमानाः सर्वे गृह्यंत इति तज्जात्याधारानंतभेदसंसूचनार्थं बहुवचनं क्रियते अ
णवः स्कंधा इति भेदाभिधानं पूर्वोक्तसूत्रद्वयभेदसंबंधनार्थं स्पर्शरसगंधवर्णवंतो णवः स्कं
धाः पुनः शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवंतश्च स्पर्शादिवंतश्चेति

॰आह किमेषां पुद्गलानां अणुस्कंधलक्षणः परिणामो नादिरुत आदिमानित्युच्यते स खलु
त्पत्तिमत्त्वादादिमान् प्रतिज्ञायते यद्येवं तस्मादभिधीयतां कस्मान्निमित्तादुत्पद्यंत इति तत्र स्कंधा
नां तावदुत्पत्तिहेतुप्रतिपादनार्थमुच्यते॥७॥ भेदसंघातेभ्य उत्पद्यंते॥ संघातानां द्वितयनिमि
त्तवशाद्विदारणं भेदः पृथग्भूतानामेकत्वापत्तिः संघातः ननु च द्वित्वात् द्विवचनेन भवितव्यं ब
हुवचननिर्देशः ततीयसंग्रहार्थः भेदात् संघातात् भेदसंघाताभ्यां च उत्पद्यंत इति तद्यथा द्व
योः परमाण्वोः संघातात् द्विप्रदेशस्कंध उत्पद्यते द्विप्रदेशस्याणोश्च त्रयाणां वा अणूनां संघा
त्रि तात् त्रिप्रदेशः द्वयोः द्विप्रदेशयोस्त्रिप्रदेशस्याणोश्च तुर्णां चाणूनां संघाताच्चतुः प्रदेश एवं संख्ये
यासंख्येयानंतानां अनंतानंतानां च संघातात्तावत्प्रदेशः एषामेव भेदात् द्विप्रदेशपर्यंताः स्कंधा उ
त्पद्यंते एवं भेदसंघाताभ्यामेकसमयिकाभ्यां द्विप्रदेशादयः स्कंधा उत्पद्यंते अन्यतो भेदः नान्यस्य सं
घातेनेति एवं स्कंधानामुत्पत्तिहेतुरुक्तः अणोरुत्पत्तिहेतुप्रदर्शनार्थमाह॥७॥ भेदादणुः॥
सिद्धे विधिरारभ्यमाणो नियमार्थो भवति अणोरुत्पत्तिर्भेदादेव न संघातात् नापि भेदसंघाता
भ्यामिति आह संघातादेव स्कंधानां आत्मलाभे सिद्धे भेदसंघातग्रहणमनर्थकं इति तद्ग्रह
णप्रयोजनप्रतिपत्त्यर्थमाह॥७॥ भेदसंघाताभ्यां चाक्षुषः॥ अनंतानंतपरमाणुसमुदायनिष्पाद्यो

ता

कालस्यास्तित्वंगमयइति कुतोगौणस्यमुख्यापेक्षत्वात् द्रव्यस्यपर्यायः धर्मान्तरनिवृत्तिः धर्मान्तर
जनकरूपः अपरिस्पंदात्मकः परिणामः जीवस्यक्रोधादिः पुद्गलस्यवर्णादिः धर्माधर्माकाशानां
अगुरुलघुगुणवृद्धिहानिकृतः क्रियापरिस्पंदात्मिकासाद्विधाप्रायोगवैस्रसिकभेदात् तत्रप्रायोगि
कीशकटादीनांवैस्रसिकीनिमितामेघादीनांपरत्वापरत्वेक्षेत्रकृतेकालकृतेचस्तः तत्रकालोपकार
प्रकरणोक्तत्वात्कालकृतेगृह्येतेएतेवर्तनादयः उपकाराः कालस्यास्तित्वंगमयंतिननुवर्तनाग्रहण
मेवास्तुतद्भेदाः परिणामादयः तेषांपृथग्ग्रहणमनर्थकंनानर्थकंकालद्वयसूचनार्थत्वात् प्रपंचस्यका
लोहिद्विविधः परमार्थः कालोव्यवहारकालश्च परमार्थकालोवर्तनालक्षणः परिणामादिलक्षणोव्य
वहारकालः अन्येनपरिच्छिन्नअन्यस्यपरिच्छेदहेतुः क्रियाविशेषः कालइतिव्यवह्रियते सत्रेधाव्य
वतिष्ठतेभूतोवर्तमानोभविष्यन्निति तत्रपरमार्थकालेकालव्यपदेशोमुख्यः भूतादिव्यपदेशोगौणः व्य
वहारकालेभूतादिव्यपदेशोमुख्यः कालव्यपदेशोगौणः क्रियावद्द्रव्यापेक्षत्वात् कालकृतत्वाच्च अत्रा
ह धर्माधर्माकाशपुद्गलजीवकालानांउपकाराउक्ताः लक्षणंचोक्तंउपयोगोलक्षणमित्येवमादिपुद्
लानांतुसामान्यलक्षणमुक्तंविशेषलक्षणंनोक्तंतत्किमित्यत्रोच्यते॥२३॥स्पर्शरसगंधवर्णवंतः पुद्गलाः॥
स्पर्श्यतेस्पर्शनमात्रंवास्पर्शः सोष्टविधः मृदुकठिनगुरुलघुशीतोष्णस्निग्धरूक्षभेदात् रस्यतेरसनमा

दिभावेन वृत्तिः परस्परोपग्रहः। स्वामी तावद्वित्तत्यागादिना भृत्यानामुपकारे वर्तते भृत्यश्च हितप्रतिपादनेनाहितप्रतिषेधेन च। आचार्य उभयलोकफलप्रदोपदेशदर्शनेन तदुपदेशविहितक्रियानुष्ठापनेन च शिष्याणामनुग्रहे वर्तते शिष्या अपि तदानुकूल्यवृत्त्या उपकाराधिकारे पुनरुपग्रहवचनं किमर्थं पूर्वोक्तसुखादिचतुष्टयप्रदर्शनार्थं पुनरुपग्रहवचनं क्रियते। सुखादीन्यपि जीवानां जीवकृत उपकार इति। आह यद्यवश्यं सतो उपकारिणा भवितव्यं संश्च कालोभिमतः तस्य क उपकार इति अत्रोच्यते॥ वर्तनापरिणामक्रियापरत्वापरत्वे च कालस्य॥ २२॥ वृतेर्णिजन्तात् कर्म्मणि भावे वा युट् स्त्रीलिंगे वर्तते नेति भवति वर्त्यते वर्तनमात्रं वा वर्तनेति। धर्म्मादीनां द्रव्याणां स्वपर्यायनिर्वृत्तिं प्रति स्वात्मनैव वर्तमानानां बाह्योपग्रहाद्विना तद्वृत्त्यभावात् तत्प्रवर्तनोपलक्षितः काल इति कृत्वा वर्तना कालस्योपकारः। को णिजर्थः वर्तते द्रव्यपर्यायः तस्य वर्तयिता कालः। यद्येवं कालस्य क्रियावत्त्वं प्राप्नोति यथा शिष्योऽधीते उपाध्यायोऽध्यापयतीति। नैष दोषः निमित्तमात्रेऽपि हेतुकर्तृव्यपदेशो दृष्टः यथा कारीषोऽग्निरध्यापयतीति एवं कालस्य हेतुकर्तृता। स कथं काल इत्यवसीयते समयादीनां क्रियाविशेषाणां समयादिभिर्निर्वर्त्यमानानां च पाकादीनां समयः पाक इति एवमादिस्वसंज्ञारूढिसद्भावेऽपि समयः काल ओदनपाककाल इति अध्यारोप्यमाणः कालव्यपदेशः तद्व्यपदेशनिमित्तस्य मुख्यस्य

तत्रवक्ष्यते इदंतुजीवान्प्रतिपुद्गलानामुपकारप्रतिपादनार्थमेवेति उपकारप्रकरणे उ
च्यते शरीराणि उक्तानि उदारिकादीनि सौक्ष्म्यादप्रत्यक्षाणि तदुदयोपपादितवृत्तीन्युपचयशरी
राणि कानिचित्प्रत्यक्षाणि कानिचिदप्रत्यक्षाणि एतेषां कारणभूतानि कार्माणयपि शरीरग्र
हणे न गृह्यंते एतानि पौद्गलिकानीति कृत्वा जीवानामुपकारे पुद्गलाः प्रवर्तंते स्यान्मतं कार्मण
मपौद्गलिकं अनाकारत्वात् आकारवतां ऊहारिकानां पौद्गलिकत्वं युक्तमिति तन्न तदपि पौद्गलि
कमेव तद्विपाकस्य मूर्तिमत्संबंधनिमित्तत्वात् दृश्यते हि ब्रीह्यादीनां उदकादिद्रव्यसंबंधप्रापितप
रिपाकानां पौद्गलिकत्वं तथा कार्मणमपि गुडकंटकादि मूर्तिमद्द्रव्योपनिपाते सति विपच्यमानत्वा
त् पौद्गलिकमित्यवसेयं वाक् द्विविधा द्रव्यवाक् भाववागिति तत्र भाववाक् तावत् वीर्यांतरायम
तिश्रुतज्ञानावरणक्षयोपशमांगोपांगनामलाभनिमित्तत्वात् पौद्गलिकी तदभावे तद्वृत्त्यभावात्
तत्सामर्थ्योपेतेन क्रियावतात्मनाप्रेर्यमाणाः पुद्गलाः वाक्त्वेन विपरिणमंत इति द्रव्यवागपि पौद्गलि
की श्रोत्रेंद्रियविषयत्वात् इतरेंद्रियविषया कस्मान्न भवति तद्ग्रहणायोग्यत्वात् घ्राणग्राह्ये गंधद्र
व्ये रसानुपलब्धिवत् अमूर्ता वागिति चेत् न मूर्तिमद्ग्रहणावरोधव्याघाताभिभवादिदर्शनात् मूर्ति
मत्वसिद्धेः मनो द्विविधं द्रव्यमनो भावमनश्चेति भावमनस्तावल्लब्ध्युपयोगलक्षणं पुद्गलावलंब

हः ॰आकाशस्योपकारोवेदितव्यः॰आहजीवपुद्गलानांक्रियावतामवगाहिनामवकाशदानंयुक्तं
धर्म्मास्तिकायादयः पुनर्न्निःक्रियानित्यसंबंधास्तेषांकथमवगाहइतिचेत् नोपचारतस्तत्सिद्धेः
यथागमनाभावेपिसर्वगतमाकाशमित्युच्यतेसर्वत्रसद्भावात् एवंधर्म्माधर्म्मावपि॰अवगाह
नक्रियाभावेपिसर्व्वत्रव्याप्तिदर्शनात् ॰अवगाहिनावित्युपचर्येते ॰आहयद्यवकाशदानमस्यस्व
भावःवज्रादिभिर्लोष्ठादीनांभित्त्यादिभिर्गवादीनांचव्याघातोनप्राप्नोतिदृश्यतेचव्याघातःतस्मादस्या
वकाशदानंहीयतइतिनैषदोषः वज्रलोष्ठादीनांस्थूलानांपरस्परंव्याघातइतिनास्यावकाशदा
नसामर्थ्यंहीयते तत्रावगाहिनामेवव्याघाताभावाद्वज्रादयः पुनः स्थूलत्वात्परस्परंप्रत्यवका
शदानंनकुर्वंतीतिनासावाकाशदोषः येखलुपुद्गलाःसूक्ष्मातेपिपरस्परंप्रत्यवकाशदानंकुर्वंतिपद्ये
वंनेदमाकाशस्यासाधारणंलक्षणमितरेषामपितत्सद्भावादिति तन्नसर्व्वपदार्थानांसाधारणाव
गाहनहेतुत्वमस्यासाधारणंलक्षणमितिनास्तिदोषः ॰अलोकाकाशेतदभावादभावइतिचेत् नस्व
भावापरित्यागात् ॰अतउक्तं॰आकाशस्योपकारः॰अथतदनंतरोदिष्टानांकउपकारइत्यत्रोच्यते॥१७॥
शरीरवाङ्मनःप्राणापानाःपुद्गलानां॥इदमयुक्तंवर्त्ततेकिमत्रायुक्तंपुद्गलानांकउपकारइतिपरि
प्रश्नेपुद्गलानांलक्षणमुच्यतेभवताशरीरादीनिपुद्गलमयानीति नैतदयुक्तंपुद्गलानांलक्षणंउ

श्लेष्मणावाभिभवः नवौमूर्तस्यमूर्तिमद्भिरभिघातादयःस्युः॰अतएवात्मास्तित्वसिद्धिःयथा
यंत्रप्रतिमाचेष्टितंप्रयोक्तुरस्तित्वंगमयतितथाप्राणापानादिकर्म्मापिक्रियावंतमात्मानंसाध
यति किमेतावानेवपुद्गलकृतउपकारः॰आहोस्विदन्योप्यस्तीत्यत॰आह॥सुखदुःखजीवितमर
णोपग्रहाश्च॥सदसद्वेद्योदये॰अंतरंगहेतौसतिबाह्यद्रव्यादिपरिपाकनिमित्तवशात्‌उत्पद्यमानः
प्रीतितापरूपःपरिणामःसुखदुःखमित्याख्यायते भवधारणकारणायुराख्यकर्म्मोदयाद्भवस्थि
तिमादधानस्यपूर्वोक्तप्राणापानक्रियाविशेषाव्युच्छेदःजीवितमित्युच्यते तदुच्छेदोमरणं एता
निसुखादीनिजीवस्यपुद्गलस्यकृतउपकारःकुतःमूर्तिमत्‌हेतुसन्निधानेसतितदुत्पत्तेः उपका
राधिकारादुपग्रहवचनमनर्थकं नानर्थकंस्वोपग्रहदर्शनार्थमिदंपुद्गलानांपुद्गलकृतउपका
रइति यद्यथाकंसादीनांभस्मादीभिर्जलादीनांकतकादिभिरयःप्रभृतीनांमुदकादिभिरुपकारःकि
येतिचशब्दःकिमर्थःसमुच्चयार्थः ॰अन्योपिपुद्गलकृतउपकारोस्तीतिसमुच्चीयतेयथाशरीराणिए
वंचक्षुरादीनिंद्रियाण्यपीतिएवमाद्यजीवकृतमुपकारंप्रदर्श्यजीवकृतोपकारप्रदर्शनार्थमाह॥
परस्परोपग्रहोजीवानां परस्परशब्दःकर्म्मव्यतिहारेवर्त्तते कर्म्मव्यतिहारश्चक्रियाव्यतिहारेवर्त्तते
परस्परस्यउपग्रहःपरस्परोपग्रहः जीवानामुपकारःकःपुनरसौस्वामिभृत्य॰आचार्यशिष्यइत्येवमा

न्त्वात् पौद्गलिकं द्रव्यमनश्च ज्ञानावरणवीर्यांतरायक्षयोपशमअंगोपांगनामलाभप्रत्ययाः गु
णदोषविचारस्मरणादिप्रणिधानाभिमुख्यस्यात्मनोनुग्राहकाः पुद्गलाः मनस्त्वेन परिणता इति पौ
द्गलिकं कश्चिदाह मनोद्रव्यांतरं रूपादिपरिणामविरहितं अणुमात्रं तस्य पौद्गलिकत्वमयुक्तमिति
तदयुक्तं उच्यते तदिंद्रियेणात्मना च संबद्धं च स्यादसंबद्धं वा स्यात् यद्यसंबद्धं तन्नात्मन उपकारकं भ न
वितुमर्हति इंद्रियस्य च साचिव्यं न करोति अथ संबद्धं एकस्मिन्प्रदेशे संबद्धं सत् तदणु इतरेषु प्रदे
शेषु उपकारं न कुर्यात् अदृष्टवशादस्य अलातचक्रवत्परिभ्रमणमिति चेत् न तत्सामर्थ्याभावा
त् अमूर्तस्यात्मनो निःक्रियस्यादृष्टो गुणः स निःक्रियः सन् अन्यत्र क्रियारंभे न समर्थः
दृष्टो हि वायुद्रव्यविशेषः क्रियावान्स्पर्शवान्प्राप्नुवन् वनस्पतौ परिस्पंदहेतुः तद्विपरीतलक्षणश्चायं इ
ति क्रियाहेतुत्वाभावः वीर्यांतरायज्ञानावरणक्षयोपशमांगोपांगनामोदयापेक्षिणात्मना उदस्यमानः
कोष्ठ्यो वायुरुच्छ्वासलक्षणः प्राण इत्युच्यते तेनैवात्मना बाह्यो वायुरभ्यंतरीक्रियमाणो निश्वासलक्षणो
पान इत्याख्यायते एवं तावप्यात्मानुग्राहिणौ जीवितहेतुत्वात् तेषां मनःप्राणापानानां मूर्तिमत्त्वमव
सेयं कुतो मूर्तिमद्भिः प्रतिघातादिदर्शनात् प्रतिभयहेतुभिरशनिपातादिभिः मनसः प्रतिघातो दृ
श्यते सुरादिभिश्चाभिभवः हस्ततलपुटादिभिरास्यसंवरणात् प्राणापानयोः प्रतिघात उपलभ्यते

नंधर्मोधर्मयोर्गतिस्थित्योश्चयथासंख्यंभवतिएवंजीवपुद्गलानांयथासंख्यंज्ञाप्रेतिधर्मस्यो
पकारोजीवानांगतिः॰अधर्मस्योपकारःपुद्गलानांस्थितिरितितन्निवृत्त्यर्थंउपग्रहवचनंक्रि
यते॰आहधर्म्माधर्म्मयोर्यउपकारःस॰आकाशस्ययुक्तःसर्वगतत्वादितिचेत्तदयुक्तंतस्या
न्योपकारसद्भावात्सर्वेषांधर्म्मादीनांद्रव्याणामवगाहनंतत्प्रयोजनंएकस्यानेकप्रयोजनक
ल्पनायांलोकालोकविभागाभावः॰भूमिजलादीन्येवतत्प्रयोजनसमर्थानिनार्थोधर्म्माधर्म्मा
भ्यांइतिचेन्नासाधारणाश्रयइतिविशेष्योक्तत्वात्॰अनेककारणसाध्यत्वाच्चैकस्यकार्य
स्यतुल्यबलत्वात्तयोर्गतिस्थितिप्रतिबंधःइतिचेत्नाप्रेरकत्वात्॰अनुपलब्धेर्नैतौस्तःखरवि
षाणवदितिचेत्नसर्वप्रवाद्यविप्रतिपत्तेःसर्वेहिप्रवादिनःप्रत्यक्षाप्रत्यक्षानर्थानभिवांछं
ति॰अस्मान्प्रतिहेतोरसिद्धेश्चसर्वज्ञेननिरतिशयप्रत्यक्षज्ञानचक्षुषाधर्म्मादयःसर्वेउपल
भ्यंतेतदुपदेशाच्चश्रुतज्ञानिभिरपि॰अत्राहयद्यतींद्रिययोःधर्म्माधर्म्मयोरुपकारसंबंधेनास्ति
त्वमवध्रियतेतदनंतरमुद्दिष्टस्यनभसोतींद्रियस्याधिगमेकउपकारइत्युच्यते॥छ॥॰आकाश
स्यावगाहः॥उपकारइति॰अनुवर्तते जीवपुद्गलादीनामवगाहिनामवकाशदानमवगाहः॥
॰आकाशस्योपकारोवेदितव्यः॰आहजीवपुद्गलानांक्रियावतामवगाहिनामवकाशदानमवगा

काशपरिमाणस्यप्रदीपस्यशरावमाणिकायवरकाद्यावरणवशात्तत्परिमाणतेति ॥ ऽत्रा
हधर्म्मादीनांऽन्योन्यप्रदेशानुप्रवेशात्संकरेसतिएकत्वंप्राप्नोतितन्नपरस्परात्यंतश्लेषेस
पिस्वभावंनजहति उक्तंचऽण्णोण्णंपविसंतादिंताउकासमस्समस्समेलंतावियणिच्चं
सगसब्भावंनविजहंति यद्येवंधर्म्मादीनांस्वभावभेदउच्यतामित्यतऽआह ॥१७॥ गतिस्थित्युप
ग्रहौधर्म्माधर्म्मयोरुपकारः ॥ देशांतरप्राप्तिहेतुर्गतिः तद्विपरीतास्थितिः उपगृह्यतइ
तिउपग्रहगतिश्चस्थितिश्चगतिस्थितीगतिस्थितीएवउपग्रहौगतिस्थित्युपग्रहौधर्म्मा
धर्म्मयोरितिकर्त्तनिर्देशः उपक्रियतइत्युपकारः कः पुनरसौगत्युपग्रहः स्थित्युपग्रहश्च
यद्येवंद्वित्वनिर्देशःप्राप्नोतिनैषदोषः सामान्येनव्युत्पादितः शब्दः उपात्तसंख्यः शब्दांतरसंबंधे
सत्यपिनपूर्वोपात्तसंख्यांजहातियथासाधोःकार्यंतपः श्रुतेइतिएतदुक्तंभवतिगतिपरिणा
मिनांजीवपुद्गलानांगत्युपग्रहेकर्त्तव्येधर्मास्तिकायः साधारणाश्रयः जलवन्मत्स्यगमनेत
थास्थितिपरिणामिनांजीवपुद्गलानांस्थित्युपग्रहेकर्त्तव्येऽधर्म्मास्तिकायः साधारणाश्र
यः पृथिवीधातुरिवाश्वादिस्थिताविति ननुचउपग्रहवचनमनर्थकमुपकारइत्येवंसिद्ध
त्वात्गतिस्थितीधर्म्माधर्म्मयोरुपकार इतिनैषदोषः यथासंख्यनिवृत्त्यर्थमुपग्रहवच

उगाढगाढनिचिदो पुग्गलकाएहि सव्वदो लोगो सुहुमेहिं बादरेहिं पण्णंताणंतेहिं विविहेहिं ॰अत्र
कथ्यीसपिंडोदृष्टांतः ॰अथ जीवानां कथमवगाहनमित्यत्रोच्यते॥७॥ ॰असंख्येयभागादिषु जी
वानां॥ लोकाकाश इत्युवर्त्तते तस्यासंख्येयभागीकृतस्य एको भागः ॰असंख्येयभाग इत्युच्यते स
॰आदिर्येषां ते ॰असंख्येयभागादयः तेषु जीवानामवगाहो वेदितव्यः तद्यथा एकस्मिन्नसंख्येयभा
गे एको जीवो वतिष्ठते एवं द्वित्रिचतुरादिष्वपि ॰असंख्येयभागेषु आसर्व्वलोकादवगाहः प्रत्येतव्यः
नानाजीवानां तु सर्व्वलोक एव यद्येकस्मिन्नसंख्येयभागे एको जीवो वतिष्ठते कथं द्रव्यप्रमाणेना
नंतानंतो जीवराशिः सशरीरो वतिष्ठते लोकाकाशे सूक्ष्मभावदेव एकजीवनिगोदावगाह्येपि अ
देशे साधारणशरीरा नंतानंता वसंति न ते परस्परेण बादरैश्च व्याहन्यंत इति नास्त्यवगाहविरोधः
॰अत्राह लोकाकाशतुल्यप्रदेश एको जीव इत्युक्तं तस्य कथं लोकस्यासंख्येयभागादिषु वृतिर्न
नु सर्व्वलोकस्य व्याप्त्यैव भवितव्यमित्युच्यते॥७॥ प्रदेशसंहारविसर्प्पाभ्यां प्रदीपवत् ॰अमू
र्त्तस्वभावस्यात्मनो नादिकर्म्मबंधं प्रत्येकत्वात् कथंचिन्मूर्त्तत्वं बिभ्रतः कार्म्मणशरीरवशा
न्महदणु च शरीरमधितिष्ठतः तद्वशात्प्रदेशसंहरणविसर्प्पणस्वभावस्य तावत्प्रमाणतायां
सत्यां ॰असंख्येयभागादिषु वृतिरूपपद्यते प्रदीपवत् यथा निरावरणव्योमप्रदेशे वध्रतप्र
सूक्ष्मबादरभेदद्वस्थानं प्रत्येतव्यं बादरास्त्वाव

वा लोकालोकविभागसिद्धिः तत्रावध्रियमाणानां अवस्थानभेदसंभवाद्विशेषप्रतिपत्त्य
र्थमाह ॥१३॥ धर्माधर्मयोः कृत्स्ने ॥ कृत्स्नवचनमशेषव्याप्तिदर्शनार्थं आगारे अवस्थितो घट
इति यथा तथा धर्माधर्मयोर्लोकाकाशेवगाहो न भवति किं तर्हि कृत्स्ने षु तिलेषु तैलवदिति
अन्योन्यप्रदेशप्रवेशव्याघाताभावोवगाहनशक्तियोगाद्वेदितव्यः अतो विपरीतानां
मूर्तिमतां एकप्रदेशसंख्येयासंख्येयानंतप्रदेशानां पुद्गलानां अवगाहविशेषप्रतिपत्त्यर्थ
माह ॥ एकप्रदेशादिषु भाज्यः पुद्गलानां ॥ एकः प्रदेशः एकप्रदेशः एकप्रदेश आदिर्येषां ते
इमे एकप्रदेशादयः तेषु पुद्गलानामवगाहो भाज्यो विकल्प्यो अवयवेन विग्रहः समुदायस
मासार्थ इति एकप्रदेशोपि गृह्यते तद्यथा एकस्मिन्नाकाशप्रदेशे परमाणोरवगाहः द्वयो
रेकत्रोभयत्र च बद्धयोरबद्धयोश्च त्रयाणामप्येकत्र द्वयोस्त्रिषु च बद्धानां अबद्धानां च एवं संख्ये
यानंतप्रदेशानां स्कंधानामेकसंख्येय असंख्येयप्रदेशेषु लोकाकाशेवस्थानं प्रत्येतव्यं न
नु युक्तं तावदमूर्तयो धर्माधर्मयोरेकत्राविरोधेनावरोध इति मूर्तिमतां पुद्गलानां कथमि
त्यत्रोच्यते अवगाहनस्वभावत्वात् सूक्ष्मपरिणामाच्च मूर्तिमतामप्यवगाहो न विरुध्यते ए
कापवरके अनेकप्रदीपप्रकाशावस्थानवत् आगमप्रामाण्याच्च तथाध्यवसेयं उक्तं च उ

धारकल्पते ऽाकाशस्याप्यन्यः आधारः कल्प्यः तथा सत्यनवस्थाप्रसंग इति नैष दोषः ना
काशादन्यदधिकपरिमाणं द्रव्यमस्ति यत्राकाशं स्थितमित्युच्यते सर्वतोनंतं हि तत् धर्म्मादी
नां पुनरधिकरणमाकाशमित्युच्यते व्यवहारनयवशात् एवंभूतनयापेक्षया तु सर्वाणि द्रव्या
णि स्वप्रतिष्ठितान्येव तथा चोक्तं क्व भवानास्ते आत्मनीति धर्मादीनि लोकाकाशान्न वहिः
संतीति एतावदत्र आधाराधेयकल्पनासाध्यं फलं ननु च लोके पूर्वोत्तरकालभाविनामाधारा
धेयभावो दृष्टः यथा कुंडे वदरादीनां तथाकाशं पूर्वं धर्म्मादीनि उत्तरकालभावीनि अतो व्य
वहारनयापेक्षयापि आधाराधेयकल्पनानुपपत्तिरिति नैष दोषः युगपद्भाविनामपि आधा
राधेयभावो दृश्यते घटे रूपादयः शरीरे हस्तादय इति लोक इत्युच्यते को लोकः धर्म्मादीनि द्र
व्याणि यत्र लोक्यंते स लोक इति अधिकरणसाधनो घञ् आकाशं द्विधा विभक्तं लोकाकाश
मलोकाकाशं चेति लोक उक्तः स यत्र तल्लोकाकाशं ततो वहिः सर्वतोनंतमलोकाकाशं लोका
लोकविभागश्च धर्म्माधर्म्मास्तिकायसद्भावात् विज्ञेयः असति हि तस्मिन् धर्मास्ति
काये पुद्गलजीवानां गतिनियमहेत्वभावात् विभागो न स्यात् असति वाधर्मास्तिकाये स्थिते
राश्रयनिमित्ताभावात् स्थितेरभावो लोकालोकविभागाभावो वा स्यात् तस्मादुभयसद्भा

नमिति चेन्नानंतसामान्यात्। अनंतप्रमाणं त्रिविधमुक्तं परीतानंतं ऽनंतानंतं चेति तत्सर्वम
नंतसामान्येन गृह्यते स्यादेतत् असंख्यातप्रदेशो लोकः अनंतप्रदेशस्यानंतानंतप्रदेशस्य च स्कं
धस्याधिकरणमिति विरोधः ततो नानंत्यमिति नैष दोषः सूक्ष्मपरिणामावगाहनशक्तियोगा
त् परमाण्वादयो हि सूक्ष्मभावेन परिणता एकैकस्मिन्नपि आकाशप्रदेशेऽनंतानंता
अवतिष्ठंते अवगाहनशक्तिश्चैषामव्याहतास्ति तस्मादेकस्मिन्नपि प्रदेशेऽनंतानंता
नामवस्थानं न विरुध्यते पुद्गलानामित्यविशेषवचनात्परमाणोरपि प्रदेशवत्त्वप्रसंगे त
त्प्रतिषेधार्थमाह ॥छ॥ नाणोः ॥ अणोः प्रदेशा न संतीति वाक्यशेषः कुतो न संतीति चेत्॥
प्रदेशमात्रत्वात् यथाकाशप्रदेशस्यैकस्य प्रदेशभेदाभावादप्रदेशत्वं एवमणोरपि प्रदेश
मात्रत्वात् प्रदेशभेदाभावः किंच ततोऽल्पपरिमाणाभावात् न ह्यणोरल्पीयानन्योऽस्ति यतोऽस्य
प्रदेशा भिद्येरन् एषामवधृतप्रदेशानां धर्मादीनामाधारप्रतिपत्त्यर्थमिदमुच्यते ॥छ॥ लो
काकाशेऽवगाहः ॥ उक्तानां धर्मादीनां द्रव्याणां लोकाकाशेऽवगाहो न बहिरित्यर्थः यदि ध
र्मादीनां लोकाकाशमाधारः आकाशस्य क आधार इति आकाशस्य नास्त्यन्य आधारः स्व
प्रतिष्ठमाकाशं यद्याकाशं स्वप्रतिष्ठं धर्मादीन्यपि स्वप्रतिष्ठान्येव अथ धर्मादीनामन्य आ

सांवेतेसहनाधिक्रियतेऽजीवकायाइत्यत्रकायग्रहणेनप्रदेशास्तित्वमात्रंनिर्ज्ञातंनत्वियत्तावऽ
धारिताप्रदेशानां ऽतस्तन्निर्द्धारणार्थमिदमुच्यते॥७॥ऽसंख्येयाःप्रदेशाःधर्म्माधर्म्मैकजी
वानां॥संख्यामतीताऽसंख्येयाऽसंख्येयस्त्रिविधःजघन्यःउत्कृष्टऽजघन्योत्कृष्टोसंख्येयः
परिगृह्यतेप्रदिश्यतइतिप्रदेशःवक्ष्यमाणलक्षणःपरमाणुःसयावतिक्षेत्रेवतिष्ठतेसप्रदेशइ
तिव्यवह्रियतेधर्म्माधर्म्मैकजीवाःतुल्याऽसंख्येयप्रदेशाः तत्रधर्म्माधर्म्मौनिःक्रियौलोकाका
शंव्याप्यस्थितौजीवस्तावत्प्रदेशोपिसत्संहरणविसर्प्पणस्वभावत्वात्कर्म्मनिर्वर्तितंशरीरमणु
महद्वाऽधितिष्ठंस्तावदवगाह्यवर्त्ततेयदातुलोकपूर्णंभवतितदामंदरस्याधःचित्रवज्रगतपट
लमध्येजीवस्याष्टौमध्यप्रदेशाव्यवतिष्ठंतेइतरेप्रदेशाऊर्द्ध्वमधस्तिर्यक्चकृत्स्नंलोकाकाशंव्याप्नु
वंते ऽथाकाशस्याकतिप्रदेशाइत्यतऽाह॥८॥ऽाकाशस्यानंताः॥लोकेऽलोकेचाकाशंव
र्ततेऽविद्यमानोंतोयेषांतेऽनंताःकेप्रदेशाःकस्यऽाकाशस्यपूर्ववदेवास्यापिप्रदेशकल्पना
वसेयाउक्तममूर्त्तानांप्रदेशपरिमाणंइदानींमूर्त्तानांपुद्गलानांप्रदेशपरिमाणंनिर्ज्ञातव्यंइत्यतऽा
ह॥९॥संख्येयासंख्येयाश्चपुद्गलानांचशब्देनानंताश्चानुकृष्यंतेकस्यचित्पुद्गलद्रव्यस्यद्व्यणु
कादेःसंख्येयाप्रदेशाकस्यचित्ऽसंख्येयाःप्रदेशाःकस्यचित्ऽनन्ताश्चऽनंतानंतोपसंख्या

तदनेन ख्याप्यते॥ अधिकृतानामेवैकद्रव्याणां विशेषप्रतिपत्त्यर्थमिदमुच्यते॥७॥ निःक्रियाणि च
उभयनिमित्तवशादुत्पद्यमानः पर्यायो द्रव्यस्य देशांतरप्राप्तिहेतुः क्रिया तस्या निःक्रांतानि निःक्रि
याणि यत्र चोद्यते धर्मादीनि द्रव्याणि यदि निःक्रियाणि ततस्तेषामुत्पादो न भवेत्॥ परिस्पंदक्रिया
पूर्वको हि घटादीनां उत्पादो दृष्टः उत्पादाभावात् व्ययाभाव इति सर्वद्रव्याणामुत्पादादित्रितयरू
पकल्पनाव्याघात इति तन्न किं कारणमन्यथोपपत्तेः क्रियानिमित्तोत्पादाभावेप्येषां धर्मादीनां
अन्यथोत्पादः कल्प्यते। तद्यथा द्विविध उत्पादः स्वनिमित्तः परप्रत्ययश्च स्वनिमित्तस्तावदनं
तानां अगुरुलघुगुणानां आगमप्रामाण्यादभ्युपगम्यमानानां षट्स्थानपतितया वृद्ध्या हान्या च
वर्तमानानां स्वभावादेषामुत्पादो व्ययश्च परप्रत्ययोपि अश्वादिगतिस्थित्यवगाहनहेतुत्वात् क्ष
णे क्षणे तेषां भेदात् तद्धेतुत्वमपि भिन्नमिति परप्रत्ययापेक्ष उत्पादो विनाशश्च व्यवह्रियते॥ ननु य
दि निःक्रियाणि धर्मादीनि जीवपुद्गलानां गत्यादिहेतुत्वं नोपपद्यते जलादीनि हि क्रियावंति मत्स्या
दीनां गत्यादिनिमित्तानि दृष्टानीति नैष दोषः बलाधाननिमित्तत्वाच्चक्षुर्वद्यथा रूपोपलब्धौ चक्षु
र्निमित्तमिति न व्याक्षिप्तमनस्कस्यापि भवति॥ अधिकृतानां धर्माधर्माकाशानां निःक्रियत्वेभ्युप
गते जीवपुद्गलानां सक्रियत्वमर्थादापन्नं कालस्यापि सक्रियत्वमिति चेन्नानधिकारात्॥ अत एवा

त्वमिति॥ इयता व्यभिचारादवस्थितानीत्युच्यते न विद्यते रूपमेतेषां इत्यरूपाणि रूपप्रतिषेधेन
तत्सहचारिणां रसादीनामपि प्रतिषेधः तेन अरूपाण्यमूर्तानीत्यर्थः। यथा सर्वेषां द्रव्याणां नि
त्यावस्थितानीत्येतत्साधारणं लक्षणं प्राप्तं तथा अरूपत्वमपि प्राप्तं पुद्गलानामपि अतस्तदप
वादार्थमाह॥ रूपिणः पुद्गलाः॥ रूपं मूर्तिरित्यर्थः का मूर्तिः रूपादिसंस्थानपरिणामो मूर्तिः
रूपमेषामस्ति रूपिणः मूर्तिमंत इत्यर्थः अथवा रूपमिति गुणविशेषवचनशब्दस्तेषामस्तीति
रूपिणः रसाद्यग्रहणमिति चेत् न तदविनाभावात्तदंतर्भावः पुद्गला इति बहुवचनं भेदप्रतिपाद
नार्थं भिन्ना हि पुद्गलाः स्कंधपरमाणुभेदात्तद्विकल्प उपरिष्टाद्वक्ष्यते यदि प्रधानवद् रूपत्वमेकत्वं
चेष्टं स्यात् विश्वरूपकार्यदर्शनविरोधः स्यात्। आह किं पुद्गलवत् धर्म्मादीन्यपि द्रव्याणि प्रत्येकं भि
न्नानीत्यत्रोच्यते॥ आ आकाशादेकद्रव्याणि॥ आङयमभिविध्यर्थः सौत्रीमानुपूर्वीमाश्रित्यैतदु २८
क्तं तेन धर्म्माधर्म्माकाशानि गृह्यंते। एकशब्दः संख्यावचनः तेन द्रव्यं विशेष्यते। एकं द्रव्यं एकद्रव्य
मिति यद्येवं बहुवचनमयुक्तं धर्म्माद्यपेक्षया बहुत्वसिद्धिर्भवति। एकस्यानेकार्थप्रत्यायनशक्तियो
गात् एकैकमित्यस्तु लघुत्वात् द्रव्यग्रहणमनर्थकं तत्क्रियते द्रव्यापेक्षया एकत्वख्यापनार्थं द्रव्य
ग्रहणं क्षेत्रभावापेक्षया असंख्येयत्वानंतत्वविकल्पस्येष्टत्वात्। न जीवपुद्गलवदेषां बहुत्वमित्ये

दियोगाभावः इति चेत् ॥ न वायुस्तावद्रूपादिमान् स्पर्शवत्त्वात् ॥ घटादिवत् चक्षुरादिकरणग्राह्य
त्वाभावात् ॥ रूपाद्यभाव इति चेत् न परमाण्वादिष्वतिप्रसंगः स्यात् आपो गंधवत्यः स्पर्शादिमत्त्वा
त् पृथिवीवत् तेजोपि रसगंधवद्रूपवत्त्वात् तद्वदेव ॥ मनोपि द्विविधं द्रव्यमनो भावमनश्चेति तत्र भा
वमनो ज्ञानं तस्य जीवगुणत्वात् ॥ आत्मन्यंतर्भावः द्रव्यमनश्च रूपादियोगात् पुद्गलद्रव्यविकारः
रूपादिमन्मनः ॥ ज्ञानोपयोगकारणत्वात् चक्षुरिंद्रियवत् ननु अमूर्तेपि शब्दे ज्ञानोपयोगकारण
त्वदर्शनात् ॥ व्यभिचारी हेतुरिति चेत् ॥ न तस्यापि पौद्गलिकत्वात् मूर्तिमत्त्वोपपत्तेः ननु यथा सर्वेषां
परमाणूनां रूपादिमत्कार्यत्वदर्शनात् ॥ रूपादिमत्त्वं न तथा वायुमनसो रूपादिमत्कार्यं दृश्यते इ
ति चेत् न नु तेषामपि तदुपपत्तेः सर्वेषां परमाणूनां सर्वरूपादिमत्कार्यत्वप्राप्तियोग्यताभ्युपगमात्
न च केचित् पार्थिवादिजातिविशेषयुक्ताः परमाणवः संति ॥ जातिसंकरेणारंभदर्शनात् दिशोप्याका
शेंतर्भावः आदित्योदयाद्यपेक्षया आकाशप्रदेशपंक्तिषु इत इदमिति व्यवहारोपपत्तेः उक्तानां
द्रव्याणां विशेषप्रतिपत्त्यर्थमाह ॥ ७ ॥ नित्यावस्थितान्यरूपाणि ॥ नित्यं ध्रुवमित्यर्थः न ध्रुवेभ्य इति
नेर्ध्रुवे नित्य इति निष्पादितत्वात् धर्म्मादीनि द्रव्याणि गतिहेतुत्वादिविशेषलक्षणद्रव्यार्थादेशाद
स्तित्वादिसामान्यलक्षणद्रव्यार्थादेशाच्च कदाचिदपि न व्ययंतीति नित्यानि वक्ष्यते हि ॥ तद्भावाव्ययं नि

पृथक्सिद्धेस्ततः युतपृथक्सिद्ध्योरपि योगः स्यात्॥ आकाशकुशुमस्य प्रकृतिपुरुषद्वितीयशि
रसश्च योगः स्यादिति॥ अथ पृथक्सिद्धिरभ्युपगम्यते द्रव्यत्वकल्पना निरर्थिका गुणसंद्रावो द्रव्यमि
ति चेत् तत्रापि गुणानां समुदायस्य च भेदाभावे तद्व्यपदेशो नोपपद्यते भेदाभ्युपगमे च पूर्वोक्त
एव दोषो ननु गुणान् द्रवति गुणैर्वा द्रूयते इति विग्रहेपि स एव दोषः॥ इति चेन्न कथंचिद्भेदाभेदोपप
त्तेस्तद्व्यपदेशसिद्धिः व्यतिरेकेणानुपलब्धेरभेदः संज्ञालक्षणप्रयोजनादिभेदाद्भेद इति प्रकृता
धर्मादयो बहवः॥ तत् सामानाधिकरण्यात् बहुत्वनिर्देशः स्यादेतत्संख्यानुवृत्तिवत्पुंलिंगानुवृत्ति
रपि प्राप्नोतीति नैष दोषः आविष्टलिंगाः शब्दा न कदाचिल्लिंगं व्यभिचरंति॥ अतो धर्मादयो द्रव्याणि
भवंतीति अनंतरत्वाच्चतुर्णामेव द्रव्यव्यपदेशप्रसंगे अध्यारोपणार्थमिदमुच्यते॥ २॥ जीवाश्च
॥ जीवशब्दो व्याख्यातार्थः बहुत्वनिर्देशो व्याख्यातभेदप्रतिपत्त्यर्थः चशब्दः द्रव्यसंज्ञानुकर्षणा
र्थः जीवाश्च द्रव्याणीति एवमेतानि वक्ष्यमाणेन कालेन सह षड् द्रव्याणि भवंति द्रव्यस्य लक्षणं
वक्ष्यते॥ गुणपर्ययवद्द्रव्यमिति तल्लक्षणयोगात् धर्मादीनां द्रव्यव्यपदेशो भवति नार्थः परिगण
नेन परिगणनमवधारणार्थं तेनान्यवादिपरिकल्पितानां पृथिव्यादीनां निवृत्तिः कृता भवति॥
कथं पृथिव्यापस्तेजोवायुमनांसि पुद्गलद्रव्ये अंतर्भवंति रूपरसगंधस्पर्शवत्त्वात्॥ वायुमनसोरूपा

ध्यारोप्यते कुत उपचारः यथा शरीरं पुद्गलद्रव्यप्रचयात्मकं तथा धर्म्मादिष्वपि प्रदेशप्रचयापे
क्षया इव काया इति अजीवाश्च ते कायाश्च अजीवकाया विशेषणं विशेष्येणेति वृत्तिः ननु च नी
लोत्पलादिषुः व्यभिचारे सति विशेषणविशेष्ययोर्योग्यः इहापि व्यभिचारोस्ति अजीवश
ब्दः अकाये कालेपि वर्त्तते कायोपि जीवे किमर्थः कायशब्दः प्रदेशबहुत्वज्ञापनार्थः धर्म्मादीनां
प्रदेशा बहव इति ननु च असंख्येयाः प्रदेशा धर्म्माधर्म्मैकजीवानामित्यनेन प्रदेशबहुत्वं ज्ञापितं
सत्यं परं किंतु अस्मिन्विधौ सति तदवधारणं विज्ञायते असंख्येयाः प्रदेशा न संख्येया नाप्यनं
ताः इति कालप्रदेशप्रचयाभावज्ञापनार्थं च इह कायग्रहणं कालो वक्ष्यते तस्य प्रदेशप्रचयप्र
तिषेधार्थं इह कायग्रहणं यथाणोः प्रदेशमात्रत्वात् द्वितीयादयोस्य प्रदेशा न संतीत्यप्रदेशोणुः
तथा कालपरमाणुरप्येकप्रदेशत्वादप्रदेश इति तेषां धर्म्मादीनामजीव इति सामान्यसंज्ञा जीव
लक्षणाभावमुखेन प्रवृत्ता धर्म्माकाशपुद्गला इति विशेषसंज्ञा सामयिकी अत्राह सर्वद्रव्यपर्या
येषु केवलस्येत्येवमादिषु द्रव्याण्युक्तानि कानि तानीत्युच्यंते ॥ ७ ॥ द्रव्याणि ॥ यथा यथायोग्यं स्वप
र्यायैर्द्रूयंते गम्यंते प्राप्यंते यथास्वं यथायथं पर्यायान्पर्यायैर्या निद्रुवंति वा तानीति द्रव्याणि द्रव्य
योगाद्द्रव्यमिति चेन्नोभयासिद्धेः यथा दंडदंडिनोर्योगो भवति पृथक्सिद्धयोर्न च तथा द्रव्यद्रव्यत्वे

श्रीनार्थमाह॥छ॥दशवर्षसहस्राणिप्रथमायां॥ अपरास्थितिरित्यनुवर्तते अथभवनवासि
नांकाजघन्यास्थितिरित्याह॥छ॥भवनेषुच॥चशब्दः किमर्थः प्रकृतसमुच्चयार्थः तेनभवनवा
सिनामपरास्थितिर्दशवर्षसहस्राणीत्यभिसंबंध्यते व्यंतराणांतर्हिकाजघन्यास्थितिरित्यतआ
ह॥छ॥व्यंतराणांच॥चशब्दप्रकृतसमुच्चयार्थः तेनव्यंतराणामपरास्थितिर्दशवर्षसहस्राणि
इत्यवगम्यते अथैषांपरास्थितिकेत्यत्रोच्यते॥छ॥परापल्योपममधिकं॥परा उत्कृष्टास्थितिर्व्यंत
राणांपल्योपममधिकं इदानींज्योतिष्काणांपरास्थितिर्वक्तव्येत्यत आह॥छ॥ज्योतिष्काणांच॥च
शब्दःप्रकृतसमुच्चयार्थः तेनैवमभिसंबंधः ज्योतिष्काणांचपरास्थितिः पल्योपममधिकमिति
अथापराकियतीत्याह॥छ॥तदष्टभागोपराः॥तस्यपल्योपमस्याष्टभागोज्योतिष्काणामपरा
स्थितिरित्यर्थः अथलौकांतिकानांविशेषोक्तानांस्थितिविशेषोनोक्तः सकियानिति॥छ॥लौ
कांतिकानामष्टौसागरोपमाणिसर्वेषां॥अविशिष्टाः सर्वेतेशुक्ललेश्याः पंचोत्सेधशरीराः च
तुर्निकायदेवानांस्थानभेदाः सुखादिकंपरापरस्थितिर्लेश्यातुर्याध्यायेनिरूपितं॥ छ॥इतित
त्त्वार्थवृत्तौसर्वार्थसिद्धिसंज्ञिकायांचतुर्थोध्यायः॥छ॥इदानींसम्यग्दर्शनविषयभावेनोपक्षे
पुजीवादिषुजीवपदार्थोव्याख्यातः अथाजीवपदार्थोविचारप्राप्तः स्तस्यसंज्ञाभेदसंकीर्तनार्थमि
दमुच्यते॥छ॥अजीवकायाधर्माधर्माकाशपुद्गला॥कायशब्दः शरीरेव्युत्पादितः इहोपचाराद

येसप्तविंशतिः तृतीये अष्टाविंशतिः उपरिमग्रैवेयकेषु प्रथमे एकोनत्रिंशत् द्वितीये त्रिंशत् त्रि
तृतीये एकत्रिंशत् अनुदिशविमानेषु द्वात्रिंशत् विजयादिषु त्रयस्त्रिंशत्सागरोपमानि उत्कृष्टा
स्थितिः सर्वार्थसिद्धे त्रयस्त्रिंशदेवेति निर्दिष्टोत्कृष्टस्थितिकेषु देवेषु जघन्यस्थितिप्रतिपादना
र्थमाह॥ अपरापल्योपममधिकं॥ पल्योपमं व्याख्यातं अपरा जघन्यस्थितिः पल्योपमसाधि
कं केषां सौधर्मैशानीयानां कथमवगम्यते परतः इत्युत्तरत्रवक्ष्यमाणत्वात् तत ऊर्द्धं जघन्यस्थि
तिप्रतिपादनार्थमाह॥ परतः परतः पूर्वापूर्वानंतरा॥ परस्मिन्देशे परतः वीप्सायां द्वित्वं पूर्वसव्द
स्यापि अधिकग्रहणमनुवर्त्तते तेनैवमभिसंबंध क्रियते सौधर्मैशानयोर्द्वे सागरोपमे साधिके
उक्ते ते साधिके सानत्कुमारमाहेंद्रयोर्जघन्यास्थितिः सानत्कुमारमाहेंद्रयोः परास्थितिः सप्तसाग
रोपमानि साधिकानि तानि साधिकानि ब्रह्मब्रह्मोत्तरयोर्जघन्यास्थितिरित्यादि एवं विजयादिपर्य्य
न्तेषु ज्ञेयं नारकाणां उत्कृष्टास्थितिरुक्ता जघन्यां सूत्रेनुपात्तां अप्रकृतामपि लघुनोपायेन प्रतिपा
दयितुमिच्छन्नाह॥ नारकाणां च द्वितीयादिषु॥ चशब्दः किमर्थः प्रकृतसमुच्चयार्थः किं च प्र
कृतं परतः परतः पूर्वानंतरा अपरास्थितिरिति तेनायमर्थो लभ्यते रत्नप्रभायां नारकाणां परास्थि
तिरेकं सागरोपमं शर्कराप्रभायां जघन्या शर्कराप्रभायां उत्कृष्टास्थितिस्त्रीणि सागरोपमाणि सा
वालुकाप्रभायां जघन्येत्यादि एवं द्वितीयादिषु जघन्यास्थितिरुक्ता प्रथमायां का जघन्येति तत्स्वर

सप्त॥ अनयोःकल्पयोर्देवानांसप्तसागरोपमानि साधिकानिउत्कृष्टास्थितिर्ब्रह्मलोकादिष्वच्यु
तावसानेषुस्थितिविशेषप्रतिपत्त्यर्थमाह॥ त्रिसप्तनवैकादशत्रयोदशपंचदशभिरधिकानितु॥
सप्तग्रहणंप्रकृतं तस्येहत्र्यादिभिर्निर्दिष्टैरभिसंबंधोवेदितव्यः सप्तत्रिभिरधिकानिसप्तसप्तभि
रधिकानिइत्यादिद्वयोर्द्वयोरभिसंबंधोवेदितव्यः तुशब्दोविशेषणार्थः किंविशिनष्टि अधिकश
ब्दोनुवर्तमानश्चतुर्भिरिहसंबध्यतेनोत्तराभ्यामित्ययमर्थोविशिष्यतेतेनायमर्थोभवति ब्र
ह्मलोकब्रह्मोत्तरयोर्दशसागरोपमाणिसाधिकानिलांतवकापिष्ठयोश्चतुर्दशसागरोपमा
निसाधिकानिशुक्रमहाशुक्रयोःषोडशसागरोपमानिसाधिकानि सतारसहस्रारयो
रष्टादशसागरोपमानिसाधिकानि आनतप्राणतयोर्विंशतिसागरोपमाणि आरणाच्यु
तयोर्द्वाविंशतिसागरोपमाणिततऊर्ध्वंस्थितिविशेषप्रतिपत्त्यर्थमाह॥ आरणाच्युता
दूर्ध्वमेकैकेननवसुग्रैवेयकेषुविजयादिषुसर्वार्थसिद्धौच॥ अधिकग्रहणमनुवर्ततेतेनेहसं
बंधोवेदितव्यः एकैकेनाधिकानीतिनवग्रहणंकिमर्थंप्रत्येकमेकैकमधिकमितिज्ञापनार्थंइतर
थाहिग्रैवेयकेषुएकमेवाधिकंस्याद्विजयादिष्विति आदिशब्दस्यप्रकारार्थत्वात् अनुदिशानाम
पिग्रहणंसर्वार्थसिद्धेःपृथग्ग्रहणंजघन्याभावप्रतिपादनार्थंतेनायमर्थः अधोग्रैवेयकेषु
त्रयोविंशतिःद्वितीयेचतुर्विंशतिस्तृतीयेपंचविंशतिःमध्यमग्रैवेयकेषुप्रथमेषड्विंशतिःद्विती

भ्यः शेषास्तिर्यग्योनयः॥ उपपादिका उक्ता देवनारकाः मनुष्याश्च निर्दिष्टाः प्राग्मानुषोत्तरा
न्मनुष्या इति एभ्योन्ये संसारिणो जीवाः शेषास्तिर्यग्योनयो वेदितव्याः। एषां तिरश्चां देवादीनामि
व क्षेत्रविभागः पुनर्निर्देष्टव्यः सर्वलोकव्यापित्वात्तेषां क्षेत्रविभागो नोक्तः। आह स्थितिरुक्ता
[illegible] नारकाणां मनुष्याणां तिरश्चां च देवानां नोक्ता तस्यां वक्तव्यायां आदावुद्दिष्टानां भवनवा
सिनां स्थितिप्रतिपादनार्थमाह॥ ॥ स्थितिरसुरनागसुपर्णद्वीपशेषाणां सागरोपमत्रिप
ल्योपमार्द्धहीनमिताः॥ असुरादीनां सागरोपमादिभिर्यथाक्रमं अत्राभिसंबंधो वेदितव्यः
इयं स्थितिरुत्कृष्टा जघन्याप्युत्तरत्र वक्ष्यते तद्यथा असुराणां सागरोपमा स्थितिर्नागानां त्री
णि पल्योपमानि स्थितिः सुपर्णानाम मर्द्धतृतीयानि द्वीपानां द्वे शेषाणां षण्णां अर्द्धपल्यो
पमं॥ आद्यदेवनिकायस्थित्यभिधानादनंतरं व्यंतरज्योतिष्कां स्थितिवचने क्रमप्राप्ते सति
तदुल्लंघ्य वैमानिकानां स्थितिरुच्यते कुतस्तयोरुत्तरं घनमुत्तरत्र लघुनोपायेन स्थितिवचनात्॥
तेषु चादावुद्दिष्टयोः स्थितिविधानार्थमाह॥ ॥ सौधर्मैशानयोः सागरोपमे अधिके॥ सा
गरोपमे इति द्विवचननिर्देशात् द्वित्वगतिः अधिके इत्ययमधिकारः आकुतः आसहस्रा
रात् इदं तु कुतो ज्ञायते इति चेत् उत्तरत्र तु शब्दकरणात् तेन सौधर्मैशानयोर्देवानां द्वे सा
गरोपमे सातिरेके प्रत्येतव्ये उत्तरयोः स्थितिविशेषप्रतिपत्त्यर्थमाह॥ सानत्कुमारमाहेंद्रयोः

स्वतादित्यांतेऽग्न्याभसूर्याभाऽऽदित्यस्यचवन्हेश्चांतरेचांद्राभसत्याभाः वह्न्यरुणांतरालेश्रे
यस्करक्षेमंकराऽरुणगर्दतोयांतरेवृषभेष्टकामचराः गर्दतोयतुषितमध्येनिर्म्माणरजोदिगंत
रक्षिताः तुषिताव्याबाधमध्येऽऽत्मरक्षितसर्वरक्षिता अव्याबाधारिष्टांतरालेमरुद्वसवःऽरि
ष्टसारस्वतांतरेऽश्वविश्वाः सर्वेस्वतंत्राहीनाधिकत्वाभावात् विषयरतिविरहात्देवर्षयइतरेषांदे
वानांऽर्चनीयाचतुर्दशपूर्वधरा तीर्थकरनिष्क्रमणप्रतिबोधनपरावेदितव्याः आहउक्तालौ
कांतिकानतश्च्युताएकंगर्भवासमवाप्यनिर्वास्यंतीत्युक्तं किमेवमन्येष्वपिनिर्वाणप्राप्तिकालविभा
गोविद्यतइत्यतआह॥ ४॥ विजयादिषुद्विचरमाः॥ आदिशब्दः प्रकारार्थेवर्तते तेनविजयवैजयं
तजयंतापराजितानुदिशविमानानामिष्टानांग्रहणंसिद्धंभवतिकः पुनरत्रप्रकारः अहमिंद्रेसति
सम्यग्दृष्ट्युपपादः सर्वार्थसिद्धिप्रसंगः इतिचेन्नतेषांपरमोत्कृष्टत्वात् अन्वर्थसंज्ञाएकचरम
त्वसिद्धेः चरमत्वंदेहस्यमनुष्यभवापेक्षया द्वौचरमौयेषांतेद्विचरमाः विजयादिभ्यश्च्युताअप्र
तिपतितः सम्यक्त्वामनुष्येषूत्पद्यसंयममाराध्यपुनर्विजयादिषुउत्पद्यततश्च्युताः पुनर्म्मनुष्यभव
मवाप्यसिद्ध्यंतीतिद्विचरमदेहत्वं आहजीवस्यऊदयिकेषुभावेषुतिर्यग्योनिरौदयिकीत्युक्तं पुन
श्चस्थितौतिर्यग्योनिजानांचेतितत्रनज्ञायतेकेतिर्यग्योनयइतिअत्रोच्यते॥ उपपादिकमनुष्ये

इदंनज्ञायतेइतआरभ्यकल्पाभवंतीतिसौधर्मादिग्रहणमनुवर्ततेतेनायमर्थोलभ्यतेसौधर्मा
दयःप्राग्ग्रैवेयकेभ्यःकल्पाःपरिशेष्यादितरेकल्पातीताःइतिलौकांतिकादेवावैमानिकाःसंतःक्वगृह्यं
तेकल्पोपपन्नेषुकथमितिचेदुच्यते॥ ॥ब्रह्मलोकालयालौकांतिकाः॥एत्यतस्मिन्लीयंतइत्यालय
आवासोब्रह्मलोकआलयोयेषांतेब्रह्मलोकालयाःलौकांतिकादेवावेदितव्याःयद्येवंसर्वेषांब्रह्म
लोकालयानांलौकांतिकत्वप्रसंगःअन्वर्थसंज्ञाग्रहणाद्दोषःब्रह्मलोकोलोकःतस्यांतोलोकांतः
लोकांतेभवालौकांतिकाइतिनसर्वेषांग्रहणंतेषांहिविमानानिब्रह्मलोकस्यांतेषुस्थितानिअथवा
जातिजरामरणाकीर्णोलोकःसंसारस्तस्यांतोलोकांतेभवालौकांतिकाःतेसर्वेपरीतसंसाराःतत
श्च्युताएकंगर्भवासंप्राप्यपरिनिर्वास्यंतीतितेषांसामान्येनोपदिष्टानांभेदप्रदर्शनार्थमाह॥ ॥सारस्व
तादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधारिष्टाश्च॥क्वेमेसारस्वतादयःअष्टासुपूर्वोत्तरासुदिक्षु
विदिक्षुयथाक्रममेतेसारस्वतादयोदेवगणावेदितव्याःतद्यथापूर्वोत्तरकोणेसारस्वतविमानंपूर्व
स्यांदिशिआदित्यविमानंपूर्वदक्षिणस्यांदिशिवह्निविमानंदक्षिणस्यांदिशिअरुणस्यविमानं
दक्षिणापरकोणेगर्दतोयविमानंअपरस्यांदिशितुषितविमानंउत्तरापरस्यांदिशिअव्याबाधा
विमानंउत्तरस्यांदिशिअरिष्टविमानंचशब्दःसमुच्चितार्थस्तेषामंतरेषुद्वौद्वौदेवगणौतद्यथासार

विधिप्रतिपत्यर्थमाह॥ पीतपद्मशुक्ललेश्याद्वित्रिशेषेषु॥ पीताच पद्माच शुक्लाच पीतप
द्मशुक्लाःचपीतपद्मशुक्लालेश्यायेषांते पीतपद्मशुक्ललेश्याः कथंह्रस्वत्वं उत्तरपदिकं यथा
द्रुतायां तपरकरणे मध्यमविलंबितयोरुपसंख्यानमिति ऽथवा पीतश्च पद्मश्च शुक्लश्च पी
तपद्मशुक्लाः वर्णवंतोर्थाः तेषामिव लेश्या येषांते पीतपद्मशुक्ललेश्याः तत्र कस्य कालेश्ये
त्यत्रोच्यते सौधर्मैशानयोः पीतलेश्याः सानत्कुमारमाहेंद्रयोः पीतपद्मलेश्याः ब्रह्मलोकब्र
ह्मोत्तरलांतवकापिष्टशुक्रमहाशुक्रेषु पद्मलेश्यामध्यमांशः सतारसहस्रारयोः पद्मशुक्ल
लेश्ये ऽआनतादिषु त्रयोदशस्थानेषु शुक्ललेश्याः तत्राप्यनुदिशानुत्तरेषु परमशुक्ललेश्याः॥
सूत्रेऽनभिहितं कथं मिश्रग्रहणं साहचर्यात् लोकवत् यथा छत्रिणो गच्छंतीति ऽअछत्रिषु
छत्रिव्यवहार एवमिहापि मिश्रयोः ऽअन्यतरग्रहणं भवति ऽअयमर्थः सूत्रतः कथं गम्यते इ
ति चेदुच्यते एवमभिसंबंधः क्रियते द्वयोः कल्पयोर्युगलयोः पीतलेश्याः सानत्कुमारमाहेंद्रयोः
पद्मलेश्याया ऽअविवक्षात ब्रह्मलोकादिषु कल्पयुगलेषु पद्मलेश्याः शुक्रमहाशुक्रयोः शु
क्ललेश्यायाः ऽअविवक्षितत्वात् शेषेषु तारादिषु शुक्ललेश्या पद्मलेश्याया ऽअविवक्षात इति
नास्ति दोषः ऽआह कल्पोपपन्ना इत्युक्तं तत्रेदं न ज्ञायते के कल्पा इत्युच्यंते॥ ७॥ प्राग्ग्रैवेय

शरीरेणसहस्थानंस्थितिःशापानुग्रहशक्तिःप्रभावःसुखमिंद्रियार्थानुभवःशरीरवसनाभर
णादिदीप्तिर्द्युतिर्लेश्यालेश्यायाविशुद्धिर्लेश्याविशुद्धिः इंद्रियाणामवधिश्चविषयइंद्रियावधि
विषयःतेभ्यस्तैर्वाधिकाइतितस्यउपर्युपरिप्रतिकल्पंप्रतिप्रस्तारंचवैमानिकाःस्थित्याभिरधि
काइत्यर्थःयथास्थित्यादिभिरूपर्युपरिऽधिकाःएवंगत्यादिभिरपीत्यतिप्रसंगेतन्निवृत्यर्थ
माह॥२१॥गतिशरीरपरिग्रहाभिमानतोहीनाः॥देशाद्देशांतरप्राप्तिहेतुर्गतिःशरीरंवैक्रियकमु
क्तंलोभकषायोदयाद्विषयेषुसंगःपरिग्रहःमानकषायोदयादुत्पन्नोहंकारऽभिमानःएतैर्गत्या
दिभिरुपर्युपरिहीनादेशांतरविषयक्रीडारतिप्रकर्षाभावात्परिउपरिगतिहीनाःशरीरंसौधर्मै
शानयोर्देवानांसप्तारत्निप्रमाणंसानत्कुमारमाहेंद्रयोःषडरत्निप्रमाणंब्रह्मलोकब्रह्मोत्तरलांतव
कापिष्टेषुपंचारत्निप्रमाणंशुक्रमहाशुक्रसतारसहस्रारेषुचतुररत्निप्रमाणंऽआनतप्राणतयो
रर्द्धचतुर्थारत्निप्रमाणंऽआरणाच्युतयोरत्नित्रयप्रमाणंऽअधोग्रैवेयकेषुऽअर्द्धतृतीयारत्निप्रमा
णंमध्यमग्रैवेयकेष्वरत्निद्वयप्रमाणंउपरिमग्रैवेयकेषुऽअनुदिशविमानेषुचाध्यर्द्धारत्निप्र
माणंऽअनुत्तरेष्वरत्निप्रमाणंपरिग्रहश्चविमानपरिछदादिउपर्युपरिहीनः ऽअभिमानश्चउपर्यु
परितनुमंदकषायत्वाद्धीनःपुरस्तात्त्रिषुनिकायेषुदेवानांलेश्याविधिरुक्ताइदानींवैमानिकेषुलेश्या

श्चत्वारियोजनानि उत्तुल्यश्शनैश्चराचरंतिसरायज्योतिर्गणगोचरोनभोवकाशोदशाधिक
योजनशतबहलतिर्यगसंख्यातद्वीपसमुद्रप्रमाणेघनोदधिपर्यंतः उक्तंच नवुत्तरसत्तसं
यादसन्नीदीचदुत्तियंदुगचउक्क॥ताराररविससिरिरकावुहभग्गवग्रंगिरारसणी ज्योतिष्का
णांगतिविशेषप्रतिपत्यर्थमाह॥ ॥मेरुप्रदक्षिणानित्यगतयोन्नलोके॥मेरोःप्रदक्षिणेमे
रुप्रदक्षिणामेरुप्रदक्षिणाइतिवचनंगतिविशेषप्रतिपत्यर्थंविपरीतगतिर्मोविज्ञायीतिनित्य
गतयइतिविशेषणमनुपरतक्रियाप्रतिपादनार्थंन्नलोकग्रहणंविषयार्थमर्द्धतृतीयेषुद्वीपे
षुद्वयोश्चसमुद्रयोर्ज्योतिष्कानित्यगतयोनान्यत्रइतिज्योतिष्कविमानानांनित्यगतिहेत्वभावा
त्तद्वृत्यभावइतिचेन्नासिद्धत्वात्गतिरताभियोग्यदेवप्रेरितगतिपरिणामात्कर्म्मविपाकस्य
वैचित्र्यातेषांहिगतिमुखेनैवकर्म्मविपच्यतइतिएकादशभिर्योजनशतैरेकविंशैर्मेरुमप्रा
प्यज्योतिष्काःप्रदक्षिणाश्चरंतिगतिमज्ज्योतिःसंबंधेनव्यवहारकालप्रतिपत्यर्थमाह॥ ॥
तत्कृतःकालविभागः तद्ग्रहणंगतिमज्ज्योतिःप्रतिनिर्देशार्थंनकेवलयागत्यानापिकेवलै
ज्योतिभिःकालपरिछिद्यते अनुपलब्धेः अपरिवर्तनाच्चकालोद्विविधःव्यावहारिकोमुख्य
श्चव्यवहारिकः कालविभागस्तत्कृतःसमयावलिकादिक्रियाविशेषपरिछिन्नोऽन्यस्या

परिछिन्नस्य परिछेदहेतुर्मुख्यो न्यो वक्ष्यमाणलक्षण इतरत्र ज्योतिषामवस्थानलक्षणाप्रति
पादनार्थमाह॥ वहिरवस्थिताः॥ वहिरित्युच्यते कुतो वहिर्नृलोकात् कथमवगम्यते अर्थ
वशाद्धि भक्तिपरिणामो भवति ननु च नृलोके नित्यगतिवचनादन्यत्रावस्थानं ज्योतिषां सि
द्धं अतो वहिरवस्थिता इति वचनमनर्थकमिति तत्र किं कारणं नृलोकादन्यत्र हि ज्योतिषां
अस्तित्वमवस्थानं च असिद्धं अतस्तदुभयं सिद्ध्यर्थं वहिरवस्थिता इत्युच्यते विपरीतगति
निवृत्त्यर्थं कदाचित् गतिनिवृत्त्यर्थं च सूत्रमारब्धव्यं तुरीयस्य निकायस्य सामान्यसंज्ञासंकीर्त
नार्थमाह॥ वैमानिकाः॥ वैमानिकग्रहणमधिकारार्थं इत उत्तरं ये वक्ष्यन्ते तेषां वैमानिक
संप्रत्ययो यथा स्यादिति अधिकारः क्रियते विशेषेणात्मस्थान् सुकृतिनो मानयंतीति विमा
नानि विमानेषु भवा वैमानिकाः तानि विमानानि त्रिविधानि इंद्रकश्रेणिपुष्पप्रकीर्णकभेदेन
तत्र इंद्रकविमानानि इंद्रवत् मध्ये अवस्थितानि तेषां चतसृषु दिक्षु आकाशप्रदेशश्रेणिवद
वस्थानात् श्रेणिविमानानि विदिक्षु प्रकीर्णपुष्पवदवस्थानात् पुष्पप्रकीर्णकानि तेषां वैमा
निकानां भेदाववोधनार्थमाह॥ ७॥ कल्पोपपन्नाः कल्पातीताश्च॥ कल्पेषु षोस्वर्गेषूपप
न्नाः कल्पोपपन्नाः कल्पानतीताः कल्पातीताश्चेति नवग्रैवेयकदेवाः नवानुदिशदेवाः पंचा

नुत्तरनिवासिनोत्रिप्रकारा॥ ॰अप्यहमिंद्राः कल्पातीताः कथ्यंते द्विविधा वैमानिकाः तेषाम
वस्थाविशेषनिर्ज्ञानार्थमाह॥ ७॥ उपर्युपरि किमर्थमिदमुच्यते तिर्यगवस्थितिप्रतिशे
धार्थमुच्यते नज्योतिष्कवत्तिर्यगवस्थिता नव्यंतरवद समव्यवस्थितयः उपर्युपरि इत्यु
च्यंते केते कल्पाप्रध्येवं किप्रत्सु कल्पविमानेषु ते वा भवंतीत्यत ॰आह॥ ७॥ सौधर्म्मैशानस
नत्कुमारमाहेंद्रब्रह्मब्रह्मोत्तरलांतवकापिष्ठशुक्रमहाशुक्रसतारसहस्रारेष्वानतप्राण
तयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजयंतजयंतापराजितेषु सर्वार्थसिद्धौच
॥ कथमेषां सौधर्म्मादिशब्दानां कल्पाभिधानं सत्यं चातुरर्थिकेनाण स्वभावतो वा कल्पस्या
भिधानं भवति ॰अथ कथमिंद्राभिधानं स्वभावतः साहचर्याद्वा तत्कथं इति चेदुच्यते सुध
र्म्मा नाम सभा सास्मिन्नस्तीति सौधर्म्मः कल्पः तदस्मिन्नस्तीत्यण तत्कल्पसाहचर्यात् इंद्रोपि सौ
धर्म्मः ईसानो नाम इंद्रः स्वभावतः ईशानस्य निवासः कल्प ऐशानः तस्य निवास इत्यण तत्
साहचर्यादिंद्रोपि ऐशानः सनत्कुमारो नाम इंद्रः स्वभावतः तस्य निवास इत्यण सानत्कुमारः
कल्पः तत्साहचर्यादिंद्रोपि सानत्कुमारः माहेंद्रनामेंद्रः स्वभावतस्तस्य निवासः कल्पः माहेंद्रः
तत्साहचर्यादिंद्रोपि माहेंद्र एवमुत्तरत्रापि योज्यं ॰आगमापेक्षया व्यवस्था भवतीति उपर्यु

परीत्यनेन द्वयोर्द्वयोरभिसंबंधो वेदितव्यः प्रथमौ सौधर्मैशानकल्पौ तयोरुपरि शानत्कुमारमा
हेंद्रौ तयोरुपरि ब्रह्मलोकब्रह्मोत्तरौ तयोरुपरि लांतवकापिष्ठौ तयोरुपरि शुक्रमहाशुक्रौ त
योरुपरि सतारसहस्रारौ तयोरुपरि आनतप्राणतौ तयोरुपरि आरणाच्युतौ अध उपरि च
प्रत्येकमिंद्रसंबंधो वेदितव्यः मध्ये प्रतिद्वयं सौधर्मैशानसनत्कुमारमाहेंद्राणां चतुर्णां च
त्वार इंद्राः ब्रह्मलोकब्रह्मोत्तरयोरेकः ब्रह्मो नाम लांतवकापिष्ठयोरेको लांतवाख्यः शुक्रमा
हाशुक्रयोरेकः सतारसहस्रारयोरेकः सतारनामा आनतप्राणतआरणाच्युतानां चतुर्णां च च
त्वारः एवं कल्पवासिनां द्वादश इंद्रा भवंति जंबूद्वीपे महामंदरो योजनसहस्रावगाहो नवतियोजन
सहस्रोछ्रायः तस्याधस्तादधोलोकः वाहुल्येन तत्प्रमाणस्तिर्यक्प्रसृतस्तिर्यग्लोकः तस्योपरि
ष्टात् उर्द्धलोकः चूलिका चत्वारिंशद्योजनोछ्राया तस्या उपरि केशांतरमात्रे व्यवस्थितमृजुवि
मानमिंद्रकं सौधर्मस्य सर्वमन्यल्लोकनियोगाद्वेदितव्यं नवसु ग्रैवेयकेष्विति नवशब्दस्य पृथ
ग्वचनं किमर्थं अन्यान्यपि नवविमानानि अनुदिससंज्ञकानि संतीति ज्ञापनार्थं तेनानुदिशानां
ग्रहणं वेदितव्यं एषामधिकृतानां वैमानिकानां परस्परतो विशेषप्रतिपत्यर्थमाह॥२०॥ स्थिति
प्रभावसुखद्युतिलेश्याविशुद्धींद्रियावधिविषयतोधिकाः॥ स्वोपात्तस्यायुषः उदयात्तस्मिन्भवे

वानांकुमाराणांवासाः द्वितीयनिकायस्यसामान्यविशेषसंज्ञावधारणार्थमाह॥ छ॥ व्यंतराः॥
किन्नराः किंपुरुषमहोरगगंधर्वयक्षराक्षसभूतपिशाचाः॥ विविधदेशांतराणियेषांनिवासास्ते
व्यंतरा इति अन्वर्था सामान्यसंज्ञेयमपिविकल्पानांतेषांव्यंतराणांअष्टौविकल्पाः किन्नरादयो
वेदितव्याः नामकर्मोदयविशेषापादिताः क्वपुनस्तेषामावासा इतिचेदुच्यते॥ अस्माज्जंबूद्वीपादसंख्ये
यान्द्वीपसमुद्रानतीत्यउपरिष्ठेखरपृथिवीभागेसप्तानांव्यंतराणामावासाः राक्षसानांपंकबहुलभा
गेतृतीयस्यनिकायस्यसामान्यविशेषसंज्ञाकीर्तनार्थमाह॥ छ॥ ज्योतिष्काः सूर्याचंद्रमसोग्रहन
क्षत्रप्रकीर्णकतारकाश्च॥ ज्योतिःस्वभावत्वादेषांपंचानामपिज्योतिष्का इतिसामान्यसंज्ञा अन्व
र्थाः सूर्यादयस्तद्विशेषसंज्ञानामकर्मोदयप्रत्ययाः सूर्याचंद्रमसावितिपृथक्ग्रहणंप्राधान्य
ख्यापनार्थं किंकृतंपुनः प्राधान्यंप्रभावादिकृतं क्वपुनस्तेषांआवासा इत्यत्रोच्यते अस्मात्समान
भूमिभागादूर्ध्वंसप्तयोजनशतानिनवत्युत्तराणिउत्प्लुत्यसर्वेषांज्योतिषामधोभागेविन्यस्तास्तारका
श्चरंति ततोदशयोजनान्युत्प्लुत्यसूर्याश्चरंति ततोऽशीतियोजनानामुत्प्लुत्यचंद्रमसोभ्रमंति त
तस्त्रीणियोजनानिउत्प्लुत्यनक्षत्राणि ततश्चत्वारियोजनानिबुधाः ततस्त्रीणियोजनान्युत्प्लु
त्य शुक्राः ततस्त्रीणियोजनान्युत्प्लुत्यबृहस्पतयः॥ ततश्चत्वारियोजनानिउत्प्लुत्यअंगारकाः॥ तत

त्रह्योत्तरलांतवकापिष्टेषुदेवादिव्यांगनाश्रृंगाराकारविलासचतुरमनोज्ञवेषरूपालोकनमा
त्रादेवपरमसुखमाप्नुवंति॥शुक्रमहाशुक्रसतारसहस्रारेषुदेवावनितानांमधुरसंगीतमृ
दुहसितललितकथितभूषणरवश्रवणमात्रादेवपरांप्रीतिमास्कंदंति॥ऽआनतप्राणतारणा
च्युतकल्पेषुदेवाःस्वांगनामनःसंकल्पमात्रादेवपरंसुखमवाप्नुवंति॥ऽअथोत्तरेषांकिंप्रकारंसु
खमित्युक्तेतन्निश्चयार्थमाह॥ ॥परेऽप्रवीचाराः॥परग्रहणमितराशेषसंग्रहार्थंऽअप्रवीचार
ग्रहणंपरमसुखप्रतिपत्त्यर्थंप्रवीचारोहिवेदनाप्रतीकारःतदभावेतेषांपरमसुखमनवरतमित्यु
क्तंभवति॥उक्तायेऽआदिनिकायादेवाःदशविकल्पाइतितेषांसामान्यविशेषसंज्ञावधारणार्थ
मिदमुच्यते॥भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः॥भवने
षुवसंतीत्येवंशीलाभवनवासिनःऽआदिनिकायस्येयंसामान्यसंज्ञाःऽअसुरादयःविशेषसंज्ञाःवि
शिष्टनामकर्मोदयापादितवृत्तयः॥सर्वेषांदेवानांऽअवस्थितवयःस्वभावत्वेपिवेषभूषायुधया
नवाहनक्रीडनादिकुमारवदेषांऽआभासतइतिभवनवासिषुकुमारव्यपदेशोरूढः॥प्रत्येकंपरि
समाप्यतेऽअसुरकुमाराइत्येवमादि॥क्वतेषांभवनानीतिचेदुच्यतेरत्नप्रभायाःपंकबहुलभागे
ऽअसुरकुमाराणांभवनानिखरपृथिवीभागेउपर्यधश्चएकैकयोजनसहस्रंवर्जयित्वाशेषेन

हाघोषश्च उदधिकुमाराणांजलकांतोजलप्रभश्चद्वीपकुमाराणांपूर्णोवसिष्टश्चदिकुमा
राणां॰अमितिगतिरमितवाहनश्चेतिव्यंतरेष्वपिकिंनराणांद्वाविंद्रौकिंनरकिंपुरुषश्चके
पुरुषाणांसत्पुरुषोमहापुरुषश्चमहोरगाणां॰अतिकायोमहाकायश्चगंधर्वाणांगीतरतिर्गी
तयशाश्चयक्षाणांपूर्णभद्रोमाणिभद्रश्चराक्षसाणांभीमोमहाभीमश्चपिशाचानांकालोम
हाकालश्चभूतानांप्रतिरूपोऽप्रतिरूपश्च॰अथैषांदेवानांसुखंकीदृशमित्युक्तेसुखाववोधना
र्थमाह॥७॥कायप्रविचारा॰आऐशानात्॥प्रवीचारोमैथुनोपसेवनंकायेनप्रवीचारोयेषांते
कायप्रवीचाराः॰आङभिविध्यर्थः॰असंहितयानिर्देशः॰असंदेहार्थःएतेभवनवास्यादयः
ऐशानांताःसंक्लिष्टकर्म्मकत्वात्मनुष्यवत्स्त्रीविषयसुखमनुभवंतीत्यर्थः॰अवधिग्रहणादि
तरेषांसुखविभागे॰अनिर्ज्ञातेतत्प्रतिपादनार्थमाह॥८॥शेषाःस्पर्शरूपशब्दमनःप्रवीचा
राः॥उक्ताविशिष्टसंग्रहार्थंशेषग्रहणंकेपुनरुक्ताव्यशिष्टाकल्पवासिनःस्पर्शश्चरूपंचशब्दश्च
मनश्चस्पर्शरूपशब्दमनांसितेषुप्रवीचारोयेषांतेस्पर्शरूपशब्दमनःप्रवीचाराः कथमभिसंवंध
॰आर्षाविरोधेनकुतःपुनःप्रवीचारग्रहणमिष्टसंप्रत्ययार्थमितिकःपुनरिष्टोभिसंवंधः॰आर्षावि
रोधीसनत्कुमारमाहेंद्रयोर्देवादेवांगनांगस्पर्शमात्रादेवपरांप्रीतिमुपलभंतेतथादेव्योपि ब्रह्म

स्त्रिंशाः वयस्यपीठमर्द्दसदृशाः परिषदिभवा पारिषदाः॥ आत्मरक्षाः शिरोरक्षोपमानाः
अर्थचरा रक्षिकसमा लोकपालाः लोकं पालयंतीति लोकपालाः पदात्यादीनि सप्तानीका
नि सैन्यस्थानीकानि दंडस्थानीयानि प्रकीर्णकाः पौरजनपदकल्पाः आभियोग्या दाससमा
नाः वाहनादिकर्म्मणि प्रवृत्ताः अंतेवासस्थानीयाः किल्बिषिकाः किल्बिषमेषामस्तीति कि
ल्बिषिकाः एकैकशः एते इंद्रादयो दशविकल्पाश्चतुर्षु निकायेषु उत्सर्गेण प्रशक्तास्ततोपवा
दार्थमाह॥ त्रायस्त्रिंशल्लोकपालवर्ज्या व्यंतरज्योतिष्काः॥ व्यंतरेषु ज्योतिष्केषु च त्रायस्त्रिं
शान् लोकपालांश्च वर्ज्जयित्वा इतरेष्टौ विकल्पा द्रष्टव्याः॥ अथ तेषु निकायेषु किमेकैक इंद्र उ
तान्यः प्रतिनियमः कश्चिदस्तीत्यत आह॥ पूर्वयोर्द्वींद्राः॥ पूर्वयोर्न्निकाययोः भवनवासिव्यं
तरनिकाययोः कथं द्वितीयस्य पूर्वत्वं सामीप्यात् पूर्वत्वमुपचर्योक्तं द्वींद्रा इति अंतरनीतः
वीप्सार्थः द्वौ द्वौ इंद्रौ येषां ते द्वींद्राः इति यथा सप्तपर्णोष्टापद इति तद्यथा भवनवासिषु ताव
दसुरकुमाराणां द्वाविंद्रौ चमरो वैरोचनश्च नागकुमाराणां धरणो भूतानंदश्च विद्युत्कुमा
राणां हरिसिंहो हरिकांतश्च सुपर्णकुमाराणां वेणुदेवो वेणुदारी च अग्निकुमाराणां अ
ग्निशिखोग्निमाणवश्च वातकुमाराणां वेलंप्रभंजनश्च स्तनितकुमाराणां सुघोषोम

यांते पीतांतलेश्याः एतदुक्तंभवति आदितस्त्रिषुनिकायेषुभवनवासिव्यंतरज्योतिष्का
णांअसुरदेवानांकृष्णानीलाकापोतपीतेतिचतस्त्रलेश्याभवंति तेषांनिकायानामंतर्वि
कल्पप्रतिपादनार्थमाह॥ दशाष्टपंचद्वादशविकल्पाःकल्पोपपन्नपर्यंताः॥चतुर्णांदेव
निकायानांदशादिभिःसंख्याशब्दैःयथासंख्यमितिसंबध्येवेदितव्यःदशविकल्पाःभव
नवासिनअष्टविकल्पाव्यंतराः पंचविकल्पाज्योतिष्काः।द्वादशविकल्पावैमानिकाइति
सर्वेवैमानिकानांद्वादशविकल्पांतः॥पातित्वेप्रशक्तेग्रैवेयकादिनिवृत्यर्थंविशेषणमु
पादीयतेकल्पोपपन्नपर्यंताइतिअथकथंकल्पसंज्ञाः॥इंद्रादयःप्रकाराःदशैतेषुकल्प्य
तइतिकल्पाःभवनवासिषुतत्कल्पनासंभवेपिरूढिवशात्वैमानिकेष्वेववर्ततेकल्पश
ब्दः कल्पेषूपपन्नाःकल्पोपपन्नाःपर्यंतायेषांतेकल्पोपन्नपर्यंताःपुनरपितद्विशेषप्रति
पत्यर्थमाह॥इंद्रसामानिकत्रायस्त्रिंशत्परिशदात्मरक्षलोकपालानीकप्रकीर्णकाभि
योग्यकिल्बिषकाश्चैकशः॥४॥अन्यदेवासाधारणाणिमादिगुणयोगादिंदंतीतींद्राः॥आज्ञै
श्वर्येवर्जितंयत्तस्यानायुर्वीर्यपरिवारभोगोपभोगादितत्समानंतस्मिनसमानेभवाःसा
मानिकाःमहत्तराःपितृगुरूपाध्यायतुल्याःमंत्रिपुरोहितस्थानीयाः॥त्रयस्त्रिंशदेवत्रंय

श्रीः॥भूबिललेश्याद्यायुर्द्वीपोदधिवीप्रगिरिसरःसरितांमानेन्द्रणांभेदस्थितिःतिरश्चामपि
तृतीये॥छ॥भवप्रत्ययोवधिर्देवनारकाणामित्येवमादिषुअसकृद्देवशब्दउक्तः तत्रनज्ञाय
तेकेदेवाःकतिविधाइतिवातन्निर्णयार्थमाह॥छ॥देवाश्चतुर्णिकायाः॥देवगतिनामक
र्मोदयेसत्यभ्यंतरहेतौबाह्यविभूतिविशेषैःद्वीपादिसमुद्रादिप्रदेशेषुयथेष्टंदीव्यंतिक्रीडं
तीतिदेवाः॥इहेकवचननिर्देशोयुक्तः देवश्चतुर्णिकायइतिसजात्यभिधानात् वहूनांप्रति
पादकोभवति वहुत्वनिर्देशस्तदंतर्गतभेदप्रतिपत्त्यर्थः इंद्रसामानिकादयोवहवोभेदाः
संन्तिस्थित्यादिकृताश्चततस्सूचनार्थं देवगतिनामकर्मोदयस्यस्वकर्म्मविशेषापादित
भेदस्यसामर्थ्यात् निचीयंतइतिनिकायाःसंघाताइत्यर्थः चत्वारोनिकायायेषांतेचतु
र्निकायाः केपुनस्तेभवनवासिनोव्यंतराज्योतिष्कावैमानिकाश्चेति तेषांलेश्यावधारणा
र्थमिदमुच्यते॥छ॥ऽआदितस्त्रिषुपीतांतलेश्याः॥ऽआदितइत्युच्यतेऽअंतेमध्येऽअन्यथा
वाग्रहणंमाविज्ञायीतिऽआदौऽआदितः द्वयोरेकस्यचनिवृत्त्यर्थंत्रिग्रहणंक्रियतेऽअथच
तुर्णांनिवृत्त्यर्थंकस्मान्नभवतिऽआदितइतिवचनात्षड्लेश्याउक्ताः तत्रचतस्रणांलेश्या
नांग्रहणार्थंपीतांतग्रहणंक्रियतेपीतांतेजइत्यर्थः पीताऽअंतेयासांताःपीतांतालेश्याये

॥६०॥ ॐ जिनाय नमः ॥ अथ श्री जिनसहस्र नाम श्रीजिनसेनाचार्यकृतं लिख्यते ॥ स्वयं
भुवे नमस्तुभ्य मुत्पाद्यात्मानमात्मनि। स्वात्मनैव
तथोद्भूत वृत्तये चिंत्य वृत्तये ॥१॥ नमस्ते जगतां
पत्ये लक्ष्मीभर्त्रे नमोनमः। विदांवर नमस्तुभ्यं।
नमस्ते वदतांवर ॥२॥ कामशत्रुहणं देव। मामनं
ति मनीषिणः। त्वामानमत्सुरेण्मौलिः स्रग्मार
लाभ्यर्चितक्रमं ॥३॥ ध्यानद्रुघंण निर्भिन्न। घन
घातिमहातरु। अनंतभवसंतान। जयादासी
रनंतजित् ॥४॥ त्रैलोक्यनिर्जयावाप्त। दुर्दर्पमति
दुर्जयं। मृत्युराजं विजित्यासी ज्जिनमृत्युंजयो भवान् ॥५॥ विधूताशेषसंसार। बंधनो भ
व्यबांधवः। त्रिपुरारिस्त्वमीशोसि। जन्ममृत्युंज
रांतकृत् ॥६॥ त्रिकालविषयाशेष। तत्वभेदात्त्रि
धोत्थितं। केवलाख्यं दधच्चक्षुः स्त्रिनेत्रोसि त्व
मीशितः ॥७॥ त्वामंधकांतकं प्राहु। र्मोहांधासुर
मर्दनात्। अर्द्धं ते नारयो यस्मा दर्द्धनारीश्वरो
स्यतः ॥८॥ शिवः शिवपदध्यासा द्दुरितारिहरो
हरः। शंकरः कृतसं लोके। शंभवस्त्वं भवन्सुखे
॥९॥ वृषभोसि जगज्ज्येष्ठः। पुरुः पुरुगुणोदयैः।
नाभेयो नाभिसंभूते रिक्ष्वाकुकुलनंदनः ॥१०॥
त्वमेकपुरुषस्कंध स्त्वं द्वे लोकस्यलोचने। त्वं त्रि

धातुधिसन्मार्गस्त्रिस्त्रिज्ञानधारकः ११ त्वनु
सरणमांगल्य मतिस्त्वंचतुरस्त्रधी पंचब्रह्म
मयोदेव पावनस्त्वंपुनीहिमां १२ त्वनुःसरण
मांगल्य मतिस्त्वंचतुरस्त्रधी पंचब्रह्ममयोदेव
पावनं॥ स्वर्गावतारिणेतुभ्यं सद्योजातात्मनेनम
जन्माभिषेकमादाय वामदेवोनमोस्तुते २३
पुरुषपसुरुषत्वेन विमुक्तिपदभाजिने नम
स्तत्पुरुषावस्थःभाविनीतेघविश्रुते २४ श
नीक्रांतायघोरायपरंप्रशममीयुषे केवल
ज्ञानसंसिद्धावीशणनायनमोस्तुते २५ ज्ञानव
रणनिर्हासा नमस्तेनंतचक्षुषे दर्शनावरण
छेदी नमस्तेविश्वदर्शिने २६ नमोदर्शनमोहघ्ने
क्षायिकामलदृष्टये नमःश्चारित्रमोहघ्ने वि
रागायमहौजसे २७ नमस्तेनंतवीर्याय नमोनं
तसुखात्मने नमस्तेनंतलोकाय लोकालोकाव
लोकिने २८ नमस्तेनंतदानाय नमस्तेनंतलब्ध
ये नमस्तेनंतभोगाय नमोनंतोपभोगिने २९
नमःपरमयोगाय नमस्तुभ्यमयोनये नमः
परमपूताय नमस्तेपरमर्षये ३० नमःप
रमविद्याय नमःपरमतच्छिदे नमःपरमत
त्वाय नमस्तेपरमर्षिने ३१ नमपरमरूपा

य॥ नमः परमतेजसे॥ नमः परममार्गाय॥ नमस्ते परमेष्ठिने॥ २२॥ परमं भेजुषे धाम प॰ मं ज्योतिषे नमः॥ नमः पारेतमः प्राप्तः धाम्ने परमात्मने॥ २३॥ नमः क्षीण कलंकाय॥ क्षीण बंधु नमोस्तु ते॥ नमस्ते क्षीण मोहाय॥ क्षीण दोषाय ते नमः २४ नमः सुगतये तुभ्यं॥ शोभनां गतिमीयुषे॥ नमस्तेतींद्रियज्ञान॥ सुखायानींद्रियात्मने॥ २५॥ कायबंधन निर्मोक्षा॥ दकायाय नमोस्तु ते॥ नमः स्तुभ्यमयोगाय॥ योगिनामधियोगिने २६ ॥अवेदाय नमस्तुभ्य मकषायते नमः नमः परम योगींद्रः वंदितांह्रिद्वयाय ते॥ २७॥ नमः परमविज्ञान॥ नमः परमसंयतः नमः परमदृग्दृष्ट परमार्थाय तायिने॥ २८॥ नमस्तुभ्यमलेश्याय शुक्ललेश्यकस्पृशे॥ नमोभव्येतरावस्था॥ व्यतीताय विमोक्षिणे॥ २९॥ संज्ञसंज्ञि द्वयावस्था॥ व्यतिरिक्तामलात्मने नमस्ते वितसंज्ञाय॥ नमः क्षायिक दृष्टये॥ ३०॥ अनाहाराय तृप्ताय॥ नमः परमभाजुषे॥ व्यतीताशेषदोषाय भवाब्धेपारमीयुषे ३१॥ अजराय नमस्तुभ्य॥ मचलायक्षरात्मने॥ ३२॥ अलमास्तां गुण स्तोत्रं मनंतास्तावका गुणाः॥ त्वनामस्मृतिमा

ण॥ पर्युपासिषिषामहे॥३३॥प्रसिद्धाष्टसहस्रेद्ध
लक्षणं त्वां गिरांपतिं॥ नाम्नामष्टसहस्रेण॥ तोष्टु
मोभीष्टसिद्धये ३४॥इतिस्तुतिः॥ श्रीमानस्वयंभु
र्वृषभः॥ शंभवः संभवात्मभूः स्वयंप्रभः प्रभुर्भो
क्ता॥ विश्वभूरपुनर्भवः॥३५॥ विश्वात्माविश्वलो
केशो॥ विश्वतश्चक्षुरक्षरः॥ विश्वविद्विश्वविद्येशो
विश्वयोनीरनीश्वरः॥३६॥ विश्वदृश्वाविभुर्धाता
विश्वेशो विश्वलोचनः॥ विश्वव्यापीविधिर्वेधा॥
शाश्वतो विश्वतोमुखः॥३७॥ विश्वकर्माजगज्ज्ये
ष्ठो विश्वमूर्तीर्जिनेश्वरः॥ विश्वदृग्विश्वभूतेशो
विश्वज्योतिरनीश्वरः॥३८॥ जिनो जिष्णुरमेयात्मा
विश्वरीशोजगत्पतिः॥ अनंतजिदचिंतात्मा॥ भ
व्यबंधुरबंधनः॥३९॥ युगादिपुरुषो ब्रह्मा॥ पंचब्र
ह्ममयः शिवः परः परतरः सूक्ष्मः परमेष्ठी स
नातनः॥४०॥ स्वयंज्योतिरजोजन्मा ब्रह्मयोनिरयो
निजः॥ मोहारिविजयीजेता॥ धर्म्मचक्रीदयाध्वजः
४१॥ प्रशांतारिरनंतात्मा॥ योगीयोगीश्वरार्चितः ब्रह्म
विद्ब्रह्मतत्वज्ञो ब्रह्मोद्यावित्॥ यतीश्वरः ४२
सिद्धो बुद्धप्रबुद्धात्मा॥ सिद्धार्थः सिद्धशासनः सि
द्धसिद्धांतविद्ध्येयं॥ सिद्धसाध्योजगद्धितः॥४३॥ सहि
ष्णुरच्युतोनंत॥ प्रभविष्णुर्भवोद्भवः॥ प्रभूष्णुरजरो

जषो। भ्राजिष्णुर्धीश्वरोव्ययः।४४। विभावसुर
संभूष्णु। स्वयंभूष्णुपुरातनः परमात्मापरंज्योति
स्त्रिजगत्परमेश्वरः।४५। इतिश्रीमद्धृतं। दिव्य
भाषापतिर्दिव्यः पूतवाक्पूतशासनः पूतात्मा
परमंज्योतिः धर्म्माध्यक्षोदमीश्वरः।४६। श्रीप
तिर्भगवानर्हं नरजाविरजाशुचिंतीर्थकृत्के
वलीशान पूजार्हस्नातकोमलः।४७। अनंतदि
प्तिर्ज्ञानात्मा स्वयंबुद्धः प्रजापतिः मुक्तसक्तोनिरा
बाधो निःकलोभुवनेश्वरः।४८। निरंजनोजग
ज्योतिः निरुक्तोनिरामयः अचलस्थितिरक्षो
भ्यः कूटस्थस्थानुरक्षयः।४९। अग्रणीर्ग्रामणी
र्नेता प्रणेतान्यायशास्त्रकृत् शास्ताधर्म्मपति
र्धर्म्मो धर्म्मात्माधर्मतीर्थकृत्।५०। वृषध्वजो व
षाधीशो वृषकेतुर्वृषायुधः वृषोवृषपतिर्भर्ता
वृषभांकोवृषोद्भवः।५१। हिरण्यनाभिर्भूतात्मा
भूतभृद्भूतभावनः प्रभवोविभवोभास्वभवो
भावोभवांतकः।५२। हिरण्यगर्भः श्रीगर्भः प्रभू
तविभवोभवः स्वयंप्रभुप्रभुर्त्तात्मा भूतनाथो
जगत्प्रभुः।५३। सर्वादिसर्वदिक्साक्षे सर्वज्ञस
र्वदर्शिनः सर्वात्मासर्वलोकेस। सर्ववित्सर्
वलोकजित्।५४। सुगतिः सुश्रुतः सुश्रून

सर्वावस्तुर्विद्वन्श्रुत विश्रुतो विश्रुतः पादो
विश्वशीर्षश्च विश्ववाः ५५ सहस्रशीर्षसेत्र
ज्ञः सहस्राक्षः सहस्रपात भूतभव्यभवद्‌(
त्तो विश्वविद्यामहेश्वरः ५६ दिव्यशतं स्य
विष्टः स्थविरोज्येष्ठः प्रष्टप्रेष्ठोवरीष्ठधीस्थे
ष्ठोगरिष्ठोवहिष्ठः श्रेष्ठोणिष्ठोगरिष्ठगी
५७ विश्वभृद्विश्वसृद्विश्वे ड्विश्वभुग्विश्व
नायक विश्वासी विश्वरूपात्मा विश्वजिद्विजि
तांतकः ५८ विभावोविभयोवीरो विशोको
विजरोजरन् विरागोविरतो संगो विविक्तोवी
तमत्सरः ५९ विनेयजनितावंधुर्विलीनाशे
षकल्मषः वियोगयोगविद्विद्वान् विधातासु
विधीसुधी ६० सांतिभाग् पृथिवीमूर्ति शांति
भाक्सलिलात्मकः वायुमूर्तिरसांगात्मा वह्नि
मूर्तिरधर्मधक् ६१ सुयज्वायजमनात्मा सुत्वा
सुत्रामपूजितः ऋत्विग्यज्ञपतिर्यज्ञो जग्यां
गममृतंहविः ६२ व्योममूर्तिरमूर्तात्माः नि
र्लेपो निर्मलोचनः सोममूर्तिः सुसौम्यात्मा सू
र्यमूर्तिर्महाप्रभुः ६३ मंत्रविन्मंत्रकृन्मंत्री मंत्र
मूर्तिरनंतगः स्वतंत्रस्तंत्रकृत्स्वंतः कृतांतांतः
कृतांतकृत ६४ कृतीकृतार्थसत्कृत्यः कृतकृत्य

कृत:कृतु:।नित्योमृत्युंजयोमृत्यु रमृतात्मामृ
तोद्भव: ६५।ब्रह्मनिष्ठपरंब्रह्म।ब्रह्मात्माब्रह्मसं
भव:।महाब्रह्मपतिर्ब्रह्मे ब्रह्माब्रह्मपरेश्वर:।६६
सुप्रसन्नप्रसन्नात्मा:।ज्ञानधर्म्मदम:प्रभु:प्रशमा
त्माप्रशांतात्मा।पुराणपुरुषोत्तम:।६७।। [illegible]
[illegible] ।।महाशोकध्वजोशोक:।क:स्रष्टाप
द्मविष्टर:।पद्मेसप्यद्मसंभूति:।पद्मनाभिरनु
त्तर:।६८।पद्मयोनिर्जगद्योनि।रित्यस्तुत्य:स्तुति
श्वर: स्तवनार्होहृषीकेशो।जितजेयकृत:क्रिय:
६९।गणाधिपोगणज्येष्ठो।गुण्य:पुण्योगुणागुणी
गुणाकरोगुणांभोधि।र्गुणज्ञोगणनायक:।।७०।
गुणादरीगुणोछेदी।निर्गुण:पुण्य:गीर्गुण: श
रण्यपुण्यवाक्पुतो।वरेण्यगुणनायक:।७१।अ
गण्यपुण्यधीर्गण्य।पुण्यकृत्पुण्यशासन:।धर्म्मा
रामोगुणग्रामा।पुण्यापुण्यनिरोधक:।।७२।।पा
पापेतोविपापात्मा।विपाप्मावीतकल्मष:।निर्द्वं
द्वोनिर्मद:शांतो।निर्मोहोनिरुपद्रव:।७३।निर्नि
मेषोनिराहारो।नि:क्रियोनिरुपप्लव:।नि:कलंको
निरस्तैनो।निर्धूतागोनिराश्रव:।७४।।विशालो
विपुलज्योति।रतुलोचिंत्यवैभव:।सुसंवृत:सुगु
प्तात्मा।सुभृत्सनयतत्ववित्।७५।एकविद्योमहा

विद्यो मुनिःपरिदृढव्रतिः धीशोविद्यानिधीःसा
क्षीःविनिताविहितांतकः७६ पितापिता महःपा
ताः पवित्रपवनोगतिः त्राताविषगवरोवर्यो वर
रःपरमःपुमान् ७७ कविःपुराणपुरुषो वर्षीया
वृषभःपुरुः व्रतिष्ठाप्रवसोहेतुर्भुवनैकपिताम
हः ७८ इति महामुनिः श्रीवृक्षलक्षणःश्ल
क्ष्णो लक्षण्यःशुभलक्षणः निरीक्षपुंडरीकाक्षः
पुष्कलःपुष्करेक्षणः ७९ सिद्धदःसिद्धसंकल्पः
सिद्धात्मासिद्धसाधनः बुद्धबोध्योमहाबोधि वं
र्द्धमानोमहर्द्धिकः ८० वेदांगोवेदविद्वेद्यो जातरू
पोविदांवरः बेदवेद्यस्वयंबेद्यो विवेदोवदतांव
रः ८१ अनादिनिधनोव्यक्तो व्यक्तवाग्व्यक्तशा
सनः युगादिकृद्युगाधारो युगादिजगदादिजः
८२ अतींद्रोतींद्रियोधींद्रो महेंद्रोतींद्रियार्थदृक्
अतिंद्रियोहमिंद्रार्च्यो महेंद्रमहतोमहान् ८३
उद्भवकारणंकर्त्ता पारगोभवतारकः अगाह्योग
हनंगुह्यं परार्द्धःपरमेश्वरः ८४ अमंतर्द्धिरमे
यर्द्धिरचिंत्यर्द्धीसमाग्रधीः प्राग्यप्राग्हरोभ्यग्र
यःप्रत्यग्रोग्रिमोग्रजः ८५ महातपोमहातेजाः
महोदर्कोमहोदयः महाजसामधामाः महासत्वो
महाद्युतिः ८६ महाधीर्योमहावीर्यो महासंपन्म

हाबलः॥महाशक्तिर्महाज्योतिर्महाभूतिर्महाद्यु
तिः॥८७॥महामतिर्महानीतिर्महाक्षांतिर्महादयः
महाप्रज्ञोमहानंदो।महाभागोमहाकविः॥८८॥म
हामहामहाकीर्त्तिर्महाकांतिर्महावपुः।महादानो
महाज्ञानोमहायोगोमहागुणः॥८९॥महामहाप
तिःप्राप्तमहाकल्याणपंचकः॥महाप्रभुर्महाप्राति
हार्याधीशोमहेश्वरः॥९०॥ ।महा
मुनिर्महाध्यानी।महामौनीमहादमः।महाक्षमो
महाशीलो।महायज्ञोमहामखः॥९१॥महाव्रतप
तिर्मह्यो।महाकांतिधरोधिपः॥महामैत्रीमयोमे
यो॥महोपायोमहोमयः॥९२॥महाकारुणिकोमं
ता।महामंत्रोमहायतिः।महानादोमहाघोषो॥म
हेज्योमहसांपतिः॥९३॥महाध्वरंधरोधुर्यो।महौद
र्योमहिष्ठवाक॥महात्मामहसांधाम।महर्षिर्महि
तोदयः॥९४॥महाक्लेशांकुशःशूरोमहाभूतपतिर्गुरुः
महापराक्रमोनंतो।महाक्रोधरिपुर्वसी॥९५॥महा
भवाब्धिसंतारि।महामोहाद्रिसूदनः॥महागुणा
करःक्षांतो।महायोगीश्वरशमी॥९६॥महाध्यानप
तिर्ध्याता।महाधर्मामहाव्रतः।महाकर्मारिहात्म
ज्ञो।महादेवोमहेशिता॥९७॥सर्वक्लेशापहःसाधुस
र्वदोषहरोहरः॥असंख्येयोप्रमेयात्मा।शमात्मा

प्रशमाकरः॥९९॥सर्वयोगीश्वरोचिंत्यः श्रुतात्मा विष्टरश्रवा॥दंतात्मा दमतीर्थेशो योगात्मा ज्ञानसर्वगः॥१००॥प्रधानमात्मा प्रकृतिः परमः परमोदयः॥प्रक्षीणः वंधकामारि क्षेमकृत क्षेमशाशनः॥१०१॥प्रणवःप्रणयःप्राणः प्राणदःप्राणतेश्वर प्रमाणंप्रणिधिर्दक्षो दक्षिणो ध्वर्युरध्वरः॥१०२॥आनंदो नंदनो नंदो वंद्यो नंद्यो भिनंदकः कामहाकामदकाम्यः कामधेनुररिंजयः॥१०३॥ इति महामुनिशतं॥ असंस्कृतसुसंस्कारो प्राकृतो वैकृतांतकृत॥अंतःकृत्कांतगुः कांतिश्चिंतामणिरभीष्टदः॥१॥अजितोजितकामारिरमितोमितशासनः॥जितक्रोधो जितामित्रो जितक्लेशो जितांतकः॥२॥जिनेंद्रःपरमानंदो मुनींद्रो दुंदुभिःस्वनः॥महेंद्रवंद्यो योगींद्रो यतींद्रो नाभिनंदन॥३॥नाभेयो नाभिर्योजातः सुव्रतो मुनिरुत्तमः॥अभेद्यो निरयो नार्व्वानधिकोधिगुरुःसुगीः॥४॥सुमेधा सहक्रमी स्वामी दुराधर्षोनिरुत्सुकः विशिष्टशिष्टभुक्शिष्टः प्रत्ययःकामनोनघः॥५॥क्षेमीक्षेमंकरोक्षय्यः क्षेमधर्मःपतीक्षमी॥अग्राह्योज्ञाननिग्राह्यो ध्यानगम्यो निरुत्तरः॥६॥सुकृति धातुरिज्यार्हः सुनयश्चतुराननः॥श्रीनिवा

अनुर्वक्र॥अनुरास्यअनुमुखः॥९॥सत्यात्मास
त्यविज्ञानः॥सत्यवाक्सत्यशासनः॥सत्याशी
सत्यसंधानः॥सत्यसत्यपरायणः॥१०॥स्थेयान्
स्थवीयान्नेदीयान्दवीयानदूरदर्शनः॥अणो
रणीयाननणु॥र्गुरुराद्योगरीयसां॥११॥सदायो
गः॥सदाभोगः॥सदातृप्तसदाशिवः॥सदागतिस
दासौख्यः॥सदाविद्यः॥सदोदयः॥१२॥सुघोषःस
मुखंसौम्यः॥सुखदःसमितःसुकृत्॥सुगुप्तोगु
प्तिभृद्गोप्तालोकाध्यक्षोदमेश्वरः॥१३॥इतिसं
स्कृतशतं॥बृहद्बृहस्पतीर्वाग्मी॥वाचस्पतीरुदा
रुधीमनीषी॥धिषणोधीमान्॥शेमुषीशोगि
रांपति॥१४॥नैकरूपोनयोत्तुंगो॥नैकात्मानैकध
र्मकृत्॥अविज्ञेयोप्रतिकर्त्या॥कृतज्ञःकृतल
क्षणः॥१५॥ज्ञानागर्भोदयागर्भो॥रत्नगर्भःप्रभा
स्वरः॥पद्मगर्भोमहागर्भो॥हेमगर्भसुदर्शनः॥१६
लक्ष्मीवांस्त्रिदशाध्यक्षो॥दृढीयानइशिता॥म
नोहरोमनोज्ञांगो॥धीरोगंभीरशासनः॥१७॥ध
र्मयूपोदयायागो॥धर्मनेमिमुनीश्वरः धर्मच
क्रायुधोदेवः॥कर्महाधर्मघोषणः॥१८॥अमो
घवागमोघाज्ञो॥निर्मलोमोघशासनः॥स्वरूप
सुभगस्त्यागी॥समयज्ञसमाहितः॥१९॥सुस्थितः

स्वास्थ्यस्वस्थ्यस्थो नीरजस्को निरुद्धवः। अलेपो निः
कलंकात्मा वीतरागो गतस्पृहः॥२०॥वश्येंद्रियो वि
मुक्तात्मा निःसपत्नो जितेंद्रियः। प्रशांतोनंतधा
मर्षि मंगलं मलहानघः॥२१॥अनीदृगुपमाभू
तो दिष्टिर्दैवमगोचरः। अमूर्तो मूर्तिमानेको ने
कोनानेकतत्वदृक्॥२२॥अध्यात्मगम्यो गम्या
त्मा योगविद्योगवंदितः। सर्वत्रगः सदाभावी त्रि
कालविषयार्थदृक्॥२३॥शंकरः शंवदो दांतो द
मी क्षांतिपरायणः। अधिपः परमानंदः परात्म
ज्ञः परापरः॥२४॥त्रिजगद्वल्लभोभ्यर्च्यस्त्रिजन्मं
गलोदयः। त्रिजगत्पतिपूज्यांह्रिस्त्रिलोकाग्रशि
खामणिः॥२५॥इति वृहछंद॥८॥त्रिकालदर्शी
लोकेशो लोकधाता दृढव्रतः। सर्वलोकातिगः पू
ज्यः सर्वलोकैकसारथिः॥२६॥पुराणपुरुषः पू
र्वः कृतपूर्वांगविस्तरः। आदिदेवपुराणाद्यः पु
रुदेवोधिदेवता॥२७॥युगमुख्यो यु
गज्येष्ठो युगादिस्थितिदेसकः। कल्याणवर्णः
कल्याणः कल्यः कल्याणलक्षणः॥२८॥कल्याण
प्रकृतीदीप्रः कल्याणात्मा विकल्मषः। विकलं
कः कलातीतः कलिलघ्नः कलाधरः॥२९॥देवदे
वो जगन्नाथो जगद्बंधुर्जगद्विभुः। जगद्धितैषी

लोकज्ञः सर्वगो जगदग्रणी ॥ ३० चराचरगुरु
र्गोप्यो गूढात्मा गूढगोचरः ॥ सद्योजातः प्र
काशात्मा ज्वलः ज्वलनसंप्रभुः ॥ ३१ ॥ आदित्य
वर्णो भर्माभः सुप्रभः कनकः प्रभः ॥ सुवर्णव
र्णो रुक्माभः ॥ सूर्यकोटिसमप्रभः ॥ तपनीयनि
भस्तुंगो वलार्काभोनलप्रभुः ॥ संध्याभ्रवभ्रुहे
मा हेमतप्तचामीकरच्छविः ॥ ३३ ॥ निष्टप्तकनक
च्छाय कनत्कांचनसंनिभः हिरण्यवर्णस्व
र्णाभः शांतकुंभनिभप्रभः ॥ ३४ ॥ द्युम्नाभोजात
रूपाभो दीप्तिजांबुनदद्युतिः ॥ सुधौतकलधौ
तश्री प्रदीप्तो हाटकद्युति ॥ ३५ ॥ शिष्टेष्टः पुष्टि
दः पुष्टिः ॥ स्पष्टः स्पष्टाक्षरः क्षमः ॥ शत्रुघ्नोप्रति
घोमोघः प्रशास्ता शासिता स्वभुः ॥ ३६ ॥ शांतनि
ष्ठो मुनिज्येष्ठः शिवतातिः शिवप्रदः ॥ शांति
शांतिकृच्छांतिः कांतिर्मत्कामितप्रदः ॥ ३७ श्रेयान
न्निधिरधिष्ठिश्च ममप्रतिष्ठः प्रतिष्ठितः ॥ सु
स्थिरः स्थावरस्थाणु प्रथीयान्प्रथितः पृथुः
३८ ॥ इति दिक्पालशतं ॥ ५ ॥ दिग्वासा वातरस
नो निर्ग्रंथेशो दिगंबरः ॥ निकंचनो निराशंशो
ज्ञानचक्षुरमोमुहः ॥ ३९ ॥ तेजोराशिरनंतौजा
ज्ञानाब्धिः शीलसागरः तेजोमयोमितज्योति

ज्योतिमूर्तिस्तमोपहः ॥४०॥ जगच्चूडामणिर्दीप्तः
शंवान्विघ्नविनायकः ॥ कलिघ्नः कर्मशत्रुघ्नो ।
लोकालोकप्रकाशकः ॥४१॥ अनिद्रालुरतंद्रालु
र्जागरूकः प्रमामयः ॥ लक्ष्मीपतिर्जगज्ज्योति र्धर्म
राजप्रजाहितः ॥४२॥ मुमुक्षुर्बंधमोक्षज्ञो । जिताक्षो
जितमन्मथः ॥ प्रशांतरसशैलूषो । भव्यपेटकना
यकः ॥४३ मूलकर्ताखिलज्योतिर्मलघ्नो मूलका
रणं ॥ आप्तो वागीश्वरः श्रेयान् । श्रायसोक्तिनिरु
क्तवाक् ।४४ । प्रवक्तावचशामीशो । मारजिद्विश्व
भावविन् । सुतनुस्तनुनिर्मुक्तः । सुगतो हतदुर्नय
यः ॥४५। श्रीशः श्रीश्रितपादाब्जो । वीतभीरभ
यंकरः ॥ उत्सन्नदोषो निर्विघ्नो । निश्चलो लोक
वत्सलः ॥४६। लोकोत्तरो लोकपतिः । लोकचक्षुर
पारधीः । धीरधीर्बुद्धसन्मार्गः । शुद्धः सूनृतपूत
वाक् ।४७। प्रज्ञापारमितिः प्राज्ञो । यतिर्नियम
तेंद्रियः भदंतो भद्रकृद्भद्रः ॥ कल्पवृक्षो वरप्रदः
४८। समुन्मूलितकर्मारि । कर्मकाष्ठाशुशुक्ष
णि । कर्मण्यः कर्मठः प्रांशु हेयादेयविचक्षणः
४९। अनंतशक्तिरच्छेद्यः । त्रिपुरारिस्त्रिलोचनः
त्रिनेत्रः त्र्यंबकः त्र्यक्षः केवलज्ञानवीक्षणः ॥५०
समंतभद्रः शांतारिः । धर्माचार्यो दयानिधिः ॥

मज्झणाणो॥ आदामेदंसणेचरित्तेय॥ आदापच्चक्खाणे॥ आदामेसंवरयोगे॥ ॥ एगोमेसस्सदो अप्पा॥ णा
णदंसणलक्खणो॥ सेसामेबाहिराभावा॥ सव्वेसंजोगलक्खणा॥ ॥ इत्यादिसारपदानिगृहीत्वाचध्याना
वर्त्तव्यमिति॥ अथमोक्षविषयेपुनरपिनयविचारः कथ्यते॥ तथाहि॥ मोक्षस्तावद्बंधपूर्वकः॥ ॥ तथाचो
क्तं॥ मुक्तश्चेत्प्राग्भवेद्बंधो नोबंधोमोचनंकथं॥ अबंधेमोचनंनैव॥ मुंचेरर्थोनिरर्थकः॥ ॥ बंधश्चशु
द्धनिश्चयनयेननास्ति॥ तथाबंधपूर्वकमोक्षोपि॥ यदिपुनः शुद्धनिश्चयेनबंधोभवतितदासर्वदैवबंधो
एवमोक्षोनास्ति॥ किंच॥ यथाशृंखलाबद्धपुरुषस्यबंधच्छेदकारणभूतभावमोक्षस्थानीयंबंधच्छेदकार
भूतंपौरुषंपुरुषस्वरूपंनभवति॥ तथैवशृंखलापुरुषयोर्यद्द्वयमोक्षस्थानीयंपृथक्करणंतदपिपुरुष
स्वरूपंनभवति॥ किंतुताभ्यांभिन्नं यद्दृष्टंहस्तपादादिरूपंतदेवपुरुषस्वरूपं॥ तथैवशुद्धोपयोगलक्षणाभाव
भवति॥ तथैवतेनैवबंधनसाध्य॥ यज्जीवकर्मप्रदेशयोः
रणंद्रव्यमोक्षरूपंतदपिजीवस्वभावोनभवति॥ किंतुताभ्यांभिन्नं॥ यदनंतज्ञानादिगुणस्वभावफलभूतंत

द्धशुद्धजीवस्वरूपमिति॥ अयमत्रार्थः॥ यथाविवक्षितैकदेशशुद्धनिश्चयेनपूर्वंमोक्षमार्गोव्याख्यातः॥ तथा
पर्यायमोक्षरूपोमोक्षोपिनचशुद्धनिश्चयेनेति॥ यस्तुशुद्धद्रव्यशक्तिरूपः शुद्धपारिणामिकपरमभावलक्ष
णपरमनिश्चयमोक्षःसचपूर्वमेवजीवेतिष्ठतीदानींभविष्यतीत्येवंनसएवरागादिविकल्परहितमोक्षकारण
भूतेध्यानभावनापर्यायेध्येयोभवतिनचध्यानभावनापर्यायरूपः॥ यदिपुनरेकांतेनद्रव्यार्थिकनयेनापि
सएवमोक्षकारणभूतोध्यानभावनापर्यायोभण्यते॥ तर्हिद्रव्यपर्यायरूपधर्मद्वयाधारभूतस्यजीवधर्मि
णोमोक्षपर्यायेजातेसति॥ यथाध्यानभावनापर्यायरूपेणविनाशोभवति॥ तथाध्येयभूतस्यजीवस्य
शुद्धपारिणामिकभावलक्षणद्रव्यरूपेणापिविनाशःप्राप्नोति॥ नचद्रव्यरूपेणविनाशोस्ति॥ ततःस्थि
तंशुद्धपारिणामिकभावनबंधमोक्षौनभवतइति॥ अथात्मशब्दार्थः कथ्यते॥ अतधातुःसातत्यगम
नेर्थेवर्त्तते॥ गमनशब्देनात्रज्ञानंभण्यते॥ सर्वेगत्यर्थाज्ञानार्थाइतिवचनात्॥ तेनकारणेनयथासंभ
वंज्ञानसुखादिगुणेषुआसमंतात्॥ अततिवर्त्ततेयःसआत्माभण्यते॥ अथवाशुभाशुभमनोवचनकाय

भवतोऽज्ञमंदादिरूपेणाऽऽसमंतादततिवर्त्ततेयः स आत्मा॥ अथवोत्पादव्ययध्रौव्यैरासमं
तादततिवर्त्ततेयः स आत्मेति॥ किंच॥ यथैकोऽपि चंद्रमा नानाजलघटेषु दृश्यते॥ तथैकोऽपि जीवो नानाशरीरेषु ति
ष्ठतीति यद्वदति तन्न घटते॥ कस्मादिति चेत्॥ चंद्रकिरणोपाधिवशेन घटस्थजलपुद्गला एव नानाचंद्रा
कारेण परिणता न चैकश्चंद्रः॥ तत्र दृष्टांतमाह॥ यथा देवदत्तमुखोपाधिवशेन नानादर्पणस्थपुद्ग
ला एव नानामुखाकारेण परिणता न चैको देवदत्तमुखं नानारूपेण परिणतं॥ परिणमतीति चेत्॥ तर्हि दर्प
णस्थप्रतिबिंबं चेतनत्वं प्राप्नोति न च तथा॥ किंतु यद्येक एव जीवो भवति॥ तदैकजीवस्य सुखदुः
जीवितमरणादिके प्राप्ते तस्मिन्नेव क्षणे सर्वेषां जीवितमरणादिकं प्राप्नोति॥ न च तथा दृश्यते॥ अ
थवा एवं वदति॥ यथैकोऽपि समुद्रः क्वापि क्षारजलः क्वापि मिष्टजलः॥ तथैकोऽपि जीवः सर्वदेहेषु तिष्ठति॥ त
दपि न घटते॥ कथमिति चेत्॥ जलराश्यपेक्षया तत्रैकत्वं न च जलपुद्गलापेक्षया तत्रैकत्वं॥ यदि जलपुद्ग
भवत्येकत्वं तदा स्तोकजले गृहीते शेषजलं सर्वं किं नायाति॥ ततः स्थितं षोडशवर्णिकासु

चराशिवदनंतज्ञानादिलक्षणांमस्येकत्वंजीवराशिप्रतिनचैकजीवापेक्षयेति ॥ अध्यात्मशब्दस्यार्थः क
थ्यते ॥ मिथ्यात्वरागादिसमस्तविकल्पजालरूपपरिहारेणस्वशुद्धात्मन्यधियदनुष्ठानंतदध्यात्ममिति ॥ ए
वंध्यानसामग्रीव्याख्यानोपसंहाररूपेणगाथागता ॥ ५७ ॥ अथौद्धत्यपरिहारार्थं [illegible]
[illegible] सोधयंतु [illegible] भणियं जं [illegible]
सोधयंतु शुद्धंकुर्वंतु ॥ के कर्तारः ॥ मुणिणाहा ॥ मुनिप्रधानाः ॥ किंविशिष्टाः ॥ दोषसंचयचुदा ॥ निर्दोष
परमात्मनोविलक्षणायेरागादिदोषास्तथैववचनिर्दोषपरमात्मादितत्वपरिज्ञानविषयेसंशयविमोह
विभ्रमास्तेष्वुतारस्तैदोषसंचयच्युताः ॥ पुनरपिकथंभूताः सुदपुण्णा ॥ वर्तमानपरमागमाभिधानद्रव्य
श्रुतेनतथैवतदाधारोत्पन्ननिर्विकारस्वसंवेदनज्ञानरूपभावश्रुतेनचपूर्णाः समग्राः श्रुतपूर्णाः ॥ कर्म
यंतु ॥ दव्वसंगहमिणं ॥ शुद्धबुद्धैकस्वभावपरमात्मादिद्रव्याणांसंग्रहोद्रव्यसंग्रहः ॥ तद्द्रव्यसंग्रहाभिधानंग्रं
थमिमंप्रत्यक्षीभूतं ॥ किंविशिष्टं ॥ भणियंजं ॥ भणितः प्रतिपादितोयोग्रंथः केनकर्तृभूतेन ॥ णेमिचंदमु

द्रव्यसं०
१०६

गिणा ॥ श्रीनेमिचंद्रसैद्धांतदेवाभिधानेन गणिना ॥ सम्यग्दर्शनादिनिश्चयव्यवहाररूपपंचाचारोपेताचार्येण
कथंभूतेन ॥ तणुसुत्तधरेण ॥ तनुश्रुतधरेण ॥ तनुस्तोकं श्रुतं धरतीति तनुश्रुतधरस्तेनेति क्रिया
कारकसंबंधः ॥ ५८ ॥ एवं ध्यानोपसंहारगाथात्रयेणौद्धत्यपरिहारार्थं प्राकृतवृत्तेन च द्वितीयांतराधि-
कारे तृतीयस्थलं गतं ॥ ॥ इत्युत्तराधिकारे [illegible]
[illegible] ॥ ॥ अत्र ग्रंथे विवक्षितस्य संधिर्भवतीति वचनात्पदानां संधिनियमो नास्ति ॥ वाक्यानि च स्तो-
कस्तोकानि कृतानि सुखबोधार्थं ॥ तथैव लिंगवचनक्रियाकारकसंबंधसमासविशेषणवाक्यसमा-
प्तादिदूषणं ॥ तथा च शुद्धात्मादि ॥ तत्त्वप्रतिपादनविषये विस्मृतदूषणं च विद्वद्भिर्न ग्राह्यमिति ॥ ॥ एवं पूर्वो-
क्तप्रकारेण जीवमजीवं दव्वं इत्यादि सप्तविंशतिगाथाभिः षड्द्रव्यपंचास्तिकायप्रतिपादकनामा प्रथमो-
ऽधिकारः ॥ तदनंतरं आसवबंधण इत्याद्येकादशगाथाभिः सप्ततत्त्वनवपदार्थप्रतिपादकनामा द्वितीयो-
ऽधिकारः ॥ ततः परं सम्मद्दंसण इत्यादि विंशतिगाथाभिर्मोक्षमार्गप्रतिपादकनामा तृतीयोऽधिकारः ३

ज्ञेयत्वमि प्य

कोपरितोषः॥अथात्मनो ज्ञत्वं स्वत एवमास्त्विदिति ज्ञानत्वस्याप्य ज्ञानत्वमस्तितस्यै
प्यन्यदित्यनवस्था॥अथानवस्था माभूदिति स्वत एव ज्ञानत्वस्य ज्ञानत्वमिष्यं न तु प्रति
ज्ञाहानिरर्थान्तरात्संप्रत्यय इति॥किंच लत्परिणामाभावयादंडसंबंधापि दंडिनो न दं
डपरिणामः॥दंडीव्यपदेशमात्रप्रतिलंभात्तथा उष्मगुणस्योष्मत्वसामान्यविशेषसं
बंधेनोष्मत्वं॥गुणसामान्यविशेषपदार्थभेदादत उष्मत्वेवानुष्मगुण इत्यासक्तेनतु
ष्म इति॥तथोष्मगुणसंबंधोपि आत्मनोष्मत्वं द्रव्यगुणपदार्थभेदादत ष्मेउ वानग्निरि
त्यासक्तेन तु स्वयमुष्म इति॥समवायाविति चेन्न॥प्रतिनियमाभावात्॥स्यान्मतं समवा
योनामायुतसिद्धलक्षणः संबंधः॥इहेदंबुध्यभिधानप्रवृत्तिहेतुस्तेनैकत्वमिवनीता
नां व्यपदेशो भवति ष्णोउत्वसमवायादुष्णो गुणः॥उष्मगुणसमवायाच्चाग्निरुष्म इ
ति तन्न॥कुतः॥प्रतिनियमाभावादुष्मत्वोष्मगुणयोरन्यत्वे तस्याग्न्यात्वे च कोयं प्रति

विशेषोनियमः॥ यउष्मगुणस्याग्नावेव समवायेनाप्सुशीतगुणस्य चाप्स्वेव समवायो
नाग्नावुष्णत्वस्य चोष्णगुणे नैव समवायेन शीतादिगुणांतरेणेति॥ तस्माद्येन विशेषे
णायं प्रतिनियम इष्यते तं न पश्यामः॥ अप एव द्रव्यपरिणाम एवोष्ण्यमिति सिद्धं नान्यस्त
त्रातिनियमहेतुरस्ति स्वभावो हेतुरिति चेत्तर्ह्येव तत्परिणामासिद्धिः॥ किंच॥ समवायश्चावा
वृत्यंतराभावान्नास्ति तत्परिकल्पितः समवायः॥ कुतः वृत्यंतराभावात् यथा गुणानां
पदार्थानां द्रव्येण समवायसंबंधाद्वृत्तिरेवं तस्या समवायः॥ पदार्थांतरं भूत्वा केन सं
बंधेन द्रव्यादिषु वर्त्स्यति समवायांतराभावादेकत्वाद्धि समवायत्वं॥ न चेदं न्याय्यतामिति
वचनात्॥ न च संयोगेन वृत्तिर्युतसिद्ध्यभावाद्युतसिद्धानामप्राप्तिपूर्विका प्राप्तिः संयो
गः॥ न चान्यः॥ संबंधः॥ संयोगसमवायविलक्षणोऽस्ति येन समवायस्य द्रव्यादिषु वृ
त्तिः॥ स्यादतः॥ समवायिभिरनभिसंबंधान्नास्ति खरविषाणवत् समवायः॥ प्राप्तित्वा

च्याप्त्यंतराभावइतिचेत्॥ नव्यभिचारात्॥स्यान्मतं॥द्रव्यादीनिप्राप्तिमंति॥प्रवर्त्तते
कयाचित्प्राप्त्यानवर्त्तते समवायस्तुप्राप्तिमान्नप्राप्तिमानंतः॥प्राप्त्यंतराभावेपिस्वतएवप्रा
प्रातिर्त्तीनत्वत्कस्माद्व्यभिचाराद्यथासंयोगः प्राप्तिरपिसत्प्राप्त्यंतरेणासमवायेनवर्त्तते
तथासमवायस्यापिस्यादितिप्रदीपवदिति॥ चेन्नतत्परिणामादनन्यत्वासिद्धेः॥स्यादे
तद्यथाप्रदीपः॥प्रदीपांतरमनपेक्षमाणआत्मानंप्रकाशयतिघटादींश्च॥तथासमवा
यः संबंधांतरापेक्षामंतरेणात्मनश्चद्रव्यादिषुवृत्तिहेतुः॥द्रव्यादीनांचपरस्परतः॥नित्त
न्न॥कुतस्तत्परिणामादनन्यत्वासिद्धेर्यथाप्रदीपः॥ स्वयंप्रकाशपरिणामात्प्रकाशात्म
नोनान्यप्रकाशांतरमपेक्षते॥ अन्यथाप्रकाशात्मनोन्यत्वेप्रदीपस्याप्रदीपत्वप्रसंगः यतो
त्मप्रकाशात्मानं॥प्राकाम्य॥प्रदीपोस्तितथानद्रव्यादेन्यगुणकर्मसामान्यविशेषसम
वायासंसति॥द्रव्यस्यैवोभयपरिणामकारणापेक्षस्यगुणः॥ कर्मसामान्यंविशेषः॥सम॥

राज॰टी॰
६

वायइत्येवमादिपर्यायांतरेणपरिणामः॥ यथाप्रदीपः॥ स्वलक्षणप्रसिद्धो घटादिभ्योन्य
नैवंसमवायः स्वलक्षणप्रसिद्धः द्रव्याद्न्योस्तिद्रव्यस्यैवगुणादिपर्यायपरिणामात्तस्मा
न्नप्रदीपवत्समवायासिद्धिः॥ अन्यथाचद्रव्यादन्यत्वेगुणादीनांद्रव्यस्याद्रव्यत्वप्रसं
तोनगुणादिपर्यायोनप्रोक्तान्यद्रव्यमस्तियदिवागुणाद्यीनसोस्यद्रव्यं॥ केनचिद
सविशेषणप्रसिद्धयकगुणादिभिः॥ संबध्यते॥ सविशेषउच्यते॥ यतोनगुणा
गनान्याद्रव्यस्यविशेषः॥ स्वतःप्रसिद्धोस्तिअतोद्रव्यपरिणामास्वगुणादयइतिसि
द्धं॥ किंचविशेषपरिज्ञानाभावाद्यस्ययुतायुतसिद्धाय्येत्याहर्केविज्ञानमेकमास्ति॥
युतसिद्धानांसमवायः॥ युतसिद्धानांसंयोगइति॥ स्याद्विशेषविज्ञानेभवतस्तज्ज्ञाण
केकार्येविरुद्धत्वात्ज्ञानानां॥ तद्विशेषविज्ञानाभावस्तदभावात्तद्विवेकाभावः॥
संस्कारादितिचेन्न॥ तस्यापितादात्म्याप्रयादेतत्॥ ज्ञानजोज्ञानहेतुश्चसंस्कारोस्ति॥

तस्मादः॥ सामर्थ्यमितितन्नकुतस्तस्यापित्तादात्म्यादेकार्थग्राहिज्ञानस्यसंस्कारस्यच
कोर्म्यर्थग्राहिज्ञानहेतुत्वात्॥ अनेकार्थग्राहिज्ञानाभावाच्चानेकार्थग्राहिज्ञानसंस्का
राभावस्तस्मात्पूर्वोक्तोदोषस्तदवस्थएव॥ अथवायमर्थः॥ कर्तृकरणयोरन्यत्वाद
न्यत्वमात्मज्ञानादीनांपरश्वादिवदितिचेन्न॥ तत्परिणामादग्निवदिति॥ यथाग्निर
ग्निस्वभावादन्योदहनदाहक्रियायाः॥ कर्त्ताकिंकरणोदहतितत्परिणामादनन्या।
त्मैवकरणं॥ तथात्माज्ञस्वभावत्वात्ज्ञानादन्यस्तत्परिणामादर्थान्जानन्ज्ञान
क्रियायाः॥ कर्त्ताकिंकरणाज्जानातितत्परिणामात्तदेवज्ञानंकरणत्वेनविवक्ष्यते
अन्यथावातत्स्वाभाव्येनवधारणप्रसंगोग्निवदित्येवमादिवाक्यार्थविवरणादह।
नस्वभावापत्त्या॥ योज्यंकिंच॥ अनेकांतात्पर्यायपर्यायिपरिणार्थांतरभावस्यघटा।
दिवत्पृथ्वाघटकपालशकलशर्करादीनांनयद्वयार्पणाभेदात्स्यादेकत्वंस्यादन्य

राज०टी० २०

त्वंकथमिह॥पर्य्यायार्थिकगुणभावेद्रव्यार्थिकप्राधान्यात्पर्य्यायार्थानर्पणान्मृद्रूप
द्रव्याज्जीवानुपयोगादिद्रव्यार्थार्पणात्स्यादेकत्वं॥
नञ्जइति॥तेषामेवद्रव्यार्थिकगुणभावेपर्य्यायार्थिकप्रधान्याद्द्रव्यार्थानर्पणात्कार
णविशेषायादित्तभेदपर्य्यायार्थार्पणात्स्यादन्यत्वं॥यतोन्योघटपर्य्यायोन्यश्चकपा
लादिपर्यायस्तथामृदोघटादिपर्य्यायाणांचस्यादेकत्वंस्यादन्य॰
त्स्यादेकत्वंयतोमृद्रूपमेवउभयपरिणामकारणवशा
त्तद्व्यपदेशभाग्भवति॥नान्यघटादयोमृद्रूपव्यतिरिक्तघटादिपर्यायाभावात्पर्यायि
पर्य्यायभेदाच्चस्यादन्यत्वं॥यतः॥पर्य्यायिमृद्द्रव्यंपर्य्यायाघटादयस्तथा
दिपर्य्यायाणांचस्यादेकत्वं॥स्यान्नानात्वंकथंपर्य्यायार्थिकगुण
न्यात्पर्य्यायार्थानर्पणादनादिपारिणामिकचैतन्यजीवद्रव्यार्थार्पणात्स्यादेकत्वंप

तोज्ञानादयोनादिपारिणामिकचैतन्यजीवद्रव्यादिद्रव्यार्थंनजहतितेषामेवद्रव्यार्थि
कगुणभावेपर्यायार्थिकप्रधान्याद्द्रव्यार्थार्पणात्कारणविरोधापादितभेदपर्या
यार्थार्पणात्स्यादन्यत्वंयतोन्योज्ञानपर्यायोऽन्यश्चदर्शनादिपर्यायास्तथात्मनोज्ञा
नादिपर्यायाणांचस्यादेकत्वंस्यादन्यत्वं॥कथंतत्परिणामादेशात्स्यादेकत्वंयत॥
आत्मैवोभयपरिणामकारणत्वात्ज्ञानादिपर्यायपरिणतः॥ज्ञानादिव्यपदेशभा
ग्भवतिनान्यआत्मानान्येज्ञानादयः॥आत्मद्रव्यव्यतिरिक्तज्ञानादिपर्यायाभावा
त्पर्यायिपर्यायभेदाच्चस्यादन्यत्वं॥यतःपर्यायीआत्मापर्यायाःज्ञानादयस्तस्मादे
कत्वान्यत्वंप्रत्यनेकांतोपपत्तेः॥ तत्परिणामत्वेपि करणभावोयुक्तः॥इतरथाहि
कार्यपर्यायादन्यत्वप्राप्तेर्दहनवद्यस्यैकांतिकंकर्तृकरणयोरन्यत्वंतस्यकार्यपर्याया
यादन्यत्वंप्राप्तं॥कथंदहनवद्यथामासादेकरोतिपरश्वादिभिरित्यत्रकर्तृकरणयोर

राज०टी०
२१

न्यत्वं तथा भज्यते। वृक्षः शाखाभारणाद्व्यैकस्य वृक्षस्य शाखाभारार्थपर्यायादन्यत्वं।
मासनवादोस्तीयते न साखाभाराद्वृत्तेन्यो वृक्षो न च शाखाभारादन्यो वृक्षो न भवती
ति भज्यते वृक्षः॥ शाखाभारेणेति॥ एकार्थपर्यायात्मकः॥ करणनिर्देशो न भवति॥
नात्मद्रव्याद्वृत्तेऽन्यज्ज्ञानं न चात्मद्रव्याद्वृत्तेनान्यज्ज्ञानमिति ज्ञानात्मनेनाप्यात्मेति
एकार्थपर्यायात्मकं करणं न भवति॥ किंच करणस्याभपर्यायापत्तेर्द्रव्यस्य मूर्तिमदमू
र्तिभेदवद्यथा द्रव्यस्य मूर्तिमदमूर्तिभेदादेकान्तपरिग्रहो नास्ति. ८
मीकारः कान्ताऽमूर्त्तय॥ आत्मा चामूर्तः॥ द्रव्यार्थादेशान्नपर्यायार्थादेशात्तस्याना
दिकार्म्मणशरीरसंबंधात्तथा करणाद्द्विधा विभक्ताविभक्तकर्तृकभेदात्कर्तुरन्य
त्वकर्तृत्वे॥ यथा परशुना छिनत्ति देवदत्त इति कर्तुरनन्यदविभक्तकर्तृकं यथाग्निर्नि
धनं दहत्येवं छेयति तथात्मा ज्ञानेनात्मानं जानातीत्यविभक्तकर्तृकं करणं किंच

दृष्टांतात्स्वकुशूलस्यात्मव्यवच्छेदाभिनत्ति॥ कुशूलं स्वेदनरूत्यन्तकुशलोयदाभिदिक्रि
याया: सुकरतमास्यात्तेगणविवक्षित॥ स्वयमेवात्मानं भिनत्तीति तदा किं करणे
सावात्मानं भिनत्तीति विवक्षायां कुशूलात्मैव करणत्वेनोपादीयते तत्पात्मैव कर्त्ता
ताकरणत्वं भवति॥ किंच॥ एकार्थपर्यायाविरोधोपपत्तेरिन्द्रादिव्यपदेशवत्॥ इहैका
स्यार्थस्यानेकपर्यायविरोधोपपत्तिर्दृष्टा न चास्यतेभ्य:॥ पर्यायेभ्योऽन्यत्वं कथमिन्द्रादि
व्यपदेशवत् यथैकस्य देवराजाख्यस्येन्द्रशक्रपुरंदराद्यनेकव्यंजनपर्यायविरोधो
पपत्ति:॥ न च देवराजस्येन्द्रशक्रपुरंदरादिपर्यायेभ्योऽन्यत्वं न चानन्यत्वाद्येनायामि
न्द्रस्तेनैव शक्र:॥ पुरंदरो वा येन वा शक्रस्तेनैवेन्द्र:॥ शक्रो वा कथमिष्यते॥ इन्द्रादीनां
प्रतिनियतव्यंजनपर्यायोपपत्ते॥ इन्दनादिन्द्र:॥ शकनाच्छक्र:॥ पूर्दारणात्पुरंदर इति
न चेंदनशकनपूर्दारणाव्यंजनपर्यायभेदान्न देवराजोऽन्य: शक्र: पुरंदरो वा न भवति

भवत्येव। तथैकस्यात्मनोज्ञानादिपर्यायविशेषापपत्तिः। तस्मादेकार्थ्यपर्यायविशेषापप
त्तेर्न्नानात्वमात्मज्ञ्यादेकोतज्ज्ञानादीनां। कर्तृसाधनत्वाद्वादोषाभाव। अप्यवानैमार्ज्ञे
नदर्शनशब्दोकरणसाधनो किंतर्हि कर्तृसाधनो तथाचारित्रशब्दोपिनकर्मसाधनो।
किंतर्हिकर्तृसाधनः। कथमेवंभूतनयवशात्। ज्ञानदर्शनचारित्राणि। आत्मैवेष्ट। अत
स्तत्परिणामात्ज्ञानादिपरिणत आत्मैवजानातीतिज्ञानंपश्यतीतिदर्शनंचरतीतिचा
रित्रमिति। अथउक्तः कर्तृकरणयोरनन्यत्वादनन्यत्वमात्मज्ञानादीनामितिदोषः। सनभवतिल
क्षणाभावइतिचेन्नवाऊलकात्स्यादेतन्नलक्षणमस्तिकर्त्तरियुटोविधायकमितितन्न।
कुतः। बाऊलकात्युड्वाबऊलमितिकर्तरियुट्। गानश्चयत्रविहितास्ततोन्यत्रापि
दृश्यते। व्याभावकर्मणोर्विहिताः। करणादिष्वपिभवंतिस्नात्यनेनस्नानीयंचूर्णं। द
दात्यस्मैइतिदानीयोतिथिः। समावर्त्तेतस्मादितिसमावर्त्तनीयोगुरुः। करणाधिक

रणाधिकरणायोग्युक्तः॥ कर्म्मादिष्वपिदृश्यतेनिरंदतीतितोदीतिनिरदंनमस्कंदतितस्मा
दितिप्रस्कंदनं॥ अपवर्गाभावसाधनाज्ज्ञानादिशब्दास्तत्कथनाद्वा स्वकरणव्यपदेशाव
घ्येयादासीन्येनावस्थितमात्रं दृत्तणादिदानंकरणमितिव्यपदिश्यतेतेषोदासीन्येन
वास्थितानिज्ञानदर्शनचारित्राणीतिनियतज्ञानदर्शनचरणक्रियाव्यापारप्रतिनिव
त्तोत्सुक्यानिकथ्यंतेकासामोक्षमार्गः॥ ज्ञानदर्शनचारित्राणिज्ञातिर्ज्ञानंदृष्टिर्द्दर्श
नंचरणंचारित्रमितिक्रियाव्यापृतानांतुज्ञानादीनांकर्त्रादिकारकव्यवहारः॥ व्यक्ति
भेदादयुक्तमितिचेन्नैकार्थशब्दान्यत्वाद्व्यक्तिभेदगतेः॥ स्यादेतत्॥ ज्ञानमात्मेति अयु
क्तंकस्माद्व्यक्तिभेदादभिधेयवल्लिंगसंख्याभवंतीत्यभिधानस्यापिज्ञानंआत्मेतिप्राप्नोती
तितन्नकिंकारणंएकार्थेशब्दान्यत्वाद्व्यक्तिभेदगतेः॥ एकस्मिन्नप्यर्थेशब्दभेदाद्व्यक्ति
भेदादृष्टोयथागेहंकुटीमठः॥ पुष्यःतारकानक्षत्रमितिएवंज्ञानमात्मेत्यपिस्यात्।

राज०टी०
२३

ज्ञानग्रहणमादौन्याय्यं। तत्पूर्वकत्वाद्दर्शनस्य। आह। ज्ञानग्रहणमादौन्याय्यं। कुतस्तत्पूर्व
कत्वाद्दर्शनस्य यतः। पदार्थतत्त्वोपलब्धिपूर्वकं श्रद्धानं। अल्पाच्तरत्वाच्च। अतिस्वरस्य सं
ज्ञात्वाच्च दर्शनात्ज्ञानमल्पाच्तरं अतश्च पूर्ववाच्यं। नोभयोर्युगपत्प्रवृत्तेः प्रतापप्रकाश
वत्तेष दोषः कुतः। उभयोर्युगपत्प्रवृत्तेः कथं प्रकाशप्रतापवत् यथा सवितुर्घनपटला
वरणविगमे प्रतापप्रकाशाभिव्यक्तिर्युगपद्भवति तथा ज्ञानदर्शनयोर्युगपदात्मलाभस्तद्य
था। यदा दर्शनमोहस्योपशमात्क्षयोपशमात्क्षयाद्वा आत्मा सम्यग्दर्शनपर्यायेणाविर्भ
वति। तदैव तस्य मत्यज्ञानश्रुताज्ञान। निवृत्तिपूर्वकं मतिज्ञानं श्रुतज्ञानं चाविर्भवति। दर्शन
स्याभ्यर्हितत्वाद्यदप्युक्तमल्पाच्तरत्वात् ज्ञानस्य पूर्वनिपात इति। तदसत्। कस्माद्दर्श
नस्याभ्यर्हितत्वात्। ज्ञानाद्दर्शनमभ्यर्हितं दर्शनसंनिधाने सति। अ ज्ञानस्यापि।
ज्ञानभावात्। ज्ञात्वाप्यश्रद्दधतस्तदभावान्मध्ये ज्ञानवचनं ज्ञानपूर्वकत्वाच्चारित्रस्य

यतोजीवादिपदार्थतत्वज्ञानसन्निधानेसतिचारित्रमोहस्योपशमात्क्षयोपशमात्क्षयाद्वाक
र्मादानहेतुक्रियाविशेषोपरमरूपश्चारित्रपरिणामोभवतितत्तश्चारित्रस्यज्ञानपूर्वकत्वात्ज्ञा
नपूर्वंप्रयुक्तं इतरेतरयोगेद्वंद्वोमार्गंप्रतिपरस्परोपकारेणप्राधान्यात्॥ अयमितरेतरयोग
द्वंद्वः दर्शनंचज्ञानंचचारित्रंचदर्शनज्ञानचारित्राणीति॥ कुतः॥ मार्गंप्रतिपरस्परोपकारे
णप्राधान्यात्यथाप्लक्षन्यग्रोधपलाशाइति॥ अस्त्यादिसमानकालक्रियाणांत्वक्षादी
नांपरस्परोपकारेणमितरेतरयोगेद्वंद्वः॥ सर्वपदार्थप्रधानत्वाद्बहुवचनांत॥ तथाद
र्शनज्ञानचारित्राणामस्त्यादिसमानकालक्रियाणांपरस्परोपकारेणमितरेतरयो
गेद्वंद्वः॥ सर्वपदार्थप्रधानत्वाद्बहुवचनांत॥ यतस्त्रयाणामपिदर्शनादीनांसहित
नांपरस्परोपकारेणमोक्षमार्गत्वंप्रतिप्राधान्यैकस्यनह्ययोः प्रत्येकंसम्यग्विशेष
णपरिसमाप्तिर्भुजिवद्यथादेवदत्तजिनदत्तगुरुदत्ताभोज्यंतामितिभुजिः प्रत्येकंप

रिसमाप्यतेतत्याप्रशंसावचनस्यसम्यक्शब्दस्यप्रत्येकमभिसंबंधादर्शनादिभिः सम्यग्दर्श
नंसम्यग्ज्ञानंसम्यक्चारित्रमितिपूर्वपदसामानाधिकरण्यात्तद्व्यक्तिवचनप्रसंगइतिचेन्न
मोक्षोपायस्यात्मप्रधानत्वात्॥स्यादेतद्दर्शनादिभिः॥सामानाधिकरण्यात्तद्व्यक्तिवच
नेमोक्षमार्गस्यप्राप्नुतइतितन्नाकिंकारणं॥मोक्षोपायस्यात्मप्रधानत्वाद्योमार्गोमोक्षोपे
य॥तस्यात्मास्वभावः॥येनात्मायेनस्वभावेनसमोक्षमार्गउच्यते॥सदर्शनज्ञानचारित्रा
णांसर्वेषामविशिष्टएकःपुल्लिंगश्च।तस्यप्राधान्यात्सत्यपिसामानाधिकरण्येनत
द्व्यक्तिवचनप्राप्तिः॥यथासाधवः॥प्रमाणमितिश्चात्यंतिकः॥सर्वकर्मनिक्षेपोमोक्ष
ःमोक्षअसनेइत्यं तस्यघञ्॥भावसाधनोमोक्षणंमोक्षः॥असनंक्षेपणमित्यर्थः स
श्चात्यंतिकः सर्वकर्मनिक्षेपोमोक्षइत्युच्यतेप्रशस्तशुद्धिकर्मणोमार्गइत्याख्यायंतेनी
करणान्मृष्टः शुद्धोमार्गइतिमार्गः।मार्गइवमार्गः॥करणमार्गोयथास्थाणुकंटकोप

लशार्करादिदोषरहितेनमार्गेणमार्गेणा॥ सुखमभिमतस्थानंगच्छति। तथामिथ्याद
र्शनासंयमादिदोषरहितेनज्ञानेन॥ श्रेयोमार्गेणसुखंमोक्षंगच्छति॥ अन्वेषणक्रिय।
स्यवाकरणत्वोपपत्तेः॥ अथवामार्गोऽन्वेषणंइत्यस्यमार्गः॥ सिध्यति॥ कुतः सम्यद
र्शनादीनांकरणत्वोपपत्तेः॥ मोक्षोयेनमार्ग्यतेसमोक्षमार्गइतियुक्त्यनभिधानादमा
र्गइतिचेन्न॥ मिथ्यादर्शनाज्ञानासंयमानांप्रत्यनीकत्वादौषधवत्॥ स्यादेतन्नाच्यु
क्तिरुक्तासम्यग्दर्शनादित्रयमिच्छंमोक्षमार्गइति॥ अतोस्यमार्गत्वेनोपपद्यतइति
तन्नकिंकारणं॥ मिथ्यादर्शनाज्ञानासंयमानांप्रत्यनीकत्वात्कथमौषधवदथ्यावा
वातादिविकाररोगाणांनिदानप्रत्यनीकत्वात्तिग्धरूक्षाद्यौषधमुच्छेदकारणं॥ तथा।
मिथ्यादर्शनाज्ञानासंयमादीनांनिदानप्रत्यनीकंसम्यग्दर्शनाद्यौषधमुच्छेदकारणं
इतितत्त्वार्थश्लोकवार्तिकालंकारेप्रथमाध्यायस्यप्रथममाह्निकं॥ ॥१॥ ॐ॥ विपर्य।

ग्याद्बंधस्यात्मलाभसत्तिज्ञानादेव तद्विनिवृत्तौ स्वित्वानुपपत्तिः॥ अत्र [illegible] दाह॥
विपर्ययाद्बंधस्यात्मलाभो॥ भवति तदभावात्तत्त्वज्ञाने सति बंधनिवृत्तिर्भवति कारणाभा
वाद्धि कार्याभाव इति बंधनिवृत्तेरेव च मोक्षः॥ अतो मोक्षमार्गस्यानित्यत्वं नोपपद्यते प्रति
ज्ञामात्रमिति चेन्न सर्वेषामविसंवादात्॥ स्यादेतत्प्रतिज्ञामात्रमेतद्विपर्ययाद्बंधो भ
वतीति तन्न॥ किं कारणं सर्वेषामविसंवादान्नाचप्रतिवादिना विसंवदंते॥ तद्यथा॥ ध
र्मेण गमनमित्यादिवचनमेकेषां धर्मेण गमनमूर्ध्वं भवति अष्टसु ब्राह्मसौम्यप्राजापत्यैंद्र
गांधर्वयक्षराक्षसपिशाचेषु गमनमधस्ताद्भवत्यधर्मेण॥ अधर्मेण खलु षट्सु स्थाने
षु मानुषपशुमृगमत्ससरीसृपस्थावरेषु गमनं ज्ञानेन चापवर्गः॥ यदास्य रजस्तमसी गुण
भावात्सत्त्वस्य प्राधान्यात्प्रकृतिपुरुषांतरपरिज्ञानमाविर्भवति तेनापवर्गः॥ विपर्ययात्
दिष्यते बंधः॥ योस्याव्यक्तमहदहंकारतन्मात्रसंज्ञास्वष्टासु प्रकृतिष्वनात्मीयास्वाहं

कारिकेषु वैकारिकेषु चेंद्रियेष्वात्मत्वाभिमानः॥ स विपर्ययस्तस्माद्द्विध इत्येकेषां वचनं त
थानात्मीयेष्वात्माभिमानविपर्ययात्तस्य शब्दाद्युपलब्धिरादिर्गुणपुरुषयो॥ तेरोपल
ब्धिरंतर्यावदस्याविभक्तः प्रत्ययः श्रोत्रादींद्रियवृत्तिषु श्रवणादिषु॥ ज्ञातेत्येवमा
दिः पांचभौतिके चाशरीरे॥ पाण्यादिसमूहे शरीरेहं पुरुष इति प्रत्ययो भवति॥ तावद
प्रतिबुद्धत्वात्संसारः गुणपुरुषांतरोपलब्धिरतः॥ यथेदोसवर्ज्जं सर्वं प्रकृतिकृतं वि
गुणमचेतनं भोग्यमिति जानाति॥ भोक्तारमकर्त्तारं चेतनं च पुरुषमन्यं प्राधानाद
वैति॥ अचेतनेभ्यो गुणेभ्यस्तदा तस्य गुणपुरुषांतरोपलब्धिरतः संसारस्येति ज्ञानान्मो
क्षो विपर्ययाद्द्विध इत्येकेषां॥ इच्छाद्वेषाभ्यामपरेषां॥ इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिस्ते
भ्यः सुखदुःखं ततः इच्छाद्वेषौ न च विमोहस्यतामिथ्यादर्शनाभावात्॥ मोहश्चाज्ञानं वि
मोहस्ययतेः॥ षट्पदाप्येतत्वज्ञस्य वैराग्यवतः॥ सुखदुःखेच्छाद्वेषाभावः॥ इच्छाद्वेषाभा

वाद्धर्म्माधर्म्माभावः॥ स्तादभावसंयोगाभावो॥ मोक्षउ भोवश्चसमोक्षस्तयोर्द्धर्म्माधर्म्मयोरभावे
भवत्यपवर्गः॥ कथंप्रदीपोपरमप्रकाशाभाववत्॥ यद्विषज्ञानंप्रतीत्यात्मानंप्रतिलभेत तत्र
स्यापरमात्तिरोभावंयाति॥ तद्यथा॥ प्रदीपोपरमात्प्रकाशाभावः वेधश्चादृष्टाद्भवतिकथ
मधर्म्मसंज्ञादृष्टादज्ञानंभवति॥ अज्ञानाच्चमोहोमोहतः॥ इच्छाद्वेषौजायेतेइच्छाद्वे
षाभ्यांधर्म्माधर्म्मौसएषबंधः॥ अतसंसारस्यप्रसूतिस्तस्माद्भवत्यदृष्टाभावेसंयोगाभा
वः॥ कर्त्तरस्यसंयोगस्याभावः॥ जीवनसंज्ञकस्यधर्म्माधर्म्मापेक्षः॥ सदेहस्यात्मनोम
नसासंयोगाज्जीवनंतस्यधर्माधर्मयोरभावादभावात्सोउभौचश्चप्रत्ययशरीरस्यात्यं॥
तमभावः॥ समोक्षः कथमभावोधर्माधर्मयोरनागतानुत्पत्तिसंचितनिरोधाभ्याम
नागतानुत्पत्तिः॥ संचितनिरोधश्चद्विविधोभावस्तत्रानागतानुत्पत्तिस्तावद्धर्म्माध
र्मयोः॥ शरीरेन्द्रियमनोव्यतिरिक्तात्मदर्शनादकुशलस्य॥

नानोपरिवर्जनाद्धर्मस्यापितत्साधनानामनभिसंधानान्नाभिसंधिहि तत्कर्मबन्धाती
तिसंचित्तनिरोधापितदुःखगापरिखेदफलाद्धर्मनास्तस्मात्संसारादुःखग॥ शारीरत्वाक्ले
कलाक्षीतोद्भवशोकादिनिमित्तशरीरपरिखेदंप्रदायाधर्मोतिरिच्यते॥ भोगादोषदर्शनात्त
घस्माच्चपदार्थानांतत्त्वविनिर्णयात्तीतिमारभ्यधर्मस्यविनाश॥ अतोमोक्षस्यपरंवाद
श्रोतं दुःखादिनिवृत्तिरित्यन्येषांदुः॥ भवजन्मप्रवृत्तिदोषमिथ्याज्ञानानांउत्तरोत्तरापा
यतदनंतराभावान्निः॥ अपसाधिगमइत्यन्येषांदर्शनेऽशंदप्रत्यक्षत्तरोमिथ्याज्ञानेस
र्वेषामुत्तरस्यतत्त्वज्ञानान्निवृत्तोपस्तदनंतरापार्थस्तास्यनिवृत्तिः॥ कोऽसौदोषः सहि
मिथ्याज्ञानादनंतरस्तत्कार्यत्वात्सचोत्तरःप्रवृत्तेः॥ प्रवृत्तिश्चानंतरा तत्कार्यत्वा
त्तोदोषा॥ भावेप्रवृत्त्यभाव॥ प्रवृत्तिरप्युत्तराजन्मनः॥ प्रवृत्तेरभावाज्जन्माभावस्तत्का
र्यत्वाज्जन्मोत्तरंदुःखात्तोजन्माभावाद्दुःखनिवृत्तिस्तन्निवृत्तोवात्यंतिकः सुख

राज०टी०
१७

दुःखानुपभोगोनिःश्रेयसमिति॥अविद्याप्रत्ययाःसंस्काराइत्यादिवचनंकेषांचिदविद्याविप
र्य्यायात्मिकासर्वेभावाश्चनित्यानात्माशुचिदुःखेषुनित्यसात्मकशुचिसुखाभिमानरूपात्तत्प्र
त्ययाः॥संस्काराइत्यादिवचनंकेषांचित्॥केपुनस्तेसंस्काराःरागादयस्तेचत्रिविधाः॥पुण्यापु
ण्यानेञ्ज्यसंस्काराः॥तत्रपुण्योपगानांसंस्काराणांपुण्योपगमेवविज्ञानंभवति॥यतइद
मुच्यते॥अविद्याप्रत्ययाःसंस्कारावस्तुपत्तिविज्ञप्तिर्विज्ञानमिति॥अपुण्योपगानांसं
स्काराणामपुण्योपगमेवविज्ञानंभवति॥यदेतदुच्यते॥संस्कारप्रत्ययंविज्ञानं॥विज्ञा
नसंभूताश्चत्वारः॥स्कंधानामचत्वारिमहाभूतानिरूपंनामचरूपंनामरूपंचनामरूपं
मिति॥आनेञ्ज्योपगानांसंस्काराणामानेञ्ज्योपगमेवविज्ञानंभवतियतइदमुच्यतेविज्ञानप्र
त्ययंनामरूपंनामरूपसंनिहितानींद्रियाणिषडायतनमितिनामरूपव्यवस्थापितषड्जिराय
तन॥द्वारैःकृत्यानिक्रियाचप्रजायतेइतिनामरूपप्रत्ययंषडायतनमुच्यते॥उपारागाध

मीणांसंनिपातः॥स्पर्शः॥केषांत्रयाणांविषयेंद्रियविज्ञानानांसंगतिः॥स्पर्शः॥षड्भ्यआयतने
भ्यः॥षट्स्पर्शकायाः॥प्रवर्त्तंतइतिषडायतनप्रत्ययःस्पर्शः॥स्पर्शानुभवनंवेदनायज्जाती
यः॥स्पर्शोभवतितज्जातीयावेदनाप्रवर्त्ततइतीदमुच्यतेस्पर्शप्रत्ययावेदनेति॥वेदनाध्य
वसानात्तृष्णायतस्मात्वेदनाविशेषानास्वादयत्यभिनंदयत्यध्यवस्यतितत्स्यतीतिसावेदना
प्रत्यया॥ तृष्णोच्यतेतृष्णावैपुल्यमुपादानंसोभप्रियासानुरागेतिभवेत॥नित्यमपरित्या
गाभूयोभूयश्चप्रार्थना॥तदुच्यते॥तृष्णाप्रत्ययमुपादानमिति॥उपादाननिमित्तंपुनर्भ
वजनकंकर्मभवः॥एवंप्रार्थ्यमानःपुनर्भवजनकंकर्मसमुत्थापयति॥कायेनमनसा
वाचातद्धेतुकःस्कंधप्रादुर्भावोजातिर्जातिस्कंधपरिपाकोजरा॥जात्यभिनिर्वृत्तानां
स्कंधानामपचयः॥परिपाकः॥परिपाकाद्विनाशोभवतितन्मरणं॥तदेवंजातिप्रत्ययंजराम
रणमुच्यते॥एवमयंद्वादशांगः प्रतीत्यसमुत्पादः॥अन्योन्यहेतुकस्तत्रसर्वभावेष्वविपरी

तद्दर्शनं विद्या॥ यत्सर्वभावेष्वनित्यानात्मकाशुचि॥ दुःखेष्वनित्यानात्मकाशुचिदुःखद
र्शनं सा विद्या ततो मोक्षः॥ कथमविद्यापाविद्यातो निवृत्तिः॥ अविद्यानिवृत्तेः संस्कारनि
रोधः संस्कारनिरोधाद्विज्ञाननिरोधः॥ एवमुत्तरेष्वपीति॥ तदेवमविद्यातो बंधो भवति
विद्यातश्च मोक्ष इति मिथ्यादर्शनादरितिमतं॥ भवतां मिथ्यादर्शनाविरतिप्रमादकषा
ययोगा बंधहेतव इति भवतामार्हतानामपि मतं॥ पदार्थाविपरीताभिनिवेशाश्रद्धानं मि
थ्यादर्शनं विपरीताभिनिवेशश्च मोहात् मोहश्चाज्ञानमिति॥ अज्ञानाद्बंधः॥ अतो
मिथ्यादर्शनमादिर्बंधस्य सामायिकमात्रप्रतिपत्तेश्चानंतो॥ सामायिकमात्रासिद्धा इति
वचनात्॥ सामायिकं च ज्ञानमतः आर्हतानामपि ज्ञानान्मोक्ष इत्यविसंवादात्त्रितय
मोक्षमार्गकल्पनानुपपन्ना॥ किंच॥ दृष्टांतसामर्थ्याद्वणिकस्य प्रियैकपुत्रवत्तद्यथा।
वणिकस्य प्रियैकपुत्रस्य सर्पविग्रहोऽजनावमृद्यमानबालमुपलभ्यातिदुःखाभिभवमूर्छे

यागतप्राणाइवाभवद्धिनिवृत्तकार्यादिक्रियस्यचास्यकुशलमुद्दिश्य स्वापायपूर्वकं प्रा
त्याहितप्राणवृत्तेः ॥ स्वपुत्रएवदर्शनविषयमुपनीतः अयंममपुत्रइत्याविर्भूतत त्वज्ञा
नस्य स्वपुत्रस्यस्वपुत्रसादृश्यादुद्भूतमिथ्याज्ञानजनितदुःखंतद्भूतपूर्वमिवाभवदेवमज्ञा
नाद्बंधः केवलाच्चज्ञानान्मोक्षइतिनवानांतरीयकत्वाद्रसायनवत् ॥ नवाणघटो प्रः
किंकारणांनांतरीयकत्वान्नहिवित्तयमंत्रेणमोक्षप्राप्तिरस्ति ॥ कथंरसायनावद्यर्थं
नरसायनज्ञानादेवरसायनफलेनाभिसंबंधः ॥ रसायनश्रद्धानक्रियाभावाद्यदिवार
सायनज्ञानमात्रादेवरसायनफलसंबंधः कस्यचिद्दृष्टः सोभिधीयतां ॥ नचासावस्तिन
चरसायनक्रियाभावादेव ॥ ज्ञानश्रद्धानाभावान्नचरसायनश्रद्धानमात्रादेवरसायन
ज्ञानपूर्वक्रियासेवनाभावादेतारसायनज्ञानश्रद्धाक्रियासेवनोपेतस्यतत्फलेनाभि
संबंधइतिनिःप्रतिद्वंद्वमेतत्तथानमोक्षमार्गज्ञानादेवमोक्षेणाभिसंबंधः दर्शनचा

रत्न०टी०
२९

रित्राभावान्नचश्रद्धानाद्दवा ॥ मोक्षमार्गेज्ञानपूर्वाक्रियानुष्ठानाभावान्नचक्रियामात्रादेव
ज्ञानश्रद्धानाभावाद्यतः ॥ क्रियाज्ञानश्रद्धानरहितानिःफलेति यदि चज्ञानमात्रादेव क्वचि
दर्थसिद्धिर्दृष्टासाभिधीयतां ॥ नचासावस्त्यतोमोक्षमार्गेत्रितयकल्पनाज्यायसीति ॥ अनंता
सामायिकसिद्धा इत्येतदपित्रितयमेवसाधयति ॥ कथंज्ञस्वभावस्यात्मनस्तत्त्वश्रद्धानस्य
सामायिकचारित्रोपपत्तेः ॥ समयएकत्वंअभेदइत्यनर्थांतरं ॥ समयएवसामायिकंचारित्रं
सर्वसावद्यनिवृत्तिरितिअभेदेनसंग्रहादिति ॥ उक्तंच ॥ हतंज्ञानंक्रियाहीनंहताचाज्ञानिनां
क्रिया ॥ धावनकिलांधकोदग्धः ॥ पश्यन्नपिचपंगुलः ॥ १ ॥ संयोगमेवहवदंतितज्ज्ञानंह्ये
कचक्रेणरथः प्रयाति ॥ अंधश्चपंगुश्चवनेप्रविष्टौतौसंप्रयुक्तौनगरप्रविष्टाविति ॥
द्वमोक्षइतिवदनवस्थानाउपदेशाभावः ॥ यस्यज्ञानादेवमोक्षस्तस्यानवस्थानाउपदे
शाभावः ॥ यथाप्रदीपस्यतमोनिवृत्तिहेतुत्वात्प्रदीपसंततनमुहूर्त्तमपितमोवतिष्ठते ॥ न

ह्येतदस्ति प्रदीपस्यनामज्वलातितमस्यावतिष्ठतइति। तथात्मस्वरूपावबोधाविर्भावा
नंतरमेवासस्यमोक्षः। स्यान्नह्येतच्छक्तिमज्ञानेनचनाममोक्षस्यकारणमस्तिनचमोक्षइति
ततोज्ञानानंतरमेवासस्यशरीरेंद्रियहृत्यादिनिवृत्तेः। प्रवचनोपदेशाभावः संस्कारक्षयाद
वस्थानादुपदेशइतिचेन्न। प्रतिज्ञातविरोधात्स्यादेतद्यावदस्यसंस्कारानक्षीयंतेता
वदवस्थानमित्युपदेशः। उपपन्नइतितन्न। किंकारणंप्रतिज्ञातविरोधाद्यद्युत्प
न्नज्ञानोपिसंस्कारक्षयापेक्षत्वादवतिष्ठतेनमुच्यतेनतर्हिज्ञानादेवमोक्षः कु
तः संस्कारक्षयादितियत्प्रतिज्ञातंज्ञानेनचापवर्गइति। तद्विरोधः। किंच उभय
थादोषोपपत्ते। इदमिहसंप्रधार्यं। संस्कारक्षयस्यज्ञानंवाहेतुः। स्यादन्योवेतिः य
दिज्ञानंननुज्ञानादेवसंस्कारनिरोधइति। प्रवचनोपदेशाभावः। अथान्यः संकोन्यो
भवितुमर्हति। अन्यतमस्यारित्रादितिपुनरपिप्रतिज्ञातविरोधइति। किंचप्रव्रज्या

राजवा

२०

घनुष्ठानाभावप्रसंगश्च ॥ यदिज्ञानादेवमोक्षः । ननुज्ञानएवयत्नःकार्यः ॥ शिरस्तुं
डमुंडनकाषायांवरधारणादिलक्षणाप्रव्रज्यायमनियमभावनाद्यभावप्रसंगः
स्यात् ॥ ज्ञानवैराग्यकल्पनायामपि ॥ किमंवस्थानाभावादुपदेशा॰
र्थपरिज्ञानेसतिविषयानभिष्वंगलक्षणेचवैराग्येभ्यासस्यतत्क्षणएवमोक्षोपप
त्तेः ॥ किंच ॥ नित्यानित्यैकांतावधारणेतत्कारणासंभवः ॥ नित्याएवार्थाअनि
त्याएवेति ॥ एकांतावधारणेतत्कारणासंभव ॥ तत्कारणस्यज्ञानवैराग्यस्यसंभव
स्तद्यथानित्यत्वैकांतेविक्रियाभावात्ज्ञानवैराग्याभावः ॥ विक्रियाहिद्विविधाज्ञा
नादिविपरिणामलक्षणादेशांतरसंक्रमरूपाच ॥ येषांनित्यएवात्मासर्वगतश्चे
तिदर्शनंतेषामुभयथापिसानास्तिततश्चचतुष्टयत्रयद्वयसंनिकर्षज्ञानाभावाद्वैरा
ग्यवृत्तेरात्मनआकाशस्येवमोक्षाभावः ॥ स

मवायादितिचेन्न।तस्यप्रत्याख्यातत्वात्क्षणिकैकांतेप्यवस्थानाभावात्॥ज्ञानवै
राग्यभावनाभावः॥येषांमतंक्षणिकाःसर्वसंस्काराइतितेषामप्युत्पत्त्यनंतरंवि
नाशोस्तिज्ञानादीनामवस्थानंनास्तिनचतेभ्योऽन्यदवस्थास्नुवस्तुविद्यतेतस्तद
भावात्ज्ञानवैराग्यभावनाभावस्ततएवोत्पत्त्यनंतरंनिरन्वयविनाशाभ्युपगमात्प
रस्परसंश्लेषाभावेनिमित्तनैमित्तिकव्यवहारापन्हवादविद्याप्रत्ययाःसंस्कार
इत्येवमादिविरुध्यते।संतानादिकल्पनायांवान्यत्वानन्यत्वयोरनेकदोषानुषं
गः॥विपर्ययाभावः प्रागुपलब्धौवाबंधाभावः॥इहलोकेप्रागनुभूतस्यापु
रुषविशेषस्यप्रकाशाभावादभिभावात्कारणात्कमाद्वाविशेषानुपलब्धौविपर्ययोदृ
ष्टः॥नचावनितलभवनसंभूतस्यप्रागप्रतीतदंतस्यविपर्ययप्रत्ययोभवतिनचतथा
नादौसंसारेनभिव्यक्तशक्तेः पुरुषस्यगुणपुरुषांतरोपलब्धिरस्ति॥अतःप्रा

गनुपलब्धेर्नास्ति विपर्ययस्तथा सर्वभावेष्वनित्यानात्मकाशुचिदुःखेषु नित्यसात्म
कशुचिसुखरूपेण विपर्ययो नास्ति प्रागनुभूतविशेषत्वात् ॥ यदि वा क्वचिदप्रसि
द्धसामान्यविशेषस्य कस्यचिद्विपर्ययो दृष्टः ॥ सोभिधीयतां न चोच्यते ततो विपर्यया
भावाद्बन्धाभावः तत्र यदुक्तं विपर्ययाद्बन्ध इति तत्प्रत्याहन्यते ऽथ प्राक् तद्विशेषोप
लब्धिरभ्युपगम्यते ननु तदेव तद्धेतुकेन मोक्षेण भवितव्यमिति बन्धाभावः ॥ स्या
च प्रत्यर्थवशवर्तित्वाच्च विपर्ययाभाव इत्यनुवर्त्तते ॥ येषां दर्शनं प्रत्यर्थवशवर्ति वि
ज्ञानमिति तेषां पुरुषविषयं विज्ञानं न स्थाणुमगच्छति स्थाणुविषयं च यद्विज्ञानं
न तत्पुरुषमवबुध्यते ॥ अतः ॥ परस्परविषयसंक्रमाभावान्न संशयो न विपर्ययस्त
था सर्वेषु पदार्थेष्वनेकार्थग्रहणैकविज्ञानाभावादसति विपर्यये बन्धाभावस्तत्र ए
व पदार्थविशेषानुपलब्धेर्मोक्षाभावः ॥ न ह्येकार्थग्राहिविज्ञानं तदन्तरमवाबध्नाति

ज्ञानदर्शनयोरेकत्वंकुतः युगपत्प्रवृत्तेरिति॥ तन्नकिंकारणं॥ तत्त्वावायश्रद्धानभेदा
त्कथंतापप्रकाशवद्यथातापप्रकाशयोर्युगपदात्मलाभेपिदाहद्योतनसामर्थ्यभेदान्नैक
त्वंतथाज्ञानदर्शनयोस्तत्त्वावायश्रद्धानभेदान्नैकत्वंतत्त्वस्यह्यवगमोज्ञानंश्रद्धानंदर्श
नमिति॥ दृष्टविरोधाच्चयस्यमतंयुगपदात्मलाभः॥ एकत्वेहेतुरितितस्यदृष्टविरोध
आपद्यतेदृष्टंहिगोविषाणादीनांयुगपदुत्पद्यमानानामपिनानात्वं उभयनयसद्भावेन्य
तरस्याश्रितत्वाद्रूपादिपरिणामवत्॥ इतिसूत्रं॥ उभयनयसद्भावेन्यतरस्याश्रितत्वा
द्धानदोषः॥ कथंरूपादिपरिणामवद्यथापरमाण्वादिपुद्गलद्रव्याणांबाह्याभ्यंतरप
रिणामकारणापादितेयुगपद्रूपादिपरिणामेपिरूपादीनामेकत्वं॥ तथाज्ञानद
र्शनयोरपि॥ अथवाउभयनय॥ सद्भावेन्यतरस्याश्रितत्वाद्यथारूपादिपरिणामा
नांद्रव्यार्थिकपर्यायार्थिकयोरन्यतरगुणप्रधानभावो[illegible]णतस्यादेकत्वस्यान्नाना
त्वंकथंमिहपर्यायार्थिकगुणभावेद्रव्यार्थिकप्राधान्यात्पर्यायार्थनर्पणादेनादिपा

रिणामिकपुद्गलद्रव्यार्थादेशादेकत्वंयथारूपपर्यायः॥ पुद्गलद्रव्यंतथारसादयो
पिद्रव्यार्थादेशात्पुद्गलद्रव्यंतेषामेवद्रव्यार्थिकगुणाभावेपर्यायार्थिकप्राधान्याद्र
नर्प्यणात्प्रतिनियतरूपादिपर्यायार्थेनार्पितानांस्यादन्यत्वं॥ यतोन्योरूपपर्यायः
अन्येचरसादयस्तथाज्ञानदर्शनयोरनेनविधिनानादिपारिणामिकचैतन्यजीवद्र
व्यार्थादेशात्स्यादेकत्वं। यतोद्रव्यार्थादेशाद्यथाज्ञानपर्यायआत्मद्रव्यंतथादर्शन
मर्पितयोरेवप्रतिनियतज्ञानदर्शनपर्यायार्थार्पणाश्रयात्स्यादन्यत्वं॥ यस्मादन्योज्ञान
पर्यायः। अन्यश्चदर्शनपर्यायः॥ ज्ञानचारित्रयोरकालभेदादेकत्वमगम्यावबोध
वदितिचेन्नाशूत्पत्तौसूक्ष्मकालाप्रतिपत्तेरुत्पलपत्रशतव्यधनवत्स्यादेतत्ज्ञानचा
रित्रयोरेकत्वं। कस्मादकालभेदात्कथमगम्यावबोधवद्यथाकेनचिन्मो
तान्यानाभिसरणोत्सुकः॥ मतिनाएवंसामेघोदयोद्भूतबहलांधकारायांरात्रौ
लेमात्मएवंश्वलीस्वाभिलषितेतिस्त्र्युपात्तदैवविस्फुरिताचविद्योतितंतेनचो
ज्ञानंयदोत्पन्नंतदैवागम्यावबोधादगम्यागमननिवृत्तिः॥ नागम्याव

वोधागम्यागमननिवृत्त्योः॥ कालभेदोस्ति॥ तथाय देवस्तानावरणक्षयोपशमाज्जीवे
षुस्तानज्जीवाइत्याविर्भवति तदैव तेन हिंस्याइति जीवेहिंसा इति जीवेहिंसा प्रत्यस्य
निवृत्तिः॥ निवृत्तिश्च चारित्रं न च स्तानहिंसानिवृत्त्योः॥ कालभेदोस्तीति तन्न किंका
रणमाशूत्पत्तेः सूक्ष्मकालाप्रतिपत्तेस्तत्राप्यस्त्येव कालभेदः॥ सोऽत्यशुत्वान्न प्रतीय
ते॥ कथमुत्पलपत्रशतव्यधनवद्यथोत्पलपत्रशतव्यधनक्रमः॥ असंख्येयसम
यिकः सर्वज्ञप्रत्यक्षोऽतिसूक्ष्मोस्ति न तु विभाव्यते स्थूलधियस्थैर्यतो यावदेकमुत्पल
पत्रमसिविद्धाद्वितीयं छिनत्ति तावदसंख्येयाः॥ समया अतीता इति कालसूक्ष्मो
पदेशस्तथान्योगम्यावबोधकालः॥ अन्यश्च निवृत्तिकालः॥ अर्थभेदाच्चाकिंनैक
त्वमिति वर्त्तते॥ ज्ञानस्य तत्वावबोधोर्थः॥ चारित्रस्य कर्मादानहेतुक्रियाविशेषोपर
मोर्थ इति॥ अतो नानात्वं॥ कालभेदाभावो नार्थभेदहेतुर्गतिजात्यादिवत्॥ न काल
भेदाभावः॥ अर्थभेदहेतुरन्योन्यः कथं गतिजात्यादिवद्यथा॥ यदैव देवदत्तजन्म
तदैव मनुष्यगतिपंचेंद्रियजातिशरीरवर्णगंधादीनां जन्म नान्यो देवदत्तजन्मका

लः॥अन्यश्चमनुष्यगत्यादिपर्यायजन्मकालः॥नचैककालत्वान्मनुष्यगत्यादीना
कत्वंयस्यपुनः॥कालभेदाभावएकत्वहेतुरिष्टस्तस्यमनुष्यगत्यादिपर्यायाणामे
कत्वप्रसंगोनचेष्यतेऽतोनकालभेदाभावात्ज्ञानचारित्रयोरेकत्वं॥ उक्तंच॥किं
कमुभयनयसद्भावाश्रयादेकत्वंस्यान्नानात्वमितिलक्षणभेदात्तेषामे
पपत्तिरितिचेन्न॥परस्परसंसर्गेसत्येकत्वंप्रदीपवत्तस्यादेतत्तेषांसम्यग्दर्शनादी
नांमेकमार्गत्वंनोपपद्यते॥कुतः लक्षणभेदात्नहिभिन्नलक्षणानामेकत्वंयुज्य
ते॥नतस्त्रयोमीमोक्षमार्गाः॥प्रसक्ताइतितन्नकिंकारणंपरस्परसंसर्गेसत्येक
॥पवद्यथापरस्परविलक्षणवर्तिस्नेहानलार्थानांबाह्याभ्यंतरपरिणा
मकारणापादितसंयोगपर्यायाणांसमुदयेभवत्येकः॥प्रदीपोनत्रयः॥
रविलक्षणसम्यग्दर्शनादित्रयसमुदयेभवत्येकोमोक्षमार्गोनत्रयः॥किं
नांमेकत्वावासीनप्रतिवादिनोविसंवदंते॥केचित्ताक्दाहुः
दिभिन्नलक्षणानांसत्वरजस्तमसांसाम्ये

प्रधानमेकं न तेषां त्रित्वात्प्रधानस्य त्रैविध्यमिति॥ अपर आहुः॥ काकपडलादीनां
चतुर्णां भूतानां भौतिकानां च वर्णादीनां विलक्षणानां समुदय एको रूपपरमाणुर्न
तेषां भेदात्परमाणोरनेकत्वं तथा रागादीनां धर्माणां प्रमाणाप्रमयाविगमरूपाणां
च विलक्षणानां समुदय एकं विज्ञानं न तेषां भेदाद्विज्ञानभेद इति इतर आहुः श्चि
त्राणां तंतूनां समुदयश्चित्रपट एकः॥ न तेषां भेदात्पटस्य भेद इति॥ तद्वदिहापि
सम्यग्दर्शनादीनां भिन्नलक्षणानां समुदय एको मोक्षमार्ग इति को विरोध एषां
पूर्वस्य लाभे भजनीयमुत्तरं एषां सम्यग्दर्शनादीनां पूर्वस्य लाभे भजनीयमुत्तरं
वेदितव्यं उत्तरलाभे तु नियतः॥ पूर्वलाभः॥ उत्तरस्य तु लाभे नियतः॥ पूर्वलाभेद्र
ष्टव्यः सम्यग्दर्शनज्ञानचारित्राणां पाठं प्रति पूर्वत्वमुत्तरत्वं च॥ पूर्वस्य सम्यग्दर्श
नस्य लाभे ज्ञानमुत्तरं भजनीयं॥ उत्तरज्ञानलाभे तु नियतः॥ पूर्वसम्यग्दर्शनलाभः
तथा पूर्वज्ञानलाभे उत्तरं चारित्रं भजनीयं॥ उत्तरचारित्रलाभे तु नियतः॥ सम्यग्द
र्शनज्ञानलाभः॥ तदनुपपत्तिरज्ञानपूर्वकश्रद्धानप्रसंगात्पूर्वस्य लाभे भजनी

यमुत्तरमित्येतस्यानुपपत्तिः॥ कुतः॥ अज्ञानपूर्वकश्रद्धानप्रसंगात् यदिपूर्वंस
म्यग्दर्शनलाभेउत्तरज्ञानलाभोभजनीयः॥ ननुज्ञानाभावादज्ञानपूर्वश्रद्धा
नप्रसंगःकिंच॥ अनुपलब्धस्वतत्वेर्थेश्रद्धानानुपपत्तिरविज्ञानफलरसोपयोग
वत॥ यथानाविज्ञातेफलेतद्रसोपयोगोमुष्यफलस्यरसंसंपादयतेतिश्रद्धानमस्ति
तथानाविज्ञातेषु॥ जीवादिषुश्रद्धानाभावः स्यात् किंच॥ आत्मस्वरूपाभावप्र
संगात्॥ यदिसम्यग्दर्शनलाभेज्ञानंभजनीयत्वादसद्विरोधान्मिथ्याज्ञाननिवृत्तौ
सम्यग्ज्ञानस्यचाभावात्॥ ज्ञानोपयोगाभावः॥ आत्मनः॥ प्रसक्तः॥ ततश्चलक्ष
णाभावाल्लक्ष्यस्यात्मनोप्यभावः॥ स्यात्तदभावाच्च॥ मोक्षमार्गपरीक्षाव्यर्थेति न
वायावतिज्ञानमित्येतत्परिसमाप्यतेतावतासंभवात्तयापेक्षंवचनंनवाएषादोषः
किंकारणंयावतिज्ञानमित्येतत्परिसमाप्यतेतावतोऽसंभवात्तयापेक्षमिदंवचनं
भजनीयमुत्तरमिति॥ क्वचनज्ञानमित्येतत्परिसमाप्यते॥ श्रुतकेवलयोर्यतः श्रु
तकेवलज्ञानग्राहीशब्दनयः॥ श्रुतकेवलेएवंब्रतिनान्यत्रज्ञानमपरिपूर्णत्वा॥

दितितदपेक्षंसंपूर्णंद्वादशांगंचतुर्दशपूर्वलक्षणंश्रुतं॥ केवलंचभजनीयमुक्तं
तथापूर्वसम्यग्दर्शनलाभेदेशचारित्रंसंयतासंयतस्यसर्वचारित्रंप्रमत्तादारभ्य
सूक्ष्मसंपरायांतानांयच्चयावच्चनियमादस्तिसंपूर्णंयथाख्यातचारित्रंतुभजनी
यंपूर्वसम्यग्दर्शनज्ञानलाभेभजनीयमुत्तरमितिचेन्ननिर्देशस्यागमकत्वात्स्यादे
तन्नाज्ञानपूर्वकश्रद्धानप्रसंगोस्तिकुतः॥ पूर्वसम्यग्दर्शनज्ञानलाभेचारित्रमुत्त
रंभजनीयमित्यभिसंबंधादिति॥ तन्नकिंकारणंनिर्देशस्यागमकत्वादुक्तोयम
र्थोननुतस्यनिर्देशोगमकः॥ पूर्वस्यलाभइतिपूर्वयोरितिहिवक्तव्यंस्यादर्थसामा
न्यनिर्देशादुभयगतिकल्पतेनैवंशक्यंव्यवस्थाविशेषस्याविवक्षितत्वादितरथा
हिउत्तरेपितथाप्रसक्तेनितद्दोषाननतिवृत्तिः॥ स्यात्तस्मात्पूर्वोक्तएवार्थोनयापेक्षंव
चनमिति॥ अथवाक्षायिकसम्यग्दर्शनलाभेक्षायिकंसम्यग्ज्ञानंभजनीयं॥ अथ
वयुगपदात्मलाभेसाहचर्यादुभयोरपिपूर्वत्वं॥ यथासाहचर्यात्पर्वतनारदयोः
पर्वतग्रहणेननारदस्यग्रहणंनारदग्रहणेनवापर्वतस्यग्रहणंतथासम्यग्दर्श

नस्यसम्यक्ज्ञानस्यान्यतरस्यात्मलाभेचारित्रमुत्तरंभजनीयं॥ इतितत्त्वार्थवा
र्तिकव्याख्यानालंकारे प्रथमेऽध्याये द्वितीयमान्हिकं॥ ॥ अमीषांमोक्षकार
णानांसामान्येसत्यविशिष्टानांविशेषप्रतिपत्त्यर्थमिदमाह॥ ॥ तत्त्वार्थश्रद्धानं
सम्यग्दर्शनं॥ सम्यगितिकोयंशब्दः॥ सम्यगितिप्रशंसार्थोनिपातः क्वंतोवासम्य
गित्ययंनिपातः॥ प्रशंसार्थोवेदितव्यः॥ सर्वेषांप्रशस्तरूपगतिजातिकुलायुर्वि
ज्ञानादीनामाभ्युदयिकानांमोक्षस्यचप्रधानकारणत्वात्प्रशस्तंदर्शनंसम्यग्दर्श
नं॥ ननुचसम्यगिष्टार्थतत्त्वयोरितिवचनात्प्रशंसार्थोभावइति॥ तन्नानेकार्थ
त्वान्निपातानां॥ अथवासम्यगितितत्त्वार्थोनिपातस्तत्त्वंदर्शनंसम्यग्दर्शनं अवि
परीतार्थविषयंतत्त्वमित्युच्यते अथवाक्वंतोयंशब्दः समंचतीतिसम्यक् यथा
र्थोव्यवस्थितस्तथैवावगच्छतीत्यर्थः॥ अथकिमिदंदर्शनमितिकरणादिसाधनो
दर्शनशब्दस्तत्र दृशेः करणादिसाधनेयुटिदर्शनशब्दोव्याख्यातः॥ दृशेरालो
कार्थत्वादभिप्रेतार्थासंप्रत्ययइतिचेन्नानेकार्थत्वात्॥ यदेतद्दृशिरयमालो

र्थेवर्त्तते॥आलोकश्चेंद्रियानिंद्रियार्थप्राप्तिर्नचासाविहाभिप्रेतः॥श्रद्धानमिष्टंनत
स्यार्थस्यसंप्रत्ययोस्तीतितन्न॥किंकारणमनेकार्थत्वादिहश्रद्धानमिष्टमभिसंब
ध्यते॥कथंपुनर्ज्ञायतेआलोकइहनेष्टः॥श्रद्धानमिष्टमिति॥अतउत्तरंपठतिमोक्ष
कारणप्रकरणाच्छ्रद्धानगतिः॥मोक्षकारणंप्रकृतंतत्त्वार्थविषयंश्रद्धानंमोक्ष
स्यकारणंनालोकइत्यतः॥प्रकरणाच्छ्रद्धानगतिर्भवति॥अथतत्त्वमित्यनेनकिं
प्रत्याय्यतेप्रकृत्यपेक्षत्वात्प्रत्ययस्यभावसामान्यसंप्रत्ययस्तत्त्ववचनात्तदित्ये
षाप्रकृतिः॥सामान्याभिधायिनीसर्वनामत्वात्प्रत्ययश्चभावेउत्पद्यतेकस्यभावेत
दित्यनेनयोर्थउच्यते॥कश्चासौसर्वोर्थः॥अतस्तदपेक्षत्वाद्भावस्यभावसामान्य
मुच्यतेतत्त्वशब्देनयोर्थोयथावस्थितस्तथातस्यभवनमित्यर्थः॥तत्त्वेनार्यतइतित
त्त्वार्थः॥अर्यतेगम्यतेज्ञायतइत्यर्थः॥तत्त्वेनार्थस्तत्त्वार्थः॥येनभावेनार्थोव्यवस्थि
तस्तेनभावेनार्थस्यग्रहणंयच्छ्रद्धानंभवतितत्सम्यग्दर्शनं॥श्रद्धानशब्दस्यकर
णादिसाधनत्वंपूर्ववद्यथादर्शनशब्दस्यकरणादिसाधनत्वंव्याख्यातं॥तथाश्र

द्धानशब्दस्यापिचेदितव्यं सत्वात्मपरिणाम सत्तुश्रद्धानशब्दवाच्यो र्थः करणा
दिव्यपदेशभागात्मपरिणामोवेदितव्यः वक्ष्यमाणनिर्देशादिसूत्रविवरणात्पु
द्गलद्रव्यसंप्रत्ययइतिचेन्नात्मपरिणामेपितदुपपत्तेः स्यादेतद्वक्ष्यमाणनिर्दे
शादिसूत्रविवरणात्पुद्गलद्रव्यस्यसंप्रत्ययः प्राप्नोतितन्न किंकारणंमात्मप
रिणामेपितदुपपत्तेः किंतत्वार्थश्रद्धानमात्मपरिणामः कस्य आत्मनइत्ये
वमादिकर्म्माभिधायित्वेप्यदोषइतिचेन्नमोक्षकारणत्वेनस्वपरिणामस्यविवक्षि
तत्वात्स्यादेतत्सम्यक्त्वकर्म्मपुद्गलाभिधायित्वेप्यदोषइतितन्न किंकारणंमोक्षका
रणमस्यविवक्षितत्वादोपशमिकादिसम्यग्दर्शनमात्मपरिणामत्वान्मोक्षकार
णत्वेनविवक्ष्यतेनचसम्यक्त्वकर्म्मपर्यायः पौद्गलिकत्वेऽस्यपरपर्यायत्वात्स्व
परिनिमित्तत्वादुत्पादस्येतिचेन्नोपकरणमात्रत्वात् स्यादेतत्स्वपरनिमित्तउत्पा
दोदृष्टः यथाघटस्योत्पादोमृन्निमित्तोदंडादिनिमित्तश्च तथासम्यग्दर्शनोत्पा
दआत्मनिमित्तः सम्यक्त्वपुद्गलनिमित्तश्चतस्मात्तस्यापिमोक्षकारणत्वमुप

स

करणमात्रत्वादुपकरणमात्रं हि बाह्यसाधनं किंच। आत्मपरिणामादेव तद्द्रव्य

घातादादर्शनमोहाख्यं कर्म न तदात्मगुणघाति॥ न चैतदात्मपरिणामादेवा

पक्षीणशक्तिकं सम्यक्त्वाख्यां लभते॥ अतो न तदात्मपरिणामस्य प्रधानं का

रणमात्मैव स्वशक्त्या दर्शनपर्यायेणोत्पद्यत इति तस्यैव मोक्षकारणत्वं युक्तं

किंच। अहेयत्वात्स्वधर्मस्य। न हीपतेः परित्यज्यत इत्यहेयोयमभ्यंतर आत्मनः

सम्यक्त्वपरिणामः॥ यतः सत्याभ्यंतरे आत्मनः सम्यक्त्वपरिणामे नियमेनात्मा

सम्यग्दर्शनपर्यायेणाविर्भवति बाह्यस्तु हेयः कर्मपुद्गलः॥ न मंतरेणापि क्षायि

कसम्यक्त्वपरिणाम। किंच प्रधानत्वादाभ्यंतर आत्मीयः सम्यग्दर्शनपरिणामः

प्रधानं सति। तस्मिन्बाह्यस्योपग्राहकत्वादतो बाह्य आभ्यंतरस्योपग्राहकः॥ प

रोक्षेनवर्तते इति अप्रधानं किंच प्रत्यासत्तेः प्रत्यासन्नं हि कारणं आत्मपरिणा

मो मोक्षस्य तादात्म्येनाविर्भावात्तु सम्यक्त्वः कर्मविप्रकृष्टांतरत्वात्तादात्म्येनैवा

परिणामाच्च तस्मादहेयत्वात्प्रधानत्वात्प्रत्यासत्तेश्च मोक्षस्य कारणमात्मपरि

राजवा॰
२८

णामोपयुक्तानकर्मेति॥ अल्पबहुत्वकल्पनाविरोध इति चेन्नोपशमाद्यपेक्षस्य सम्य
ग्दर्शनत्रयस्यैव तदुपपत्तेः॥ स्यादेतत्सम्यग्दर्शनस्यात्मपरिणामत्वे अल्पबहुत्व
कल्पनाविरोध इति तन्न किं कारणं उपशमाद्यपेक्षस्य सम्यग्दर्शनत्रयस्यैव तदु
पपत्तेः सर्वेभ्यस्तोकाः॥ उपशमसम्यग्दृष्टयः॥ संसारिणः क्षायि
योसंखेयगुणाः॥ क्षायोपशमिकसम्यग्दृष्टयोसंखेयगुणाः॥ सिद्धाः क्षायि
सम्यग्दृष्टयोनंतगुणा इति॥ तस्मात्सम्यग्दर्शनमात्मपरिणामः श्रेयोभिमुखम
ध्यवस्यामः॥ तत्त्वाग्रहणमर्थश्रद्धानमित्यर्थस्य लघुत्वात्॥ कश्चिदाह
णामनर्थकं॥ अर्थश्रद्धानमित्यस्त्वेव कुतो लघुत्वादिति न सर्वार्थप्रसंगान्नैतत्
युक्तं कुतः सर्वार्थप्रसंगात् तत्त्वग्रहणादृते मिथ्यात्वादिषु प्राणिनां सर्वा
मं सम्यग्दर्शनं प्राप्नोतीति संदेहाच्चार्थशब्दस्यानेकार्थत्वादर्थशब्दोयमनेकार्थः
क्वचिद्द्रव्यगुणकर्मसु वर्ततेर्थ इति द्रव्यगुणकर्मसु हि वर्ततिवचनात् क्वचित्प्रयोजने
वर्तते किमर्थमिहागमनं वर्तते किमर्थमिहागमनं भवतः॥ किं प्रयोजनमिति क

चिह्नेवर्त्तते॥ अर्थवानयंदेवदत्तः॥ धनवानितिक्वचिदभिधेयेवर्त्तते॥ शब्दार्थसंबंध
इतिएवमर्थशब्दस्यानेकार्थाभिधायित्वेसंदेहः॥ कस्यार्थस्यश्रद्धानंसम्यग्दर्शनमिति
सर्वानुग्रहाद्दोषइति॥ चेन्नासदर्थविषयत्वात्स्यादेतन्नायंदोषः॥ सर्वार्थप्रसंगइति·
स्यात्तुसर्वार्थविषयंश्रद्धानंसम्यग्दर्शनं॥ तथासतिसर्वानुग्रहः कृतोभवति॥ कश्चिदा
नीभवतोमशारः॥ सर्वोलोकोऽभ्युदयेनयुज्यतामितितन्न॥ किंकारणमसदर्थविषय
त्वान्नखलुकश्चिन्नोमशारः॥ असदर्थविषयंहितच्छ्रद्धानंसंसारकारणमिति॥ अ
तःसर्वानुग्रहार्थमेवतयेनविशिष्यते॥ अर्थग्रहणादेवतत्सिद्धिरितिचेन्नविपरीत
ग्रहणादर्शनात्स्यादेतत॥ अर्थ्यतइत्यर्थोनिश्चीयतइत्यर्थः॥ नचमिथ्यावादिप्रणीता
अर्थाः॥ असत्वात्तस्मादर्थग्रहणादेवतत्वसंप्रत्ययानार्थस्तत्वग्रहणेनेति॥ तन्न
किंकारणंविपरीतग्रहणादर्शनाद्यथा॥ पित्तोदयाकुलितकरणः॥ मधुरम
संकटुकंमन्यतेतथात्मामिथ्याकर्मोदयदोषादस्तित्वनास्तित्वनित्यत्वानित्यत्वा
नन्यत्वाद्येकांतरूपेणमिथ्याअवस्यातिश्रतस्तन्निराकरणार्थंतत्वग्रहणमित्य

र्थग्रहणंकिमर्थं।ननुतत्वान्येवार्थाइतिअर्थानांतत्वसानत्वसामानाधिकरण्यात्तत्व
वचनेनैवसंप्रत्ययः।सिद्धः।उच्यतेअर्थग्रहणमव्यभिचारार्थं।अर्थग्रहणंक्रियते।
व्यभिचारार्थंतत्वमितिश्रद्धानमितिचेदेकांतनिश्चितेपिप्रसंगः।
द्धानंनचश्रद्धानमित्युच्यतेएकांतनिश्चितेपिप्राप्नोतिएकांतवादिनोपिहिनास्त्या
त्मेत्येवमादितत्वमितिश्रद्दधाति।तत्वस्यश्रद्धानमितिचेत्भावमात्रप्रसंगः।यदित
त्वस्यश्रद्धानंतत्वश्रद्धानमित्युच्यते।भावमात्रप्रसंगः।स्यात्तत्वंभावः।सामान्यमि
केचित्कथयंतिद्रव्यत्वगुणत्वकर्मत्वादिसामान्यंद्रव्यादिभ्योऽर्थांतरंतस्यश्रद्धा
नंसम्यग्दर्शनंप्राप्नोतिनहिद्रव्यादिभ्योऽन्यत्सामान्यंयुक्तिमदिति।परी
वात्तत्वमेकत्वमित्यर्थः।पुरुषएवेदंसर्वमित्यादितस्यश्रद्धानंसम्यग्दर्शनंप्राप्नोतिन
चादियुक्तंक्रियाकारकभेदलोपप्रसंगादितितत्वेनश्रद्धानमितिचेत्कस्यकस्मि
न्प्रश्नानिवृत्तिः।यदितत्वेनश्रद्धानमित्युच्यतेकस्यकस्मिन्वेतिप्रश्नोनविनिवर्तते
तस्मात्सूक्तमर्थग्रहणमव्यभिचारार्थमिति।इच्छाश्रद्धानमित्यपरेवर्णयंति।तद

युक्तं मिथ्यादृष्टेरपि प्रसंगात् यतो मिथ्यादृष्टेः। यो वा हुस्तुत्यस्तचिख्यापयिषयार्हन्मत
विजिगीषया वा ऽऽर्हतमतमधीयते न च तेषां तत्त्वेनाध्ययनमस्ति ऽतस्तेषामपि सम्य
ग्दर्शनं प्राप्नोतीत्ययुक्तं तत्त्वार्थश्रद्धानमिति केवलिनि सम्यक्त्वाभावप्रसंगाच्च यदि
चेच्छा सम्यक्त्वं इच्छा च लोभपर्यायः। न च क्षीणमोहे केवलिनि लोभोऽस्ति तदभावादिच्छा
भाव इति सम्यक्त्वाभावः स्यात्। तस्मादवावाद्यथाभूतमर्थं गृह्णात्यात्मतत्सम्यग्दर्श
नमिति प्रत्येतव्यं। तद्द्विविधं सरागवीतरागविकल्पात् तदेतत्सम्यग्दर्शनं द्विविधं
कुतः। सरागवीतरागविकल्पात् प्रशमसंवेगानुकंपास्तिक्याभिव्यक्तलक्षणं प्रथ
मं रागादीनामनुद्रेकः। प्रशमः। संसाराद्भीरुता संवेगः सर्वप्राणिषु मैत्री ऽनुकंपा
जीवादयोऽर्थाः। यथास्वं भावैः। संतीति मतिरास्तिक्यं एतैरभिव्यक्तलक्षणं प्रथमं सरा
गसम्यक्त्वमित्युच्यते ऽऽत्मविशुद्धिमात्रमितरत्। सप्तानां कर्मप्रकृतीनां ऽऽत्यंति
केपगमे सत्यात्मविशुद्धिमात्रमितरद्वीतरागसम्यक्त्वमित्युच्यते। पूर्वं साधनं भवति उ
त्तरं साधनं साध्यं च। अथैतत्सम्यग्दर्शनं। जीवादिपदार्थविषयं कथमुत्पद्यत इत्यत

इत्यतआह॥ तन्निसर्गादधिगमाद्वा॥ निसर्गइतिकोयंशब्दः॥ निपूर्वात्सृजेर्भावसाध
नोघञ्॥ निसर्जनंनिसर्गः स्वभावइत्यर्थः॥ अथाधिगमइतिकः॥ अधिपू
धनः अवबोधोधिगमनमधिगमस्तयोर्हेतुत्वेननिर्देशः निसर्गादधिगमादिति॥
यायाकाचक्रियाउत्पद्यतइत्यध्याह्रियते॥ सोपस्कारत्वात्सूत्राणांतदेतत्सम्यग्दर्शनं
निसर्गादधिगमाद्वाउत्पद्यतइति॥ कश्चिदाहसम्यग्दर्शनंद्वैविध्यकल्पनानुपपत्तिरनु
पलब्धतत्त्वश्रद्धानाभावाद्रसायनवत्॥ द्विविधंसम्यग्दर्शनमितिकल्पनानोपपद्यतेकु
तोनुपलब्धतत्त्वस्यश्रद्धानाभावात्कथंरसायनवत्॥ यथात्यंतपरोक्षरसायनतत्त्वफल
स्यनरसायनेश्रद्धानंदृष्टंतथानाधिगतजीवादितत्त्वस्यनतत्त्वश्रद्धानमितिनैसर्गिकस
म्यग्दर्शनाभावः॥ अदृष्टवेदभक्तिवदितिचेन्न वैषम्यात्स्यादेतद्यथाशूद्रस्यानधिगतवेदा
र्थस्यवेदार्थेआत्यंतिकभक्तिस्तथानुपलब्धजीवादितत्त्वस्यश्रद्धानमितितन्नकिंका
रणंवैषम्यात्शूद्रस्यभारतादिश्रवणात्प्रावचनानुवृत्त्यादिभिश्चवेदार्थभ
क्तिः॥ नासौनैसर्गिकी इहतुनैसर्गिकीरुचिरिष्टेतिवैषम्यं॥ अथवासम्यक्त्वाधि॰

जीवादिपदार्थभक्तिः॥ नासौनैसर्गिकीरुचिरिष्टेतिवैषम्यं॥ अथवासम्यक्ताधिकारात्जी
वादिपदार्थतत्वोपलब्धिपूर्वाकेणसम्यग्दर्शनेनमोक्षकारणेनेहभवितव्यंनचमू
स्यतादृशंश्रद्धानमितिवैषम्यं॥ मणिग्रहणवदितिचेन्नप्रत्यक्षेणोपलब्धिसद्भावात्
स्यादेतद्यथानधिगतमणिविशेषस्यापिउसौमणिग्रहणंभवतितस्यचफलंदृष्टंतथा
नाधिगतजीवादितत्वस्यापितत्त्वग्रहणंभवतितस्यचफलंभवतीतितन्नैसर्गिकंदर्शन
मितितन्न॥ किंकारणंप्रत्यक्षोपलब्धिसद्भावात्नात्यंतपरोक्षंमणिग्रहणमिति किंतुप्रत्य
क्षतउपलभ्यग्रहणमितिविपर्ययविशेषंतुनप्रतिपद्यते॥ अतोस्यानुपलब्धमणिविशे
षस्यापिप्रत्यक्षदर्शनाद्ग्रहणंन्याय्यं॥ अत्यंतपरोक्षेतुजीवादितत्वेकथमस्यनिसर्ग
जसम्यग्दर्शनसिद्धिः॥ सामान्याधिगमेतुअधिगमसम्यग्दर्शनमेवेति॥ नापप्रकाश
द्युगपदुत्पत्तेरभ्युपगमाच्च॥ किंनिसर्गजसम्यग्दर्शनाभावइत्यनुवर्त्तते॥ यत्रास्यसम्य
ग्दर्शनमुत्पद्यतेतदैवप्राक्तनंमत्यज्ञानंवसम्यक्केनपरिणमतीत्यधिगमजमेवतद्भव
तियस्यज्ञानात्प्राग्दर्शनंस्यात्तस्यनैसर्गिकंस्यात्तच्चानिष्टमिष्यते॥ उभयत्रतुल्ये

तरंगहेतौवाह्योपदेशापेक्षानुपेक्षभेदाद्भेदः। उभयत्रदर्शनेतरंगोहेतुस्तुल्यः।
मोहस्योपशमः क्षयः। क्षयोपशमोवातस्मिंसतियद्वाह्योपदेशादृतेप्रादुर्भवति
सर्गिकं। यत्परोपदेशपूर्वकंजीवाद्यधिगमनिमित्तंतदुत्तरमित्यनयोरयंभेदः।
पूर्वकेनिसर्गाभिप्रायोलोकवद्यथालोकेहरिशार्दूलवृकभुजगादयोनिसर्गतः। क्रौ
र्यशौर्याहारादिसंप्रतिपत्तौवर्त्तंतइत्युच्यते। नचासावाकस्मिकोकर्म्मनिमित्तत्वादनाक
स्मिकत्वेपिसतिनैसर्गिकोभवतिपरोपदेशाभावात्तथेहाप्यपरोपदेशपूर्वकेनिसर्गाभिप्रा
यः॥ अपरआह॥ भव्यस्यकालेननिःश्रेयसोपपत्तेरधिगमसम्यक्त्वाभावः। यद्यवधृत
मोक्षकालात्प्रागधिगमसम्यक्त्ववलान्मोक्षः। स्यात्स्यादधिगमसम्यग्दर्शनस्यसाफल्यं
नचादोस्त्यतः। कालेनयोस्यमोक्षोसौसनिसर्गजसम्यक्त्वादेवसिद्धइतिनविवक्षितापरि
ज्ञानात्तत्कृतं। विवक्षितापरिज्ञानात्सम्यग्दर्शनादित्रयान्मोक्षउक्तः। तत्रय
द्यथमंतत्कृतउत्पद्यतइत्युक्तेनिसर्गादधिगमाद्वेत्ययमर्थोत्रविवक्षितः। यदिसम्यग्दर्शना
देवकेवलान्निसर्गजादधिगमजाद्वाज्ञानचारित्ररहितान्मोक्षइष्टः स्यात्ततइदंयुक्तंस्या

द्भव्यस्यकालेनंनिःश्रेयसोपपत्तेरितिनचायमर्थोत्रविवक्षितः॥ अथवायथाकुरुक्षेत्रे
क्वचित्कनकंवाह्यपौरुषेयप्रयत्नाभावाज्जायतेतथावाह्यपुरुषोपदेशपूर्वकजीवाद्य
धिगममन्तरेणयज्जायतेतन्निसर्गजं॥ यथाकनकाश्मा विद्युपायज्ञपुरुषप्रयोगापेक्षः
कनकभावमापद्यते॥ तथायंसम्यग्दर्शनंविद्युपायज्ञमनुष्यसंपर्काज्जीवादिपदार्थ
तत्वाधिगमापेक्षमुत्पद्यते॥ तदधिगमजंसम्यग्दर्शनमित्ययमर्थोविवक्षितः॥ नचान्यत
रस्याभावइति॥ अतोविवक्षितापरिज्ञानात्सम्यगुक्तमधिगमाभावइति॥ कालनिय
मात्वनिर्जरायाः॥ यतोनभव्यानांकृत्स्नकर्मनिर्जरापूर्वकमोक्षकालस्यनियमोस्ति
केचिद्भव्याः॥ संख्येयेनकालेनसेत्स्यंतिकेचिदसंख्येयेनकेचिदनंतेन॥ अपरेअनंतानंते
नापिनसेत्स्यंतीतिततश्चनयुक्तंभव्यस्यकालेननिःश्रेयसोपपत्तेरितिचोदनानुपपत्ते
श्च॥ सर्वस्येयंचोदनानोपपद्यते ज्ञानक्रियाद्वयात्त्रितयाद्वामोक्षमाचक्षाणस्यसर्वस्य
नेदंयुक्तंभव्यस्यकालेनमोक्षइति॥ यदिहिसर्वस्यकालोहेतुरिष्टःस्यात्स्वाह्याभ्यंतरका
रणानियमस्यदृष्टस्येष्टस्यवाविरोधः॥ स्यात्तदित्यनंतरनिर्देशार्थंतदित्येतदनंतरस्यस

म्यग्दर्शनस्य निर्देशार्थं क्रियते ननु तत्प्रकृतमंतरेणापि तद्वचनं सिद्धं इतरथा हि मार्गसं
बंधप्रसंगः। अक्रियमाणे हि तद्वचने मोक्षमार्गोपि प्रकृतः। तेनाभिसंबंधः प्रस
ज्येत निसर्गमात्रेणापि मोक्षमार्गलाभ उक्तः। स्यान्तु हस्तप्रक्षिप्यापयिषयाच मोक्ष
मार्गाधिगममात्रादेव मिथ्यादृष्टीनामपि मोक्षः स्यात्। ननु चानंतरस्य विधिर्वा भवति
प्रतिषेधो वेत्यनंतरत्वात् सम्यग्दर्शनेनैव संबंधो न्याय्यः। प्रत्यासत्तेः प्रधानं बलीय इति
मार्गेणैव संबंध्येत तस्मात्तद्वचनं क्रियते विस्पष्टार्थं। इति तत्त्वार्थवार्तिके व्याख्याना
लंकारे प्रथमोध्यायस्य तृतीयमाह्निकं। ३। तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्युक्तं
अथ किं तत्त्वमित्यत इदमाह। सू०। जीवाजीवास्रवबंधसंवरनिर्जरामोक्षास्तत्त्वं
किमर्थमिषामुपादानं ननु द्रव्यमित्येवं वक्तव्यं तद्भेदा हि सर्वे पदार्था भवंतीति अत उत्तरं
पठति। एकाद्यनंतविकल्पोपपत्तौ विनेयाशयवशान्मध्यमाभिधानं। एकः द्वौ त्रयः सं
ख्येयाः असंख्येयाः अनंता इति पदार्था भिद्यंते। तत्रैकः पदार्थो भवति एकं द्रव्यमनं
तपर्यायमिति वचनात्। द्वौ पदार्थो जीवाजीवभेदात्। त्रयः पदार्था अर्था

यभेदात्॥एवमुत्तरेष्ववचनविकल्पापेक्षयासंख्येयास्थानवैर्थंसेयाविकल्पापेक्षया
असंख्येयाअनंताश्चभवंतितत्रविनेयाशयवशात्पदार्थनिरूपणाभेदइतिमध्यमे
नक्रमेणाभिधानंकृतंइतिसंक्षेपेसुमेधसामेवप्रतिपत्तिःस्यादतिप्रपंचेचातिचिरेण
संप्रतिपत्तिर्लस्यादितिकश्चिदाह॥जीवाजीवयोरन्यतरत्वेषांतर्भावादास्रवादीनाम
नुपदेशः॥आस्रवोहिजीवोवास्यादजीवोवायदिजीवोजीवंतर्भवतिअथाजीवेएवंसं
वरादयोपितस्मादेषामनुपदेशोनर्थकउपदेशःअनुपदेशः॥नवापरस्परोपश्लेषेसं
सारप्रवृत्तिस्तत्परमप्रधानकारणप्रतिपादनार्थत्वान्नवानर्थकउपदेशःकुतःजी
वाजीवयोः॥परस्परोपश्लेषसतिसंसारप्रवृत्तितत्परमप्रधानकारणप्रतिपादनार्थ
त्वादिहमोक्षमार्गः॥प्रकृतःतस्यफलमवश्यंमोक्षोनिर्देष्टव्यः॥सकस्येतिजीवउपा
त्तः॥सचसंसारपूर्वकः॥संचसत्यजीवेजीवस्यभवातीत्यजीवउपात्तः॥तयोश्चप
रस्परोपश्लेषः॥संसारस्तत्प्रधानहेतुआस्रवोबंधश्चेत्युपात्तौतत्परमस्यमोक्ष
स्यप्रधानहेतुसंवरनिर्जरेइत्युपादानेतयोरेवमेषांनिर्देशेसतिप्रयोग्यस्यमोक्ष

स्यप्रधानहेतुसंवरनिर्जरे इत्युपादानं तयोरेवमेषां निर्ज्ञाने सति प्राप्यस्य मोक्षस्य नि
र्ज्ञानं भवतीति हृश्यते सामान्येनभूतस्यापि विशेषस्य पृथगुपादानं प्रयोजनार्थं क्षत्रि
या आयाताः सूरवर्मापीति उभयथापि चोदनानुपपत्तिः यो जीवाजीवयोरंतर्भावा
दास्रवादीनामनुपदेशं चोदयति तस्योभयथापि चोदना नोपपद्यते
जीवाजीवाभ्यां पृथगुपलभ्य वा चोदयेदनुपलभ्य वा यदि पृथगुपलभ्यात एव त
तोर्थांतरत्वं सिद्धं अथानुपलभ्यानुपलंभादेव चोदनाभावः॥ किंच जीवाजीवा
द्या किं सिद्धान्वा चोदयेदसिद्धान्वा यदि सिद्धांश्चोदयेत्तत एवार्थांतरभावः॥ अथासिद्धां
श्चोदयति कथमत्रांतर्भावश्चोद्यते नहि खरविषाणादीनामंतर्भावश्चोदनार्हः अ
नेकांताच्च चोदनानुपपत्तिरिति वर्त्तते कथं द्रव्यार्थिकपर्यायार्थिकयोर्गुणप्रधान
भावेनार्पणानर्पणभेदाज्जीवाजीवयोरास्रवादीनां स्यादंतर्भावः स्यादनंतर्भावः प
र्यायार्थिकगुणभावे द्रव्यार्थिकप्रधान्यादास्रवादिप्रतिनियतपर्या
नादिपारिणामिकचैतन्याचैतन्यादिद्रव्यार्थार्पणादास्रवादीनां स्याज्जीवेऽजीवे

वांतर्भावः। तथा द्रव्यार्थिकगुणभावेपर्यायार्थिकप्राधान्यादास्रवादिप्रतिनियतपर्या
यार्थार्पणादनादिपारिणामिकचैतन्याचैतन्यादिद्रव्यार्थानर्पणादास्रवादीनां
जीवाजीवयोः स्यादनंतर्भावः। तदपेक्षयास्यादुपदेशोर्थवांस्तेषां निर्वचनलक्षणा
क्रमहेत्वभिधाने। तेषांजीवादीनांपृथगुपदेशेप्रयोजनमुक्तं इदानींनिर्वचनलक्षण
क्रमहेत्वभिधानंकर्तव्यं। तदुच्यते। त्रिकालविषयजीवनानुभवनाज्जीव दशसुप्रा
णेषुयथोपात्तप्राणपर्यायेणत्रिषुकालेषुजीवनानुभवनाज्जीवत्यजीवीज्जीविष्य
तीतिवाजीवः। तथासतिसिद्धानामपिजीवत्वंसिद्धं। जीवितपूर्वत्वात्संप्रतिनजी
वंतिसिद्धाभूतपूर्वगत्याजीवत्वमेषामित्यौपचारिकत्वंस्यान्मुख्यंचेष्यतेनैषदोषः
भावप्राणज्ञानदर्शनानुभवनात्सांप्रतिकमपिजीवत्वमस्ति। अथवारूढिशब्दो
यंरूढौचक्रियाव्युत्पत्त्यर्थैवेतिकादाचित्कंजीवनमपेक्ष्यसर्वपदार्थवर्त्तिनोगोशब्दव
त्। तद्विपर्ययोजीवः। यस्यजीवनमुक्तलक्षणंनासौतद्विपर्ययादजीवइत्युच्य
ते। आस्रवत्यनेनास्रवणमात्रंवास्रवः। येनकर्मास्रवति। यद्वास्रवणमास्रवः

॰स्यनेनास्रवणमात्रंवास्रवः। येनकर्मास्रवति। यद्वास्रवणमास्रवः बध्यतेनेनबंध
नमात्रंवाबंधः बध्यतेयेनास्वतंत्रीक्रियतेयेनास्वतंत्रीकरणमात्रंवाबंधः संव्रि
यतेनेनसंवरणमात्रंवासंवरः येनसंव्रियतेयेनसंरुध्यतेसंरोधनमात्रंवासंवरः नि
र्जीर्यतेययानिर्जरणमात्रंवानिर्जरानिर्जीर्यतेनिरस्यतेययानिरसनमात्रंवा
निर्जरामोक्ष्यतेयेनमोक्षणमात्रंवामोक्षः। मोक्ष्यतेस्यतेयेनासनमात्रंवामोक्षः
एतेषामितरेतरयोगेद्वंद्वः। उक्तंनिर्वचनमिदानींलक्षणमुच्यते।
त्वात्तद्विकल्पलक्षणोजीवः जीवस्वभावश्चेतनायतइतरेभ्योद्रव्येभ्योभिद्यते
तद्विकल्पाज्ञानादयोयत्संनिधानादात्माज्ञाताद्रष्टाकर्त्ताभोक्ताचभवतितल्लक्ष
णोजीवस्तद्विपरीतत्वादजीवस्तद्भावलक्षणात्तद्विपरीतत्वा
त्ज्ञानादीनामभावोयस्यलक्षणंसोजीवः कथमभावोनिरुपाख्यो
लक्षणंभवति। अभावोपिवस्तुधर्मोहितुरगत्वादेर्भाववत् अतोसौलक्षणंयुज्यते
सहियदिवस्तुनोलक्षणंनस्यात्सर्वसंकरः। स्याद्यद्येवंवनस्पत्यादीनामजीवत्वं

प्राप्नोतितदभावात्॥ स्नानादीनांहिप्रवृत्तितउपलब्धिर्नचतेषांतत्पूर्विकाप्रवृत्तिरस्ति
हिताहितप्राप्तिपरिवर्जनाभावादुक्तंच॥ बुद्धिपूर्वांक्रियांदृष्ट्वास्वदेहेन्यत्रतद्ग्रहात्
मन्यतेबुद्धिसद्भावंसानयेषुनतेषुधीरिति॥ नैषदोषस्तेषामपिस्नानादयः॥ संति॥ स
र्वज्ञप्रत्यक्षादितरेषामागमगम्याः॥ आहारलाभालाभयोः॥ पुष्टिम्लान्यादिदर्शनेनयुक्ति
गम्याश्चांडगर्भस्थमूर्छितादिषुसत्यपिजीवत्वेतत्पूर्वकप्रवृत्त्यभावाद्धेतुव्यभिचारः॥ पु
ण्यपापागमद्वारलक्षणआश्रवः पुण्यपापलक्षणस्यकर्मणः आगमनद्वारमाश्र
वइवाश्रवः॥ कउपमार्थः॥ यथामहोदधेःसलिलमापगामुखैरहरहःपूर्यतेतथामिथ्या
दर्शनादिद्वारानुप्रविष्टैः॥ कर्मभिरनिशमात्मासमापूर्यतइतिमिथ्यादर्शनादिद्वारमा
स्रव॥ आत्मकर्मणोरन्योन्यप्रदेशानुप्रवेशलक्षणोबंधमिथ्यादर्शनादिप्रत्ययोपनी
तानांकर्मप्रदेशानामात्मप्रदेशानांचपरस्परानुप्रवेशलक्षणोबंधः॥ बंधइवबंधः
कउपमार्थः॥ यथानिगडादिद्रव्यबंधनबद्धोदेवदत्तोस्वतंत्रत्वादभिप्रेतदेशगमनाद्य
भावाद्दुःखीभवति॥ तथात्माकर्मबंधनबद्धः॥ पारतंत्र्याच्छारीरमानसदुः॥ खाभ्य

र्द्दितोभवति॥ आस्रवनिरोधलक्षणः संवरः॥ पूर्वोक्तानामास्रवद्वाराणांशुभपरिणा
मवशान्निरोधः संवरः॥ संवरइवसंवरः॥ कउपमार्थः॥ यथासुगुप्तसुसंवृतद्वारक
वाटंपुरंसुरक्षितंदुरासदमरातिभिर्भवतितथासुगुप्तिसमितिधर्मानुप्रेक्षापरीषह
जयचारित्रात्मनः सुसंवृत्तेंद्रियकषाययोगस्याभिनवकर्मागमद्वारसंवरणात्संवरः
एकदेशकर्मसंक्षयलक्षणानिर्जरा॥ उपात्तस्यकर्मणस्तयो
एकदेशसंक्षयलक्षणानिर्जरा॥ निर्जरेवनिर्जरा॥ कउपमार्थः॥ यथामंत्रौषधबला
न्निर्जीर्णवीर्यविपाकंविषंनदोषप्रदंतथासविपाकाविपाकनिर्जराप्रत्ययतपोवि
शेषेणनिर्जीर्णरसंकर्मनसंसारफलप्रदं॥ कृत्स्नकर्मवियोगलक्षणोमो
र्शनादिहेतुप्रयोगप्रकर्षेसतिकृत्स्नस्यकर्मणः॥ श्चतुर्विधबंधवियोगोमोक्षः॥ मो
क्षइवमोक्षः कउपमार्थः यथानिगडादिद्रव्यमोक्षात्सतिस्वातंत्र्ये अभिप्रेतप्रदेशगमनादे
शगमनादेषमात्सुखीभवतितथाकृत्स्नकर्मवियोगेसतिस्वाधीनात्यंतिकज्ञानदर्श
नानुपमसुखमात्माभवतिलक्षणमुक्तमिदानींक्रमहेतुरुच्यते॥ तादर्थ्यात्परिस्पं

द्रव्यादेर्जीवग्रहणं योयं मोक्षमार्गनित्वाविष्करणपरिस्पंदः॥सञ्चात्मार्थस्तस्यमोक्षप
र्यायपरिणामाद्धावाजीवाद्युपदेशपरिस्पंदः॥सञ्चात्मार्थस्तस्योपयोगस्वाभाव्येसति
ग्राहकत्वादतस्तादौजीवग्रहणंतदनुग्रहार्थत्वात्तदनंतरमजीवाभिधानंयतः॥शरी
रवाङ्मनःप्राणापानादिनोपकारेणजीवमात्मानमनुगृह्णातिअतस्तदनंतरमजी
वाभिधानं॥तदुभयाभिधानत्वात्तत्समीपेआस्रवग्रहणं॥यतआत्मकर्मणोः परस्प
रश्लेषेसत्यास्रवप्रसिद्धिर्भवति॥अतस्तत्समीपेआस्रवग्रहणं॥तत्पूर्वकत्वाद्बंधस्य
ततः परंबंधवचनंयतआस्रवपूर्वकोबंधस्ततः परंवचनंतस्याक्रियतेसंवृतस्यबंधा
भावात्तत्प्रत्यनीकप्रतिपत्त्यर्थंसंवरवचनं॥यतः संवृतस्यात्मनोर्बंधोनास्तिततस्तत्प्र
नीकप्रतिपत्त्यर्थंतदनंतरंसंवरवचनंसंवरेसतिनिर्जरोपपत्तेस्तदनंतरेनिर्जरावचनं
यतः॥संवरपूर्विकानिर्जराततस्तदंतिकेनिर्जरावचनं॥अंतेप्राप्तत्वान्मोक्षस्यांतेवचनं
निर्जीर्णाष्टकर्मत्वंतेमोक्षः॥प्राप्यतइत्यंतेवचनंपुण्यपापपदार्थोपसंख्यानमितिचेन्ना
स्रवेबंधेवांतर्भावात्पुण्यपापपदार्थयोरुपसंख्यानंकर्त्तव्यं॥अन्यैरप्युक्तत्वादिति

तन्नकिं कारणं। आस्रवे बंधे वा तत्भावाद्य। तत्र आस्रवो बंधश्च पुण्यपापात्मकस्तत्त्वशब्द
स्य भाववाचित्वात् जीवादिभिस्सामानाधिकरण्यानुपपत्तिस्तत्त्वशब्दो भाववाचीति व्या
ख्यातमेतत्। अतस्तस्य जीवादिभिर्द्रव्यवचनैः सामानाधिकरण्यं नोपपद्यते। न वाव्य
तिरेकात्तद्भावसिद्धेर्न्नैवानदोषः किंकारणमव्यतिरेकात्तद्भावसिद्धेर्न्नहि द्रव्याद्व्यति
रिक्तो भावोस्ति। अतस्तद्भावेनाध्यारोप्यते। यथा ज्ञानमेवात्मेति यदि तद्भावोध्यारोप्य
ते तल्लिंगसंख्यानुवृत्तिः। प्राप्नोति तल्लिंगसंख्यानुवृत्तौ चोक्तं किमुक्तं नोपात्तव्यक्ति
वचनत्वादिति। इति तत्त्वार्थवार्तिके व्याख्यानालंकारे प्रथमेध्याये चतुर्थमाह्निकं
४। एवं संज्ञाख्यालक्षणादिभिरुद्दिष्टानां जीवादीनां संव्यवहारविशेषव्यभिचारनिवृ
त्यर्थमाह। नामस्थापनाद्रव्यभावतस्तन्न्यासः। नीयते गम्यतेऽनेनार्थो नमति वा
र्थमभिमुखीकरोतीति नाम स्थाप्यते प्रतिनिधीयते सावितिस्थापना। द्रोष्यते गम्यते ग
णैर्द्रोष्यति गमिष्यति गुणानिति वा द्रव्यं भवनं भवतीति भावः नामादीनामितरेतरयोग
लक्षणो द्वंद्वः नामस्थापनाद्रव्यभावैर्न्नामस्थापनाद्रव्यभावतः आद्यादित्वात्तस्प्रतेन्य

तोपीतिवा तत्वसिः॥ न्यसनं न्यस्यत इति वा न्यासो निक्षेप इत्यर्थः॥ तेषां न्यासस्तन्न्या
सः॥ एतेषां नामादीनां किं लक्षणमित्यत्रोच्यते॥ निमित्तांतरानपेक्षं संज्ञाकर्म नाम नि
मित्तादन्यन्निमित्तांतरं तदनपेक्ष्य क्रियमाणा संज्ञा नामेत्युच्यते॥ यथा परमैश्वर्यल
क्षणेंदनक्रियानिमित्तांतरानपेक्षं कस्यचिदिंद्र इति नाम तथा जीवनक्रियानपेक्षं श्र
द्धानक्रियानपेक्षं वा कस्यचिज्जीवः सम्यग्दर्शनमिति वा नाम सोयमित्यभिसंबंधत्वे
नान्यस्य व्यवस्थापनामात्रं स्थापना यथा परमैश्वर्यलक्षणोयः शचीपतिरिंद्रः सोय
मित्यन्यवस्तुप्रतिनिधीयमानं स्थापना भवति॥ एवं जीव इति वा सम्यग्दर्शनमिति अक्ष
निक्षेपादिषु सोयमिति व्यवस्थापनामात्रं स्थापना॥ अनागतपरिणामविशेषं प्रतिगृ
हीताभिमुख्यं द्रव्यं यद्भाविपरिणामप्राप्तिं प्रति योग्यतामादधानं तद्द्रव्यमित्युच्यते अत
द्भावं वा॥ अथवा तद्भावं वा द्रव्यमित्युच्यते॥ यथेंद्रार्थमानीतं काष्ठमिंद्रप्रतिमापर्यायप्रा
प्तिं प्रत्यभिमुखमिंद्र इत्युच्यते॥ तथा जीवसम्यग्दर्शनपर्यायप्राप्तिं प्रतिगृहीताभिमु
ख्यं द्रव्यं द्रव्यजीव द्रव्यसम्यग्दर्शनमिति चोच्यते॥ उक्तं तावत्सम्यग्दर्शनप्राप्तिं प्रति

गृहीताभिमुख्यमिति। अनन्यपरिणामस्य जीवस्यासंभवादिदं त्वयुक्तं जीवनपर्याय
प्राप्तिंप्रति गृहीताभिमुख्यमिति कुतः। सदा तत्परिणामो ह्यादिर्नस्यात्प्रागजीवः
प्राप्ति नैष दोषः। मनुष्यजीवादिविशेषापेक्षया सव्यपदेशो वेदितव्यः॥
धमागमनोआगमभेदात्तदेतद्द्रव्यं द्विविधं कुतः आगमनोआगमभेदादागमद्रव्य
जीवः। नोआगमद्रव्यजीव आगमद्रव्यसम्यग्दर्शनमिति च अनुपयुक्तः
प्यागम अनुपयुक्तः। प्राभृतज्ञायागमद्रव्यमित्युच्यते। इतरत्त्रिविधं ज्ञायक
शरीरभावितद्व्यतिरिक्तभेदादितरन्नोआगमद्रव्यं त्रैविध्यमारब्धमिति कुतः॥
शरीरभावितद्व्यतिरिक्तभेदात्। ज्ञातुर्यच्छरीरं त्रिकालगोचरं तत् ज्ञायकशरीरं जी
नसम्यग्दर्शनपरिणामप्राप्तिं प्रत्यभिमुखं द्रव्यं भावीत्युच्यते तद्व्यतिरिक्तं कर्मनो
कर्मविकल्पं वर्त्तमानतत्पर्यायोपलक्षितं द्रव्यं भावः। वर्तमानेन तेन जीवनसम्य
ग्दर्शनपर्यायेणोपलक्षितं द्रव्यं भावजीवो भावसम्यग्दर्शनमिति चोच्यते यथेन्द्रना
मकर्मोदयापादितेन्दनक्रियापर्यायपरिणत आत्मा भावेन्द्रः। स द्विविधः पूर्वव

सएषभावोहिद्विविधोवेदितव्यः।पूर्ववदागमनोआगमभेदात्तत्रात्मतत्वविषयोपयोगावि
विष्टआत्मागमजीवादितत्वविषयेणोपयोगेनाविष्टआत्मागमतोभावजीवो
भावसम्यग्दर्शनमितिचोच्यते।जीवनादिपर्यायाविष्टोन्यजीवनादिपर्यायेणावि
ष्टआत्माऽन्योनोआगमतोभावद्रव्यच्यतेनामस्थापनयोरेकत्वंसंज्ञाकर्माविशे
षादितिचेन्नादरानुग्रहाकांक्षित्वात्स्थापनायांस्यान्मतंनामस्थाप्यन्तइति
तच्चनकुतःआदरानुग्रहाकांक्षित्वात्स्थापनायांयथार्हदिन्द्रस्कन्देश्वरादिप्रति
मास्वादरानुग्रहाकांक्षित्वंजनस्यतथापरिभाषितेषुवर्त्ततेतोन्यत्वमनयोर्द्रव्यभाव
योरेकत्वमव्यतिरेकादितिचेन्न।कथंचित्संज्ञास्वालक्षण्यादिभेदसिद्धेः स्याद्वेर
कान्द्रव्यभावयोस्तर्ह्येकत्वंप्रसज्यतेकुतस्तदव्यतिरेकान्नहिद्रव्यव्यतिरेकेणाभा
वउपलभ्यतेभावव्यतिरेकेणवाद्रव्यं।अतोनयोरेकत्वमिति।तच्चनकुतःसंज्ञास्वाल
क्षण्यादिभेदात्तद्भेदसिद्धेरिहयथोःसंज्ञास्वालक्षण्यादिभूतोभेदस्तयोर्न्नानात्व
मुपलभ्यतेतथाद्रव्यभावयोरपीति।कश्चिदाहद्रव्यस्यादौवचनंन्याय्यंतत्पूर्वक

त्वान्नामादीनांसतोहिसंज्ञिनोनामादिभिर्भवितव्यमितिनैषदोषःसंव्यवहारहेतुत्वा
त्संज्ञायाः॥पूर्ववचनंसंव्यवहारहेतुत्वात्संज्ञायाः॥पूर्ववचनंक्रियतेसर्वोहिलोक
संव्यवहारः॥संज्ञापूर्वकस्तदात्मकत्वात्तदनात्मकत्वेवस्तुव्यवहारविच्छेदः नहा
त्मकत्वात्स्तुतिनिंदयोरागद्वेषप्रवृत्तिः॥सिद्धान्ततः॥स्थापनावचनमाहितनाम
कस्यस्थापनोपपत्तेः ततः परस्थापनाविधीयते कुतः॥आहितनामक
पनोपपत्तेः आहितनामकस्यसोपमितिकिंचिद्धातिनिधीयतेद्रव्यभावयोः पूर्व
परन्यासः पूर्वोत्तरकालवृत्तित्वाद्द्रव्यभावयोः॥पूर्वापरन्यासः क्रियतेकिं
रणांपूर्वोत्तरकालवृत्तित्वात्पूर्वकालविषयंहिद्रव्यंउत्तरकालभावीभावइति
त्वप्रत्यासत्तिप्रकर्षाप्रकर्षभेदाद्वानुक्रमः॥अथवानत्वप्रत्यासत्तेः प्रकर्षाप्रक
र्षभेदात्तेषांनामादीनांनिर्देशः क्रमोवेदितव्यः॥तत्त्वभावः प्रधानंतद्यानील
याणितत्रप्रत्यासत्तेस्तत्समीपेद्रव्यंप्रयुक्तंतद्भावापत्तेस्ततः पूर्वंस्थापनीयाद्वा
नमंतद्भावेपितद्भावप्रतिप्रधानहेतुत्वात्ततः॥पूर्वंनामोपादानंभावंप्रतिविप्रकृ

ष्टत्वान्नामादिचतुष्टयाभावोविरोधात्।अत्राहनामादिचतुष्टयस्याभावः।कुतोविरो
धादेकस्यशब्दा: र्थस्यनामादिचतुष्टयंविरुध्यतेयथानामैकंनामैवनस्थापना।स्थ
थनामस्थापनाउच्यतेननामेदंनामस्थापनातर्हि।नचेयंस्थापनानामेदंमेत्तोनामार्छ
रकोविरोधात्स्थापनातथैकस्यजीवादेरर्थस्यसम्यग्दर्शनादेर्वाविरोधान्नामाद्यभाव
इति।नवासर्वेषांसंव्यवहारंप्रत्यविरोधान्नवाएषदोषः।किंकारणंसर्वेषांसंव्यवहा
रंप्रत्यविरोधात्लोकेहिसर्वैर्नामादिभिर्दृष्टः संव्यवहारः इन्द्रोदेवदत्तइतिनाम।प्रति
मादिषुचेन्द्रइतिस्थापना।इन्द्रार्थंचकाष्ठद्रव्येइन्द्रसंव्यवहारः।इन्द्रमानीनइतिवचना
दनागतपरिणामेवार्थेद्रव्यसंव्यवहारोलोकेदृष्टः द्रव्यमयंमाणवकः।आचार्यः
श्रेष्ठीवैयाकरणोराजावाभविष्यतीतिव्यवहारदर्शनाच्छचीपतौचभावेइन्द्रइतिनच
विरोधः।किंच।अभिहितानवबोधात्।यथानामैकंनामैवेष्यतेनस्थापनेति।आचक्षा
णेनत्वयाअभिहितानवबोधः।प्रकटीक्रियतेयतोनैवमाचक्ष्महेनामैवस्थापनेति
किंत्वेकस्यार्थस्यनामस्थापनाद्रव्यभावैर्न्यासइत्याचक्ष्महे।अनेकान्तात्वनैतदेव-

नेनप्रतिजानीमहेनामैवस्थापनाभवतीतिनवास्थापनावानामभवतिनेतिचा क
थंमनुष्यब्राह्मणावद्यथाब्राह्मणः। स्यान्मनुष्यः ब्राह्मणस्यमनुष्यजात्यात्मक
त्मनष्यस्तुब्राह्मणः स्यान्नवामनुष्यस्यब्राह्मणजात्यादिपर्यायात्मकत्वादर्शना
त्तथास्थापनास्यान्नामान्तनाम्नः। स्थापनानुपपत्तेर्नामतुस्थापनास्यान्नवाभ
यथादर्शनात्तथाद्रव्यंस्याद्भावः भावद्रव्यार्थादेशान्नभावपर्यायार्थादेशा
त्तुद्रव्यंस्यान्नवानुभयथादर्शनात्किंच ।अतएवासिद्धेर्यतएवनामादिचतुष्टयस्यवि
रोधंभवानाचष्टे।अतएवनाभावः ।कथमिहयोयंसहानवस्थानलक्षणोविरोधोव
ध्यघातकवच्चसतामर्थानांभवतिनासतांकाकोलूकवच्छायातपवत्।नकाकदंत
खरविषाणयोविरोधोसत्वात्किंचनामाद्यात्मकवानात्मकत्वेचविरोधस्याविरोधकत्व
वः ।यदिनामाद्यात्मकः। नासौविरोधको
दीनांविरोधकः ।नामाद्यात्मापिविरोधकःस्यात्ततोनामादीनामभावद्विरोधएवन॰
मोनामादिचतुष्टयस्यविरोधः ।सनामाद्यात्मकोवास्यान्नवानुभयथाचविरोधाभा

स्यादिंधननामाद्यात्मकः ॥ एवमपिनामादीनांनासौविरोधकोर्थांतरत्वादर्थांतरभावेपि
विरोधकत्वमिष्यतेसर्वेषांपदार्थानांपरस्परतोनित्यंविरोधः स्यान्नचासौवर्त्ततेतश्च
नोविरोधाभावः ॥ तद्गुणाद्भावस्यप्रामाण्यमितिचेन्नेतरव्यवहारनिवृत्तेः स्यादेतत्ता
द्गुणाद्भावएवप्रमाणंननामादिः ॥ सजीवनादिर्गुणोयस्यसतद्गुणस्तस्यभावस्तद्गुणं
ऽतोभावएवप्रमाणंननामादिस्तद्गुणाभावादितितन्नकिंकारणमितरव्यवहारनि
वृत्तेः ॥ एवंहिसतिनामाद्याश्रयोव्यवहारोनिवर्त्तेतसचास्तीत्यतोनभावस्यैवप्रामाण्य
मुपचारादितिचेन्नतद्गुणाभावात्स्यादेतद्यद्यपिभावस्यैवप्रमाण्यंतथापिनामादिव्यव
हारोननिवर्त्ततेकुतउपचारान्माणवकेसिंहशब्दव्यवहारवदितितन्नकिंकारणंतद्गु
णाभावाद्युज्यतेमाणवकेसिंहशब्दव्यवहारः ॥ क्रौर्यशौर्यादिगुणैकदेशयोगादिह
तुनामादिषुजीवनादिगुणैकदेशोनकश्चिदस्तीत्युपचाराभावाद्व्यवहारनिवृत्ति
स्यादेवमुख्यसंप्रत्ययप्रसंगाच्चयद्युपचारान्नामादिव्यवहारः स्याद्गौणमुख्ययोर्मुख्ये
संप्रत्ययइतिमुख्यस्यैवसंप्रत्ययः स्यान्ननामादीनांयतस्त्वर्थप्रकरणादिविशेषलिंगा

राजवा॰
४०

भावेसर्वत्रसंप्रत्ययःअविशिष्टःकृतसंगतेर्भवत्यतोननामादिषूपचाराद्व्यवहारः कृ-
त्रिमयोःकृत्रिमेसंप्रत्ययोभवतीतिलोकेतद्यथागोपालकमानयकटजकमानये
तियस्यैषासंज्ञाभवतिसज्ञानीयतेनयोगाःपालयतियोवाकटेजातः एवमिहापि
यस्यैषाजीवादिरितिसंज्ञाकृतातस्यैवसंप्रत्ययः स्यान्नेतरेषामितितन्नाकिंकारणमु
भयगतिदर्शनात् लोकेह्यर्थात्प्रकरणाद्वाकृत्रिमेसंप्रत्ययः स्याद्यथोवाअस्यैवंसंज्ञ
केनभवति अकृत्वात्तत्रभवतीदमेवंसंज्ञकेनकर्त्तव्यमित्यतश्चार्थात्प्रकरणाद्वा
केसंप्रत्ययोभवति अंगहिभवान्ग्राम्यपांशुलंपुरपादकमप्रकरणज्ञमागतंगवी
पालकमानयकटेकजमानयेत्तिउभयगतिरत्रस्यभविष्यतिकिंच अनेकांता
कांतः कृत्रिममेवेदंनकृत्रिममेवेतिकिंतर्ह्यनेकांतोनामसामान्यापेक्षयास्यादकृत्रि
मंविशेषापेक्षयाकृत्रिमं एवंस्थापनादयश्चेति ततः किंकृत्रिमाकृत्रिमयोःकृत्रि
मेसंप्रत्ययइत्यस्याभावः किंच नयद्वयविषयत्वात् द्वौनयौद्रव्यार्थिकः पर्यायार्थि
कः पर्यायार्थिकश्चतयोर्विषयोनामादिन्यासस्त-

सामान्यात्मकत्वात्त्याश्चात्यस्यभावः॥परिणतिप्रधानत्वात्ततः॥ किंगौणमुख्ययोर्मुख्येसं
प्रत्ययः॥कृत्रिमाकृत्रिमयोःकृत्रिमेसंप्रत्ययइतिचनभवतिप्रतिविषयंनयभेदात्द्रव्यार्थि
पर्यायार्थिकांतर्भावान्नामादीनांनययोश्चनयशब्दाभिधेयत्वात्पौनरुक्त्यप्रसंगः॥यतो
नामस्थापनाद्रव्याणिद्रव्यार्थिकस्याभावः॥पर्यायार्थिकस्येत्युक्तंततोनामादीनांनयां
तर्भावान्नयविकल्पानांचवक्ष्यमाणत्वात्पौनरुक्त्यंप्राप्नोतिनवाविनेयमतिभेदाधीनत्वा
त्द्व्यादिनयविकल्पनिरूपणस्यनवाएषदोषः किंकारणंविनेयमतिभेदाधीनत्वात्द्व्यादि
नयविकल्पनिरूपणस्ययेसुमेधसोविनेयास्तेषांद्वाभ्यामेवद्रव्यार्थिकपर्यायार्थिका
भ्यांसर्वनयवक्तव्यार्थप्रतिपत्तिस्तदंतर्भावाद्येत्वतोमंदमेधसस्तेषांत्र्यादिनयविकल्प
निरूपणामतोविशेषोपपत्तेर्नामादीनामपुनरुक्तत्वं॥नशब्दार्थग्रहणात्प्रकृतत्वात्सम्य
ग्दर्शनादित्रयस्यप्रकृतत्वादेवनामादिन्यासाभिसंबंधस्तच्छब्दस्याग्रहणमनर्थकं॥प्र
त्यासन्नत्वाज्जीवादिषुप्रसंगइतिचेन्नसम्यग्दर्शनविषयत्वात्॥स्यादेतत्तच्छब्दाद्दि
नाप्रत्यासन्नत्वाज्जीवादयस्तेषामेवन्यासाभिसंबंधोभवेन्नसम्यग्दर्शनादीनांकुतः

राजवा·
४१

अनंतरस्यविधिर्वाभवतिप्रतिषेधोवेतितन्नकिंकारणंसम्यग्दर्शनंविषयत्वात्सम्यग्दर्श
नादित्रयस्यप्राधान्येनोपदेशस्तदर्थत्वाछास्त्रारंभस्यसम्यग्दर्शनादिविषयत्वेनतुजी
वादीनांगुणभूतत्वेनोपदेशः॥ अतःस्तत्स्वव्यावृत्तेपिसम्यग्दर्शनादित्रयस्यप्राधान्यान्ना
मादिन्यासेनाभिसंबंधोयुक्तः विशेषातिदिष्टत्वाच्च॥ जीवादयसम्यग्दर्शनविषयत्वेन
विशेषेणातिदिष्टाः प्रकृतंसम्यग्दर्शनादित्रयंनबाधिष्यंते॥ विशेषातिदिष्टाः प्रकृ
तंनबाधंतइति॥ सर्वभावाधिगमार्थंतुसर्वेषांभावानांजीवादीनामप्रधानानांप्रधानानां
चसम्यग्दर्शनादीनामधिगमार्थंतर्हितत्त्वग्रहणमितरथाहिप्रधानाभिसंबंधएवः
त एवमजीवादिषुज्ञानचारित्रयोश्चनामादिन्यासविकल्पोयोजयितव्यः॥ अधिकृता
नामेचसम्यग्दर्शनादिजीवादीनांपदार्थानामभिधानाभिधेयसंव्यवहाराव्यभिचाराय
नामादिभिर्निक्षिप्तानांतत्त्वाधिगमहेतुर्वक्तव्यइत्यतआह॥ प्रमाणनयैरधिगमः॥१०
प्रमाणनयाः तैरधिगमोभवतिसम्यग्दर्शनादीनांजीवादीनांप्रमाणनयावक्ष्यमाणल
क्षणाः ननुचनयशब्दस्याल्पाच्त्वात्पूर्वनिपातेनभवितव्यंअभ्यर्हितत्वात्प्रमाणश

शास्यपूर्वनिपातोवेदितव्यः कथमभ्यर्हितत्वंप्रमाणप्रकाशितेष्वर्थेषुनयप्रवृत्तेर्व्यव
हारहेतुत्वादभ्यर्हं॥ यतः प्रमाणप्रकाशितेष्वर्थेषुनयप्रवृत्तिर्व्यवहारहेतुर्भवतिनान्ये
ष्वतोस्याभ्यर्हितत्वंसमुदायावयवविषयत्वाद्वाऽथवासमुदायावयवत्वाद्वाऽथवासमु
दायविषयंप्रमाणमवयवविषयानयाइतिप्रमाणस्याभ्यर्हितत्वं॥ तथाचोक्तं॥ सकलादे
शः प्रमाणाधीनोविकलादेशोनयाधीनइतिअधिगमहेतुर्द्विविधः स्वाधिगमहेतुः
पराधिगमहेतुश्चस्वाधिगमहेतुर्ज्ञानात्मकः प्रमाणनयविकल्पः॥ पराधिगमहेतु
र्वचनात्मकस्तेनश्रुताख्येनप्रमाणेनस्याद्वादनयसंस्कृतेनप्रतिपर्यायसप्तभंगीमतो
जीवादयः पदार्थाअधिगमयितव्याः॥ अत्राहकेयंसप्तभंगीत्यत्रोच्यते॥ प्रश्नवशा
देकस्मिन्वस्तुन्यविरोधेनविधिप्रतिषेधविकल्पनासप्तभंगी॥ एकस्मिन्वस्तुन्यविरोधे
नप्रश्नवशाद्दृष्टेनइष्टेनचप्रमाणेनाविरुद्धाविधिप्रतिषेधकल्पनासप्तभंगीविज्ञेयात
द्यथा॥ स्यात्घटः स्यादघटः स्यात्घटश्चाघटश्चस्यादवक्तव्यः॥ स्याद्घटश्चावक्तव्यश्च
स्यात्घटश्चावक्तव्यश्चेत्यर्पितानर्पितनयसिद्धेनिरूपयितव्यात्रस्वात्मनास्याद्घ

राजवा॰
४२

टः॥परमात्मनास्याद् घटः॥कोवाघटस्यस्वात्माकोवापरात्मा॥घटत्वुद्ध्यभिधानप्रवृत्तिलिं
गः॥स्वात्मायत्रतयोरप्रवृत्तिः॥सपरात्मापटादिः स्वपरात्मोपादानापोहनव्यवस्थापा
द्यंहिवस्तुनोवस्तुत्वंयदिस्वस्मिन्पटाद्यात्मव्यावृत्तिविपरिणतिर्नस्यात्सर्वात्मनाघटइ
तिव्यपदिश्येत अथपरात्मनाव्यावृत्तावपिस्वा॰
णावद्वस्तुवस्याद्थवानामस्थापनाद्रव्यभावेषुयोविवक्षितः सस्वात्मा इतरः परा
त्मातत्रविवक्षितात्मनाघटोनेतरात्मनायदीतरात्मनापिघटः स्याद्विवक्षिता
घटः॥नामादिव्यवहारोच्छेदः॥स्यादथवातत्रविवक्षितघटशब्दवाच्यसादृश्य
संबंधिषुकस्मिंश्चिद्घटविशेषपरिगृहीतेप्रतिनियतोयः॥संस्थानादिः सःस्वात्माइ
तरः॥परात्मातत्रप्रतिनियतेनरूपेणघटोनेतरेणयदीतरात्मकः स्यादेकघटमात्र
प्रसंगः सामान्याश्रयोव्यवहारोविनश्येदथवातस्मिन्नेवघटविशेषेकालांतरावस्था
यिनिपूर्वोत्तरकुशूलांतकपालाद्यवस्थाकलापः॥परात्मातदंतरालवर्तीस्वात्मास्ते
नैवघटः॥तत्कर्मगुणव्यपदेशदर्शनान्नेतरात्मनायदिहिकुशूलांतकपालाद्यात्म

नापि घटः। स्यादुपरतावस्थायामपि तदुपलब्धिर्भवेदुत्पत्तिविनाशार्थं पुरुषार्थं पुरुषप्रय
त्नफलाभावश्चानुषज्येत अर्थान्तरालवर्तिपर्यायात्मनाप्यघटः। स्याद्घटकृत्येक
ले नोपलभ्येत। अथवा प्रतिक्षणं द्रव्यपरिणामोपचयापचयभेदादर्थान्तरोपपत्तेः
ऋजुसूत्रनयापेक्षया प्रत्युत्पन्नघटस्वभावः। स्वात्मा घटपर्याय एवातीतोनागतश्च
परात्मा तेन प्रत्युत्पन्नस्वभावेन सत्ता स घटो नेतरेणासत्ता। तथोपलब्ध्यनुपलब्धिस
द्भावादितरथा हि प्रत्युत्पन्नवदतीतानागतात्मनापि घटत्वे एकसमयमात्रं सर्वं स्याद् अती
तानागतवत्प्रत्युत्पन्नाभावे घटाश्रयव्यवहाराभावश्चापद्येत विनष्टानुत्पन्नघटव्य
वहाराभाववदथवा तस्मिन्प्रत्युत्पन्नविषये रूपादिसमुदये परस्परोपकारवर्तिनि पृ
थुबुध्नाद्याकारः। स्वात्मा इतरः। परात्मा तेन पृथुबुध्नाद्याकारेण स घटो नेतरेण
घटव्यवहारस्य तद्भावे भावात्तदभावे भावाद्यदि हि पृथुबुध्नाद्यात्मनापि घटो न स्यान्न
एव न स्यादथेतरात्मनापि घटः स्यात्तदाकारशून्येपि घटव्यवहारः प्राप्नुयादथवा
रूपादिसंनिवेशविशेषः संस्थानं तत्र चक्षुषा घटो गृह्यत इत्यस्मिन्व्यवहारे रूपमु

खेनघटोगृह्यतइतिनिरूपंस्यात्मारसादिः॥ परात्मासघटोरूपेणास्तिनेतरेणारसादि
नाग्रहीतिनियतकरणग्राह्यत्वात्‌यथाहिचक्षुषाघटोगृह्यतइत्यत्ररसादिरपिघटइतिगृ
ह्येतसर्वेषांरूपत्वप्रसंगस्ततश्चकरणांतरकल्पनानर्थिकायदिवारसादिवद्रूपमपि
घटइतिनगृह्येतचक्षुर्विषयतास्यनस्यात्॥ अथवाशब्दभेदेध्रुवोर्थभेदइतिघटकु
टादिशब्दानामप्यर्थभेदः॥ घटनाद्घटः॥ कौटिल्यात्कुटइतितत्क्रियापरिणतिक्षण
एवतस्यशब्दस्यवृत्तिर्युक्तातत्रघटनक्रियाविषयकर्तृभावः॥ स्वात्माइतरः परात्मा
तत्राद्येनघटोनेतरेणतथार्थसमभिरोहणाद्यदिचघटनक्रियापरिणतिक्षणेना
प्यघटः स्यात्तद्व्यवहारनिवृत्तिः॥ स्याद्यदिचेतरअपेक्षयापिघटः॥ स्यात्पटादिष्व
पितत्क्रियाविरहितेषुतच्छब्दवृत्तिः॥ स्यादेकशब्दवाच्यत्वेवावस्तुनः॥ अथवाघट
शब्दप्रयोगानंतरमुत्पद्यमानउपयोगाकारः॥ स्वात्मास्हेयत्वादंतरंगत्वाच्चवा
ह्याकारः परमात्मातदभावेपिघटव्यवहारदर्शनात्तत्रघटउपयोगाकारेणास्तिना
न्येनयदिहिउपयोगाकारात्मनाप्यघटः॥ स्याद्वक्तृश्रोतृहेतुफलभूतोपयोगस्या

गभावात्तदधीनोव्यवहारोविनाशमाप्नुयादितरोऽसन्निहितोपियदिघटः स्यात्तदा
नामपिस्याद्घटत्वप्रसंगः। अथवाचैतन्यशक्तेर्द्वावाकारौज्ञानाकारोज्ञेयाकारश्चानु
पयुक्तप्रतिविंबाकारादर्शतलवत्ज्ञानाकारः प्रतिविंबाकारपरिणतादर्शतलज्ञेया
कारस्तत्रज्ञेयाकारः। स्वात्मातन्मूलत्वाद्घटव्यवहारस्यज्ञानाकारः परात्मासर्वसाधा
रणत्वात्सघटोज्ञेयाकारेणास्तिनान्यथायदिज्ञेयाकारेणाप्यघटः। स्यात्तदाश्रयेपि
कर्त्तव्यतानिरासस्यादथहिज्ञानाकारेणापिघटः। स्यात्पटादिज्ञानकालेपितत्संनि
धानाद्घटव्यवहारवृत्तिः। प्रसज्येत उक्तैः प्रकारैरर्पितंघटत्वमघटत्वंचपरस्परतो
नभिन्नं। यदिभिद्येतसामानाधिकरण्येनतद्बुद्ध्यभिधानप्रवृत्तिर्नस्याद्घटपटवत्तश्च
तरेतरेविनाभावेउभयोरप्यभावात्तदाश्रयव्यवहारपन्हवः। कृतः स्यादतस्तदुभया
त्मकौसौक्रमेणतच्छब्दवाच्यतामास्कंदनस्याद्घटश्चाघटश्चेत्युच्यते। यदितदुभया
त्मकंवस्तुघटइत्येवोच्यतइतरात्मासंग्रहादसत्वमेवस्यात्। अथाघटएवेत्युच्यतेघ
टात्मानुपादानादसत्तमेवस्यात् नवस्तुतावदेवेति नचान्यः। शब्दस्तदुभयात्मावस्थ

नत्वाभिधायी विद्यते। अतोसौ घटोवचनगोचरातीतत्वात्स्यादवक्तव्य इत्युच्यते। घटा
नाप्यौगपद्येनउक्तावक्तव्यस्वरूपनिरूपणेन चादिश्यमानः स एवार्थ इति स्याद
द्व्यश्चावक्तव्यश्च निरूपिता घटभंगसंगेनप्रदर्शितावक्तव्यक्रमेनाच्चापदेश्यः। स
एवार्थ इति स्याद घटश्चावक्तव्यश्च। तदुभयाभिधानक्रमाक्रमाप्यौगावशादौचि
र्भूतनद्यपदेशः। स एवार्थः स्याद्घटश्चाघटश्चावक्तव्यश्च भवति। एवमियंसप्तभं
गीजीवादिषुसम्यग्दर्शनादिषु च द्रव्यार्थिकपर्यायार्थिकनययोर्गुणभेदाद्योज
यितव्या तत्रद्रव्यार्थिकैकांत। अनिश्चिततत्वः। अनंतदेवेत्यवधारणादुन्मत्तव
त्पर्यायार्थिकांतोपि तथैवानइत्थंतदेवेत्यवधारणादुन्मत्तवत्पाह्लादोनिश्चिता
र्थः। अपेक्षितयाथात्म्यवस्तुवादित्वादनुन्मत्तवचनवद वक्तव्यैकांतोप्यस
द्वादः। स्ववचनविरोधात्सदामौनव्रतिकवत्। अन्यार्थः स्यादवक्तव्यवादः। व
क्तव्यावक्तव्यवादित्वात्स्यैतरवचनविशेषस्त्ववादनेकांते तदभावादव्याप्ति
रिति चेन्न। तत्रापि तदुपपत्तेः। स्यादेतदनेकांतेसाविधिप्रतिषेधविकल्पना

नास्तियदिस्याद्यदानेकांतोनभवतितदाएकांतदोषानुषंगोभवेदनवस्थाप्रसंगश्च
ततस्तत्रानेकांतत्वमेवेतिसासप्तभंगीप्रासिमतीनभवतीतितन्नकिंकारणं। तत्रापिन
दुपपत्तेः स्यादेकांतः। स्यादुभयः स्यादवक्तव्यः स्यादेकांतश्चावक्तव्यश्चस्यादनेकां
तश्चावक्तव्यश्च। स्यादेकांतश्चानेकांतश्चावक्तव्यश्चेतितत्कथमितिचेदुच्यते। प्र
माणनयार्पणाद्भेदादेकांतोद्विविधः सम्यगेकांतोमिथ्यैकांतइति। अनेकांतोद्वि
विधः सम्यगनेकांतोमिथ्यानेकांतइतितत्रसम्यगेकांतोहेतुविशेषसामर्थ्यापेक्षः
प्रमाणप्ररूपितार्थैकदेशादेशः। एकात्मावधारणेनान्याशेषनिराकरणप्रवणप्र
णिधिर्मिथ्यैकांतः। एकत्रसप्रतिपक्षानेकधर्मस्वरूपनिरूपणः। युक्त्यागमाभ्या
मविरुद्धः सम्यगनेकांतस्तदतत्स्वभाववस्तुशून्यंपरिकल्पितानेकात्मकंकेवलंवाग्वि
ज्ञानंमिथ्यानेकांतः। तत्रसम्यगेकांतोनयइत्युच्यतेसम्यगनेकांतः। प्रमाणंनयार्पणा
देकांतोभवतिएकनिश्चयप्रवणत्वात्प्रमाणार्पणादनेकांतोभवति। अनेकनिश्च
याधिकरणत्वाद्यद्यनेकांतःअनेकांतएवस्यान्नैकांतोभवेदेकांताभावात्तत्समूहात्म

कस्य न स्यात्यभावः स्यात् शाखाद्यभावे वृक्षाद्यभाववत्तदविनाभाविविशेषनिराकरणादा
त्मलोपे सर्वलोपः स्यादेवमुत्तरेष्वपि भंगा योजयितव्याः छलमात्रमनेकांत इति चेन्न छ
ललक्षणाभावात् स्यान्मतं तदेवास्ति तदेव नास्ति तदेव नित्यं तदेवानित्यमिति चानेकां
तप्ररूपणं छलमात्रमिति तन्न कुतः छललक्षणाभावात् छलस्य हि लक्षणमुक्तं व
चनविघातोऽर्थविकल्पोपपत्त्या छलमिति यथा नवकंवलोऽयं इत्यविशेषाभिहितेऽर्थे
वक्तुरभिप्रायादर्थांतरकल्पनं नवास्य कंवला न चत्वार इति नवो वास्य कंव-
इति नवकंवलः न तथानेकांतवादः यत उभयगुणप्रधानभावापादितार्पितव्य
रसिद्धिविशेषवललाभप्रापितयुक्तिपुष्कलार्थोऽनेकांतवादः संशयहेतुरिति
विशेषलक्षणोपलब्धेः स्यान्मतं संशयहेतुरनेकांतवादः कथमेकत्राधारे विरो
ऽनेकस्यासंभवादागमश्चैवं प्रवृत्तः एकं द्रव्यमनंतपर्यायमिति किमागमप्रा
स्ति वा नास्ति वा नित्यं वानित्यं चेति तत्त्वन कस्माद्विशेषलक्षणोपलब्धेरिह सामान्यप्र
त्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः तद्यथा स्थाणुपुरुषोचितदेशेनाति

प्रकाशांधकारकलुषायांवेलायामूर्ध्वमात्रंसारूप्यंपश्यतोवक्रकोटरविशेषयोनिलय
नादीन्स्थाणुगतान्विशेषान्वस्त्रसंसयनशिरकंडूयनशिखाबंधनादीन्पुरुषगतांश्च
नुपलभमानस्यतेषांचस्मरतः संशयउत्पद्यते॥ नचतद्वदनेकांतवादेविशेषानुपल
क्षियेतः स्वपराद्यादेशवसीकृताविशेषाउक्ताव्यक्ताप्रत्यर्थमुपलभ्यते॥ ततोविशेषा
पलब्धेर्नसंशयहेतुरितियदगादिष्मतत्सम्यग्निरवैक्ष्म एवमपिसंशयः कथमिदंनाव
दित्तिप्रष्टव्यः॥ एषामस्तित्वादीनांधर्माणांसाधनहेतुसंनिधानेसत्तिभवितव्यंसंशयेने
तिउच्यतेविरोधाभावशंशयाभावः॥ यदिविरोधोभविष्यशंशयो॥ जेनिष्यतनचविरो
धोनयोपनीतानांधर्माणामस्तिकुतः॥ स्वधर्माणांभेदादविरोधः पितापुत्रादिसंबंधव
दुक्ताद्धर्माणांभेदादेकत्राविरोधेनावरोधोधर्माणांपितापुत्रादिसंबंधवत्तद्यथैकस्य
देवदत्तस्यजातिकुलरूपसंज्ञाव्यपदेशविशिष्टस्यपितापुत्रोभ्राताभागिनेयइत्येवंप्र
काराः॥ संबंधाजन्यजनकत्वादिशक्त्याधर्माणांभेदान्नविरुध्यंतेनह्येकापेक्षयापित्र
ति॥ शेषापेक्षयापिपिताभवतिशेषापेक्षयावापुत्रादिव्यपदेशार्हइत्युक्तापेक्षयापि

तापुत्रादिकर्तृसंबंधवक्तृत्वंदेवदत्तस्यैकत्वेनविरुध्यते। तद्वदस्ति
त्वादयोनयोंतिविरोधमेकत्रसपक्षासपक्षापेक्षोपलक्षितसत्वादिभेदोपचितैकधर्मव
त्वा अथवासपक्षासपक्षापेक्षयाउपलक्षितानांसत्वादीनांभेदानांमाधारेणपक्षधर्म
णोकेनकल्पसर्वद्रव्यनिरपेक्षयोर्हेकत्रवादिप्रतिवादिप्रयोगापेक्षयासंशयउक्तः
इतरथाहिपक्षधर्मोपिसंशयः कल्पेत। एकस्यहेतोः साधकदूषकत्वाविसंवादवद्वा
अर्थैवमुपपत्त्या। विरोधेप्रतिपादितेपिमिथ्यादर्शनाभिनिवेशान्तत्वंनप्रतिपद्यतेयस्तंप्र
तिसार्वलौकिकहेतुवादमाश्रित्योच्यते स्वपक्षमर्यादानतिक्रमेणान्यापधर्ममनुपाल
यतावादिनाभिप्रेतप्रतिष्ठार्थसिद्धिमाशंसताहेतुवचनपदेणसर्वाभिलषितार्थसिद्धिः
प्रतिज्ञामात्रादेवमाप्नापदिति। अतिप्रसंगदोषनिवृत्तयेयोहेतुरुपदिश्यतेससाधको
दूषकश्चस्वपक्षंसाधयतिपरपक्षंदूषयतिः॥ ननुसाधनदूषणार्थौहेतोरन्योभवतः
नचानन्यत्वमस्तीतिकृत्वापिनसाधकस्तेनदूषकः येनवादूषकस्तेनसाधकः॥ ननुतयोः
संकरोविरोधोवा। एवंसर्वार्थेषुविरोधदोषमन्तदीति विसर्ज्यस्यनेकान्तप्रक्रियेति। सर्व

प्रवाद्यविप्रतिपत्तेश्च नात्र प्रतिवादिनो विसंवदंते एकमनेकात्मकमिति केचित्तावदाहुः
सत्त्वरजस्तमसां साम्यावस्था प्रधानमिति तेषां प्रसादलाघवशोषतापावरणसाधना
दि भिन्नस्वभावानां प्रधानात्मनां मिथश्च न विरोधः ॥ अथमन्येप्याः ॥ न प्रधानं नामैकं
गुणेभ्यो व्यतिरक्तमस्ति किंतु त एव गुणाः ॥ साम्यमापन्नाः ॥ प्रधानाख्यां लभंत इति
यद्येवं म्प्रधानस्यात्स्यादेतत्तेषां समुदायः ॥ प्रधानमेकमिति अत एवाविरोधः
सिद्धः गुणानामवयवानां समुदायस्य च ॥ अपरे मन्यंते ॥ अनुवृत्तिवुद्ध्यभिधानलक्ष
णः ॥ सामान्यविशेष इति तेषां च सामान्यमेव विशेषः ॥ सामान्यविशेष इति एकस्यात्म
नः उभयात्मकं न विरुध्यते ॥ अपरे आहुः ॥ वर्णादिपरमाणुसमुदायो रूपपरमाणु रि
ति तेषां कर्कशत्वादिभिन्नलक्षणानां रूपात्मनां मिथश्च न विरोधः ॥ अथमतं न प
रमाणुर्नामैकोस्ति वाह्यः ॥ किंतु विज्ञानमेव तदाकारपरिणतं परमाणुव्यपदेशमर्ह
मित्युच्यते ॥ अत्रापि ग्राहकविषयाभाससंवित्तिशक्तित्रयाकाराधिकरणस्यैकस्या
भ्युपगमान्न विरोधः ॥ किंच ॥ सर्वेषामेव तेषां पूर्वोत्तरकालभाव्यवस्थाविशेषापरिणा

स्वकार्यकारणशक्तिसमन्वयोनविरोधस्यास्पदमित्यविरोधःसिद्धः॥एवंप्र
शानयैरधिगतानांजीवादीनांपुनरप्यधिगमोपायांतरप्रदर्शनार्थमाह॥निर्देश
त्वसाधनाधिकरणस्थितिविधानतः॥केपुनरिमेनिर्देशादयः
मित्वमाधिपत्यंसाधनंकारणं॥अधिकरणंप्रतिष्ठास्थितिः॥कालकृ
विधानंप्रकारः॥अधिगमइत्यनुवर्त्तते॥एतैरेतेभ्योवाधिगमः॥पूर्ववत्तासिः
गमः॥जीवादीनांसम्यग्दर्शनादीनांच॥सत्तर्हितथानिर्देशः॥ कर्त्त
ः॥अर्थवशाद्विभक्तिपरिणामोभवति॥तद्यथा॥उच्चानिदेवदत्तस्यगृहाण्यामंत्र
स्वेनंदेवदत्तमितिगम्यते॥अथकिमर्थमादौनिर्देशउच्यते॥अवच्छनार्थ
ल्पप्रतिपत्तेरादौनिर्देवचनंस्वरूपेणावच्छिन्नस्यार्थस्यस्वामित्वादिकाधर्मवि
निपत्तिर्भवति॥अतोऽस्यनिर्देशस्यादौवचनंक्रियते इतरेषांप्रश्नवशात्क्रमः॥इ
त्वादीनांप्रश्नवशात्क्रमोवेदितव्यः॥यद्येवंसएवतावदुच्यते॥कोजीवइ
तउपशमिकादिभावपर्यायोजीवः॥पर्यायादेशाद्वक्ष्यमाणउपशमिकादिभाव॰

पर्यायोजीवइत्युच्यतेपर्यायादेशात् द्रव्यार्थादेशान्नामादिर्जीवइत्युच्यतेतदुभय
संग्रहः॥प्रमाणेनतस्योभयस्यसंग्रहः॥प्रमाणनिर्देशइत्युच्यतेकस्यजीवः॥तत्परिणा
मस्यभेदादग्नेरौष्ण्यस्यपरिणामोयस्यसोयंतत्परिणामस्तस्यासौव्यपदिश्यतेकुतः
कथंचिद्भेदात्परिणामपरिणामिनोर्भेदकल्पनासद्भावात् अग्नेरौष्ण्यवत्तद्यथा उ
ष्णात्मकस्याग्नेर्दहनपचनस्वेदनादिक्रियासामर्थ्यमौष्ण्यंभेदेनोच्यते॥व्यवहारनय
वशात्सर्वेषां॥जीवादीनांसर्वेषांपदार्थानांव्यवहारनयवशात्जीवः॥स्वामीकिंसाध
नोजीवः॥पारिणामिकभावसाधनोनिश्चयतः॥योसौजीवात्मापारिणामिकस्त
त्साधनोजीवः॥निश्चयनयेनतेनह्यसौवात्मानंसर्वकालंलभतइति॥उपशमिका
दिभावसाधनश्चव्यवहारतः॥व्यवहारनयवशादौपशमिकादिभावसाधनश्चेति
व्यपदिश्यतेचशब्देनछुक्रशोणिताहारादिसाधनश्चकिमधिकरणोजीवः॥स्व
प्रदेशाधिकरणोनिश्चयतः॥योसौस्वप्रदेशअसंख्यातस्वरूपः कर्मक्तिनशरी
रपरिमाणानुविधायित्वेपि अपरिहाणमहीनाधिकभावस्तदधिकरणोजीवः स्वा

त्मप्रतिष्ठाकाशवद्व्यवहारतः॥शरीराधिष्ठानः कर्मोपात्तंशरीरमेतत्त्वाधिकरणा॰
मात्माव्यवहारनयवशादधितिष्ठतीतिउच्यते॥किंस्थितिकोजीवः॥स्थितिस्तस्यद्र
व्यपर्यायापेक्षानाद्यवसानासमयादिकाच॥तस्यजीवस्यास्थितिः॥द्रव्यपर्यायापेक्षा
द्विधाकल्प्यते॥द्रव्यापेक्षाऽनाद्यवसानाजीवद्रव्यंहिचैतन्यजी
वमयप्रदेशादिसामान्यादेशान्नप्रच्यवते॥सर्वकालमितिपर्यायस्तुअस्य
तिनदपेक्षासमयादिकाकल्प्यतेकिमस्यविधानंनारकादिसंख्येयासंख्येयानंत
प्रकारोजीवः नारकादयः संख्येयाः॥असंख्येयाअनंतप्रकाराभिद्यंतेजीवस्यान
र्थांतरस्यागमाविरोधान्निर्देशादिवचनंतेनैवप्रकारेणागमाविरोधेनेतरेषामजी
वादीनांनिर्देशादयोवक्तव्यास्तद्यथा॥अजीवस्तावद्दशप्राणपर्यायरहितोनामाऽ
दिश्याजीवात्मेवाजीवस्यस्वामीजीवोवाभोक्तृत्वात्॥पुद्गलानामणुत्वादिसाधनं
भेदादितन्निमित्तंवाकालादिधर्माधर्मकालाकाशानांगतिस्थितिवर्तनावगाहहे
तुतापारिणामिकीअगुरुलघुगुणानुग्रहीतास्वात्मभूतसत्तासंबंधाजी

वात्तदपेक्षत्वाद्गत्यादिहेतुताभिप्रकेः॥ स्वात्मैवाधिकरणं सर्वद्रव्याणां स्वात्मव्यवस्थि
तत्वादाकाशं संसारिणां साधारणं च घटादि जलादीनां स्थितिर्द्रव्यापेक्षानाद्यवसानाप
यीयापेक्षा समयादिका विधानं धर्मादित्रिकं प्रतिनियतानादिपारिणामिकद्रव्यार्थी
देशादेकैकं पर्यायार्थिकनयादेशादनेकं॥ संख्येयानंतानां द्रव्याणां गतिस्थित्यवगा
हनाद्युपकारपर्यायादेशाश्च स्यादेकं स्यादनेकं स्यात्संख्येयं स्यादसंख्येयं स्यादनंतका
ल॥ संख्येयासंख्येयानंतश्च भवति॥ परप्रत्ययात्पुद्गलद्रव्यं रूपस्पर्शादिपारिणामि
कद्रव्यार्थादेशात्स्यादेकं प्रतिनियतैकानेकसंख्येयासंख्येयानंतप्रदेशपर्यायादे
शात्स्यादनेकं स्यात्संख्येयं स्यादसंख्येयं स्यादनंतं॥ आस्रवनिर्देशः कायवाङ्मनः क्रि
यापरिणामो नामादिर्वा जीवोस्य स्वामी कर्म वा तन्निमित्तत्वात्स्वात्मैव साधनं शुद्धस्य
तदभावात्कर्म वा सति तस्मिन्प्रवृत्तेरधिकरणं आत्मनेवासीत्तत्र तत्फलदर्शनात्क
र्मणि कर्मकृते च कायादावुपचारतः॥ स्थितिर्वाङ्मनसास्रवयोर्जघन्येनैकसम
यः॥ उत्कर्षेणांतर्मुहूर्त्तः कायास्रवस्य जघन्येनांतर्मुहूर्त्तः उत्कर्षेणानंतकालः

असंख्येया पुद्गलपरिवर्त्ताः॥ विधानंवाङ्मनसास्रवयोश्चतुर्विकल्पसंख्यासत्यमृ
षोभयानुभयभेदात्कायास्रवः सप्तविधः॥ औदारिकवैक्रियिकाहारकमिश्र
भेदादौदारिकौदारिकमिश्रकौमनुष्यतिरश्चांवैक्रियिकवैक्रियकमिश्रकौदेव
काणांआहारकाहारकमिश्रकौसंयतानामृद्धिप्राप्तानांकार्मणकायास्रवोविग्र
हापन्नानांकेवलिनांवासमुद्घातगतानां अथवास्रवस्यप्रकारः
यिकः हिंसानृतस्तेयाब्रह्मादिषुप्रवृत्तिनिवृत्तिसंज्ञा वाचिकः परुषाक्रोशपि
शुनपरोपघातादिषुवचस्सुप्रवृत्तिनिवृत्तिसंज्ञः मानसोमिथ्याश्रुतेर्ष्यासूयादि
षुमनसः प्रवृत्तिनिवृत्तिसंज्ञः बंधनिर्देशः॥ जीवकर्मप्रदेशान्योन्यसंश्लेषोबंध
नामादिर्वासजीवस्यतत्रतत्फलदर्शनात्कर्मणश्चतस्यहिष्टत्वान्मिथ्यादर्शनाविर
तिप्रमादकषाययोगाबंधस्यसाधने
धिकरणंभवतिविवक्षातः कारकप्रवृत्तेः॥ स्थितिर्जघन्योत्कृष्टाचातत्रजघन्यावे
दनीयस्यद्वादशमुहूर्त्ताः नामगोत्रयोरष्टौशेषाणामंतर्मुहूर्त्तउत्कृष्टाज्ञानदर्शना

मोहनीयस्यसप्ततिर्नामगोत्रयोर्विं
वरणावेदनीयांतरायाणांत्रिंशत्सागरोपमकोटीकोट्यः
शतिस्त्रयस्त्रिंशत्सागरोपमाण्यायुषः॥ अथवाबंधसंतानपर्यायादेशाश्यादनादि
रनिधनश्चाभव्यानांभव्यानांचकेषांचिद्येनतेनापिकालेननसेत्स्यंतिज्ञानावरणा
दिकर्मोत्पादविनाशयात्सादिः॥ सनिधनः विधानंबंधसामान्यादेशादेकः॥ द्वि
धः॥ शुभाशुभभेदात्त्रिधाद्रव्यभावोभयविकल्पात्चतुर्धाप्रकृतिस्थित्यनुभाग
प्रदेशभेदात्पंचधामिथ्यादर्शनादिहेतुभेदात् षोढानामस्थापनाद्रव्यक्षेत्रकाल
भावैः॥ सप्तधासंसारेवभवाधिकैः॥ अष्टधाज्ञानावरणादिमूलप्रकृतिभेदादेवंसंख्ये
यासंख्येयानंतविकल्पश्चभवति हेतुफलभेदाश्रंवरनिर्देशः॥ आस्रवनिरोधोना
मादिर्वाजीवोस्यस्वामीकर्मवानिरुध्यमानविषयत्वान्निरोधस्यसाधनंगुप्तिसमि
तिधर्म्मादयस्वामिसंबंधाद्देहमेवाधिकरणमित्युत्कृष्टास्थितिर्जघन्येनांतर्मुहूर्त्तमु
त्कृष्टापूर्वकोटीदेशोना विधानंएकादिरष्टोत्तरशतविधः ततउत्तरश्चसंख्ये
यादिविकल्पः निरोध्यनिरोधकभेदाद्धेदितव्यः॥ तत्राष्टोत्तरशतविधउच्यते ति

ह्रोतमय: ।। पंचसमितय: ।। धर्मोदशविध: ।। अनुप्रेक्षाद्वादशपरीषहाद्वाविंशति: न
योद्वादशविधंप्रायश्चित्तंनवविधं ।। विनयश्चतुर्विध: ।। वैयावृत्त्यंदशविधंस्वाध्या
य: ।। पंचविध: व्युत्सर्गोद्विविध: ।। धर्म्यध्यानंदशविधंशुक्लध्यानं ।। चतुर्विधमि
तिनिर्जरानिर्देश: ।। यथाविपाकात्तपसोवाउपभुक्तवीर्यकर्मनिर्जरानामादिर्वास
आत्मन: कर्मणोवाद्रव्यभावभेदत: ।। साधनतयोयथाकर्मविपाकस्य अधिक
र्णमात्मैववास्थितिर्जघन्येनेकसमय: ।। उत्कर्षेणांतर्मुहूर्त्त: ।। सादि:
सपर्यवसानावा ।। विधानेसामान्यादेकानिर्जरा ।। द्विविधायथाकालऔपक्रमिकभेदा
दष्टधामूलकर्मप्रकृतिभेदादेवंसंख्येयासंख्येयानंतविकल्पाभवति ।। कर्मरसनि
र्हरणभेदान्मोक्षनिर्देश: कृत्स्नकर्मसंक्षयोमोक्षोनामादिर्वातस्यस्वामीपरमात्मा
मोक्षात्मैववासाधनसम्यग्दर्शनज्ञानचारित्राणिवामिसंवंधाद्दर्मेवाधिकरणंत
द्विषय ।। वास्थितिस्तस्यसादिरनिधानाविधानं सामान्यादेकोमोक्ष: द्रव्यभाव
मोक्षभेदादनेक: सम्यग्दर्शननिर्देशस्तत्वार्थश्रद्धानंसम्यग्दर्शनंनामादि

वीतस्तुनरात्मनः॥स्वस्यैववादर्शनमोहोपशमादिसाधनं॥ वाह्यंचोपदेशादिस्वात्मावा
स्वामिसंवंध॥भागेवाधिकरणंस्थितिर्जघन्येनांतर्मुहूर्त॥उत्कर्षेणषट्षष्ठिसा
गरोपमाणिसातिरेकाणि॥अथवा॥सादिसनिधनं॥औपशमिकक्षायोपशमिकंसा
द्यनिधनंक्षायिकंविधानं॥सामान्यादेकं द्विधानिसर्गजाधिगमजभेदात्त्रिधाऔप
शमिकक्षायिकक्षायोपशमिकल्पादेवंसंख्येयानंतविकल्पंचभवतिअध्यवसा
नभेदात॥ज्ञाननिर्देशः॥जीवादितत्त्वप्रकाशनंज्ञानंनामादिवीतरात्मनः स्वाका
रस्यवाज्ञानावरणादिकर्मक्षयोपशमादिसाधनं स्वाविर्भावशक्तिर्वाअधिकरणं
स्वात्मास्वाकारोवातत्रप्रतिष्ठानात्स्थितिः॥सादिसनिधनंक्षायोपशमिकंज्ञानं
चतुर्विकल्पंसाद्यनिधनंक्षायिकंविधानंसामान्यादेकंज्ञानं प्रत्यक्षपरोक्षभेदा
द्विधाद्रव्यगुणपर्यायविषयभेदात्त्रिधानामादिविकल्पाच्चतुर्धामत्यादिभेदात्पं
चधाइत्येवंसंख्येयासंख्येयानंतविकल्पंचभवतिभेदाच्चारित्रनिर्देशः॥कर्मादान
कारणनिवृत्तिश्चारित्रंनामादिवीतस्तुनरात्मनः स्वरूपस्यवाचारित्रमोहोपश

मादिसाधनं स्वशक्तिर्वा स्वामिसंबंधभागे वाधिकरणं स्थितिर्जघन्येनांतर्मुहूर्त्तमुत्क
र्षेण पूर्वकोटी देशोना अथवा सादिपर्यवसनो औपशमिकक्षायोपशमिके सा
दिपर्यवसानं क्षायिके स्तुद्व्यपेक्षया विधानं सामान्यादेकं द्विधा वा बाह्याभ्यं
तरनिवृत्तिभेदात् त्रिधा औपशमिकक्षायिकक्षायोपशमिकविकल्पात्
चतुर्थमभेदात् पंचधा सामायिकादिविकल्पादित्येवं संख्येयासंख्येयानंतविक
ल्पं च भवति परिणामभेदात् किमेतैरेव जीवादीनामधिगमो भवति उतान्योप्यधि
गमोपायोस्तीति परिपृष्टः अस्तीत्याह सत्संख्या क्षेत्रस्पर्शनकालांतरभावा
ल्पबहुत्वैश्च अधिगम इत्यनुवर्त्तते प्रशंसादिषु सच्छब्दवृत्तेः इच्छातः सद्भाव
ग्रहणं सच्छब्दः प्रशंसादिषु वर्त्तते तद्यथा प्रशंसायां तावत् सत्पुरुषः सदश्व इ
ति क्वचिदस्तित्वे सद्घटः सत्पट इति क्वचित्प्रज्ञायमाने प्रव्रजितः सत्कथमे
वं स्यात् प्रव्रजित इति प्रज्ञायमान इत्यर्थः क्वचिदादरे सत्कृत्यातिथीन्भोज
यति आदृत्येत्यर्थः तत्रेह अस्तित्वे सद्भावो गृह्यते अव्यभिचारात् सर्वमूलत्वाच्च

तस्माद्दीवचनंसत्वंह्यव्यभिचारिसर्वपदार्थः।सत्तांव्यभिचरतियदिव्यभिचरेद्धाग्वि
ज्ञानगोचरातीतः स्यात।तरागास्तुरूपादयोज्ञानादयश्चकेषुचित्संतिकेषुचिन्न
संतिक्रियाचपरिस्पंदात्मिकाजीवपुद्गलेष्वस्तिनेतरेष्वितिनःपामिमता।सर्वेषांच
विचारार्हणामस्तित्वम्‌लंतेनहिनिश्चितस्यवस्तुनउत्तराचिंताप्रजायते।अतस्तस्या
द्दीवचनंक्रियते।सतःपरिणामोपलब्धेः संख्यापदेशः।सतोहिवस्तुनःसंख्या
तानंतपरिणामोपलब्धेः।संख्यानाद्यन्यनमपरिमाणावधारणार्थंसंख्यातद्दल
क्षणाउपदिश्यतेनिज्ञातसंख्यस्यनिवासविप्रतिपत्तेः।क्षेत्राभिधानंनिश्चये
नज्ञातसंख्यस्यार्थस्योर्ध्वमधस्तिर्यग्निवासविप्रतिपत्तेरूर्ध्वाद्यन्यतमनिश्चया
र्थं।क्षेत्राभिधानंअवस्थाविशेषस्यवैचित्र्यकालविषयोपश्लेषनिश्चयार्थ
स्पर्शनं अवस्थाविशेषोविचित्रत्र्यस्रचतुरस्रादिस्तस्यत्रिकालविषयमुप
श्लेषणंस्पर्शनंकस्यचित्क्षेत्रमेवस्पर्शनंकस्यचिद्द्रव्यमेवकस्यचिद्रज्जवःप
ड्ष्टेवेति।एकसर्वजीवसंनिधौतन्निश्चयार्थंतदुच्यते।स्थितिमतोवधिप

रिच्छेदार्थे कालोपादानं स्थितिमतोऽर्थस्यावधिपरिच्छेत्तव्य इति। कालोपादानं क्रियते
ऽन्तरशब्दस्यानेकार्थवृत्तेः। क्वचिच्छिद्रेऽवर्त्तते सांतरं काष्ठं सच्छिद्रमिति। क्वचि
दभ्यन्तरे वर्त्तते सांतरं काष्ठं सच्छिद्रमिति। क्वचि
दन्यत इति क्वचिन्मध्ये हिमवत्सागरान्तरमिति। क्वचित्सामीप्ये स्फटिकस्य शुक्लर
क्ताद्यन्तरस्थस्य तद्वर्णतेति शुक्लरक्तसमीपस्थस्येति गम्यते क्वचि
द्वारणलोहानां काष्ठपाषाणवाससां नारीपुरुषतोयानामंतरं महदंतरमितिम
हान्विशेष इत्यर्थः। क्वचिद्बहिर्योगे ग्रामस्यांतरे कूपा इति क्वचिदुपसंव्याना
ने। अंतरे शाटका इति क्वचिद्विरहे अनभिप्रेतश्रोतृजनांतरे मंत्रं मंत्रयते। त
द्विरहे मंत्रयत इत्यर्थः। तत्रेह छिद्रमध्यविरहेष्वन्यतमो वेदितव्यः।
वीर्यस्य न्यग्भावे पुनरुद्भूतिदर्शनात्तद्वचनं अनुपहतवीर्यस्य द्रव्यस्य निमित्त
वशात्कस्यचित्पर्यायस्य न्यग्भावे सति पुनर्निमित्तांतरात्तस्यैवाविर्भावदर्श
नं तदन्तरमित्युच्यते परिणामप्रकारनिर्णयार्थं भाववचनं औपशमिकादिः।

शेषप्रकारेणनिर्ल्लेतव्यमितिभाववचनंक्रियतेसंख्यानाद्यन्यतमनिश्चयेप्यन्योन्यवि
शेषप्रतिपत्त्यर्थमल्पबहुत्ववचनंसंख्यानादिष्वन्यतमेनपरिमाणेननिश्चितानां
मन्योन्यविशेषप्रतिपत्त्यर्थमल्पबहुत्ववचनंक्रियतेइमेएभ्योऽल्पाइमेबहु
वइत्याहनिर्देशवचनाच्छास्त्वप्रसिद्धेःसंग्रहणंनिर्देशवचनादेवसत्वंसिद्धंनह्यस
तोनिर्देशइतितस्मादसंग्रहणमनर्थकंसङ्ग्रहणमसङ्ग्रहणंनवा।क्वास्तिक्व
नास्तीतिचतुर्दशमार्गणास्थानाविशेषणार्थत्वान्नवाएषदोषः।किंकारणं
नानेनसम्यग्दर्शनादिः।सामान्येनसत्वमुच्यते।किन्तुगतीन्द्रियकायादिचतु
र्दशसुमार्गणास्थानेषुक्वास्तिसम्यग्दर्शनादिक्वनास्तीत्येवंविशेषणार्थसद
चनं।सर्वभावाधिगमहेतुत्वाच्चाधिकृतानांसम्यग्दर्शनांजीवादीनांचनिर्देश
वचनेनास्तित्वमधिगतंस्याद्येत्वनधिकृताजीवपर्यायाः क्रोधादयः।येवाजी
वपर्यायाः वर्णादयोघटादयश्चतेषामस्तित्वाधिगमार्थपुनर्वचनं।अनधि
कृतत्वादितिचेन्नसामर्थ्यात्स्यादेतदनधिकृतास्तिततोनपुनर्युक्तमेषांग्रहणं

मितितन्नकिंकारणंसामर्थ्यात्तेषामपिग्रहणंभवति॥विधानग्रहणंनार्थवत्त्वा
त्वास्यादेतद्विधानग्रहणादेवसंख्यासिद्धिरितितन्नकिंकारणंभेदगणनार्थत्वात्स्व
कारगणनंहितद्भेदगणनार्थमिदमुच्यते॥उपशमसम्यग्दृष्ट्यादयः॥क्षायि
कसम्यग्दृष्ट्यन्ताएतावन्तइति॥क्षेत्राधिकरणयोरभेदइतिचेन्नोक्तत्वात्स्यादेतद्यदे
वाधिकरणंतदेवक्षेत्रं॥अतस्तयोरभेदात्पृथग्ग्रहणमनर्थकमितितन्नकिंका
रणंउक्तार्थत्वादुक्तमेतत्सर्वभावाधिगमार्थत्वादितिक्षेत्रेसतिस्पर्शनोपलब्धेर
घुघटवत्पृथग्ग्रहणं॥यथेहसतिघटेक्षेत्रेवृत्तौवस्थानान्नियमाद्दृष्टस्पर्शन
नंनह्येतदस्तिघटेषु॥अवतिष्ठतेनचघटंस्पृशतीतितथाकाशक्षेत्रेजीवावस्था
नियमादाकाशेस्पर्शनमितिक्षेत्राभिधानेनैवस्पर्शनस्यार्थग्रही॥तत्त्वात्पृथग्ग्रह
णमनर्थकं॥नवाविषयवाचित्वान्नवाएषदोषः॥किंकारणंविषयवाचित्वाद्विषय
वाचीक्षेत्रशब्दःयथाराजाजनपदक्षेत्रेवर्ततिष्ठतिनचकृत्स्ने
नंतुकृत्स्नविषयमितित्रैकाल्यगोचरत्वाच्चयथासांप्रतिकेनांवुनासांप्रतिकंघट

क्षेत्रेस्वच्छेनातीतानागतेनैवमात्मनः॥ सांप्रतिकक्षेत्रस्पर्शनेस्पर्शनाभिप्रायः स्पर्श
नाभिप्रायः स्पर्शनस्पत्रिकालगोचरत्वात्॥ स्थितिकालयोरर्थांतरत्वाभावइतिचेन्न
मुख्यकालास्तित्वसंप्रत्ययार्थंस्यादेतस्थितिरेवकालः॥ कालएवस्थितिरित्यतोना
स्त्युभयोरर्थांतरभावइतितन्नकिंकारणं मुख्यकालास्तित्वसंप्रत्ययार्थंपुनः॥ का
लग्रहणंद्विविधोहिकालोमुख्योव्यावहारिकश्चेतितत्रमुख्योनिश्चयकालःप
र्यायिपर्यायावधिपरिच्छेदोव्यावहारिकः॥ तयोरुत्तरत्रनिर्णयोवक्ष्यते॥ उक्तंच॰
किमुक्तंसर्वभावाधिगमहेतुत्वादितिनामादिषुभावग्रहणात्पुनर्भावग्रहणमिति
चेन्नौपशमिकाद्यपेक्षत्वात्॥ स्यादेतन्नामादिषुभावग्रहणंकृतंतेनैवसिद्धत्वा
त्पुनर्भावग्रहणमनर्थकमितितन्नकिंकारणंऔपशमिकाद्यपेक्षत्वात्पूर्वभावग्रह
णंद्रव्येनभवतीत्येवंपरमिदंत्वौपशमिकादिवक्ष्यमाणभावापेक्षंकिंसम्यग्दर्शन
मौपशमिकंक्षायिकमित्यादि॥ विनेयाशयवशोवातत्वाधिगमहेतुविकल्पः स्व
थवासर्वेषामेवंपरिहारः॥ विनेयाशयवशोहितत्वाधिगमहेतुविकल्पोवेदितव्यः

राजवा॰
५६

हिस्तरेणइतरथाहिप्रमाणनयहणादेवसिद्धेरितरेषामधि
गमोपायानांग्रहणमनर्थकंस्यादिति ॥ इत्थितस्वार्थोनातिंके प्रथमेध्याये षष्ठमा ह्नि
कंसमाप्तं ॥ एवंसम्यग्दर्शनस्यादावुपदिष्टस्यलक्षणोत्पत्तिस्वामिविषयन्यासाधिगमो
: तत्संबंधेनचजीवादीनांसंज्ञापरिणामादिनिर्दिष्टं तदनंतरमिदानीं
सम्यग्ज्ञानंविचारार्हमित्याह ॥ मतिश्रुतावधिमनःपर्ययकेवलानिज्ञानं ॥ मत्या
दयइतिकरणशब्दाः मतिशब्दोभावकर्तृकरणसाधनः ॥ अयमतिशब्दोभावकर्तृ
वेदितव्यः ॥ मतेर्भावसाधनोकिं ॥ तदावरणकर्मक्षयोपश
मसतीन्द्रियापेक्षमर्थस्यमननंमतिः ॥ ऊदासीन्येनतत्त्वकथनाद्बहुलापेक्षयाक
र्तृसाधनः ॥ करणसाधनोवामनुतेथीन्मन्यतेनेनेतिवामतिः ॥ भेदाभेदविवक्षोपप
त्तेश्रुतशब्दः कर्मसाधनश्च किंचपूर्वोक्तविषयसाधनस्यनिवर्तनेश्रुतावरणक्ष
योपशमाद्यंतरंगवहिरंगहेतुसंनिधानेसतिश्रूयतेस्मेतिश्रुतंकर्त्तरिश्रुतपरिणत
आत्मैवश्रृणोतीतिश्रुतंभेदविवक्षायांश्रूयतेनेनेतिश्रुतंश्रवणमात्रंवा ॥ अवप्

धेस्पदधातेः कर्मादिसाधनः॥ किः कर्मादिषु साधनेष्वन्यतमे किंरयंचेदितव्यः अ
वधिज्ञानावरणक्षयोपशमाद्युभयहेतुसंनिधाने सत्यवधीयते अवाग्दधाति अवा
ग्धानमात्रं वावधिः॥ अवशब्दोऽधःपर्यायवचनः॥ यथा अधःक्षेपणमवक्षेपण
मिति॥ अधोगतभूयोद्रव्यविषयो ह्यवधिः॥ अथवावधिर्मर्यादा अवधिना प्रति
बद्धं ज्ञानं अवधिज्ञानं॥ तथाहि वक्ष्यते रूपिष्ववधेरिति सर्वेषां प्रसंग इति चेन्न
रूढिवशाद्व्यवस्थोपपत्तेः॥ गोशब्दप्रवृत्तिवत्मनः॥ प्रतीत्य प्रतिसंधाय वा ज्ञा
नं मनःपर्ययः॥ तदावरणकर्मक्षयोपशमादिद्वितयनिमित्तवशात्परकीयमनो
गतार्थज्ञानं मनःपर्ययः॥ भावादिसाधनत्वं पूर्ववद्वेदितव्यं कथं मनः॥ प्रतीत्य प्र
तिसंधाय वा ज्ञानमित्युच्यते परकीयमनसि गतोऽर्थो मन इत्युच्यते॥ तात्स्थ्यात्ताच्छ
ब्द्यमिति सूचकः॥ मनोगतोऽर्थो भावघटादिस्तमर्थं समंतादित्यावलंब्य वस्वप्रसादात्म
नो ज्ञानं मनःपर्ययः॥ मतिज्ञानप्रसंग इति चेन्न॥ अपेक्षामात्रत्वात्स्यादेतन्मनः
पर्ययज्ञानं मतिज्ञानं प्राप्नोति कुतः मनोनिमित्तत्वादेवं हि आर्थी प्रक्रिया मनसाम

नःसंपरिचिंत्येतितन्नकिंकारणमपेक्षामात्रत्वात्स्वपरमनोपेक्षामात्रेणतत्रक्रिय
तेयथाभ्रेचंद्रमसंपश्येतिनतत्कार्यंमतिज्ञानवत्॥आत्मशुद्धिनिमित्तत्वादितस्य
ति बाह्याभ्यंतरक्रियाविशेषान्यदर्थंकेवंतेतत्केवलंतपः॥क्रियाविशेषान्वा
अनसकायाश्रयान्बाह्यानभ्यंतरांश्चतपः यदर्थमर्थिनः॥केवंतेसेवंतेत
वलं॥अव्युत्पत्तौवासहायार्थः॥केवलशब्दः॥यथाकेवलमन्नंभुंक्तेदेवदत्त
इति॥असहायंव्यंजनरहितंभुंक्तेइतिगम्यते॥तथाक्षायोपशमिकज्ञानासंपृ
क्तं॥असहायंकेवलमित्यव्युत्पन्नोयंशब्दोद्रष्टव्यः॥करणादिसाधनोज्ञानश॰
व्याख्यातः॥अयंज्ञानशब्दःकरणादिसाधनइतिव्याख्यातः॥पुरस्तादितरे
तद्भावः॥इतरेषामेकांतवादिनांतस्यज्ञानस्यकरणादिसाधनत्वंनोपपद्यते
मितिचेदुच्यते॥आत्माभावेज्ञानस्यकरणादित्वानुपपत्तिःकर्तुरभावा
द्येषामात्मानविद्यतेतेषांज्ञानस्यकरणादित्वंनोपपद्यतेकुतः॥कर्तुरभावात्सति
कर्तरिपरशोः॥करणत्वंदृष्टं॥तथाचात्मन्यसतिनास्यकरणत्वंन

भावसाधनत्वमपिनोपपद्यतेज्ञातिर्ज्ञानमितिनह्यसतिभाववतिभावइतिस्यादेनज्ञा
नातीतिज्ञानमितिकर्तृसाधनत्वमितितन्ननिरीहकत्वान्नहिनिरीहकोभावः कर्तृ
त्वमास्कंदतिनिरीहकाश्चसर्वेभावाः॥ किंचपूर्वोत्तरापेक्षस्यलोकेकर्तृत्वंदृष्टंनचत
स्यज्ञानस्यपूर्वोत्तरापेक्षास्तिक्षणिकत्वादतोनिरपेक्षस्यकर्तृत्वभावः॥ किंचकरण
व्यापारापेक्षस्यलोकेकर्तृत्वंदृष्टंनचज्ञानस्यान्यत्करणमस्तिअतोस्यकर्तृत्वमपि
नोपपद्यतेस्वशक्तिरेवकरणमितिचेन्नशक्तिमद्भेदाभ्युपगमेह्यात्मास्तित्वसिद्धेः
अभेदेचसदोषस्तदवस्थएवेतिसंतानापेक्षयाकर्तृकरणभेदोपचारइतिचेन्नप
रमार्थविपरीतत्वेनमृषा॥ वादोपपत्तेर्भेदाभेदविकल्पनयोरुक्तदोषप्रसंगाच्चमन
श्चेंद्रियंचास्यकरणमितिचेन्नतस्यतद्रूपाभावात्मनस्तावन्नकरणंविनष्टत्वा
त्षण्णामनंतरातीतंविज्ञानंयद्धितन्मनइतिवचनान्नेंद्रियमप्यतीतंनंतरएवनष्ट
पजायमानस्यकरणत्वनहिसव्यविषाणंयुगपज्जायमानमितरस्यविषाणस्य
करणंभवति॥ किंचप्रकृत्यर्थादन्यस्याभावात्ज्ञाइत्यस्याः प्रकृतेरवबोधन

मर्थः। न तस्मादन्यः कश्चिदर्थोऽस्ति यः कर्तृत्वमनुभवेत्। अतोऽस्य कर्तृत्वाभा
वः। किंच एकक्षणविषयं यत्कर्तृत्वं तदनेकक्षणगोचरोच्चारणध्वनिना क
र्तृशब्देन कथमुच्यते। कथं वायमेकक्षणे सत्वाचकः स्यात्संतानावस्थानाद्वा
च्य वाचकभावसंबंध इति चेन्न तस्य प्रतिविहितत्वात्। अथ मतमेतत्स्वात्म
नि तानेोरन्नदृष्टिरं वाच्यमेव हि तत्त्वमिष्यते। अव्यापारेषु हि सर्वधर्मेषु वाग्व्य
वहारो नास्त्येवेति तदपि नोपपद्यते स्ववचनविरोधात्तत्त्वप्रतिपत्त्यभावाद्यापन्ह
वप्रसंगाच्च। किंच जानातीति ज्ञानमिति कर्तृसाधनत्वेनोपपद्यते कुतो विशेषा
नुपलब्धेः। येन हि कर्तृसाधनत्वमवगतं करणादिसाधनत्वं च तेनेदं प्रत्युत्पन्नव
कु कर्तृसाधनमिदं न करणादिसाधनमिति न च क्षणिकवादिनः प्र
वार्ति ज्ञानविकल्पनायां अनवधारितोभयस्वभावस्य तद्विशेषोपलब्धिरस्ति न
हि शुक्लेतरविशेषानभिज्ञस्य शुक्लमिदं न नीलादीति विशेषणमुपपद्यते। अलि
त्वेप्यविक्रियस्य तदभावो नाभिसंबंधादात्मनः अस्तित्वेपि ज्ञानस्य करणाद्यभावः

कुतोनभिसंबंधाद्यस्यमतमात्मनोज्ञानाख्यात्गुणात्तस्माद्वार्थांतरभूतः॥ आत्मेंद्रि
यमनोर्थसन्निकर्षाद्यन्निष्पद्यते॥ तदन्यदितिवचनादितितस्यज्ञानंकरणंनभवि
तुमर्हतिकुतः॥ पृथगात्मलाभाभावात्दृष्टोहिलोकेछेत्तुर्देवदत्तार्थांतरभूतस्यपरशो
स्तैक्ष्ण्यगौरवकाठिन्यादिविशेषलक्षणोपेतस्यसतः करणभावः॥ नचतथाज्ञान
स्यस्वरूपंपृथगुपलभामहे॥ किंचापेक्षाभावात्दृष्टोहिपरशोर्देवदत्ताधिष्ठितोद्य
मननिपतनापेक्षस्यकरणभावः॥ नचतथाज्ञानेनकिंचित्कर्तृसाध्यंक्रियांतरंस
मपेक्ष्यमस्तिकिंचतत्परिणामाभावात्छेदनक्रियापरिणतेनहिदेवदत्तेनतत्क्रिया
यायाः॥ साचिच्छेनिष्पाद्यमानः॥ परशुःकरणमित्येतद्युक्तं॥ नचतथात्माज्ञानक्रि
यापरिणतः॥ अर्थांतरत्वेतस्याज्ञत्वादिहयज्ज्ञानादन्यद्भवतितदज्ञंदृष्टं॥ यथा
घटादिद्रव्यं॥ तथाचज्ञानादन्यआत्मेत्यज्ञत्वप्रसंगः॥ ज्ञानयोगाज्ज्ञत्वंदृष्टत्वाद्दं
डिवदितिचेन्नतत्स्वभावाभावेसंबंधनियमानुपपत्तिरिंद्रियमनोवत्ज्ञस्वभावा
भावेसत्यात्मन्येवयोगोनमनसिंद्रियेणवेतिनियमाभावः॥ यतसिद्धयोश्चदंडिदं

डिनोः संबंधो दंडस्य च प्रसिद्धस्य चैत्रस्य सतो विशेषणमात्रत्वेनोपादानादात्मनश्च
तुद्रूपत्वे हि तद्विचारणाविक्रियोपपत्तेरसाम्यं उभयोश्चात्मनयोः संबंधेप्यत्व
लप्रसंगो दृष्टत्वाज्ञात्र्यंधयोः संबंधे दर्शनशक्त्यभाववत् किंच इंद्रियमनः
प्रसंगाच्च दिक्साधनइति किंच उभयोर्निष्क्रियात्वात्सर्वगतस्यत्तावदात्मनः क्रि
यानास्ति नापि ज्ञानस्य क्रियावत्त्वं द्रव्यस्यैव लक्षणमिति वचनात्ततः क्रियावि
रहितस्य कथं कर्तृत्वं करणत्वं वा स्यात् यस्यापि मतमन्यत्तगुणाव्यतिरेकात्त्रबु
द्धः पुरुषो नित्यश्च निर्विकारत्वादिति तस्य ज्ञानं करणं न भवितुमर्हति कुतः
अनभिसंबंधात् बुद्धिरिंद्रियमनोहंकारमहद्भूपनीतालोचनसंकल्पाभि
मानाध्यवसायरूपा साप्रकृतिः पुरुषः पुनरविक्रियः शुद्धश्च तस्य साक
रणं कथं स्यात् क्रियापरिणतस्य हि देवदत्तस्य लोके करणसंप्रयोगो दृष्टः एवमा
दियोज्यं नापि कर्तृसाधनत्वं युज्यते लोके हि करणत्वेन प्रसिद्धस्यासेः तत्प्रसं
सापरायामभिधानप्रवृत्तौ समीक्षितायां तैक्ष्ण्यगौरवकाठिन्याहितविशेषायमसि

वह्निनत्तीतिकर्तृधर्माध्यारोपः॥ क्रियतेनचतथाज्ञानंकरणत्वेनप्रसिद्धमस्ति
पूर्वदोषोपपत्तेः॥ अतोस्यकर्तृत्वमयुक्तं नचभावसाधनत्वमुपपत्तिमत् ॥ अवि
क्रियस्यतत्परिणामाभावाद्धिक्रियास्वभावस्यहिवस्तुनस्तंडुलादेर्विक्लेदादिदर्श
नात्पचनंपाकइत्येवमादिभावर्दर्शीप्रयुक्तोनाकाशस्येति किंचफलाभावात् ज्ञा
नंहिप्रमाणमिष्टंमाणेनचफलवताभवितव्यंनचाववोधनमंतरेणफलमन्यदु
पलभ्यते तस्मादन्येनज्ञानेनभवितव्यंयस्मिन्सतिसाक्षातिरववोधः फलमा
त्मनोभवति तस्वनारत्यतोनभावसाधनत्वंअधिगमश्चात्रनभावांतरमितिफले
प्रामाणेपोपचारः इतिवायुक्तंमुख्याभावादात्फलप्रमाणपरिकल्पनावायुक्ता
आकारावत्तोभेदाभेदयोरनेकदोषोपपत्तेर्निर्विकल्पकत्वाच्चतत्वस्याकारक
ल्पनाभावः॥ वाह्यवस्त्वकारापोहेअंतरंगाकारानुपपत्तिश्चेतिजैनेंद्राणांतुप
रमर्षिसर्वज्ञप्रणीतनयभंगगहनप्रपंचविपश्चितांस्याद्वादप्रकाशोन्मीलित
ज्ञानचक्षुषामेकस्मिन्नप्यर्थेनेकपर्यायसंभवादुपपद्यतइतिविस्पष्टछंमे

वतन्मत्यादीनांज्ञानशब्देनप्रत्येकमभिसंबंधोभुजिवद्यथादेवदत्तजिनदत्तगुरु
दत्ताभोज्यंतामितिदेवदत्तादीनांभुजिनांप्रत्येकमभिसंबंधोभवतिएवमिहापिप्र
त्येकमभिसंबंधः मतिज्ञानंश्रुतज्ञानंऽवधिज्ञानंकेवलज्ञानमितिसत्यपित
सामानाधिकरण्येउपात्तलिंगसंख्यत्वात्तल्लिंगसंख्योपादानंनास्तीत्युक्तंपुरस्ता
त्श्वंतत्वादल्पान्तरत्वादल्पविषयत्वान्मतिग्रहणमादौमतिरित्येतत्पदंश्वंत
मत्याचूरंबावध्यादिभ्योविषयस्याल्पत्वाच्चक्षुरादीनांप्रतिनियतविषयत्वा
त्तस्माद्रूपादीग्रहणंक्रियतेतदनंतरंश्रुतंतत्पूर्वंहिश्रुतमितिवक्ष्यतेततस्त
दनंतरंश्रुतंऽक्रियतेतत्तत्त्वविषयनिबंधनतुल्यत्वाच्चमतिश्रुतयोर्निबंधोद्रव्ये
ष्वसर्वपर्यायेष्वितिवक्ष्यते। अतस्तत्तुल्यत्वाच्चतदनंतरंश्रुतंतत्सहायत्वाच्चय
थानारदपर्वतौ। यत्रपर्वतस्तत्रनारदः। परस्परापरित्यागात्तथामतिश्रुतयोः
परस्परापरित्यागः। यत्रमतिस्तत्रश्रुतंयत्रश्रुतंतत्रमतिरितिप्रत्यक्षत्रयस्या
दावेवधिवचनंविशुद्ध्यभावात्सत्यपिमतिश्रुताभ्यांप्रत्यक्षत्वाद्विशुद्धत्वेऽव

धिरोपरिष्टं प्रत्यक्षज्ञानमपेक्ष्य अवधिर्विशुद्धतरस्ततोऽस्य प्रत्यासन्नत्वात्ततो विशु
द्धतरत्वान्मनःपर्ययग्रहणं ततोऽवधेर्मनःपर्ययज्ञानं विशुद्धतरं किंकृतोऽस्य वि
शुद्धतरं किंकृतोऽस्य विशुद्धिप्रकर्षः संयमगुणसन्निधानकृतः अतोऽस्य तदन
न्तरं ग्रहणं अन्ते केवलग्रहणं ततः परं ज्ञानप्रकर्षाभावात्सर्वेषां ज्ञानानामुपरि
च्छेदने केवलसामर्थ्यादस्य चान्येन ज्ञानेनापरिच्छेद्यत्वान्नातोऽन्यत्प्रकृष्टं ज्ञानं
मस्तीति ततः परं ज्ञानप्रकर्षाभावस्तेनैव सहनिर्वाणाच्च यतश्च केवलेने
व सहनिर्वाणं न क्षायोपशमिकज्ञानैः सहातोऽन्ते केवलग्रहणं कश्चिदाह म
तिश्रुतयोरेकत्वं साहचर्यादेकत्रावस्थानाच्चाविशेषान्मतिश्रुतयोरेकत्वं प्रा
प्नोति कुतः साहचर्यादेकत्रावस्थानाच्चाविशेषात्तन्न सिद्धो विशेषः कु
तः अतस्तत्सिद्धेर्यत एव मतिश्रुतयोः साहचर्यमेकत्रावस्थानं चोच्यते अ
त एव विशेषः सिद्धः प्रतिनियतविशेषसिद्धयोर्हि साहचर्यमेकत्रावस्था
नं च युज्यते नान्यथेति तत्पूर्वकत्वाच्च मतिपूर्वं श्रुतमिति वक्ष्यते ततश्चा

नयोर्विशेषः। यत्पूर्वं यच्च पश्चात्तयोः कथमविशेषः। तत एवाविशेषः। कारणसदृ
शत्वाद्युगपद्वृत्तेश्चेति चेन्नातएव नानात्वात्। स्यादेतद्यतो मतिपूर्वकत्वमतएवा
शेषः कुतः कारणसदृशत्वात्कार्यस्य कथं तंतुपटवद्यथा शुक्लादितंतुकार्ये
पटद्रव्ये शुक्लादिगुणमेव तथा मतिकार्यत्वाच्छ्रुतस्यापि मत्यात्मकत्वं युगपद्वृत्तेश्च
यथाग्नावौष्ण्यप्रकाशनयोर्युगपद्वृत्तेरन्यात्मकत्वं तथा सम्यग्दर्शनाविर्भावादनंत
रं युगपन्मतिश्रुतयोः। ज्ञानव्यपदेशवृत्तेरविशेष इति तन्न किं कारणं स तएव ना
नात्वाद्यतएव नानात्वाद्यतएव कारणसदृशत्वयुगपद्वृत्तिश्च। चोच्यते अतएव
नानात्वं सिद्धं द्वयोर्हि सादृश्यं युगपद्वृत्तिश्चेति विषयाविशेषादिति। चेन्न ग्रहणभे
दात् स्यादेतद्विषयाविशेषान्मतिश्रुतयोरेकत्वमेव हि वक्ष्यते मतिश्रुतयोरेकत्वमेव हि
वक्ष्यते मतिश्रुतयोर्निबंधो द्रव्येष्वसर्वपर्यायेष्विति तन्न किं कारणं ग्रहणभेदाद
न्यथा हि मत्या गृह्यते अन्यथा श्रुतेन योहि मन्यते विषयाभेदादविशेष इति तस्यै
कघटविषयदर्शनस्पर्शनाविशेषः स्यात्। उभयोरिंद्रियानिमित्तत्वादिति चेन्न श्र

सिद्धत्वात् ॥ स्यादेतदुभयोरिंद्रियानिंद्रियनिमित्तत्वादेतत् करणनिमित्तत्वाच्च तदुभय
निमित्तं तन्न किं कारणम् असिद्धत्वात् जिह्वा हि शब्दोच्चारक्रियाया निमित्तं न ज्ञानस्य श्र
वणमपि स्वविषयमतिज्ञाननिमित्तं न श्रुतस्य तदुभयानिमित्तत्वमसिद्धं सिद्धो हेतुः
साध्यमर्थं साधयेन्नासिद्धः ॥ किंनिमित्तं तर्हि श्रुतमनिंद्रियनिमित्तोऽर्थावगमः श्रु
तं मतिज्ञाननिमित्ते इंद्रियानिंद्रियबलाधानात् पूर्वमुपलब्धेऽर्थे नोइंद्रियप्राधान्यादु
त्पद्यते ज्ञानं तद्यते ज्ञानं तत्तु तं ईहादिप्रसंग इति चेन्नावग्रहीतमात्रविषयत्वात्स्या
देतदीहादीनामपि श्रुतत्वव्यपदेशः प्राप्नोत्यनिंद्रियनिमित्ता इति तन्न किं कारणम्
अवग्रहीतमात्रविषयत्वादिंद्रियेणावग्रहीतोऽर्थस्तन्मात्रविषया ईहादयः श्रुतं पुन
र्न तद्विषयं तर्हि श्रुतं अपूर्वविषयं यथा एकं घटमिंद्रियानिंद्रियाभ्यां निश्चित्यायं घट इति
तज्जातीयमन्यमनेकदेशकालरूपादि विलक्षणमपूर्वमधिगच्छति यत्तच्छ्रुतं नाना
प्रकारार्थप्रकारार्थप्ररूपणपरं यत्तद्वा श्रुतं अथवा इंद्रियानिंद्रियाभ्यामेकं जीवमजीवं
वोपलभ्य तत्र सत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वादिभिः प्रकारैरर्थप्ररू

राजवा
६०

परोक्षत्वेयस्समर्थनेन श्रुतं श्रुत्वावधारणात् श्रुतमिति चेन्न मतिज्ञानप्रसंगात्॥ श्रुत्वाप
दवधारयति न श्रुतमिति केचिन्मन्यंते तन्नयुक्तं कुतः मतिज्ञानप्रसंगात् तदपि शब्दं श्रुत्वा
गोशब्दोयमिति प्रतिपद्यते असाधारणेन नाम लक्षणेन भवितव्यं श्रुतं पुनस्तस्मिन्नि
द्रियगृहीतागृहीतपर्यायसमूहात्मनि॥ शब्दे तदभिधेये च श्रोत्रेंद्रियव्यापारमंतरेण
जीवादौ नयादिभिरधिगमोपायैर्याथात्म्येनावबोधः प्रमाणनयैरधिगम इत्युक्तं
णेकेषांचिज्ज्ञानमभिमतं केषांचित्सन्निकर्ष इत्यतोधिकृतानामेव मत्यादीनां प्रमाणत्व
ख्यापनार्थमाह॥ तत्प्रमाणे॥ प्रमाणशब्दस्य कोर्थः भावकर्तृकरणत्वोपपत्तेः॥ प्र
माणशब्दस्येष्टातोर्थाध्यवसायः॥ अयं प्रमाणशब्दः॥ भावकर्तरि करणे च वर्तते॥ तत्र
भावेनावत् प्रमेयार्थं प्रति निवृत्तव्यापारस्य तत्त्वकथनात् प्रमाणमिति॥ कर्तरि प्रमेया
र्थं प्रति प्रमातृत्वशक्तिपरिणतस्याश्रितत्वात्तत्प्रमिणोति प्रमेयमिति प्रमाणं करणे प्र
मातृप्रमेययोः प्रमाणप्रमेययोश्चान्यदन्यत्वात्प्रमिणोत्यनेनेति प्रमाणं॥ अनवस्थेति
चेत्॥ न दृष्टत्वात्प्रदीपवत् स्यान्मतमिदमिह संप्रधार्यं प्रमाणसिद्धिः॥

नएववेत्तियदियथाप्रमेयसिद्धिप्रमाणसिद्धिः।परतोवास्यास्वतएववेत्तियदियथाप्रमेय
सिद्धिप्रमाणाधीनाएवं।प्रमाणसिद्धिरपिप्रमाणांतराधीनेतितस्याप्यन्यत्तस्याप्यन्यदि
त्यनवस्था।अथस्वतएवसिद्धिःएवमपियथाप्रमाणस्यस्वतएवसिद्धिस्तथाप्रमेया
त्मनएवसिद्धिरितिप्रमाणव्यवस्थाकल्पनाप्रकाशकः स्वस्यचतथाप्रमाणमपिइति
अथवायमपरार्थः।यदिभावकर्तृकरणानामन्यतमसाधनःप्रमाणशब्दः।अन
वस्थाप्राप्नोतितर्ह्येकस्मिन्नर्थेमनिविरुद्धत्वावस्थानमिति।नन्वकिंकारणंदृष्ट
त्वात्प्रदीपवद्यथैकस्यप्रदीपस्यप्रदीपयति।प्रदीप्यतेनेनेति।वाभावादिशक्तावि
शेषस्तथाप्रमाणस्यापीतिइतरथाहिप्रमाणव्यपदेशाभावः।यदिप्रमाणंस्वस्या
प्यसंवेद्यत्वात्स्यप्रमाणव्यपदेशोनस्यात्।विषयज्ञानत्तहिज्ञानयोरविशेषःवि
शेषः।विषयाकारपरिच्छेदात्मनिज्ञानेयदिस्वाकारपरिच्छेदोनस्यात्तर्हिविषयेविज्ञा
नेविषयाकारस्वरूपतेवेतितयोरविशेषःस्यात्स्मृत्यभावप्रसंगश्चनह्यनुपलब्धपू
र्वेर्थेसएवायमितिस्मृतिर्भवतियदिचविज्ञानंस्वात्मानेनविजानीयादुत्तरकालमन

राजवा॰
६१

धिगतस्वात्मविज्ञानः॥ कथंब्रूयात्ज्ञोहमितितत्स्मृतेरभावः॥ स्यात्फलाभावइतिचे
न्नार्थाववोधेप्रीतिदर्शनात्स्यादेतद्भावसाधनेप्रमाणेप्रमैवप्रमाणमितिनफलमन्यदु
पलभ्यतइतिफलाभावइतितन्नकिंकारणमर्थाववोधेप्रीतिदर्शनात्॥ ज्ञस्वभावस्या
त्मनः॥ कर्ममलीमसस्यकरणालंबनार्थनिश्चयेप्रीतिरुपजायते॥ साफलमित्यु
च्यतेउपेक्षाज्ञाननाशोवारागद्वेषयोरप्रणिधानमुपेक्षा॥ अज्ञानमुपेक्षा॥ अज्ञानना
शोवाफलमित्युच्यतेज्ञातृप्रमाणयोरन्यत्वमितिचेन्नानवस्थाप्रसंगात्स्यान्मतंप्रमिणो
त्यात्मानंपरंवाप्रमाणमितिकर्तृसाधनत्वमयुक्तंयस्मादन्यत्प्रमाणंज्ञानं॥ संचज्ञ
ः॥ अन्यश्चप्रमातात्मासचज्ञः॥ करणकर्त्रोश्चान्यत्वंद्रव्यरूपवत्तथाचात्मे
न्द्रियमनोर्थसन्निकर्षाद्यभिव्यक्तेनदन्यदितिवचनादन्यत्प्रमाणमन्यःप्रमाताततः
करणसाधनत्वमेवयुक्तमितितन्न॥ किंकारणमज्ञानादन्यआत्मानस्याज्ञत्वंप्राप्नो
तिघटवत्॥ ज्ञानयोगादितिचेन्नतत्स्वभावत्वेज्ञातृत्वाभावोघटदीपसंयोगवत्स्यादे
तज्ज्ञानयोगाज्ज्ञातृत्वंभवतीतितन्नकिंकारणं॥ अतत्स्वभावत्वेज्ञातृत्वाभावः॥ कथम

घप्रदीपसंयोगवद्यथाजात्यंधस्यप्रदीपसंयोगेपिनदृष्टत्वंतथाज्ञानयोगेवद्यथा
ज्ञौघ्यस्यस्वभावस्यात्मनोज्ञानात्त्वंप्रमाणप्रमेययोरन्यत्वमितिचेन्नानवस्थानात्
स्यान्मतं अन्यत्प्रमाणमन्यत्प्रमेयंकुतः लक्षणभेदाद्घटपटवदितितन्नकिंका
रणं अनवस्थानाद्यदियथावाद्यात्प्रमेयाकारादन्यत्स्यात् अनवस्थास्यस्यात्प्र
काशवदितिचेन्नप्रतिज्ञाहानेस्तत्रैतस्यान्नानवस्थादोषः कथंप्रकाशवद्यथाप्र
काशस्यघटादीनामात्मनश्चप्रकाशस्यनानवस्थादोषः एवमिहापीतितन्नकिंका
रणंप्रतिज्ञाहानेः प्रकाशोहिस्वात्मनोनाशः स्वपरप्रकाशनेसमर्थः प्रदर्श्यमानः
प्रमाणप्रमेययोरन्यत्वप्रतिज्ञांहापयतिअनन्यत्वमेवेतिचेन्नोभयाभावप्रसंगाद्य
द्यन्यत्वेदोषोनन्यत्वतर्हिज्ञात्प्रमाणयोप्रमाणप्रमेययोश्चेतितन्नकिंकारणमु
भयाभावप्रसंगाद्यदिज्ञातुरनन्यत्प्रमाणंप्रमाणाच्चप्रमेयमन्यतराभावेतदविनाभ
विनोवशिष्टस्याप्यभावइत्युभयाभावप्रसंगकथंतर्हिसिद्धिरनेकांतात्सिद्धिः स्यादन्य
त्वंस्यादनन्यत्वंस्यादनन्यत्वमित्यादिसंज्ञालक्षणादिभेदात्स्यादन्यत्वंव्यतिरेकेणानु

नुपलब्धेः स्यादनन्यत्वमित्यादिनतः॥ सिद्धमेतत्प्रमेयंनियमात्प्रमेयंप्रमाणंतुस्यात्प्र
माणंस्यात्प्रमेयमितिवक्ष्यमाणभेदापेक्षयाद्वित्वनिर्देशः॥ आद्येपरोक्षंप्रत्यक्षमन्य
दितिवक्ष्यतेतदपेक्षयाप्रमाणेइतिद्वित्वनिर्देशः॥ किंपुनस्तद्वचनंसन्निकर्षादिनिवृ
त्त्यर्थं॥ ननुमत्यादिज्ञानंवर्णितंप्रमाणव्यपदेशंलभन्तेनसन्निकर्षादीनि॥ अथसन्नि
कर्षादिप्रमाणेकोदोषः॥ सन्निकर्षेप्रमाणेसकलपदार्थपरिच्छेदाभावस्तदभावा
त्सर्वतस्सन्निकर्षः प्रमाणमर्थाधिगमः फलमितितस्यसकलपदार्थपरिच्छेदो
नास्तिकुतस्तदभावात्तस्यसन्निकर्षस्याभावात्कथमितिचेदुच्यतेयेनकेनचित्सर्वज्ञे
नभवितव्यंतस्यार्थपरिच्छेदहेतुर्यदिसन्निकर्षः॥ स्वचतुष्टयत्रयविषयः॥ स्यात्त
त्रचतुष्टयविषयस्त्रयविषयश्चनसंभवतिमनसइंद्रियाणांवायुगपत्प्रवृत्तिन्यात्प्र
तिनियतविषयत्वाच्चानंतोहिज्ञेयस्त्रिकालविषयः॥ सूक्ष्मांतरितविप्रकृष्टरूपः
सकथमिहतैः सन्निकृष्यते॥ असंनिकृष्टेनतत्फलमवबोधः प्रवर्त्तते॥ अतः॥ सर्व
ज्ञाभावः स्यात्ततएवद्वयसंनिकर्षोपिनभवति सर्वगतत्वादात्मनः सकलेनार्थे

नसन्निकर्ष इति चेन्न तस्य परीक्षायामनुपपत्तेः ॥ यदि हि सर्वगत आत्मा स्यात्तस्य क्रि
याभावात्पुण्यपापयोः ॥ कर्तृत्वाभावेन तत्पूर्वकसंसारस्तदुपरति निरूपश्च मोक्षो नये
ष्यत इति करणग्रामस्य संसार इति चेन्न तस्याचेतनत्वात् स्यैव मोक्षप्रसक्तेश्च सर्वे
न्द्रियसन्निकर्षाभावश्च उपरिष्टाद्दृश्यते सर्वथाग्रहणप्रसंगश्च सर्वात्मना संनिकृ
ष्टत्वाद्घ्राणेन्द्रियाणि प्राप्यकारीणि तैरपि सर्वथार्थस्य ग्रहणं प्राप्नोति कुतः ॥ सर्वा
त्मना संनिकृष्टत्वात्तत्फलस्य साधारणत्वप्रसंगः ॥ स्त्री पुरुषसंयोगवत्तस्य संनि
कर्षस्य प्रमाणस्य यत्फलमर्थावबोधनं तेन च साधारणेन भवितव्यं कथं स्त्री पुरु
षसंयोगवद्यथा ॥ स्त्री पुरुषसंयोगजं सुखं तु भयोरपि साधारणं तथेन्द्रियाणां मन
सोऽर्थस्य भावबोधनं प्राप्नोति शय्यावदिति चेन्नाचेतनत्वात् ॥ स्यान्मतं यथा शय्यादी
नां पुरुषस्य च संयोगे साधारणेऽपि तत्फलं सुखं न शय्यादीनां भवति किं तर्हि पुरुष
स्यैवेति तथेहापीति तन्न किं कारणमचेतनत्वाद् चेतनानां शय्यादीनां सत्यपि संयो
गे सुखं न भवति इहापि तत एवेति चेन्नाविशेषात्स्यादेतन्मनः ॥ प्रभृतीनां सत्यपि

सन्निकर्षेन तत्फलमवबोधनं भवति कुतो चेतनत्वादेवेति तन्न किं कारणं ज्ञविशे
षात् ज्ञस्वभावत्वेनात्मनः सर्वेषामात्मादीनामविशिष्टं तत्र किं कृतोयं विशेषः सन्नि
कर्षफलमवबोधनमर्थान्तरभूतमपि सदात्मनेव संबध्यते न मनःप्रभृतिभिरिति
।ज्ञस्वभावत्वे चात्मनः॥प्रतिज्ञाहानिः॥ समवायादिति चेन्नाविशेषात् स्याद्तत्सम
वायो नामायुतसिद्धिलक्षणः संबंधोस्ति तत्कृतोयं विशेषइति तन्न किं कारण
मविशेषात् समवायो हि सर्वगतः॥ज्ञस्वभावशून्यत्वे समानेपि आत्मनैव ज्ञानं योजय
ति न मनःप्रभृतिभिरिति वचनं न विपश्चिन्मनः॥प्रीतिकरं एवमिंद्रियेपि योज्यं अ
नुमानोपम्ययोरनुमानागमयोरनुमानप्रत्यक्षयोरोपम्यप्रत्यक्षयोरोपम्यागा
मप्रत्यक्षयोः॥प्रत्यक्षपरोक्षयोश्च विपर्ययप्रसंगेमत्यादीनामविशेषेण प्रमा
णार्थमाह॥ आद्ये परोक्षं॥ आदिशब्दस्यानेकार्थवृत्तित्वे विवक्षातः तत्राद्यस्या
र्थसंग्रहः अयमादिशब्दोनेकार्थवृत्तिः क्वचित्प्राथम्ये वर्तते अकारादयोवर्णाः
ऋषभादयस्तीर्थकराइति क्वचित्प्रकारे भुजंगादयः॥परिहर्त्तव्याइति॥क्वचिद्व्यव

स्यायां सर्वादि सर्वनामेति॥ क्वचित्सामीप्येन ग्रहणादीनि क्षेत्राणीति क्वचिदवयवे दिदा
दिरिति। नचैहादिशब्दस्याविवक्षातः॥ प्राथम्यार्थो वेदितव्यः॥ आदौ भवमाद्यं किंप
नस्तन्मतेः श्रुतान्यग्रहणमप्रथमत्वाच्छ्रुतस्याग्रहणं न प्राप्नोतीति कुतः॥ अप्रथमत्वान्
हि सत्येव श्रुते प्रथमे॥ उत्तरापेक्षयादित्वमिति चेन्नातिप्रसंगात्तस्यान्मते॥ एवं ह्याश्रु
त्तरमपेक्ष्य श्रुतस्यादित्वमिति तन्न॥ किंकारणमतिप्रसंगादुत्तरमपेक्ष्य यथादि
त्वं कल्प्यते केवलं श्रुतस्य सर्वस्यादित्वं प्राप्नोति हि त्वनिर्देशादिति चेन्न तदवस्थत्वा
त्तस्यादेतद्धि त्वनिर्देशे न सर्वग्रहणं भवति अतो नातिप्रसंग इति तन्न किंकारणं त
दवस्थत्वादेवमप्यतिप्रसंग एव भवति कयोर्द्वयोर्ग्रहणमिति न वा प्रत्यासत्तेः श्रु
तेग्रहणं नवाणघदोषः॥ किंकारणं प्रत्यासत्तेः श्रुतग्रहणं भवति हि त्वनिर्देशाद
प्रमाणायदाद्यस्य प्रत्यासन्नं तदेव गृह्यते तस्य हि सामीप्यादौपचारिकं प्राथम्यम
स्तीति तथा सामीप्यं श्रुतेरर्थाच्च॥ उपान्ताउपान्तपरस्याप्राधान्याद्दवगमः॥ परोक्षं उ
पान्तानीन्द्रियाणि मनश्चानुपात्तं प्रकाशोपदेशादि तत्राप्राधान्याद्दवगमः॥ परोक्षं

राजवा·
१६४

उपात्तानींद्रियाणिमनश्चानुपात्तंप्रकाशोपदेशादितत्प्राधान्यादवगमः॥परोक्षं·
यथागतिशक्त्युपेतस्यापिस्वयमेवगंतुमसमर्थस्ययष्ट्याद्यवलंबनप्राधान्यंगमनं
तथामतिश्रुतावरणक्षयोपशमेसतिज्ञस्वभावस्यात्मनः॥स्वयमेवार्थानुपलब्धु
मसमर्थस्यपूर्वोक्तप्रत्ययप्रधानं॥ज्ञानंपरायत्तत्वात्तदुभयंपरोक्षमित्युच्यते॥अ
तएवप्रमाणाभावइत्यनुपालंभः अत्रान्येउपालभंतेपरोक्षंप्रमाणंनभवति
प्रमीयतेनेनेतिहिप्रमाणं॥नचपरोक्षेणकिंचित्प्रमीयतेपरोक्षत्वादेवेतिसोनुपा
लंभः कुतः अतएवयस्मात्परायत्तंपरोक्षमित्युच्यतेनानवबोधइति॥अभिहि
तलक्षणात्परोक्षादितरस्यसर्वस्यप्रत्यक्षत्वप्रतिपादनार्थमाह॥प्रत्यक्षमन्य
त्॥ अन्यत्त्रिविधंप्रत्यक्षमित्युच्यते॥किमिदंप्रत्यक्षंनामइंद्रियानिंद्रियानपेक्ष
मतीतव्यभिचारंसाकारग्रहणंप्रत्यक्षंइंद्रियाणिचक्षुरादीनिपंचानींद्रियंमनः
तेष्वपेक्षायस्यनविद्यतेअतस्मिंस्तदितिज्ञानंव्यभिचारः॥सोतीतोस्याकारोविक
ल्पः यत्सहाकारेणवर्त्ततेतत्प्रत्यक्षमित्युच्यतेइंद्रियानिंद्रियानपेक्षमितिविशे

षणांमतिष्ठतनिवृत्त्यर्थंस्मृतीतव्यभिचारमित्येतन्नहिभंगज्ञाननिवृत्त्यर्थौ।तन्नहिमिथ्या
दर्शनोदयाद्व्यभिचरतीतिसाकारग्रहणमित्येतदवधिकेवलदर्शनव्युदासार्थं
मनाकारंहितदितिकिंगतमेतदियतासूत्रेणाहोस्विदेवंवक्तव्यमितिगतंप्रतिप
न्नंकथमितिचेदुच्यते।अक्षंप्रतिनियतमितिपरापेक्षानिवृत्तिः।अक्ष्णोतिव्या
प्नोतिजानातीति।अक्षआत्मातत्प्राप्तक्षयोपशमः।प्रक्षीणावरणोवातमेवप्रति
नियतंप्रत्यक्षमितिविग्रहात्परापेक्षानिवृत्तिःकृताभवति।अधिकारादनाकार
व्यभिचारव्युदासः।अधिकृतमेतत्ज्ञानंसम्यगितिचततोनाकारस्यदर्शनस्यव्य
भिचारिणोज्ञानस्यचव्युदासःकृतोभवतिकरणात्ययेग्रहणाभाव।इतिचेन्नदृष्ट
त्वात्।सवत्स्यादेतत्करणात्ययेर्थस्यग्रहणंनप्राप्नोति।नह्यकरणस्यकस्यचिज्ज्ञा
नंदृष्टमितितन्न।किंकारणंदृष्टत्वात्कथमीशवद्यथारथस्यकर्त्ताअनीशःउपक
रणापेक्षोरथंकरोतिसतदभावेनशक्तोयः।पुनरीशस्तयोविशेषात्परिणामद्धि
विशेषः।सवाह्योपकरणानपेक्षः।स्वशक्त्यैवरथंनिवर्त्तयन्प्रतीतस्तथा

कर्मलीमसःआत्माक्षायोपशमिकेंद्रियानींद्रियप्रकाशाद्युपकरणापेक्षार्थसंवेत्ति
॥क्षयोपशमविशेषक्षयेचसतिकारणानपेक्षः॥ स्वशक्त्यैवार्थान्वेत्तीति
कोविरोधः॥ ज्ञानदर्शनस्वभावत्वाद्भास्करादिवत्यथाभास्करादयः प्रकाशस्वभा
वत्वात्प्रकाशांतरानपेक्षाःप्रकाश्यानर्थान्प्रकाशयंतितथाज्ञानदर्शनस्वभावःआ
त्मातदावरणक्षयोपशमशेषेसतिस्वशक्त्यैवार्थानाविष्करोतीतिसिद्धं इंद्रियमि
तंज्ञानंप्रत्यक्षंतद्विपरीतंपरोक्षमित्यविसंवादिलक्षणमितिचेन्नासम्यक्प्रत्यक्षा
स्यान्मतमिंद्रियव्यापारजनितंज्ञानंप्रत्यक्षंव्यतीतेंद्रियविषयव्या
त्येतदविसंवादिलक्षणंतथाचोक्तं प्रत्यक्षंकल्पनापोढंनामजा
त्यादश्चैरव्यपदिश्यते इंद्रियार्थसन्निकर्षोत्पन्नं
ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकःआतमेंद्रियमनोर्थसंनिकर्षाद्य
न्निष्पद्यतेतदन्यच्छ्रोत्रादिवृत्तिः॥प्रत्यक्षंसत्संप्रयोगेपुरुषस्येंद्रियाणांबुद्धि
जन्मतत्प्रत्यक्षमितिचसर्वैरभ्युपगम्यतेःअतएवतल्लक्षणमविसंवादित्वेन

व्यमितितन्नकिंकारणं आप्तस्यप्रत्यक्षाभावप्रसंगात् ॥ यदींद्रियनिमित्तमेवज्ञानं
प्रत्यक्षमिष्यते ॥ एवंसत्याप्तस्यप्रत्यक्षज्ञानंनस्यात् ॥ नहितस्येंद्रियपूर्वोर्थाधिग
मोयतस्यापिकरणपूर्वकमेवज्ञानंकल्प्यते ॥ तस्यासर्वज्ञत्वंपरस्तादुक्तं ॥ आगमा
दितिचेन्नतस्यप्रत्यक्षज्ञानपूर्वकत्वात् स्यादेतदागमादतींद्रियार्थाधिगमोव्याहत
शक्तेःसर्वार्थावबोधइतितन्नकिंकारणं तस्यप्रत्यक्षज्ञानपूर्वकत्वात् नहिक्षी
णदोषेणप्रत्यक्षज्ञानेनप्रणीतआगमोभवतिनसर्वः यदिसर्वः स्यादविशेषःस्या
त्सचनास्तीत्यागमस्यप्रामाण्याभावः ॥ अपौरुषेयादितिचेन्नतदसिद्धेः ॥ स्यादेत
दपौरुषेयआगमोस्तिअनादिनिधनः ॥ अत्यंतपरोक्षेष्वप्यर्थेष्वप्रतिहतगतिस्ततः
सर्वार्थाधिगमइतितन्नकिंकारणंतदसिद्धेः नचकश्चिदागमोपौरुषेयः ॥ सिद्धोस्ति
हिंसादिविधायिनः प्रामाण्यासिद्धेः ॥ अतींद्रियंयोगिप्रत्यक्षमितिचेन्नार्थाभावात्स्या
न्मतेयोगिनोतींद्रियंप्रत्यक्षंज्ञानमस्ति ॥ आगमविकल्पातीतंतेनासौसर्वानर्थान्प्रत्य
क्षंवेत्ति ॥ उक्तंच ॥ योगिनांगुरुनिर्देशाद्व्यतिभिन्नार्थमात्रदृकइतितन्नकिंकारणंअ

राजवा-
६६६

थीभावादक्षसंक्षांप्रनिवर्त्तते॥इतिप्रत्यक्षंनचायमर्थोयोगिनिविद्यतेऽसत्त्वाभावादथवा
नसंतिसर्वेभावाः॥स्वपरोभयहेत्वहेतुभ्यउत्पत्त्याद्यभावात्सामान्यविशेषयोश्चैकानेक
योर्द्वयस्यसंभवादिदोषोपपत्तेरतोऽर्थाभावान्निरालंबनंयोगिनोज्ञानंकथंस्यात्परिकल्पित
त्मनानसंतिभावानिर्विकल्पात्मनासंतीतिचायुक्तंतदधिगमोपायाभावान्नहिनिर्विक
ल्पोऽर्थोऽस्तितद्विषयंज्ञानंचेतिप्रतिपादयितुंशक्यंलक्षणाभावात्तदभावाच्चनस्ययोगि
नोभावाच्च॥नहिकश्चित्तत्परिकल्पितायोगीविद्यतेविशेषलक्षणविरहात्सर्वविर
हाच्चनिर्वाणप्राप्तौतत्रैतस्यान्निर्वाणंहिद्विविधंसोपधिविशेषनिरुपधिविशेषंचेति
तत्रसोपधिविशेषनिर्वाणेवोद्धास्तीतत्रापियथाबाह्यस्याभावः॥कल्प्यते॥तैरेवंतथा
भ्यंतरस्यापीति॥बोद्धुरभावएवयोगजधर्मानुग्रहादात्माकरणविरहितोव्यवेतीतिचे
न्नतस्यनित्यस्य॥क्रियस्यनित्यस्यसतस्तत्क्रियातदनुग्रहविकाराभावात्तल्लक्षणानु
पपत्तेश्चस्ववचनव्याघातात्तस्यप्रत्यक्षस्योक्तलक्षणमयिनोपपद्यते॥कुतः॥स्व
वचनव्याघातादन्यापोहिकप्रतिविहितान्येवशेषप्रमाणलक्षणानिततस्तत्रनोना

त्तितरां प्रतिविधानात्तरः ॥ किंतु तत्प्रमाणलक्षणादयासंभावनातिरस्कारार्थं किंचिद्ब्रू
प्रियामहे यदुक्तं कल्पनापोढं प्रत्यक्षमिति कल्पना हि जातिद्रव्यगुणक्रियापरिभाषा
कृतो वाग्व्यवहित्रविकल्पस्ततोपोढं कल्पनापोढं किं तत्सर्वथा कल्पनापो — मताहोक
थंचिदिति यदि सर्वथास्ति प्रमाणांस्तानं कल्पनापोढमित्येवमादिकल्पनाभ्योप्यपोढ
मित्यस्यादिवचनव्याघातः अथास्त्यादिकल्पनाभ्यो नपोढमिष्यते सर्वथा कल्प
नापोढमिति वचनव्याघातः ॥ अथ कथंचित्कल्पनापोढमेकांतवादत्यागात्पुनरपि
स्वपिस्ववचनव्याघात एव ॥ अथ मतं ॥ नास्माकमेकांतः कल्पनापोढमेवेति किम
र्थं तर्हि विशेषणं परमतापेक्षं विशेषणं परमते हि नामजात्यादिभेदोपचारकल्प
ना प्रोक्ता ततोपोढं न स्वविकल्पादिति ॥ उक्तं च ॥ सवितर्कविचारा हि पंचविज्ञानधा
तवः ॥ निरूपणानुस्मरणविकल्पनविकल्पका इति ॥ अत्रोच्यते ॥ आलंबने अर्पणा
वितर्कस्तत्रैवानुमर्षो विचारस्तस्य नामादिभिः ॥ प्रकल्पना निरूपणं पूर्वानुभू
तानुसारेण विकल्पनमनुस्मरणमित्यत्र धर्माः क्षणमात्रावस्थानेप्यक्षविषयवि

ज्ञानेषु निरन्वयेषु नोपपद्यन्ते॥ युगपदुत्पत्तेरनवस्थानाच्चातो ग्राह्यग्रहणाभावाभाव
श्चस्यात्सन्तानेतरगोविषाण॥ वत्॥ क्रमवृत्तित्वे च तेषां स्वार्थाभावप्रसंगश्चेति संताना
द्यपेक्षया तदुपपत्तिरिति चेन्न तत्परीक्षाक्षमत्वादतः॥ सर्वस्मिन्नसति विकल्पे ऽयं
विकल्पोऽस्त्ययं नास्तीति विज्ञानस्य विवेको नोपपद्यते सर्वविकल्पविरहाच्च नास्ति
त्वमेवास्य स्यात्॥ अनुस्मरणाद्यभ्युपगमे च एकस्यानेकक्षणवृत्तिनो वस्तुनोऽस्ति-
त्वं सिद्धमनुस्मरणादि हि स्वयमनुभूतस्यार्थस्य दृष्टं नाननुभूतस्य नान्यानुभूतस्येति
तथा मानसमपि प्रत्यक्षं नोपपद्यते॥ अपि च षण्णामनंतरातीतं विज्ञानं यद्धि तन्म
न इति॥ अतीतमसत्कथं विज्ञानस्य कारणं स्यात्॥ अथ पूर्वोत्तरनाशोत्पत्त्योर्युग
पद्वृत्तेः॥ कार्यकारणभावाः॥ कल्प्यते भिन्नसंतानयोरपि विनश्यदुत्पद्यमानयोः का
र्यकारणभावः॥ स्यादेकसंतानेशक्त्य नुमाभ्युपगमे प्रतिज्ञाहानिश्च स्यादपूर्वाधि
गमलक्षणानुपपत्तिश्च सर्वस्य ज्ञानस्य प्रमाणत्वोपपत्तेरपूर्वाधिगमलक्षणं प्र
माणमित्येतच्च नोपपद्यते कुतः॥ सर्वस्य ज्ञानस्य प्रमाणत्वोपपत्तेः॥ प्रमीयतेऽनेने

निप्रमाणं सर्वेणाच ज्ञानेन प्रमीयते यथांधकारेवस्थितानामुत्पत्त्यनंतरं प्रकाशः प्र
दीपः। उत्तरकालमपि न तं व्यपदेशं जहाति तदवस्थानकारणत्वादेवं ज्ञानमुत्पत्त्यनं
तरं घटादीनामवभासकं भूत्वा प्रमाणत्वमनुभूयोत्तरकालमपि न तं व्यपदेशं त्यजति
तदर्थत्वात्। अथ मतं क्षणे क्षणेऽन्य एव प्रदीपः। अपूर्वमेव प्रकाशकत्वमवलंब
इति। एवं सति ज्ञानमपि तादृगेवेति क्षणे क्षणेन्यत्वोपपत्तेरपूर्वाधिगमलक्षणमविशि
ष्टमिति। तत्र यदुक्तं स्मृतीच्छाद्वेषादिवत्पूर्वाधिगतविषयत्वात्पुनः। पुनरपि विधा
नं ज्ञानं प्रमाणमिति तत्प्रत्याहन्यते। स्वसंवित्तिफलानुपपत्तिश्चार्थांतरत्वाभावात्प्रमा
णं लोके फलवदुपलब्धं। अस्य च प्रमाणस्य केन चित्फलेन भवितव्यमिति। कश्चि
दाह। द्व्याभासं हि ज्ञानमुत्पद्यते। स्वाभासं विषयाभासं च। तस्योभयाभासस्य यत्संवे
दनं तत्फलमिति। तन्नोपपद्यते। कुतः। अर्थांतरत्वाभावात्। लोके प्रमाणात्फलमर्थां
तरभूतमुपलभ्यते। तद्यथा छेत्तृछेत्तव्यछेदनसंनिधाने द्वैधीभावः। फलं न च तथा
स्वसंवेदनमर्थांतरभूतमस्ति तस्मादस्य फलत्वं नोपपद्यते। सत्यमेवमेतत् अत एव

तस्मिन्नधिगमरूपेफलेस्वव्यापारप्रतीतेनानुपाधायप्रमाणोपचारइतिप्रमाणोप
चारानुपपत्तिर्मुख्याभावासतिमुख्येलोकेउपचारोदृश्यतेयथासतिसिंहेविशिष्ट
तिर्यग्गतिपंचेन्द्रियजातिनखदंष्ट्रासटोपभासुरकपिलनयननारकाद्यवयववि
शिष्टेअन्यत्रक्रौर्यशौर्यादिगुणसाधर्म्यात्सिंहोपचारः।।क्रियतेनचतथेहमुख्यं
प्रमाणमस्तितदभावात्फलेप्रमाणोपचारोनयुज्यते।।आकारभेदाद्भेदइतिचेन्न
एकांतवादत्यागात्स्यादेतद्ग्राहकविषयाभाससंवित्तिशक्तित्रयकारभेदात्प्रमा
णप्रमेयफलकल्पनाभेदइतितन्नकिंकारणंएकांतवादत्यागात्एकमनेकाकारमि
त्येतस्मिन्दर्शनेनकथमेकांतवादेयुज्यतेयदिह्येवमभ्युपगम्यतद्रूपेकोपरितोषः
रूपाद्यनेकात्मकमेकंपरमाणुद्रव्यंज्ञानाद्यनेकात्मद्रव्यमिति।।अथद्रव्यसिद्धिर्मा
भूदितिआकाराएवज्ञानमितिकल्प्यतेएवंसतिकस्यतेआकाराइतितेषामप्य
भावः।।स्यात्किंचतेषामाकाराणांयौगपद्येनवाउत्पत्तिः।।स्यात्क्रमेणवा।।यदियौ
गपद्येनहेतुहेतुमद्भावोविरुध्यतेअथक्रमेणक्षणिकस्यविज्ञानस्याकाराणां

कथंक्रमः। यदिस्यादधिगमस्तत्रानभावात्तरमितिव्याहन्यते। अपि च वाह्यस्यवि
ज्ञेयस्याभावेंतरंगाकारत्रयकल्पनायांप्रमाणाप्रमाणाभासोनोपपद्यते। अंतरंगा
काराभेदात्सद्वस्त्वसदितिकल्पयतितत्प्रमाणाभासमसद्वेवेतियत्प्रतिपद्यते
तत्प्रमाणमित्यस्तिविशेषइतिचेत्प्रमेयद्वयव्यवस्थापितप्रमाणद्वयकल्पनाव्या
घातः। स्वलक्षणविषयंहिप्रत्यक्षंसामान्यलक्षणविषयमनुमानंस्वलक्षणमसा
धारणोधर्मः। विकल्पातीतत्वादिदंतदित्यव्यपदेश्यम्। तद्विपरीतंसामान्यलक्षण
मितिसर्वस्यासत्वेकिंकृतोयंविशेषः। असत्वंहिनस्वतोभिद्यतेसंबंधिभेदाश्रयाद्भेदः
घटस्यासत्वंपटस्यासत्वमितितेषांघटादीनांसंबंधिनामभावेतद्विशेषाभावइतिस्या
न्मतंख्यात्यतिताननेरत्नदृष्टिरिष्टमेवाप्रतर्कितमुपस्थितमतएवसर्वेविज्ञानाभिधा
नमयथार्थपरिकल्पितार्थत्वान्निर्विकल्पार्थगोचरमालीयमेवविज्ञानंप्रमाणमि
ति उक्तंच। शास्त्रेषुप्रक्रियाभेदैरविद्यैवोपवर्ण्यते। अनागमविकल्पाहिस्वयंविद्या
प्रवर्त्ततइति। एवञ्चानुपपन्नंतदधिगमोपायाभावात्। उक्तंच। प्रत्यक्षबुद्धिः क्रम

ष्विविषयत्वादनर्थान्तरत्वं रूढिवशात्तेषां मत्यादीनां शब्दानां मतिज्ञानावरणक्षयो
पशमनिमित्तायामर्थोपलब्धौ वृत्तेरनर्थान्तरत्वं वेदितव्यं कथं पुनर्मननं मन्यत इति
वा मतिरित्येवमाद्यर्थविषयाणामेषामनर्थान्तरत्वमित्यत आह रूढिवशादिति यथा
गच्छतीति गौरित्यंगीकृतमपि गमनेन शब्दवृत्तिनियमकारणं रूढिवशात्क्वचिदेव वर्त
ते तथा मत्यादयः॥ शब्दव्युत्पत्तिकर्मणि सत्यपि पर्यायेण भेदे क्वचिदेव वर्त्तत इत्यन
र्थान्तरत्वमवसीयते शब्दभेदादर्थभेदो गवाश्वादिवदिति चेन्न ततः संशयात्स्यादेतन्म
त्यादीनां शब्दानां परस्परतोऽर्थान्तरत्वमस्ति कुतः शब्दभेदाद्गवाश्वादिवदिति तन्न
किं कारणमतः॥ संशयाद्यत एव मत्यादीनां शब्दभेदादन्यत्वमाह भवानत एव संशयः
कथमिन्द्रादिवदर्थं द्विशक्रपुरंदरादिशब्दभेदेऽपि नार्थभेदस्तथा मत्यादिशब्दभेदेप्य
र्थाभेद इति॥ न हि यत एव संशयस्तत एव निर्णयः॥ किंच शब्दाभेदेप्यर्थैकत्वप्रसंगा
द्यस्य शब्दभेदोऽर्थभेदे हेतुरिति मतं तस्य वागादिनवार्थेषु गोशब्दाभेददर्शनाद्वागाद्य
र्थानामेकत्वमस्तु अथ नैतदिष्टं न तर्हि शब्दभेदोऽन्यत्वस्य हेतुः॥ किंच आदेशव

चनाद्यर्थेन्द्रादीनामेकद्रव्यपर्यायादेशात्स्यादेकत्वंप्रतिनियतपर्यायार्थादेशात्त्वस्याद
न्यत्वंइंदनादिंद्रः शकनाच्छक्रः पूर्दारणात्पुरंदरइतितथामत्यादीनामेकद्रव्यपर्याया
देशात्स्यादेकत्वंप्रतिनियतार्थपर्यायादेशात्त्वस्यान्नानात्वं मननंमतिः स्मरणंस्मृतिः
संज्ञानंसंज्ञा चिंतनंचिंता अभिमुख्येननियतंबोधनमभिबोधइति पर्यायशब्दोल
क्षणंनेतिचेन्न ततोनन्यत्वात् स्यान्मतंमत्यादयआभिनिबोधपर्यायशब्दानाभिनि
बोधस्यलक्षणंमनुष्यादिवद्यथामनुष्यमर्त्यमनुजमानवादयः पर्यायशब्दाः म
नुष्यस्यलक्षणंनभवंतीतितन्नकिंकारणंततोनन्यत्वादिहपर्यायिणोनन्यपर्याय
शब्दः सलक्षणंकथमोष्णाग्निवद्यथापर्यायशब्दः उष्णमग्नेः पर्यायिणोनन्यत्वा
दग्नेर्लक्षणंभवतितथापर्यायशब्दामत्यादयः आभिनिबोधिकज्ञानपर्यायिणोन
न्यत्वेनाभिनिबोधस्यलक्षणं अथवाततोन्यत्वात् यथामनुष्यमर्त्यमनुजमानवा
दयः असाधारणत्वादन्यघटादिद्रव्यासंबंधिनोमनुष्यादनन्यत्वात्तस्यलक्षणं
अन्यथाहिमनुष्यादिपर्यायालक्षणत्वान्मनुष्यभावोभवेत्ततोनमनुष्यादिलक्षणं

व्यतिरेकिणस्यान्मल्लक्षणमस्तीतिनचाभावइष्यते॥ पर्यायशब्दोलक्षणं॥ तथाम
तिस्मृत्यादयः॥ असाधारणत्वादन्यत्रानासंभविनः॥ अभिनिबोधादनन्यत्वात्तस्यल
क्षणमितश्चपर्यायशब्दोलक्षणं कस्मात्कृत्वाप्रत्यागतलक्षणग्रहणात्कथमरुल
वह्निर्यथाग्निरितिगत्वाप्रत्यावुद्धिरुक्तपर्यायशब्दंगच्छतिकथंगच्छतिकोयमग्निर्यउल्म
इतिउल्मइतिचगत्वाबुद्धिः प्रत्यागच्छतिकोयमुल्मः योग्निरितितथामतिरितिगत्वाबु
द्धिः स्मृतिंगच्छतिकामतिर्यास्मृतिरिति ततः स्मृतिरितिगत्वाबुद्धिः प्रत्यागच्छतिकास्मृ
तिर्यामतिरिति एवमन्यत्रेष्वपितस्मात्कृत्वाप्रत्यागतलक्षणग्रहणात्पश्यामः पर्याय
शब्दोलक्षणमिति॥ किंच पर्यायहेतुविध्यादग्निवह्न्यथाग्नेरालम्भनउल्मपर्यायोलक्ष
णंनधूमस्तस्यवाह्येंधननिमित्तत्वेकादाचित्कत्वात्तथा आभ्यंतरोमत्यादिपर्यायश्चा
लम्भनत्वाल्लक्षणंनानालम्भनोवाह्योमत्यादिशब्दः॥ उक्तः॥ तत्प्रत्यायनसमर्थस्त
स्यवाह्यकरणप्रयोगनिमित्तत्वादितिकरणस्यवाभिधेयार्थत्वाद्दृथवाइतिकरणी
यमभिधेयार्थः॥ प्रयुज्यते मतिः स्मृतिः संज्ञाचिंताभिनिबोधइतियोर्थोभिधीयते

राजवा॰
७१

तन्मतिज्ञानमिति ततो लक्षणत्वमुपपद्यते। श्रुतादीनामेतैरनभिधानान्न ह्येतैर्मत्यादिभिः
श्रुतादीन्यभिधीयंते। वक्ष्यमाणलक्षणसद्भावाच्च श्रुतादीनां हि लक्षणं वक्ष्यते ततस्तेषा
मत्यप्रसंगः। यद्येवं लक्षणं मतिज्ञानमवधार्यते। अथास्यात्मलाभे किं निमित्तमित्यत आ
ह॥ तदिंद्रियानिंद्रियनिमित्तं॥ अथवा आत्मप्रसादाविशेषात्सर्वज्ञानानामेकत्व
प्रसंगे निमित्तभेदान्नानात्वं प्रतिपिपादयिषन्नवीति सत्यप्यस्मिन्नविशेषे पृथक्क
मेषामवैमः कुतः। यस्मात्तदिंद्रियानिंद्रियनिमित्तमिति किमिदमिंद्रियं नाम इंद्रिय
स्यात्मनोर्थोपलब्धिलिंगमिंद्रियं। इंद्र आत्मा तस्य कर्ममलीमसस्य स्वयमर्थान्ग्रहीतु
मर्थस्यार्थोपलंभने यल्लिंगं तदिंद्रियमित्युच्यते॥ अथ किमिदमनिंद्रियमः निंद्रियं
मनोनुदरावत्। मनोंतःकरणमनिंद्रियमित्युच्यते। कथमिंद्रियप्रतिषेधेन मन उच्य
ते यथा अयमब्राह्मण इत्युक्ते ब्राह्मणत्वरहिते कस्मिंश्चित्संप्रत्ययो भवति। तथा इंद्रलिं
गविरहितेन्यस्मिन्ननिंद्रियमिति संप्रत्ययः स्यात् न तिंद्रलिंग एव मनसि नैष दोषः ई
षत्प्रतिषेधात्। कथमनुदरावत् यथा अनुदरा कन्या इति नास्या उदरं न विद्यते किंतु गर्भ

भारोद्वहनसमर्थोदराभावादनुदरा तथानिंद्रियमितिनास्येंद्रियत्वाभावः॥ किंतुच
क्षुरादिवत्प्रतिनियतदेशविषयावस्थानाभावादनिंद्रियंमनइत्युच्यते॥ अंतरंगंत
त्करणमिंद्रियानपेक्षत्वान्नास्येंद्रियेष्वपेक्षास्तीतींद्रियानपेक्षंनह्यस्यगुणदोषवि
चारस्वविषयप्रवृत्तौइंद्रियापेक्षास्तिततोंतरंगंतत्करणमितिवेदितव्यंतदुभयम
वष्टभ्ययदुत्पद्यतेतन्मतिज्ञानं॥ तदित्यग्रहणमनंतरत्वादितिचेन्नोत्तरार्थत्वात्
स्यादेतन्मतिज्ञानस्यानंतरत्वादनेनाभिसंबंधोभवतीतितदित्येतद्ग्रहणमनर्थकमि
तितन्नकिंकारणंउत्तरार्थत्वादुत्तरार्थंह्येतत्॥ इतरथाह्यवग्रहेहावायधारणा
मतिज्ञानभेदाइतिविज्ञातुमशक्यमतस्तद्ग्रहणेपुनः॥ क्रियमाणेतन्मतिज्ञानमवग्र
हादयइतिसंबंधः॥ सुगमोभवति॥ यदेतस्मिन्निमित्तद्वयसंनिधानेसत्यात्मला
भेप्रत्यागूर्णं॥ अनिवर्णितभेदमितितद्भेदप्रतिपत्त्यर्थमाह॥ अवग्रहेहावाय
धारणा॥ विषयविषयिसन्निपातसमनंतरमाद्यग्रहणमवग्रहः॥ विषयविषयिस
न्निपातेदर्शनंभवतितदनंतरमर्थस्यग्रहणमवग्रहः॥ अवगृहीतेऽर्थेतद्विशेषा

कांक्षणमीहायथापुरुषइत्यवगृहीतेतस्यभाषावयोरूपादिविशेषैराकांक्षणमी
हाविशेषणनिर्ज्ञानाद्याथात्म्यावगमनमवायः।भाषादिविशेषनिर्ज्ञानात्तस्यया
थात्म्येनावगमनमवायः।दाक्षिणात्योयंयुवागौरइतिवानिर्ज्ञातार्थाविस्मृतिर्धा
रणाभाषावयोरूपादिविशेषैर्याथात्म्येननिर्ज्ञातस्यपुरुषस्योत्तरकालेसएवा
यमित्यविस्मरणंयतोभवतिसाधारणातराते मतिज्ञानभेदाः अत्राहइदमत
पूर्व्योकिंकृतमेषामुच्यते।अवग्रहादीनामानुपूर्व्यमुत्पत्तिक्रमापेक्षं अवग्र
हपूर्वकत्वादितरेषामादावावग्रहः।क्रियतेतर्थेतरेष्वपियोज्यं अत्राह।अवग्र
हेहयोरप्रमाणत्वंसद्भावेपिसंशयदर्शनाच्चक्षुर्वद्यथाचक्षुषिनिर्णयः।सत्ये
वतस्मिन्किमयंस्थाणुराहोस्वित्पुरुषइतिसंशयदर्शनात्तथावग्रहेपिसतिनिनि
र्णयईहादर्शनादीहायांचननिर्णयः।यतोनिर्णयार्थमीहानत्वीहैवनिर्णयः।य
श्चनिर्णयोनभवतिससंशयः।जातीयत्वप्रामाण्यमनयोरितिअवग्रहवचनाद्यत
नुक्तः।पुरुषोयमितिअवग्रहस्तस्यभाषावयोरूपादिविशेषाकांक्षणमीहेति

त्तिसंशयस्वप्रतिपत्तिरेवेतितन्नकिंकारणंसंशयानतिवृत्तेः॥कथमालोचनवग्रहयोर्हि

र्थालोचनेकिमयमर्थः॥स्थाणुरुतपुरुषइतिसंशयानतिवृत्तिस्तयोर्हीयमर्थइ

त्यवग्रहेईहाद्यपेक्षत्वात्संशयाननिवृत्तिरुच्यतेलक्षणभेदादन्यत्वमग्निजलवद्यथा

ग्निजलयोर्दहनप्रकाशनादिद्रवत्वस्नेहनादिप्रतिनियतलक्षणभेदादन्यत्वंतथाव

ग्रहसंशययोर्ह्यलक्षणभेदादन्यत्वंकोसौलक्षणभेदउच्यते॥अनेकार्थानिश्चितापर्यु

दासात्मकःसंशयस्तद्विपरीतोवग्रहः स्थाणुपुरुषाद्यनेकार्थालंबनसंनिधानादने

कार्थात्मकः॥संशयएकपुरुषाद्यन्यतमात्मकोऽवग्रहः॥स्थाणुपुरुषानेकधर्मानि

श्चितात्मकः॥संशयः यतोनस्थाणुधर्मान्पुरुषधर्मान्वानिश्चिनोतिअवग्रहस्तुपु

रुषाद्यन्यतमैकधर्मनिश्चयात्मकः स्थाणुपुरुषानेकधर्मापर्युदासात्मकः॥सं

शयः॥यतोनप्रतिनियतान्स्थाणुपुरुषधर्मान्पर्युदस्यतिसंशयः॥अवग्रहःपुनः

पर्युदासात्मकः॥सह्यन्यांभवादीन्पर्यायान्पर्युदस्यपुरुषइत्येकपर्यायालंबनःसंश

यतुल्यत्वमपर्युदासादितिचेन्ननिर्णयविरोधात्संशयस्यस्यादेतत्संशयतुल्योवग्र

हः कुतः अपर्युदासाद्यथा संशयः स्थाणुपुरुषविशेषापर्युदासात्मकस्तथावग्र
होपि पुरुष इति भाषावयोरूपाद्यपर्युदासात्मकः अतश्चैतदेवं यदुत्तरकालं तद्विशेषा
र्थमीहामारभत इति तन्न किं कारणं निर्णयविरोधात् संशयस्य संशयो हि निर्णयवि
रोधी न त्ववग्रहः निर्णयदर्शनादीहायां तत्प्रसंग इति चेन्नार्थादानात् स्यादेतद्यदि नि
र्णयाविरोध्यवग्रह इति न संशयः नन्वीहाया निर्णयविरोधित्वात् संशयत्वप्रसंग इ
ति तन्न किं कारणं अर्थादानात् अवगृह्यार्थं तद्विशेषलिप्सार्थमर्थादानमीहा संशयः
पुनर्नार्थविशेषालंबनः संशयपूर्वकत्वाच्च संशयो हि पूर्वमुपजायते ईहायाः कथ
मिह पुरुषमवगृह्य किमयं दाक्षिणात्य उतोदीच्य इत्येवमाद्यप्रतिपत्तौ संशयः एवं सं
शयितस्योत्तरकालं विशेषोपलिप्सां प्रतियतनमीहेति संशयादर्थान्तरत्वं अत एव
संशयावचनमर्थग्रहीतेः अत एव सूत्रे संशयो नोक्तः कुतः अर्थग्रहीते सति संश
ये ईहायाः प्रवृत्तिर्नास्तीति आह किमयमपाय उतावाय इति उभयथा न दोषः अन्य
तरवचनेन्यतरस्यार्थगृहीतत्वात् यदा न दाक्षिणात्योयमित्यपायं त्यागं करोति तदा

उदीच्यइतिऽवायोधिगमोर्थगृहीतः॥यदाचोदीच्यइत्यवायंकरोतितदानदीक्षिरणा
त्योयमित्यपायोर्थगृहीतः कश्चिदाहयदुक्तंभवताविषयविषयिसन्निपातेदर्शनंभ
वतितदनंतरमवग्रहइतितदयुक्तमवैलक्षण्यात्नह्यवग्रहाद्विलक्षणंदर्शनमस्ती
त्यत्रोच्यतेनवैलक्षण्यात्कथमिहचक्षुषाचक्षुर्दर्शनावरणवीर्यांतरायक्षयोपश
मांगोपांगनामावष्टंभादविभावितविशेषसामर्थ्येनकिंचिदेतद्वस्त्विति आलोकनम
नाकारंदर्शनमित्युच्यतेबालवद्यथाजातमात्रस्यबालस्यप्राथमिकउन्मेषोऽसावभा
वितरूपद्रव्यविशेषालोचनाद्दर्शनंविवक्षितंतथासर्वेषांततोद्वित्रादिसमयभावि
षून्मेषेषुचक्षुरवग्रहमतिज्ञानावरणवीर्यांतरायक्षयोपशमांगोपांगनामावष्टंभा
द्रूपमिदमितिविभावितविशेषोऽवग्रहः यत्प्रथमसमयोन्मेषितस्यबालस्यदर्शनंत
द्यद्यवग्रहजातीयत्वात्ज्ञानमिष्टंतन्मिथ्याज्ञानंवास्यात्सम्यग्ज्ञानंवामिथ्याज्ञान
त्वेपिसंशयविपर्ययानध्यवसायात्मकंस्यात्तच्चनतावत्संशयविपर्ययात्मकंचावेष्टि
तस्यसम्यग्ज्ञानपूर्वकत्वात्प्राथमिकत्वाच्चतन्नास्तीतिनवानध्यवसायरूपंजात्यंध

व्यक्तवस्तुमात्रप्रतिपत्तेर्नसम्यग्ज्ञानमर्थाकारावलंबनाभावात्किंच
कारणनानात्वात्कार्यनानात्वसिद्धेः यथामृत्तंतुकारणभेदाद्घटपटकार्यभेदस्तथा
दर्शनज्ञानावरणक्षयोपशमकारणभेदात्तत्कार्यदर्शनज्ञानभेदइति अस्तिप्राग
वग्रहाद्दर्शनंततः शुक्लकृष्णादिरूपविज्ञानसामर्थ्योपेतस्यात्मनः॥ किंशुक्लंउत
कृष्णमित्यादिविशेषाप्रतिपत्तेः संशयस्ततः॥ शुक्लविशेषाकांक्षणंप्रतीहनमीहा
शुक्लमेवेदंनकृष्णमित्यवायनमवायः॥ अवेतस्याविस्मरणंधारणाएवंश्रोत्रा
न्यस्यपियोज्यं॥ तदावरणकर्मक्षयोपशमविकल्पात्प्रत्येकमवग्रहादिज्ञाना
कथंज्ञानावरणमूलप्रकृतेः॥ पंचोत्तरप्रकृतयस्तासामप्युत्तरो
विशेषाः॥ संतिज्ञानावरणस्योत्तरप्रकृतयः॥ असंख्येयालोकाइतिवच
ईहादीनाममतिज्ञानप्रसंगःकुतः परस्परकार्यत्वादवग्रहः॥ कारणंईहाका
ह्यकारणमवायः कार्यमवायः कारणंधारणाकार्यं॥ नचेहादीनामिंद्रियानिंद्रि
त्वमस्तीतिनैवदोषः॥ ईहादीनामनिंद्रियनिमित्तत्वान्मतिज्ञानव्यपदेशः य

घेवंस्तुतस्यापिप्राप्नोतिइंद्रियग्रहीतंविषयत्वादीहादीनामिंद्रियानिमित्तत्वमप्यु
पचर्यतेनतुस्तुतस्यायेविधिरस्तितस्यानिंद्रियविषयत्वादितिस्तुतस्याप्रसंगः॥य
घेवंचक्षुरिंद्रियेहादिव्यपदेशाभावइतिचेन्नेंद्रियशक्तिपरिणतस्यजीवस्यभावेंद्रि
यत्वेतद्व्यापारकार्यत्वादिंद्रियभावपरिणतोहिजीवोभावेंद्रियमिष्यते॥तस्यविषया
कारपरिणामाईहादयइतिचक्षुरिंद्रियेहादिव्यपदेशइतियइमेवग्रहादयोमतिज्ञा
नप्रभेदाउक्ताः॥तेज्ञानावरणक्षयोपशमनिमित्ताः केषांभवंतीत्युच्यते॥ बहुबहु
विधक्षिप्रानिःसृतानुक्तध्रुवाणांसेतराणां॥ संख्यावैपुल्यवाचिनोबहुशब्दस्य
ग्रहणमविशेषात्॥बहुशब्दोहिसंख्यावाचीवैपुल्यवाचीचतस्योभयस्यापिग्रहणं
कस्मादविशेषात्संख्यायामेकः॥द्वौबहवइतिवैपुल्येबहुरोदनः॥बहुसूपइति॥बहु
वग्रहाद्यभावः प्रत्यर्थवशवर्तित्वादितिचेन्नसर्वदैकप्रत्ययप्रसंगात्स्यादेतत्प्रत्य
र्थवशवर्त्तिविज्ञानंनानेकमर्थग्रहीतुमलमतोबहुग्रहादीनामभावइति॥तन्नकिं
कारणंसर्वदैकप्रत्ययप्रसंगात्यथारण्यपत्काःकश्चिदेकमेवपुरुषमवलोकयन्ना

नेकइत्यवैतिमिथ्याज्ञानमन्यथास्यादेकत्रानेकबुद्धिर्यदिभवेत्तथानगरवनस्कंधा
वारावगाहिनोपितस्यैकप्रत्ययः॥स्यात्सार्वकालिकः॥अत॰आनेकार्थग्राहिविज्ञा
नस्यात्यंतासंभवान्नगरवनस्कंधावारप्रत्ययनिवृत्तिर्नैना॥संज्ञाह्येकार्थनिवेशि
न्यस्तस्माल्लोकसंव्यवहारनिवृत्तिः॥किंचनानात्वप्रत्ययाभावाद्यस्यैकार्थमेवनि
यमाज्ज्ञानंतस्यपूर्वज्ञाननिवृत्तावुत्तरज्ञानोत्पत्तिः॥स्यादनिवृत्तौवाउभयथाचदो
षः॥यदिपूर्वमुत्तरज्ञानोत्पत्तिकालेस्तियदुक्तमेकार्थमेकमनस्त्वादिति॰आदौवि
॥यथैकंमनोनेकप्रत्ययारंभकंतथैकप्रत्ययोनेकार्थोभविष्यति॰अनेक
कालसंभवान्नन्वनेकार्थोपलब्धिरुपपद्यस्यतेतत्रयदभिमतं॥मेवे
कस्यज्ञानमेकंचार्थमुपलभतइति॰अस्यव्याघातः॥अथपुनर्निवृत्तेपूर्वस्मिन्नु
त्तरज्ञानोत्पत्तिः॥प्रतिज्ञायतेननसर्वथैकार्थमेवज्ञानमित्यंतइदमस्मादन्यदिति
व्यवहारोनस्यादृष्टिश्चयस्तस्मान्नकिंचिदेतत्किंच॰आपेक्षिकसंव्यवहारनिवृत्ते
यस्यैकज्ञानमनेकार्थविषयंनविद्यतेतस्यमध्यमाप्रदेशिन्योर्युगपदनुपलंभात्त

हिषयदीर्घह्रस्वव्यवहारोविनिवर्त्तेतस्याविक्षिको ह्यसौनचापेक्ष्यास्ति किंचसंशया
भावप्रसंगादेकार्थविषयवर्त्तिनिविज्ञानेस्थाणौपुरुषेवाप्राक्तनस्ययजन्मस्यान्नाभ
योः ।। प्रतिज्ञातविरोधात्तयदिस्थाणौपुरुषाभावात्स्थाणुर्वेध्यादत्रवत्संशयाभा
वः ।। स्यात्तस्थपुरुषेतथास्थाणुद्वयानपेक्षत्वात्संशयोनस्यात् । तत्पूर्ववत्त्वभा
वः इष्टः ।। अतोनैकार्थग्राहिविज्ञानकल्पनाश्रेयसीति । किंचईप्सितनिष्पत्त्य
नियमाद्विज्ञानस्यैकार्थावलंबित्वेचित्रकर्म्मणि निष्णातस्यचैत्रस्यपूर्णकलशामा
लिखतः स्रक्क्रियाकलशावत्प्रकारग्रहणविज्ञानभेदादितरेतरविषयसंगमाभा
वादनेकविज्ञानोत्पादनिरोधक्रमेसत्यनियमेननिष्पत्तिः ।। स्याद्दृष्टस्तुसानियमेनसा
त्वेकार्थग्राहिणिविज्ञानेविरुध्यते तस्मान्नानार्थोपिप्रत्ययोभ्युपेयः । द्व्यादिप्रत्य
याभावाच्चएकार्थविषयवर्त्तिनिविज्ञानेद्वाविमाविमेत्रयइत्यादिप्रत्ययस्याभावः
यतोनैकंविज्ञानंद्व्यादिष्वर्थानांग्राहकमस्तिसंतानसंस्कारकल्पनायांचविकल्पात
पत्तिः ।। संतानेसंस्कारेचकल्प्यमानेविकल्पयोरनुपपत्तिस्ससंतानः संस्कारश्च

ज्ञानजातीयोवास्यादज्ञानजातीयोवायद्यज्ञानजातीयः ननन्तः ॥ किंचित्रयोज
नमस्ति ज्ञानजातीयत्वेपिएकार्थग्राहित्वंस्यादनेकार्थग्राहित्वंस्यादनेकार्थग्राहि
त्वंवायद्येकार्थग्राहित्वंदोषविधिस्तदवस्था ॥ अथानेकार्थग्राहित्वंप्रतिज्ञाहानिः
प्रसज्यते ॥ विधग्रहणंप्रकारार्थं ॥ विधयुक्तगतप्रकारासमानार्थाइतिप्रकारा
र्थोविधशब्दः ॥ बहुविधंबहुप्रकारमित्यर्थः ॥ क्षिप्रग्रहणमचिरप्रतिपत्त्यर्थं
अचिरप्रतिपत्तिः कथंस्यादिति क्षिप्रग्रहणंक्रियते ॥ अनिःसृतग्रहणमसक
लपुद्गलोद्गमार्थं ॥ अनिःसृतग्रहणंक्रियते ॥ असकलपुद्गलोद्गमार्थं ॥ अनुक्ता
मभिप्रायेणप्रतिपत्तेः ॥ अभिप्रायेणप्रतिपत्तिरस्तीत्यनुक्तग्रहणंक्रियते ॥ ध्रुवं
यथार्थग्रहणात् ध्रुवग्रहणंक्रियते यथार्थग्रहणमस्तीतिसेतरग्रहणाद्विपर्या
विरोधः ॥ अल्पमल्पविधंचिरंनिःसृतमुक्तमध्रुवमितिएतेषामवरोधोभवतिसेत
रग्रहणादवग्रहादिसंबंधात्कर्मनिर्देशः ॥ बह्वादीनामितिकर्मनिर्देशः अव
ग्रहाद्यपेक्षोवेदितव्यः बह्वादीनामा

क्षयोपशमविशुद्धिप्रकर्षयोगे सति बह्वादीनामवग्रहादयो भवंतीति तेषां ॥ अवग्रह
णामादौ क्रियंते ते च प्रत्येकमिंद्रियानिंद्रियैः षड्भेदा द्वादशविकल्पा नेयाः ॥ तद्यथा ॥ प्र
कृष्टश्रोत्रेंद्रियावरणवीर्यांतरायक्षयोपशमांगोपांगनामोपष्टंभात् संभिन्नश्रो
तान्यो वा युगपत्ततविततघनसुषिरादिशब्दश्रवणाद्बहुशब्दमवगृह्णाति ॥ अ
ल्पश्रोत्रेंद्रियावरणक्षयोपशमपरिणाम आत्मा ततशब्दादीनामन्यतममल्पं
शब्दमवगृह्णाति ॥ प्रकृष्टश्रोत्रेंद्रियावरणक्षयोपशमादिसन्निधाने सति
ततादिशब्दविकल्पस्य प्रत्येकमेकद्वित्रिचतुःसंख्येयासंख्येयानंतगुणस्या
वग्राहकत्वाद्बहुविधमवगृह्णात्यल्पविशुद्धिः श्रोत्रेंद्रियादिपरिणामकार
ण आत्मा ततादिशब्दानामेकविधावग्रहणादेकविधमवगृह्णाति प्रकृष्ट
श्रोत्रेंद्रियावरणक्षयोपशमादिपरिणामित्वात् क्षिप्रं शब्दमवगृह्णात्यल्पविशु-
२ द्धिः श्रोत्रेंद्रियावरणक्षयोपशमादिपारिणामिकत्वाच्चिरेण शब्दमवगृह्णा
ति सुविशुद्धिः श्रोत्रादिपरिणामात्साकल्येनानुच्चारितस्याग्रहणादनिःसृत

मवगच्छति निसृतं प्रतीतं प्रकृष्टविशुद्धिश्रोत्रेन्द्रियादिपरिणामकारणत्वादेक
वर्णनिर्गमेपि अभिप्रायेणैवानुच्चारितं शब्दमवगच्छति इमं भवान् शब्दं वक्ष्यती
त्यथवा स्वरसंचारणात्प्राक्तंत्रीद्रव्यातोद्याद्या
अभिप्रायेणावगच्छत्याचष्टे भवानिमं शब्दं वादयिष्यतीत्युक्तं प्रतीतं संक्लेशपरि
णामनिरुत्सुकस्य यथानुरूपश्रोत्रेन्द्रियावरणक्षयोपशमादिपरिणामकार
णावस्थितत्वाद्यथा प्राथमिकं शब्दग्रहणं तथावस्थितमेव शब्दमवगच्छति
नोनं नाभ्यधिकं पौनःपुन्येन संक्लेशविशुद्धिपरिणामकारणापेक्षस्यात्मनो य
थानुरूपपरिणामोपात्तश्रोत्रेन्द्रियसान्निध्येपि तदावरणस्येषदीषदाविर्भावा
त्पौनःपुनिकं प्रकृष्टावकृष्टश्रोत्रेन्द्रियावरणादिक्षयोपशमपरिणामत्वाच्चाध्रु
वमवगच्छति शब्दं क्वचिद्बहु क्वचिदल्पं क्वचिद्बहुविधं क्वचि
क्वचिच्चिरेण क्वचिदनिःसृतं क्वचिन्निःसृतं क्वचिदुक्तं क्वचिदनुक्तं।
विधयोः कः प्रतिविशेषः

उच्यतेनविशेषदर्शनाद्यथाकश्चिद्बहूनिशास्त्राणिमौनेनसमान्यार्थेनाविशेषिते
नव्याचष्टेनतुबहुभिर्विशेषितार्थैः कश्चित्तुतेषामेवबहूनांशास्त्राणांबहुभिर
र्थैः परस्परातिशययुक्तैर्बहुकल्पैर्व्याख्यानंकरोति तथाततादिशब्दग्रहणा
विशेषेपिप्रत्येकंततादिशब्दानामेकद्वित्रिचतुःसंख्येयासंख्येयानंतगुण
परिणतानांग्रहणंतद्बहुविधग्रहणंयत्तत्तादीनांसामान्यग्रहणंतद्बहुग्रहणं
स्याहउक्तनिःसृतयोःकः प्रतिविशेषः यतःसकलशब्दनिःसरणान्निसृ
तमुक्तमप्येवंविधमेवोच्यते अन्योपदेशपूर्वकंशब्दग्रहणमुक्तंगोशब्दोयमि
तिस्वतएवग्रहणंनिसृतंचक्षुषातुविशुद्धचक्षुरिंद्रियावरणक्षयोपशमपरि
णामकारणत्वात्तुशुक्लकृष्णरक्तनीलपीतरूपपर्यायंबहुमंवस्त्रंगृह्णाति अल्पंपूर्व
वत्प्रकृष्टविशुद्धिः चक्षुरिंद्रियादिक्षयोपशमपरिणामकारणत्वात्तुशुक्लादि
पंचतयरूपगुणस्यप्रत्येकमेकद्वित्रिचतुःसंख्येयासंख्येयानंतगुणपरिणा
मिनोवग्राहकत्वसामर्थ्याद्बहुविधरूपमेवंवस्त्रंगृह्णात्येकविधंपूर्ववत्क्षिप्रचिर

योरप्युक्त एवक्रमः ॥ पंचवर्णवस्त्रकंबलचित्रपटादीनां सतदेकदेशविषयपंच
वर्णग्रहणात्कृत्स्नपंचवर्णेष्वदृष्टेष्वनिःसृतेष्वपि तद्ग्रहणे चित्रकरसामर्थ्यादनि
सृतमवग्रह्णाति ॥ अथवा देशांतरस्थपंचवर्णपरिणतैकवस्त्रादिकथनाशाक
ल्पेनाकल्पेनाकथितस्याप्येकदेशकथनेनैव तत् ॥ कृत्स्नपंचवर्णग्रहणादनि
सृतं निःसृतं प्रतीतं ॥ सुविशुद्धिचक्षुरिंद्रियादिक्षयोपशमःआत्मा शुक्लकृष्णा
दिवर्णमिश्रीकरदर्शनात्पारेण अकथितमपि वर्णमभिप्रायेणैव प्रतिपद्यते भवा
निमं वर्णमेतद्द्वयमिश्रणात्करिष्यतीत्येवं ग्रहणादनुक्तं रूपमवग्रह्णाति अथवा
देशांतरस्थपंचवर्णैकद्रव्यकथने तान्यादिकरणासंश्लेषात्प्राक्सत्कृत्य अक
थितमेव द्रव्यमाचष्टे भवानेवंविधमस्माकं पंचवर्णं व्यतिकरिष्यतीत्यनुक्तं
मवग्रह्णाति परकीयाभिप्रायानपेक्षमाणो
वोक्तं रूपमवग्रह्णाति संक्ले
यावरणक्षयोपशमपरिणामकारणावस्थितत्वाद्यथाप्राप्यमिकं रूपग्रह

णां तथावस्थितमेवरूपमवगृह्णातिनीनंनाभ्याधिकेपीनःपुन्येनसंक्लेशावि
शुद्धिपरिणामापेक्षस्यात्मनोयथात्मरूपपरिणामोपात्तचक्षुरिंद्रियसान्नि
ध्येपितदावरणस्यषदीयसाविर्भावात्पीनःपुनिकेप्रकृष्टावकृष्टचक्षु
रिंद्रियावरणक्षयोपशमपरिणामकारणत्वाच्चाक्षवमवगृह्णातिरूपं
क्वचिद्बहुक्वचिदल्पंक्वचिद्बहुविधंक्वचिदेकविधंक्वचित्क्षिप्रंक्वचिच्चि
रात्क्वचिदनिःसृतंक्वचिन्निःसृतंक्वचिदनुक्तंक्वचिदुक्तं एवंघ्राणाद्य
वग्रहेष्वपियोज्यंतथाईहावायधारणाअपिबह्वादिभिः सेतरैरवसीयाः
कश्चिदाह श्रोत्रघ्राणस्पर्शनरसनचतुष्टयस्यप्राप्यकारित्वादनिःसृता
नुक्तशब्दाद्यवग्रहेहावायधारणानयुक्ताइत्युच्यतेप्राप्तत्वात्कथंपिपीलि
कादिवद्यथापिपीलिकादीनांघ्राणरसनदेशाप्राप्तेपिगुडादिद्रव्यगंधरस
ज्ञानं तत्रयेसूक्ष्माव्यवास्तदाप्यलक्ष्यसूक्ष्मगुडावयवैः पिपीलिका
दिघ्राणरसनेंद्रिययोः परस्परानपेक्षावृत्तिस्ततोनदोषः अस्मदादीनां

राजवा·
७८

तदभावइतिचेन्नश्रुतापेक्षत्वात्यथाभूरप्यहंसर्वार्द्धेनोक्तिनस्पर्शस्यचक्षुरादि
भिरवभासस्तेष्वपिघटादिषुघटोयंरूपमिदमित्यादियद्विशेषपरिज्ञानंत
तापेक्षंपरोपदेशापेक्षत्वात्तथास्मदादीनामप्यनतानुक्रमपिज्ञानंविक
ल्पशब्दाद्यवग्रहादिज्ञानंतत्कृतापेक्षं। किंच लघ्वक्षरत्वात्कृतज्ञानप्रभे
दस्वरूपपर्यायोलघ्वक्षरस्तुतकथनंयोताप्रमिमर्कं। तद्यथा। चक्षुःश्रो
त्रघ्राणरसनस्पर्शनमनोलघ्वक्षरमित्यार्षउपदेशः। अतश्चक्षुःश्रोत्र
घ्राणरसनस्पर्शनेंद्रियमनोलघ्वक्षरसान्निध्यादेताशिष्यतिअनिसृता
नुक्तानामपिशब्दादीनामवग्रहादिज्ञानंयद्यवग्रहादयोबह्वादीनांकर्म्मणामोक्षे
मारः। बह्वादीनिपुनर्विशेषणानिकस्येत्यत आह। अर्थस्य। चक्षुरादिविषयो
र्थस्तस्यबह्वादिविशेषणविशिष्टस्यावग्रहादयोभवंति इयर्त्तिपर्यायानर्यतेवातैरि
त्यर्थोद्रव्यंप्रत्यासत्संबंधिनः। पर्यायानुभयनिमित्तवशादुत्पत्तिप्रत्याक्रणानिय
तिगच्छत्यर्यतेगम्यतेवातैरित्यर्थः। कः पुनः। रसोद्रव्यंकिमर्थमिदमुच्यते। अर्थ

वचनंग्रहणाग्रहणानिवृत्त्यर्थं॥ केचिद्रूपादयोग्रहणाएवइंद्रियैस्सन्निकृष्यंतेत
तस्तद्ग्रहणमितिमन्यंतेतन्मतनिवृत्त्यर्थमर्थस्येत्युच्यतेनहितेरूपादयोग्रहणा
त्प्रमूर्त्ताइंद्रियसंनिकर्षमापद्यंतइतितत्प्रचयविशेषेसतिसन्निकर्षसंभव
इतिचेन्नग्रहणादीनांप्रचयानुपपत्तेः॥ सत्यपिवाप्रचयेर्थांतरप्रादुर्भावाभा
वात्सूक्ष्मावस्थानतिक्रमादग्रहणमेवैषांस्यान्नतर्हीदानीमिदंभवतिरू
पमयादृष्टंगंधोवाघ्रातइतिभवतिचार्थग्रहणात्तद्व्यतिरेकात्तेषामपिग्रह
णोपपत्तेः॥ तेषुसत्सुमतिज्ञानात्मलाभात्सप्तमीप्रसंगः॥ यतोविषयेषुसत्सु
मतिज्ञानमाविर्भवति॥ अतोर्थइतिवाच्यंनानैकांतान्नायमेकांतोस्तिसत्यर्थे
मतिज्ञानंभवतीतियतः॥ सत्यप्यर्थेवनितलभवनसंभूतस्यकुमारस्योत्तीर्ण
मात्रस्यघटरूपादिमतिज्ञानाभावः॥ अथवानायमेकांतोस्त्यधिकरणस्य
सत्वात्सप्तमीप्रसंगः॥ यतोविषयेषुसत्सुमतिज्ञानमाविर्भवति॥ अतोर्थइति
वाच्यंनानैकांतान्नायमेकांतोस्तिसत्यर्थेमतिज्ञानंभवतीतियतः॥ सत्यप्यर्थेव

राजवा·
८०

नितलभवनसंभूतस्यकुमारस्योत्तीर्णमात्रस्यघटस्वरूपादिमतिज्ञानाभावः॥ अ
थवानायमेकांतोस्त्यधिकारस्यसत्वात्समग्रीप्रसंगइति कस्मात्तस्याविवक्षितत्वा
द्विवक्षावशाद्धिकारकाणिभवंतिक्रियाकारकसंबंधस्यविवक्षितत्वादवग्रहा
दयः॥ क्रियाविशेषणानुक्ताः॥ तेषामेवग्रहणेकेनकिंकर्मणाभवितव्यमितिवह्वा
दिविकल्पस्यार्थस्यप्रश्ने वह्वादिसामानाधिकरण्याद्बहुत्वप्रसंगः॥ यतोव
ह्वादिरेवार्थोनातोन्यस्ततोवह्वादिसामानाधिकरण्यादर्थानामितिवहुत्वंप्रा
प्नोतिनवानभिसंबंधात्नवाएषदोषः॥ किंकारणमनभिसंबंधात्ह्यस्यवहु
त्वादिभिरभिसंबंधः क्रियतेकेनतर्ह्यवग्रहणादिभिः॥ कस्यपुनरर्थस्य
हसंवध्यते॥ तद्विशेषणांवह्वादिग्रहणं॥ सर्वस्यवार्यमाणत्वा
र्थत्वं अतोजातिप्रधानत्वान्निर्देशस्यार्थस्येत्येकत्वनिर्देशोप्युक्तः॥ प्रत्येक
मभिसंबंधाद्वा॥ अथवाप्रत्येकमभिसंबंधः॥ क्रि
र्थस्येति॥ किममी अवग्रहादयः॥ सर्वस्येंद्रियार्थस्यभवंत्युतकश्चि

शेषोस्तीत्यत्राह ॥ व्यंजनस्यावग्रहः ॥ व्यंजनमव्यक्तं शब्दादिजातं तस्यावग्र
हो भवति ॥ किमर्थमिदं नियमार्थमवग्रह एव नेहादयः यद्येवं तर्हि एवकारः कर्त्तव्यः
न वा सामर्थ्यादवधारणप्रतीतेः अब्भक्षवन्नवा कर्त्तव्यः ॥ किं कारणं सामर्थ्यादवधा
रणप्रतीतेः कथमब्भक्षवद्यथा न कश्चिद्येन भक्षयतीति सामर्थ्यादवधारणं
प्रतीयते ॥ अप एव भक्षयतीति तथा सर्वेषामवग्रहादीनां प्रसिद्धौ अवग्रहवच
नमवधारणार्थं विज्ञायते तयोरभेदो ग्रहणविशेषादिति चेन्न व्यक्ताव्यक्तभेदा
दभिनवशरावद् यदेतत्तयोरर्थावग्रहव्यंजनावग्रहयोर्नास्ति भेदः ॥ ग्रहणवि
शेषान्न हि शब्दादिग्रहणं प्रति विशेषोस्तीति तन्न किं कारणं व्यक्ताव्यक्तभेदाद्व्य
क्तग्रहणमर्थावग्रहः ॥ अव्यक्तग्रहणं व्यंजनावग्रह अभिनवशरावद्यथा सूक्ष्म
जलकणद्वित्रिसिक्तः शरावो भिनवो नार्द्रीभवति स एव पुनः पुनः सिच्यमानः श
नैः स्तिम्यति तथात्मनः ॥ शब्दादीनामव्यक्तग्रहणात्स्याद्व्यंजनावग्रहः ॥ व्यक्तग्रह
णमर्थावग्रहः ॥ सर्वेन्द्रियाणामविशेषेण व्यंजनावग्रहप्रसंगे यत्रासंभवस्त

दर्थप्रतिषेधमाह॥ न चक्षुरनिंद्रियाभ्यां॥ चक्षुषा अनिंद्रियेण व्यंजनावग्रहो
नभवति कुतः॥ व्यंजनावग्रहाभावश्चक्षुर्मनसोरप्राप्यकारित्वात् यतः॥ अप्राप्त
मर्थमविदिक्कं युक्तसंनिकर्षविषयेवस्थितंबाह्यप्रकाशाभिव्यक्तमुपलभते
चक्षुर्मनश्चाप्राप्तं ततो नानयोर्व्यंजनावग्रहोस्ति इच्छामात्रमिति
स्यादेतदिच्छामात्रमिदमप्राप्यकारि चक्षुरिति तन्न किं कारणं सामर्थ्या
र्थसामर्थ्ये आगमतो युक्तितश्च आगमस्तावत्॥ गाहा पुट्ठंसुणेदि सद्दं अपु
ट्ठं पुण पस्सदे रूवं गंधं रसं च फासं पुट्ठं पुट्ठं॥ वियाणादि पुट्ठंसुणेदि सद्दं अ
पुणपस्सदे रूवं॥ गंधं रसं च पासं पुट्ठमपुट्ठं वियाणादि इति युक्तितोपि
अप्राप्यकारि चक्षुः स्पृष्टानवग्राहात् यदि प्राप्यकारि स्यात् त्वगिंद्रियवत्॥ स्पृष्ट
मंजनं गृह्णीयात् नचगृह्णात्यतो मनोवदप्राप्यकारीत्यवसेयं अत्र केचिदाहुः
प्राप्यकारि चक्षुः॥ आवृतानवग्रहात्त्वगिंद्रियवदिति॥ अत्रोच्यते काचाभ्र
स्फटिकावृतार्थावग्रहे सत्यव्यापकत्वादसिद्धो हेतुर्वनस्पतिचैतन्ये स्वापवत्

यासंशयहेतुरप्राप्यकारित्वमयस्कांतोपलेसाध्यविपक्षेपिदर्शनादिति ॥ भौति
कत्वात्प्राप्यकारिचक्षुरग्निवदितिचेन्न ॥ अयस्कांतेनैवप्रत्युक्तत्वात् ॥ बाह्येंद्रियत्वा
त्प्राप्यकारिचक्षुरितिचेन्नद्रव्येंद्रियोपकरणस्यभावेंद्रियस्यप्राधान्यादप्राप्य
कारित्वेव्यवहितातिविप्रकृष्टग्रहणप्रसंगइतिचेन्नायस्कांतेनैवप्रत्युक्तत्वा
दयस्कांतोपलमप्राप्यलोहमाकर्षदपिनव्यवहितमाकर्षतिनातिविप्रकृष्ट
मिति संशयावस्थमेतदित्यप्राप्यकारित्वंसंशयविपर्ययाभावइतिचेन्नतत्प्रा
प्यकारित्वेपितदविशेषात्कश्चिदाह रश्मिवच्चक्षुस्तैजसत्वात्तस्मात्प्राप्यका
रीत्यग्निवदित्येतच्चायुक्तमनभ्युपगमात् नहिवयमभ्युपगच्छामस्तैजसंचक्षुरि
तितेजोलक्षणमौष्ण्यमितिकुतश्चक्षुरिंद्रियस्थानमुष्णंस्यान्नचतद्देशेस्पर्श
नेंद्रियमुष्णस्पर्शोपलंभोदृष्टमितिइत ॥ अथतैजसंचक्षुर्भासुरत्वानुपलब्धिरदृ
ष्टवशात्उष्णाभासुरत्वमितिचेन्नादृष्टस्यगुणत्वादक्रियस्यभावस्वभावनिग्र
हासामर्थ्यान्नक्तंचररश्मिदर्शनाद्रश्मिवच्चक्षुरितिचेन्नातैजसोपिपुद्गलद्र

राजवा॰
८२

स्यस्यभास्वरत्वपरिणामोपपत्तेरितिकिंचगतिमद्धर्म्मादिहयद्गतिमद्भवतितन्
नत्संनिकृष्टविप्रकृष्टाभिन्नकालंप्राप्नोतिनचतथाचक्षुचक्षुर्हिशाखाचंद्रम
सावभिन्नकालेउपलभेतेयावताकालेनशाखांप्राप्नोतितावताचंद्रमसमितिस्थ्ठं
गतिमद्धर्म्मतस्मान्नगतिमच्चक्षुरितियदिचप्राप्यकारिचक्षुःस्यात्तमिस्रायां
रात्रौदूरेग्नौप्रज्वलतितत्समीपगतद्रव्योपलंभनंभवतिकुतोनांतरा
लोचनंप्रकाशाभावादितिचेन्नतत
ल्किंचयदिप्राप्यकारिचक्षुःस्यात्सांतराधिकग्रहणंनप्राप्नोतिइंद्रियाणांनिरंतरे
विषयोगंधादेःसांतरग्रहणंदृष्टंनाप्यधिकग्रहणं॥ अथमतंवहिरधिष्ठानाद्वृत्ति
रिंद्रियस्यअतउपपन्नंतद्विषयस्यसांतराधिकग्रहणमितितदयुक्तंयस्मान्नवहि
रधिष्ठानादिंद्रियं॥ तत्रचिकित्सादिदर्शनादन्यथाधिष्ठानपिधानेपि
मनसश्चावहिर्भावान्मनसाधिष्ठितंहीद्रियंस्वविषयेव्याप्रियते॥ नचमनोवहिरधि
ष्ठानमस्तितदभावादग्रहणप्रसंगः॥ अनुवृत्तौचसंभवाभावाद्विप्रकीर्णं॥ चक्षु

रश्मिसमूहः॥ कथमप्राप्तमनोधिष्ठस्येति॥ कश्चिदाह॥ श्रोत्रमप्राप्यकारि विप्रकृष्ट
विषयग्रहणादिति एतच्चायुक्तं असिद्धत्वात्साध्यं तावदेतद्विप्रकृष्टं गृह्णाति श्रो
त्रमतघ्राणेन्द्रियवत्स्वविषयभावपरिणतं पुद्गलद्रव्यं गृह्णातीति विप्रकृष्ट
शब्दग्रहणं च स्वकर्णान्तर्विलगतमशकशब्दो नोपलभ्येत न हीन्द्रियं किंचिदेकं
दूरस्पृष्टविषयग्राहि दृष्टमिति आकाशगुणत्वाच्छब्दस्य स्पर्शवद्गुणत्वाभावइति
चेन्नामूर्त्तगुणस्यात्मगुणवदिन्द्रियविषयत्वादर्शनादिति ग्रामावग्रहे श्रोत्रस्य दिग्दे
शभेदविशिष्टविषयग्रहणाभावइति चेन्न शब्दपरिणतविसर्प्पत्पुद्गलवेगशक्ति
विशेषस्य तथाभावापत्तेः सूक्ष्मत्वादप्रतिघातात्समंततः प्रवेशाच्चासिद्धमेतच्चक्षु
र्मनसी वर्जयित्वा शेषाणामिन्द्रियाणां व्यंजनावग्रहः॥ सर्वेषामिन्द्रियाणामर्थाव
ग्रहइति मनसोनिन्द्रियव्यपदेशाभावः स्वविषयग्रहणे करणांतरानपेक्षत्वाच्च
क्षुर्वत्॥ यथा चक्षूरूपग्रहणे करणांतरं नापेक्षत इतीन्द्रियव्यपदेशं लभते तथा
मनोपि गुणदोषविचारादिस्वव्यापारे करणांतरं नापेक्षत इतीन्द्रियत्वप्रसंगो नानिं

द्रियमिति न वा प्रत्यक्षत्वात् न वा एष दोषः किं कारणं अप्रत्यक्षत्वात् यथा चक्षुरा
दिपरस्येंद्रियकत्वात् प्रत्यक्षं न तथा मनः ऐंद्रियकं कुतः सूक्ष्मद्रव्यपरि
दनिंद्रियमित्युच्यते अत्राह कथमवगम्यते प्रत्यक्षं तदस्तीति अनुमानात्त
स्याधिगमः अप्रत्यक्षाणामप्यर्थानां लोके नुमानादधिगतिर्दृष्टा यथादि
गतिर्वनस्पतीनां वृद्धिह्रासौ तथा मनसोप्यस्तित्वमनुमानादवगम्यते कोसावनु
मानः युगपज्ज्ञानक्रियानुत्पत्तिर्मनसो हेतुः सत्सु चक्षुरादिकरणेषु सत्किमन्तु
चबाह्येषु रूपादिषु सति चानेकस्मिन् प्रयत्नजनये ततो ज्ञानानां क्रियाणां च युगपद
नुत्पत्तिस्तदस्ति मनइत्यनुमीयते अनुस्मरणदर्शनाच्च यतः सकृद्दृष्टं श्रुतं वा
नुस्मर्यते अतस्तद्दर्शनात्तदस्तित्वमवसेयं अन्याह एकस्यात्मनः कृतकरणाभेदः
ज्ञत्वाभावस्यापि करणभेदो ऽनेककलाकुशलदेवदत्तवत्त
शक्तिरुपेक्षा काष्ठकर्मणि वर्त्तमानस्य वासीघटकुरखदृक्षादनादि
यात्मनोपि क्षयोपशमभेदात् ज्ञानक्रियापरिणामप्राप्तियुक्तस्य चक्षुराद्यनेक [illegible]

रणापेक्षानविरुध्यतेसनामकर्मसामर्थ्यात्सएषकरणभेदोनामकर्मसामर्थ्याद्वे
दितव्यः॥कथमिहदेतच्छरीरनामकर्मोदयाच्चापादितंयवनालिकासंस्थानंश्रोत्रे
न्द्रियमेतदेवशब्दोपलब्धिसहितंनेतराणितथायदेतद्घ्राणेंद्रियमतिमुक्तकचंद्र
कसंस्थानंएतदेवगंधावगमसमर्थंनेतराणितथायदेतज्जिह्वेंद्रियंक्षुरप्राकृत्ये
तदेवरसावगमेनान्यानितथायदेतत्स्पर्शनेंद्रियमनेकाकृतितदेवस्पर्शोपलंभनेने
तराणि॥तथायदेतच्चक्षुरिंद्रियंमसूरिकाकारंकृष्णताराधिष्ठानंतदेवरूपाविष्क
र५लंनेतराणीतिएवमाभिनिबोधिकंद्रव्यक्षेत्रकालभावैरवसेयंद्रव्यतोमतिज्ञा
नीसर्वद्रव्याण्यसर्वपर्यायाण्युपदेशेनज्ञानातिक्षेत्रतः॥उपदेशेनसर्वक्षेत्राणिजा
नाति॥अथवाक्षेत्रंविषयः॥चक्षुषः॥क्षेत्रंसप्तचत्वारिंशद्योजनसहस्राणिअभ्य
धिकेचद्वेयोजनशतेयोजनस्यचैकविंशतिः॥षष्टिभागाः श्रोत्रस्यक्षेत्रंद्वादश
योजनानिघ्राणरसनस्पर्शनानांनवयोजनानिकालतः॥उपदेशेनसर्वकालंजाना
तिभावतः॥उपदेशेनजीवादीनामौदयिकादीन्भावान्जानातीतासामान्यादेकस्मिन्न

राजवा·
८४

याभेदाद्विधा अवग्रहादिभेदाच्चतुर्भिर्नोइंद्रियताडितैः अष्टाविंशतिविधैस्तैरेवव्यं
जनावग्रहाधिकैरष्टाविंशतिविधैस्तैरेवमूलभंगाधिकैः। द्रव्यादिसहितैर्वाद्वात्रिं
शद्विधैस्तैरन्ये त्रयो विकल्पाः। बह्वादिभिः। षड्भिरितरानपेक्षैस्ताडिता चतुश्चत्वा
रिंशच्छतं अष्टषष्ट्युत्तरं शतं द्वानवत्यधिकं शतमिति च भवंति त एव बह्वादिभिर्द्वा
दशभिस्ताडिताः द्वे शते अष्टाशीत्युत्तरे त्रीणि शतानि षट्त्रिंशानि चतुरशीत्यधिका
नि त्रीणि शतानि च भवंति आह व्यंजनावग्रहे बह्वाद्यभावः। कस्मादव्यक्तत्वाद्व्य
ते। अवग्रहवत्तत्सिद्धिः यथा अव्यक्तग्रहणमवग्रहः तथा बह्वादिविकल्पो
रूपेणैव वेदितव्यः। अथानिःसृते कथं तत्रापि पेचयावतश्च पुद्गलाः सूक्ष्मा निःसृ
ताः। संति सूक्ष्मास्तु साधारणैर्नोपलभ्यंते। तेषामिंद्रियस्थानावगाहनं अनिःसृतं व्यं
जनावग्रहः। परोक्षे द्वैविध्ये सत्युपक्रमलक्षणा विकल्पमतिज्ञानविधामीयत्तुती
यमुपदिष्टं तत्किंनिमित्तं कतिविधं चेत्युच्यते। श्रुतं मतिपूर्वं द्व्यनेकद्वादशभे
दं। श्रुतशब्दो जहत्स्वार्थवृत्तिरूढिवशात् कुशलशब्दवद्यथा कुशलशब्दः कु

शालशब्दस्यैवं यथा कुशलशब्दः कुशलवनक्रियां प्रतीत्य व्युत्पादितः तद्धित्वा सर्वत्र
पर्यवदाने वर्त्तते तथा श्रुतशब्दोपि श्रवणमुपादाय व्युत्पादितो रूढिवशात्कस्मिंश्चिज्ज्ञा
नविशेषे वर्त्तते कार्यप्रतिपालनात्कारणं हि पूर्वं कारणं कार्यं पालयति प्रपूरयतीति वा पूर्वं
कारणं लिंगं निमित्तमित्यनर्थांतरं मतिज्ञानं व्याख्यातं तत्पूर्वमस्येति मतिपूर्वं मतिका
रणकमित्यर्थः मतिपूर्वकत्वे श्रुतस्य तदात्मकत्वप्रसंगो घटवत्तदात्मकत्वे वा
तत्पूर्वकत्वाभावः कश्चिदाह मतिपूर्वं श्रुतं तदपि मत्यात्मकं प्राप्नोति कारणगुणा
नुविधानं हि कार्यं दृष्टं यथा मृन्निमित्तो घटो मृदात्मकः अथातदात्मकत्वमिष्यते
तत्पूर्वकत्वं तर्हि तस्य हीयत इति न वा निमित्तमात्रत्वाद्दंडादिवन्न चैष दोषः किं
कारणं निमित्तमात्रत्वाद्दंडादिवद्यथा मृदः स्वयमंतर्घटभवनपरिणामाभिमुख्ये
दंडचक्रयोः पुरुषप्रयत्नादि निमित्तमात्रं भवति यतः सत्स्वपि दंडादिनिमित्तेषु
केरादिप्रचितो मृत्पिंडः स्वयमंतर्घटभवनपरिणामनिरुत्सुकत्वान्न घटीभव
ति अतो मृत्पिंड एव वाह्यदंडादिनिमित्तापेक्षः आभ्यंतरपरिणामसान्निध्याद्घ

भवतिनदंडादयइतिदंडादीनांनिमित्तमात्रत्वंतथापर्यायिपर्याययोः स्यादन्यत्वा
दात्मनः स्वयमतः श्रुतभवनपरिणामाभिमुख्येमतिज्ञानंनिमित्तमात्रंभवति य
तः सत्यपिसम्यग्दृष्टेः श्रोत्रेंद्रियबलाधानेबाह्याचार्यपदार्थोपदेशसंनि
श्रुतज्ञानावरणोदयवशीकृतस्यस्वयमतः श्रुतभवननिरुत्सुकत्वादात्मनो
श्रुतंभवति। ततोबाह्यमतिज्ञानादिनिमित्तापेक्ष आत्मैवाभ्यंतरश्रुतज्ञाना
वरणक्षयोपशमादिनश्रुतभवनपरिणामाभिमुख्यात्कृतीभवतिनमतिज्ञानस्य
श्रुतिभवनमस्तितस्यनिमित्तमात्रत्वात् अनेकांतात्तुनायमेकांतोस्तिकारणस
दृशमेवकार्यमिति कुतस्तत्रापिसप्तभंगीसंभवात्कथंघटवद्यथाघटः कारणा
नुरूपिंडेनस्यात्सदृशः स्याजसदृशइत्यादिइतिमृद्द्रव्याजीवा
त्सदृशः पिंडघटसंस्थानादिपर्यायादेशात्सदृशः पूर्ववदुत्तरेभंगानेतव्याः
कांतेनकारणानुरूपंकार्यंतस्यघटपिंडशिविकादिपर्यायाउपलभ्यंते किंच
डेतदर्शनादपिचमृत्पिंडेतद्दर्शी

स्यघटत्वेनपरिणामवत्तस्यापिघटत्वेनपरिणामः॥स्यादेकान्तसदृशत्वात्नचैवंभवतिश्रु
तानेकान्तेनकारणसदृशत्वं॥तथाश्रुतंसामान्यादेशात्स्यात्कारणसदृशंयतोमतिरपिश्रु
तंश्रुतमपिअव्यवहिताभिमुखग्रहणंनानाप्रकारार्थप्ररूपणसामर्थ्यादिपर्यायादेशा
त्स्यान्नकारणसदृशंपूर्ववदुत्तरेभंगानेतव्याः॥श्रोत्रमतिपूर्वस्यैवश्रुतत्वाप्रसंगः॥तद
र्थत्वादितिचेन्नोक्तत्वात्स्यादेतत्श्रोत्रमतिपूर्वकस्यैवश्रुतत्वंप्राप्नोतिकुतस्तदर्थत्वाच्छ्रुत्वा
वधारणाद्धिश्रुतमित्युच्यतेनचक्षुरादिमतिपूर्वकस्यैवश्रुतत्वंनप्राप्नोतितन्नकिंकार
णंउक्तत्वात्॥उक्तमेवश्रुतशब्दोयंरूढिशब्दइतिरूढिशब्दाश्चस्वोत्पत्तिक्रियानपेक्षाः
प्रवर्ततइतिसर्वमतिपूर्वस्यश्रुतत्वसिद्धिर्भवति॥आदिमत्त्वांतवत्त्वाच्छ्रुतस्यानादिनिधन
त्वानुपपत्तिरितिचेन्नद्रव्यादिसामान्यापेक्षयातत्सिद्धेः स्यादेतत्श्रुतस्यादिमत्त्वमभ्युपग
तंमतिपूर्वमितिवचनात्आदिमतश्चलोकेअंतवत्त्वंदृष्टंततश्चाद्यंतसंभावादनादिनिधनंश्रु
तमितिव्याहन्यतेततश्चपुरुषकृतित्वादप्रामाण्यंस्यादितिनैषदोषः॥द्रव्यादिसामा
न्यापेक्षयातत्सिद्धेः द्रव्यक्षेत्रकालभावानांविशेषस्याविवक्षायांश्रुतमनादिनिध

नमित्युच्यते नहि केनचित्पुरुषेण क्वचित्कदाचित्कथंचिदुत्प्रेक्षितमिति तेषामेव वि
शेषापेक्षया। आदिरंतश्चास्य संभवतीति मतिपूर्वमित्युच्यते। यथांकुरो बीजपूर्वः स च
संतानापेक्षया अनादिनिधन इति न चापौरुषेयत्वं प्रामाण्यकारणं चौर्याद्युपदेश
स्यास्मर्यमाणकर्तृकस्य प्रामाण्यप्रसंगात् नित्यस्य च प्रत्यक्षादेः। प्रामाण्ये को विरोधः
सम्यक्त्वोत्पत्तौ युगपन्मतिश्रुतोत्पत्तेर्मतिपूर्वकत्वाभाव इति चेन्न सम्यक्त्वस्य तदपेक्ष
त्वात्स्यान्मतं मत्यज्ञानश्रुताज्ञानयोः प्रथमसम्यक्त्वोत्पत्तौ युगपज्ज्ञानपरिणामान्म
तिपूर्वकत्वं श्रुतस्य नोपपद्यत इति तन्न किं कारणं सम्यक्त्वस्य तदपेक्षत्वात्तयोर्हि स
म्यक्त्वं सम्यग्दर्शनोत्पत्तौ युगपद्भवति। आत्मलाभस्तु क्रमवानिति मतिपूर्वकत्वं युक्तं
तापुत्रवन्मतिपूर्वकत्वाविशेष इति चेन्न कारणभेदात्तद्भेदसिद्धेः।
नाश्रुतमविशिष्टं प्राप्नोति। कुतः कारणाविशेषात् मतिपूर्वत्वं हि
षामविशिष्टमिति तन्न किं कारणं कारणभेदात्तद्भेदसिद्धेः प्रतिपुरुषं हि मतिश्रुता
वरणक्षयोपशमो बहुधा भिन्नस्तद्भेदाद्बाह्यनिमित्तभेदाच्च श्रुतस्य प्रकर्षाप्रकर्ष

योगोभवतिमतिपूर्वत्वाविशेषेपिश्रुताच्छ्रुतप्रतिपत्तेर्लक्षणाव्याप्तिरितिचेन्नतस्यो
पचारतोमतित्वसिद्धेः स्यान्मतंयदाशब्दपरिणतपुद्गलस्कंधादाहितवर्णपदवा
क्यादिभावाच्चक्षुरादिविषयाच्चश्रुतविषयभावमापन्नादविनाभाविनः कृ
तसंगतिर्जनोघटाज्जलधारणादिकार्यसंबंधंतरंप्रतिपद्यतेधूमादेर्वाग्न्यादिद्रव्यं
तदाश्रुताच्छ्रुतप्रतिपत्तिरितिकृत्वामतिपूर्वलक्षणमव्यापीतितन्नकिंकारणंतस्यो
पचारतोमतित्वसिद्धेः मतिपूर्वंहिश्रुतंक्वचिन्मतिरित्युपचर्यतेअथवाव्यवहिते
पूर्वशब्दोवर्त्तते। तद्यथा। पूर्वंमथुरायाः पाटलीपुत्रमितिततः साक्षान्मतिपूर्वं
परंपरयावामतिपूर्वमपिमतिपूर्वग्रहणेनगृह्यतेभेदशब्दस्यप्रत्येकंपरिसमाप्ति
र्भुजिवद्यथादेवदत्तजिनदत्तगुरुदत्ताभोज्यंतामितिभुजिः प्रत्येकंपरिसमाप्य
तेतथेहापिभेदशब्दः। प्रत्येकमभिसंबध्यतेद्विभेदमनेकभेदंद्वादशभेदंचेतित्वां
गप्रविष्टमंगबाह्यंचेति। द्विविधं अंगप्रविष्टमाचारादिद्वादशभेदं बुद्ध्यतिशयर्द्धि
युक्तैर्गणधरानुस्मृतंग्रंथरचनं भगवदर्हत्सर्वज्ञहिमवन्निर्गतवाग्गंगार्थविम

लसलिलप्रक्षालिताःतः करणैरुद्धतिशयर्द्धियुक्तैर्गणधरैरनुस्मृतग्रंथरचनमाचा
दिद्वादशविधमंगप्रविष्टमित्युच्यते तद्यथा आचारः सूत्रकृतं स्थानं समवायोव्या
ख्याप्रज्ञप्तिर्ज्ञातृधर्मकथा उपासकाध्ययनं अंतकृद्दशं अनुत्तरोपपादिकदशं प्रश्न
व्याकरणं विपाकसूत्रं दृष्टिवाद इति आचारे चर्याविधानं शुद्ध्यष्टकपंचसमितिगुप्ति
विकल्पं कथ्यते सूत्रकृते ज्ञानविनयप्रज्ञापनाकल्प्याकल्प्यछेदोपस्थापनाव्यवहारधर्म
क्रियाः प्ररूप्यंते स्थानेनेकाश्रयाणामर्थानां निर्णयः क्रियते समवाये सर्वपदार्थी
नां समवायश्चिंत्यते सचतुर्विधः द्रव्यक्षेत्रकालभावविकल्पैः तत्र धर्माधर्मास्तिका
यलोकाकाशैकजीवानां तुल्यासंख्येयप्रदेशत्वादेकेन प्रमाणेन द्रव्याणां समवाय
नात् द्रव्यसमवायः जंबूद्वीपसर्वार्थसिद्ध्यप्रतिष्ठाननरकनंदीश्वरैकवापीनां तु
ल्ययोजनशतसहस्रविष्कंभप्रमाणेन क्षेत्रसमवायनात्क्षेत्रसमवायः उत्सर्पिण्य
वसर्पिण्यौ तुल्यदशसागरोपमकोटीप्रमाणात्कालसमवायः क्षायिकसम्यक्त्वके
वलज्ञानकेवलदर्शनयथाख्यातचारित्राणां यो भावस्तद्भवस्य तुल्यानंतप्रमाणत्वा

ज्ञावसमवायनाज्ञावसमवायव्याख्याप्रज्ञप्तौ षट्त्रिंशत्व्याकरणसहस्राणि किमस्ति जी
वोनास्तीत्येवमादीनि निरूप्यंते ज्ञातधर्मकथायामाख्यानोपाख्यानानां बहुप्रकाराणां
कथनमुपासकाध्ययने श्रावकधर्मलक्षणं संसारस्यांतः कृतो यैस्ते ऽन्तकृतः नमि
मतंगसोमिलरामपुत्रसुदर्शनयमलीकवलीकनिष्कंबलपालांबष्ठपुत्रा इत्येते द
स वर्द्धमानतीर्थकरतीर्थ एवमृषभादीनां त्रयोविंशतेस्तीर्थेष्वन्येन्ये च दश दशानगा
रा दश दश दारुणानुपसर्गान्निर्जित्य कृत्स्नकर्मक्षयादंतकृतः दशास्यां वर्ण्यंत इति
अंतकृद्दशा अथवा अंतकृतां दशा अंतकृद्दशा तस्यामर्हदाचार्यविधिः सिध्यतां
च उपपदो ऊनमप्रयोजनं येषां ते इमे ऊपपादिकाः विजयवैजयंतजयंतापराजितस
वार्थसिद्धाख्यानि पंचानुत्तराणि अनुत्तरेष्वौपपादिकाः अनुत्तरोपपादिकाः ऋषि
दासवान्युसुनक्षत्रकार्त्तिकनंदनंदनशालिभद्राभयवारिषेणचिलातपुत्रा इत्येते द
श वर्द्धमानतीर्थकरतीर्थ एवमृषभादीनां त्रयोविंशतेस्तीर्थेष्वन्येन्ये च दश दशानगा
रा दश दश दारुणानुपसर्गान्निर्जित्य विजयाद्यनुत्तरेषूत्पन्ना इत्येवमनुत्तरोपपादि

माद्यवैनयिकनुबंधविशेषः॥ आक्षेपविक्षेपैर्हेतुनयाश्रितानांप्रश्ना
नांव्याकरणंप्रश्नव्याकरणंतस्मिंल्लौकिकवैदिकानामर्थानांनिर्णयः विपाकसू
त्रं सुकृतदुःकृतानांविपाकश्चिंत्यते॥ द्वादशमंगंदृष्टिवादइतिकौ॥ कलकारवेविद्धिको
शिकहरिश्मश्रुमांछपिकरोमसहारितमुंडाश्वलादीनांक्रियावाददृष्टीनामशी
तिमरीचिकुमारकपिलोलूकगार्ग्यव्याघ्रभूतिवाद्वलिमाठरमौद्गल्यायनादीनामक्रि
वाददृष्टीनांचतुरशीतिशाकल्यवाकलकुथुमिसात्यमुग्रिनारायणकंठमाध्यं
मौदपैप्पलादवादरायणांवष्ठीकृदैरिकायनवसुजैमिन्यादीनामज्ञानिकदृष्टीनां
॥ वशिष्ठपाराशरजतुकर्णिवाल्मीकिरोमहर्षिसत्यदत्तव्यासैलापुत्रौप
नायस्थूणादीनांवैनयिकदृष्टीनांद्वात्रिंशदेषांदृष्टिशतानांत्रयाणांत्रिष
त्तराणांप्ररूपणंनिग्रहश्चदृष्टिवादेक्रियते॥ सपंचविधः॥ परिकर्मसूत्रंप्रथमा
पूर्वगतंचूलिकाचेतितत्रपूर्वगतंचतुर्दशप्रकारंउत्पादपूर्वमग्रायणीयंवी
नास्तिप्रवादंज्ञानप्रवादंसत्यप्रवादमात्मप्रवादंकर्मप्रवादंचप्रत्या

ख्याननामधेयंविद्यानुवादंकल्याणनामधेयंप्राणावायंक्रियाविशालंलोकबिं
दुसारमितिकालभङ्गलग्नीवादीनांयदायत्रयथाचपर्यायैरुत्पादोवर्ण्यतेतदुत्पा
दपूर्वंक्रियावादादीनांप्रक्रियाग्रमग्रायणीचांगादीनांस्वसमयविषयश्चयत्राख्या
पितस्तदग्रायणीं छद्मस्थकेवलिनांवीर्यंसुरेन्द्रदैत्याधिपानांऋद्धयोनरेन्द्रचक्रध
रबलदेवानांचवीर्यलाभोद्व्याख्यानंसम्यक्कलक्षणंचयत्राभिहितंतद्वीर्यप्रवादंपंचा
नामस्तिकायानामर्थोनयानांचानेकपर्यायैरिदमस्तीदंनास्तीतिचकार्त्स्न्येनयत्रा
वभासितंतदस्तिनास्तिप्रवादं अथवावस्त्वमपिद्व्याख्यानंभावाभावपर्यायविधि
नाख्वपरपर्यायाभ्यामुभयनयवशीकृताभ्यामर्पितानर्पितसिद्धाभ्यांयत्रनिरूप
णंतदस्तिनास्तिप्रवादंपंचानामपिज्ञानानांप्रादुर्भावविषयायतनानांज्ञानिनाम
ज्ञानिनांमिंद्रियाणांचप्राधान्येनयत्रविभागोविभावितः तज्ज्ञानप्रवादं वाग्गुप्तिसं
स्कारकारणप्रयोगोद्वादशधाभाषावक्तारश्चानेकप्रकारमृषाभिधानंदशप्र
कारश्चसत्यसद्भावोयत्रप्ररूपितस्तत्सत्यप्रवादं वाग्गुसिंवक्ष्यमाणवाक्यस्का

रकारणानि शिरः कंठादीन्यष्टौ स्थानानि वाक्प्रयोगः शुभेतरलक्षणो वक्ष्यते अ
भ्याख्यानकलहपैशुन्यासंबद्धप्रलापरत्यरत्युपधिनिकृत्यप्रणतिमोषसम्यग्मि
थ्यादर्शनात्मिका भाषा द्वादशधा हिंसादेः कर्मणः कर्तुर्विरतस्य विरताविरतस्य
वायमस्य कर्त्तेत्यभिधानमभ्याख्यानं। कलहः प्रतीतः पृष्ठतो दोषाविष्करणं
पैशुन्यं धर्मार्थकाममोक्षासंबद्धा वागसंबद्धप्रलापः। शब्दादिविषयदेशादिषु
रत्युत्पादिका रतिवाक्। तेष्वेवारत्युत्पादिका रतिवाक् यां वाचं श्रुत्वा परिग्रहा
र्जनरक्षणादिष्वासज्यते सोपधिवाक्। वणिग्व्यवहारे यामवधार्य निकृ
त्यात्मा भवति सा निकृतिवाक्। यां श्रुत्वा तपोविज्ञानाधिकेष्वपि न प्रणमति
सा प्रणतिवाक् यां श्रुत्वा स्तेये वर्त्तते सा मोषवाक्।।
स्दर्शनवाक्। तद्विपरीता मिथ्यादर्शनवाक्। वक्तारस्याविष्कृतवक्तृत्वपर्याया द्वी
न्द्रियादयः। द्रव्यक्षेत्रकालभावाश्रयमनेकप्रकारमनृतं। दशविधः सत्यसद्भा
वः नामरूपस्थापनाप्रतीत्यसंवृतिसंयोजनाजनपददेशभावसमयसत्यभेदेन

तत्रसः चेतनेतरद्रव्यस्यासत्यप्यर्थे यद्व्यवहारार्थं संज्ञाकरणं तन्नामसत्यं इं
द्र इत्यादि यदर्थासंनिधानेपि रूपमात्रेणोच्यते तद्रूपसत्यं यथा चित्रपुरुषादिष्वस
त्यपि चैतन्योपयोगादावर्थे पुरुष इत्यादि असत्यप्यर्थे यत्कार्यार्थं स्थापितं द्यूताक्ष
निक्षेपादिषु तत्स्थापनासत्यं। आदिमदनादिसदौपशमिकादीन्भावान्प्रतीत्य
यद्वचनं तत्प्रतीत्यसत्यं यल्लोके संवृत्यानीतं वचनं तत्संवृतिसत्यं यथा पृथिव्याद्य
नेककारणत्वेपि सति पंके जातं पंकजमित्यादि पचूर्णवासानुलेपनप्रघर्षादि
षु पद्ममकरहंससर्वतोभद्रक्रौंचव्यूहादिषु वा सचेतनेतरद्रव्याणां यथाभाग
विधिसंनिवेशादि भावकं यद्वचनं तत्संयोजनासत्यं। द्वात्रिंशज्जनपदेष्वार्यानार्य
भेदेषु धर्मार्थकाममोक्षाणां प्रापकं यद्वचनं तज्जनपदसत्यं। ग्रामनगरराजगणपा
षंडजातिकुलादिधर्माणामुपदेष्टृ यद्वचनं तद्देशसत्यं। छद्मस्थज्ञानस्य द्रव्ययाथा
त्म्यादर्शनेपि संयतस्य संयतासंयतस्य वा स्वगुणपरिपालनार्थं प्रासुकमिदमप्रा
सुकमिदमप्रासुकमित्यादि यद्वचनं तद्भावसत्यं। प्रतिनियतषड्द्रव्यपर्याया-

राजवा-
८०

णामागमगम्यानां याथात्म्याविष्करणं यद्वचनं तत्समयसत्यं ॥ यत्रात्मनोस्तित्वना
स्तित्वनित्यत्वानित्यत्वकर्तृत्वभोक्तृत्वादयो धर्माः षड्जीवनिकायभेदाश्च युक्ति
तो निर्दिष्टास्तदात्मप्रवादं ॥ बंधोदयोपशमनिर्ज्जरापर्याया अनुभवप्रदेशाधि
करणानि स्थितिश्च जघन्यमध्यमोत्कृष्टा यत्र निर्दिश्यते तत्कर्मप्रवादं ॥ व्रत-
नियमप्रतिलेखनतः कल्पोपसर्गाचारप्रतिमाविराधनाराधनविशुद्ध्युपक्र
मश्रामण्यकारणं च परिमितापरिमितद्रव्यभावप्रत्याख्यानं च यत्राख्यातं त
त्प्रत्याख्याननामधेयं ॥ समस्ता विद्या अष्टौ महानिमित्तानि तद्विषयो रज्जुराशि
विधिः क्षेत्रं श्रेणी लोकप्रतिष्ठासंस्थानं समुद्घातश्च यत्र कथ्यते तद्विद्यानु
वादं ॥ तत्रांगुष्ठप्रसेनादीनामल्पविद्यानां सप्तशतानि रोहिण्यादीनां महावि
द्यानां पंचशतानि अंतरिक्षभौमांगस्वरस्वप्नलक्षणव्यंजनछिन्नान्यष्टौ महा
निमित्तानि तेषां विषयो लोकः ॥ क्षेत्रमाकाशं पटसूत्रवच्चर्मवपनवदानु
पूर्व्येणोर्ध्वाधस्तिर्यग्व्यवस्थिताः ॥ असंख्याता आकाशप्रदेशाः मध्यः श्रे

गायउक्ता॥ अलोकाकाशस्यानंतस्यबहुमध्येसुप्रतिष्ठकसंस्थानोलोकउर्ध्वम
धस्तिर्यक्चअधःवेत्रासनझल्लर्याकृतितनुवातवलयपरिक्षिप्तमध्येतिर्यक्प्र
तरवृत्तश्चतुर्दशरज्ज्वायामोमेरुप्रतिष्ठवज्रवैडूर्यपटलांतररुचकसंस्थितास
ष्टाकाशप्रदेशालोकमध्येलोकमध्याद्यावदैशानांतस्तावद्देकारज्जुरूर्द्धंचमा
हेंद्रांतेमिस्रः ब्रह्मलोकांतेर्द्धचतुर्थाः॥ कापिष्टांतेचतस्रः॥ महाशुक्रांतेसार्द्धपं
चमाः सहस्रांतेपंचप्राणतांतेसार्द्धषष्ठाः॥ अच्युतांतेषट् आलोकमध्याद्धः
पावच्छर्कराप्रथिव्यंतस्तावद्देकारज्जुस्ततोधः प्रथिवीनांपंचानांप्रत्येकमंते
ऽतोरज्जुरेकैकाद्द्वात्ततोधस्तमस्तमः प्रभाया आलोकांतादेकारज्जुः एवंसमा
धोरज्जवः घनोदनोदधिघनानिलतनुवातवलयानित्रीणियैरयंपरिक्षिप्तः सर्वःस
मंतालोकः॥ त्रयाणामप्यधोलोकदिग्विदिक्पार्श्वभाविनांप्रत्येकंविस्तारोविंश
तियोजनसहस्राणिततउपरिक्रमतोहानिवशात्तिर्यग्लोकभाविदिक्पार्श्वेष्व
ष्टसुप्रत्येकंत्रीण्यपिवलयानिपंचचतुस्त्रियोजनविस्तीर्णानिपुनरुपरिवृद्धि

राजवा
६१

वशाद्ब्रह्मलोके दिग्विदिक्षु पार्श्वेष्वष्टासु प्रत्येकं त्रीणि पिवलयानि सप्तपंचचतुर्यो
जनविस्तीर्णानि ततो हीनि वर्सा ब्रह्मलोकाग्रे अष्टास्वपि दिग्विदिक्पार्श्वेषु प्रत्येकं
एप पिवलयानि पंचचतुस्त्रियोजनविस्तीर्णानि दंडवलयानि ततः परं पर्यंतघनत्री
णयप्युपरि लोकाग्रे घनोदधेर्द्विगव्यूति घनानिलस्य क्रोश तनुवातस्य देशोनः
क्रोशो विस्तारः अधः कलंकलपृथ्वीपर्यंते घनोदधेः सप्तघनानिलस्य पंचत
नुवातस्य चत्वारि योजनानि विस्तारः अधोलोकमूले दिग्विदिक्षु विष्कंभः स
प्तरज्जवस्तिर्यग्लोके रज्जुरेका ब्रह्मलोके पंचपुनः लोकाग्रे रज्जुरेका लोकमध्या
दधो रज्जुमवगाह्य शार्करांते अष्टास्वपि दिक्षु विदिक्षु विष्कंभः रज्जुरेका रत्ना
श्च षट् सप्तभागास्ततो रज्जुमवगाह्य वालुकांते द्वे रज्जू रत्नाश्च पंच सप्तभागास्त
तो रज्जुमवगाह्य पंकांतेति स्रो रज्जवः रत्नाश्चत्वारः सप्तभागास्ततो रज्जुमवगा
ह्य मांते चतस्रो रज्जवः रत्नाश्च त्रयः सप्तभागास्ततो रज्जुमवगाह्य तमः
पंच रज्जवः रत्नाश्च द्वौ सप्तभागौ ततो रज्जुमवगाह्य तमस्तमः प्रभांते षड्रज्ज

वः॥समभागश्चैकस्ततोरज्जुमवगाह्यकलंकलातेविष्कंभः समरज्जवः पञ्चतलद्
परिरज्जुमक्रम्यविष्कंभोद्वेरज्जूरज्ञाश्चएकः समभागः॥ततोरज्जुमक्रम्यतिस्रो
रज्जवः॥रज्ञाश्चद्वौसमभागौततोरज्जुमक्रम्यचतस्रोरज्जवः रज्ञाश्चत्रयः समभा
गाः॥ततोर्द्धरज्जुमक्रम्यरज्जवः॥पंचततोर्द्धरज्जुमक्रम्यचतस्रोरज्जवः रज्ञाश्च
त्रयः समभागाः॥ततोरज्जुमक्रम्यतिस्रोरज्जवः॥रज्ञाश्चद्वौसमभागौततोरज्जु
मक्रम्यद्वेरज्जूरज्ञाश्चएकः समभागः॥ततोरज्जुमक्रम्यलोकांतेरज्जुरेकाविष्कं
भः॥एषरज्जुविधिः हेतेर्गमिक्रियत्वात्संभूयात्मप्रदेशानांचबहिरुद्धमनंसमुद्घा
तः॥सप्तविधः वेदनाकषायमारणांतिकतेजोविक्रियाहारकाकेवलिविषयभेदा
त्तत्रवातिकादिरोगविषादिद्रव्यसंबंधः॥संतापापादितवेदनाकृतोवेदनासमुद्घा
तः द्वितयप्रत्ययप्रकर्षोत्पादितक्रोधादिकृतः कषायसमुद्घातः॥ऊपक्रमिकान
पक्रमायुः॥क्षयाविर्भूतमरणांतप्रयोजनोमारणांतिकसमुद्घातः॥जीवानुग्रहोप
घातप्रवणातेजः॥शरीरनिवर्त्तनार्थस्तेजस्समुद्घातः॥एकत्वपृथक्त्वनानाविधि

रा.वा.

२२

विक्रियशरीरवाक्प्रचारप्रहरणादिविक्रियाप्रयोजनोवैक्रियसमुद्घातः॥अयोक्ति
विधिनाऽल्पसावद्यसूक्ष्मार्थग्रहणप्रयोजनाहारकशरीरनिर्वृत्त्यर्थः॥आहारक
समुद्घातः॥वेदनीयस्यबहुत्वादल्पत्वाच्चायुषोनाभोगपूर्वकमायुःसमकरणार्थं
द्रव्यस्वभावत्वात्सुराद्रव्यस्यफेनवेगबुद्बुदाविर्भावोपशमनवद्देहस्थात्मप्रदेशा
नांबहिःसमुद्घातनंकेवलिसमुद्घातः॥आहारकमारणांतिकसमुद्घातावेकदि
क्कौ॥यतः॥आहारकशरीरमात्मानिर्वर्त्तयन्श्रेणिगतित्वादेकदिक्कानात्मप्रदे
शानसंख्यातान्निर्गमय्याहारकशरीररत्निमात्रंनिर्वर्त्तयति॥अन्यक्षेत्रसमुद्घा
र्यतेनान्यक्षेत्रेतस्तावेकदिक्कौ॥शेषाः॥पंचसमुद्घाताःषड्दिक्काः॥यतोवेदना
दिसमुद्घातवशाद्बहिर्निस्सृतानामात्मप्रदेशानांपूर्वपरादिक्षिणोत्तरोर्द्ध्वाधोदि
क्षुगमनमिष्टंश्रेणिगतित्वादात्मप्रदेशानांवेदनाकषायमारणांतिकतेजोवै
क्रियिकाहारकसमुद्घाताः॥असंख्येयसमयिकाः॥केवलिसमुद्घातः॥अ
ष्टसमयिकः॥दंडकपाटप्रतरलोकपूरणानिचतुर्षुसमयेषु॥पुनःलोकपू

रणानि चतुर्भिः समयैः॥ पुनः लोकपूरणानि प्रतरकपाटदंडकस्वशरीरानुप्रवे
शाश्चतुर्भिरिति॥ रविशशिग्रहनक्षत्रतारागणानांचारोपपादगतिविपर्ययफला
नि शकुनव्याहृतमर्हद्बलदेववासुदेवचक्रधरादीनांगर्भावतरणादिमहाक
ल्याणानि च यत्रोक्तानि तत्कल्याणनामधेयं कायचिकित्साद्यष्टांग आयुर्वेदः
भूतिकर्मजांगुलिप्रक्रमः॥ प्राणापानविभागोपि यत्र विस्तरेण वर्णितस्तत्प्रा
णावायं लेखादिकाः॥ कला द्वासप्ततिर्गुणाश्च चतुःषष्टिः स्त्रैणाः॥ शिल्पानि का
व्यगुणदोषक्रियाच्छंदोविचितिक्रियाफलोपभोक्तारश्च यत्र व्याख्याताः
तत्क्रियाविशालं यत्राष्टौ व्यवहाराश्चत्वारि बीजानि परिकर्मराशिक्रियाविभा
गश्च सर्वश्रुतसंपदुपदिष्टा तत्खलु लोकबिंदुसारं॥ आरातीयाचार्यकृतांगार्थ
प्रत्यासन्नरूपमंगबाह्यं॥ यद्गणधरशिष्यप्रशिष्यैरारातीयैरधिगतश्रुतार्थत
त्वैः कालदोषादल्पमेधायुर्बलानां प्राणिनामनुग्रहार्थमुपनिबद्धं॥ संक्षिप्तां
गार्थवचनविन्यासं तदंगबाह्यं तदनेकविधं कालिकोत्कालिकादिविकल्पा

राजवा॰
६३

तदंगबाह्यमनेकविधंकालिकमुत्कालिकमित्येवमादिविकल्पात्स्वाध्याय
कालेनियतकालंकालिकं। अनियतकालमुत्कालिकं। तद्भेदाउत्तराध्ययनादय
अनेकविधाः॥ अत्राह अनुमानादीनांपृथगनुपदेशःकिमर्थं॥
पृथगनुपदेशःश्रुतावरोधात् यस्मादेतान्यनुमानादीनिश्रुतेंतर्भवंति।
पृथगुपदेशोनक्रियते। तद्यथा। प्रत्यक्षपूर्वकंत्रिविधमनुमानंपूर्ववत्
सामान्यतोदृष्टंचेति। तत्रयेनाग्नेर्लिंगस्यपूर्वंधूमोदृष्टः सतत्रसिद्धाग्निधूमसंबंधा
हितसंस्कारः पश्चाद्धूमदर्शनादस्त्यत्राग्निरितिपूर्ववदग्निंगृह्णातीतिपूर्व
मानं। तथायेनपूर्वंविषाणविषाणिनोः संबंधउपलब्धस्तस्यविषाणस्योपद
र्शनाद्विषाणिन्यनुमानंपूर्ववत्। तथादेवदत्तस्यदेशांतरप्राप्तिंगतिपूर्विकां
दृष्ट्वासंबंधंतेन सवितरिदेशांतरप्राप्तिदर्शनात्गतेरत्यंतपरोक्षायाः
सामान्यतोदृष्टंतदेतत्त्रितयमपिस्वप्रतिपत्तिकालेऽनक्षरश्रुतंपरप्रतिप
त्तिकालेक्षरश्रुतं यथागौस्तथागवयः केवलंसास्नारहितइत्युपमानमपि

स्वपरप्रतिपत्तिविषयत्वादक्षरानक्षरश्रुते ऽनर्भवति तथाशास्त्रमपि प्रमाणं
श्रुतमेव यत् अस्य च इतीह सभगवान्ऋषभः इति परंपरीणगुरुवागमात् ज्ञेय
न इति श्रुतेऽन्तर्भावः प्रकृतिपुरुषो द्विवान्भुंक्ते अश्वत्थव जीवतीत्यर्थापत्ते
रात्रौ भुंक्ते इत्यर्थापत्तिश्चत्वारः प्रस्था आढकमिति सति स्थाने आढके हष्ट
संभवत्यष्टौ निर्कं कुडवो वेति प्रतिपत्ति संभवः ष्टणातल्मादी नास्तीह परणिकं
लाद्यभावे इष्टात्तमीयते नूनमत्र न वृष्टः पर्जन्य इत्यभाव एतेषामप्यर्था
पत्त्यादीनामनुक्तानामनुमानसमानमिति पूर्ववत्श्रुतांतर्भावः आख्यातं परो
क्षं प्रत्यक्षमिदानीं वक्तव्यं तद्द्विधा देशप्रत्यक्षं सर्वप्रत्यक्षं च देशप्रत्यक्षम
वधिमनःपर्ययज्ञाने सर्वप्रत्यक्षं केवलं यद्येवमिदमेव तावद्वधिज्ञानं
त्रिप्राकारप्रत्यक्षस्याद्यं व्याक्रियतामित्यत्रोच्यते आख्यातमस्य लक्षणं
आत्मप्रसादविशेषसत्यत्वर्षसंस्थाकरणादवधीयते तदित्यवधिज्ञान
मिति यद्येवं तस्येदानीं भेदो वक्तव्यः उच्यते हि विधोवधिः भवप्रत्य

रावा॰ ९४

त्ययसर्वशब्दस्यनिरवशेषवाचित्वात्सर्वावधिमपेक्ष्यपरमावधेर्देशावधित्वमेवेति
वक्ष्यामः॥तत्रयोसौभवप्रत्ययस्तत्प्रतिपादनार्थमाह॥भवप्रत्ययोवधिर्देवना
रकाणां॥भवइत्युच्यतेकोनामभवः॥आयुर्नामकर्मोदयविशेषापादितपर्यायो
आत्मनोभवः॥पर्यायः॥आयुषोनाम्नश्चउदयविशेषात्तेयकारणापेक्ष
विर्भवतिसाधारणलक्षणोभवइत्युच्यतेप्रत्ययशब्दस्यानेकार्थसंभवेविवक्षा
तोनिमित्तार्थगतिः॥अयंप्रत्ययशब्दोनेकार्थः क्वचित्ज्ञानेवर्त्तते॥यथार्थाभि
धानप्रत्ययाइति॥क्वचिच्छपथेवर्त्ततेयथापरद्रव्यहरणादिषुसत्युपालंभेप्र
नेनकृतइति॥क्वचिद्धेतौवर्त्ततेयथाविद्याप्रत्ययाःसंस्काराइतितत्रेहविवक्षातो
निमित्तार्थोवेदितव्यः॥भवप्रत्ययोभवनिमित्तइतिक्षयोपशमाभावइतिचेन्नत
स्मिन्सतितत्सद्भावात्पक्षेपतत्रिगतिवत्॥स्यादेतद्यदितत्रभवनिमित्तोवधिः॥क
र्मणःक्षयोपशमोनर्थकइतितन्नकिंकारणंतस्मिन्सतिस
वत्यथाकाशेसतिपक्षिणोगतिर्भवतितथावधिज्ञानावरणक्षयोपशमेतरंगे

हेतोस्तस्यावधेर्भवो भवत्युवाह्यो हेतुः इतरथा ह्यविशेषप्रसंगः यदि हि भव एव हेतुः
स्यात्सर्वेषां देवनारकाणां तुल्यः स्यादवधेरविशेषप्रसंगः स्यादिष्यते च प्रकर्षा
प्रकर्षभावेन वृत्तिः कथं पुनर्भवो हेतुरिति चेद्व्रतनियमाद्यभावाद्यथा तिर
श्चां मनुष्याणां चाहिंसादिव्रतनियमाहेतुकोवधिर्न तथा देवानां नारकाणां
चाहिंसादिव्रतनियमाभिसंधिरस्ति कुतो भवं प्रतीत्य कर्मोदयस्य तथाभावा
त्तस्मात्तत्र भव एव बाह्यसाधनं प्रधानमित्युच्यते अविशेषात्सर्वप्रसंग इति
चेन्न सम्यगधिकारात् स्यादेतद्देवनारकाणामित्यविशेषवचनान्मिथ्यादृष्टी
नामप्यवधिप्रसंग इति तन्न किं कारणं सम्यगधिकारात्सम्यग्दर्शनं सम्यग्ज्ञान
मिति वर्त्तते तत्संबंधात्सम्यग्दृष्टीनामवधिर्मिथ्यादृष्टीनां विभंगो वेदितव्यः अथ
वा वक्ष्यमाणाभिसंबंधान्न सर्वप्रसंगः वक्ष्यते ह्येतन्मतिश्रुतावधयो विपर्ययश्च
ति अथवा व्याख्यानाद्विशेषप्रतिपत्तिः आगमे प्रसिद्धेर्नारकशब्दस्य पूर्वनि
पात इति चेन्नोभयलक्षणप्राप्तत्वाद्देवशब्दस्य स्यादेतन्नारकशब्दस्य पूर्वनिपा

राजवा·
६५

नइतिचेन्नोभयलक्षणप्राप्तत्वाद्देवशब्दस्यपादेतन्नारकशब्दस्यपूर्वनिपातेनभ
वितव्यं कुतः आगमेप्रसिद्धेः आगमेहिजीवस्थानादिसदादिष्वनुयोगद्वारे
णादेशवचनेनारकाणामेवादौसदादिप्ररूपणाकृता ततोनारकशब्दस्यपू
र्वनिपातेनभवितव्यमितितन्नकिंकारणंउभयलक्षणप्राप्तत्वाद्देवशब्दस्य
देवशब्दोहिअल्पाजभ्यर्हितश्चेतिवृत्तौपूर्वप्रयोगार्हः आगमोवाक्यविष
योनिर्देशवृत्तिनास्तिनियमः आहोर्कंभवतेष्यतेप्रकर्षाप्रकर्षभावेनवृत्ति
रितितत्कथमितिचेदुच्यते देवेषुतावद्भवनवासिनांदशप्रकाराणामपिजघन्यो
वधिः पंचविंशतियोजनान्युत्कृष्टोसुराणामसंख्यातायोजनकोटीकोट्योध
ऊर्ध्वं मस्तुविमानस्योपरिपर्यंतोनागादिकुमाराणांनवविधानामप्युत्कृष्टो
वधिरधोसंख्यातानियोजनसहस्राणिऊर्ध्वंमंदरचूलिकायाः उपरिपर्यंतस्ति
र्यगसंख्यातानियोजनसहस्राणिव्यंतराणामष्टविधानांजघन्योवधिः पंच
विंशतियोजनानि उत्कृष्टोस्यसंख्यातानियोजनसहस्राणिअधः ऊर्ध्वं

व्य

नस्योपरिपर्यंतस्तिर्यगसंख्यातायोजनकोटीकोट्यः ॥ ज्योतिष्काजघन्योवधे
रधः संख्येयानियोजनान्युत्कृष्टस्त्वसंख्येयानियोजनसहस्राण्यूर्द्ध मात्मी
यविमानस्योपरिपर्यंतः ॥ तिर्यगसंख्यातायोजनकोटीकोट्यः वैमानिकेषु
सौधर्मैशानीयानां जघन्योवधिर्ज्योतिष्कवदुत्कृष्टः रत्नप्रभायाअधश्चरम
उत्कृष्टः सानत्कुमारमाहेंद्राणांजघन्योवधिः रत्नप्रभायाः ॥ अधश्चरमः उ
त्कृष्टः ॥ शर्कराप्रभायाअधश्चरमः ॥ ब्रह्मब्रह्मोत्तरलांतवकापिष्ठानांजघ
न्योवधिः ॥ शर्कराप्रभाया ॥ अधश्चरमउत्कृष्टोवालुकाप्रभायाअधश्च
रमः शुक्रमहाशुक्रसतारसहस्रारणांजघन्योवधिर्वालुकप्रभाया ॥ अ
धश्चरमउत्कृष्टपंकप्रभाया ॥ अधश्चरमउत्कृष्टपंकप्रभाया ॥ अधश्चरमः
आनतप्राणतारणाच्युतानांजघन्योवधिपंकप्रभायाअधश्चरमः ॥ उत्कृष्टो
धूमप्रभायाअधश्चरमः ॥ उत्कृष्टः नवानांग्रैवेयकानांजघन्योवधिर्धूम
प्रभायाअधश्चरमः ॥ उत्कृष्टः तमः प्रभायाअधश्चरमः नवानामनुदि

राजवा· ६६

दिशामांपंचानुत्तरविमानवासिनांचलोकनालिपर्यंतोवधिः सौधर्मादीनाम
नुत्तरांतानाऊर्द्ध्वस्वविमानस्योपरिपर्यंतस्तिर्यगसंख्यातायोजनकोटीकोट्यः
र्थ्येषांकालद्रव्यभावेषु कोवधिरित्यत्रोच्यते। यस्ययावत्क्षेत्रावधिस्त
स्यतावत्स्वाकाशप्रदेशपरि॥छिन्नेकालद्रव्येभवतः॥ तावत्सुसमयेष्वतीते
ष्वनागतेषुचप्रवर्त्तते। तावदसंख्यातभेदेष्वनंतप्रदेशेषु॥ पुद्गलस्कंधे
षुजीवेषुचसकर्मकेषुभावतः स्वविषयपुद्गलस्कंधानांरूपादिविकल्पे
षुजीवपरिणामेषुचऔदयिकौपशमिकक्षायोपशमिकेषु॥ योजनमर्द्धग
व्यूतहीनमागव्यूतात्तत्रथारत्नप्रभायांयोजनमवधिरधः॥ द्वितीयायामधो
र्द्धचतुर्थानिगव्यूतानितृतीयायामधः। त्रीणिगव्यूतानिचतुर्थ्यामधोर्द्धतृ
तीयानिगव्यूतानिपंचम्यांद्वेगव्यूतेषष्ठ्यामधोर्द्धाधिकंगव्यूतं। सप्तम्यामधो
गव्यूतं। सर्वासुपृथिवीषुनारकाणामवधिरुपरि-आत्मीयनरकावासो
र्यगसंख्यातायोजनकोटीकोट्यःकालद्रव्यभावपरिमाणंपूर्ववद्वेदितव्यंय

दिभवप्रत्ययोवधिर्देवनारकाणामहाक्षयोपशमहेतुकः। केषामित्यत आह:
क्षयोपशमनिमित्तः षड्विकल्पः शेषाणां॥ अवधिज्ञाना॥वरणस्य देशघाति
स्पर्द्धकानामुदये सति सर्वघातिस्पर्द्धकानामुदयाभावः। स शेषाणां वेदितव्यः
के पुनः शेषाः मनुष्यास्तिर्यंचश्च शेषास्तत्र तेषामविशेषात्सर्वेषां तिरश्चां म
नुष्याणां चावधिप्रसंग इति तन्न किं कारणं तत्सामर्थ्यविरहात् न ह्यसंज्ञिना
मपर्याप्तकानां तत्सामर्थ्यमस्ति संज्ञिनां पर्याप्तकानां च सर्वेषां केषां तर्हि य
थोक्तनिमित्तसंनिधाने सति शांत क्षीणकर्मणां तस्योपलब्धेः॥ यथोक्तसम्य
ग्दर्शनादिनिमित्तसंनिधाने सति शांतक्षीणकर्मणां तस्योपलब्धिर्भवति नतु स
र्वस्य क्षयोपशमनिमित्तस्तत्र किमुच्यते क्षयोपशमनिमित्तः शेषाणामिति
सर्वस्य क्षयोपशमनिमित्तत्वेन तु वचनं नियमार्थमब्भक्षवत् यथा न कश्चिदपो
न भक्षयतीत्यब्ग्रहणं नियमार्थं क्रियते अप एव भक्षयतीति तथा सर्वक्षयो
पशमनिमित्तग्रहणं नियमार्थं क्षयोपशमनिमित्ता एव न भवनिमित्त इति

राजवा·
९७

सएषोवधिः षड्विकल्पः कुतः अनुगाम्यननुगामिवर्द्धमानहीयमानावस्थि
तानवस्थितभेदात्षड्विधः कश्चिदवधिर्भास्करप्रकाशवद्गच्छंतमनुगच्छति क
श्चिन्नानुगच्छतितत्रैवातिपततिउन्मुखप्रश्नादेशिकपुरुषवचनवत् अप
वधिररणिनिर्मथनोत्पन्नशुष्कपत्रोपचीयमानेंधननिचयसमिद्धपावक
वत्सम्यग्दर्शनादिगुणविशुद्धिपरिणामसंनिधानाद्यत्परिमाणउत्पन्नस्ततोवर्द्ध
तेआअसंख्येयलोकेभ्यः अपरोवधिः परिच्छिन्नोपादानसंततपाग्निशिखा
वत्सम्यग्दर्शनादिगुणहानिसंक्लेशपरिणामविवृद्धियोगाद्यत्प्रमाणउत्पन्नस्त
तोहीयते आअंगुलस्यासंख्येयभागात् इतरोवधिः सम्यग्दर्शनादिगुणाव
स्थानाद्यत्परिमाणउत्पन्नस्तत्परिमाणएवावतिष्ठतेनहीयते नापिवर्द्धतेलिं
गवदाभवक्षयादाकेवलज्ञानोत्पत्तेर्वा अन्योवधिः सम्यग्दर्शनादिगुणवृद्धि
हानियोगात् यत्परिमाणउत्पन्नस्ततोवर्द्धतेयावदनेनवर्द्धितव्यंहीयतेचयाव
दनेनहातव्यंवायुवेगप्रेरितजलोर्मिवदेवंषड्विकल्पोवधिर्भवति पुनरपरोव

धेस्त्रयोभेदाः। देशावधिः। परमावधिः सर्वावधिश्चेति। तत्र देशावधिस्त्रेधा जघ
न्योत्कृष्टः। अजघन्योत्कृष्टश्चेति। तथा परमावधिरपि त्रिधा। सर्वावधिरविक
ल्पत्वादेक एव उत्सेधांगुलासंख्येयभागक्षेत्रो देशावधिर्जघन्यः। उत्कृष्टः कृ
त्स्नलोकः तयोरंतराले संख्येयविकल्पः अजघन्योत्कृष्टः। परमावधिर्जघन्य
एकप्रदेशाधिकलोकक्षेत्रः। उत्कृष्टः संख्येयलोकक्षेत्रः। अजघन्योत्कृष्टो
मध्यमक्षेत्रः। उत्कृष्टपरमावधिक्षेत्राद्बहिरसंख्यातक्षेत्रः सर्वावधिर्वर्द्धमानो
हीयमानः अवस्थितः अनवस्थितः अनुगाम्यननुगामी अप्रतिपाती प्रतिपाती
ति एते अष्टौ भेदा देशावधेर्भवंति हीयमानप्रतिपातिभेदवर्ज्या इतरे षड्भेदा भवं
ति परमावधेः अवस्थितो अनुगाम्यननुगाम्यप्रतिपातीत्येते चत्वारो भेदाः सर्वावधे
स्तत्र षण्णामुक्तलक्षणाः प्रतिपातीति विनाशी विद्युत्प्रकाशवत् तद्विपरीतो
अप्रतिपाती तत्र देशावधेः सर्वजघन्यस्य क्षेत्रमुत्सेधांगुलस्यासंख्येयभागः आ
वलिकाया असंख्येयभागः कालः अंगुलस्यासंख्येयभागक्षेत्रप्रदेशप्रमाणं

राजवा·

द्रव्यं तत्प्रमाणापरिच्छिन्नेष्वसंख्येयेषु स्कंधेष्वनंतप्रदेशेषु ज्ञानं वर्त्तते स्वविषय
स्कंधगमानंतवर्णादिविकल्पो भावस्तस्य वृद्धिरुच्यते प्रदेशोत्तराक्षेत्रवृद्धिर्नास्ति
एकजीवस्य नानाजीवानां च प्रदेशोत्तरक्षेत्रे वृद्धिर्भवति आसर्वलोकादेकजीव
स्यांगुलासंख्येयभागादूर्द्ध्वं विशुद्धिवशान्मंडुकप्लुत्यांगुलासंख्येयभागक्षेत्रे
वृद्धिर्भवत्यासर्वलोकान्नानाजीवा अपि प्रदेशोत्तरवृद्ध्या नावर्द्धयंते यावदंगु
लस्यासंख्येयभागः कालवृद्धिरेकजीवस्य नानाजीवानां वा मौलादावलिकाला
ख्येयभागात् ॥ कश्चिदेकसमयोत्तरा कश्चिद्द्विसमयोत्तरा कश्चित्संख्येयसम
योत्तरा यावदावलिकाया असंख्येयभागः ॥ सैषा क्षेत्रकालवृद्धिः ॥ कया वृद्ध्या चतु
र्विधयासंख्येयभागवृद्ध्या संख्येयगुणवृद्ध्या असंख्येयगुणवृद्ध्या वा एवं द्रव्यमपि
वर्द्धमानं चतुर्विधया वृद्ध्या वर्द्धते भाववृद्धिः षोढा अनंतभागवृद्धिरसंख्येयभाग
।संख्येयभागवृद्धिः संख्येयगुणवृद्धिरसंख्येयगुणवृद्धिरनंतगुणवृद्धि
रिति अनयाः क्षेत्रकालद्रव्यभाववृद्ध्योक्तया ॥ आसर्वलोका

रपितत्थेवयोंगुलसंख्येयभागक्षेत्रोवधिस्तस्यावलिकायासंख्येयभागः।कालः
अंगुलसंख्येयभागक्षेत्राकाशप्रदेशप्रमाणंद्रव्यंभावः।पूर्वोदनंतोवास्यादसं
ख्येयोवास्यात्संख्येयोवास्यादंगुलमात्रक्षेत्रोवधिस्तस्यषड्नाश्यावलिकाका
ल।द्रव्यभावौपूर्ववद्योंगुलपृथक्त्वक्षेत्रोवधिस्तस्यावलिकाकालः।द्रव्यभावौ
पूर्ववद्योहस्तप्रमाणक्षेत्रोवधिस्तस्यावलिकापृथक्त्वंकाल।द्रव्यभावौपूर्वव
द्योगव्यूतिमात्रक्षेत्रोवधिस्तस्यसाधिकोच्छ्वासः।काल।द्रव्यभावौपूर्ववत्।यो
योजनमात्रक्षेत्रोवधिस्तस्यभिन्नमुहूर्त्तः।कालः।द्रव्यभावौपूर्ववद्य।पंचविं
शतियोजनप्रमाणक्षेत्रोवधिस्तस्यषदूनोदिवसः।कालः।द्रव्यभावौपूर्ववद्यो
भरतक्षेत्रमात्रोवधिस्तस्यार्द्धमासकाल।द्रव्यभावौपूर्ववत्।योजंबूद्वीपमात्रक्षे
त्रोवधिस्तस्यसाधिकोमासः।कालः।द्रव्यभावौपूर्ववद्योमनुष्यलोकमात्रक्षे
त्रोवधिस्तस्यसंवत्सरः।कालः।द्रव्यभावौपूर्ववत्।योरुचकांतप्रमाणक्षेत्रो
वधिस्तस्यसंवत्सरपृथक्त्वंकालः।द्रव्यभावौपूर्ववत्।यःसंख्येयद्वीपसमुद्र

क्षेत्रोवधिस्तस्यासंख्येयाः संवत्सराः कालः द्रव्यभावौपूर्ववत्तयोसंख्येयद्वीपसमु
द्रक्षेत्रोवधिस्तस्यासंख्येयाः संवत्सराःकालः द्रव्यभावौपूर्ववत् एवंजघन्यो
त्कृष्टस्तिर्यग्नराणांदेशावधिरुक्तः आश्रित्य मनुष्यानुत्कृष्टदेशावधिरुच्यते
क्षेत्रमसंख्येयाद्वीपसमुद्राः कालोप्यसंख्येयाः संवत्सरास्तेजः शरीर
णांद्रव्यं किंयच्चतदसंख्येयद्वीपसमुद्राकाशप्रदेशपरिछिन्नाभिरसंख्ये
याभिस्तेजः शरीरद्रव्यवर्गणाभिर्निर्वर्तितंतावदसंख्येयस्कंधानंतत्र
देशाज्ज्ञानातीत्यर्थः भावः पूर्ववत्तिरश्चांमनुष्याणांचजघन्योदेशाव
धिर्भवतितिरश्चांतुदेशावधिरेवनपरमावधिर्नापिसर्वावधिः अथम
नुष्याणामुत्कृष्टोदेशावधिरुच्यते क्षेत्रमसंख्येयाद्वीपसमुद्राः कालो
प्यसंख्येया संवत्सराः द्रव्यंकार्माणद्रव्यंकिंयच्चतदसंख्येयद्वीपसमुद्राका
शप्रदेशपरिछिन्नाअसंख्येयाज्ञानावरणादिकार्माणद्रव्यवर्गणाभावः पू
र्ववंदेषदेशावधिरुत्कृष्टोमनुष्याणांसंयतानांभवतिपरमावधिरुच्यते

जघन्यस्यपरमावधे॥ क्षेत्रंप्रदेशाधिकोलोकः॥ कालः प्रदेशाधिकलोकाकाशप्रदे
शावच्छिन्नप्रमाणः॥ अविभागिनः समयास्तेचासंख्याताः संवत्सराः द्रव्यंप्रदेशा
धिकलोकाकाशप्रदेशावच्छिन्नप्रमाणंभावः पूर्ववदनंतः॥ परक्षेत्रवृद्धिर्नानाजीवे
कजीवानामविशेषेणविशुद्धिवशादसंख्येयालोकाः॥ एवंतावदसंख्येयालोका
वृद्धिर्यावदुत्कृष्टपरमावधिक्षेत्रंकियंतस्तेऽसंख्येयाः॥ आवलिकायाः॥ असं
ख्येयभागप्रमाणः॥ कालद्रव्यभावाः॥ पूर्ववदुत्कृष्टपरमावधे॥ क्षेत्रंसलोकालोक
प्रमाणाअसंख्येयालोकाः॥ किंयंतस्तेऽग्निजीवतुल्याः॥ कालद्रव्यभावाः॥ पूर्वव
त्सएषत्रिविधोपिपरमावधिरुत्कृष्टचारित्रयुक्तस्यैवभवतिनान्यस्यवर्द्धमानोभ
वतिनहीयमानः॥ अप्रतिपातिनप्रतिपातियस्ययावतिसलोकेलोकप्रमाणासंख्ये
यलोकक्षेत्रेजातस्तस्यताघल्यवस्थानादवस्थितोभवत्यनवस्थितश्चवृद्धिप्रतिन
हानिमेहलोकिकदेशांतरगमनादनुगामिपारलौकिकदेशांतरानुगमनाभावाद
ननुगामिसर्वावधिरुच्यते॥ असंख्येयानामसंख्येयभेदत्वादुत्कृष्टपरमावधिक्षेत्र

मसंख्येयलोकगुणितमस्यक्षेत्रं कालद्रव्यभावाः॥ पूर्ववत्सएषनवर्द्धमानोनान
हीयमानोनानवस्थितोनप्रतिपातिप्राकंयतभवक्षयादवस्थितोऽप्रतिपातिभ
वांतरंप्रत्यननुगामिदेशांतरंप्रत्यनुगामि॥ सर्वशब्दस्यसाकल्यवाचित्वाद्द्रव्यक्षे
त्रकालभावैः सर्वावधेरंतः॥ यातिपरमावधिः॥ ततः परमावधिरपिदेशावधि
रपिदेशावधिरेवेतिद्विविधएवावधिः॥ सर्वावधिदेशावधिश्चो त्कायोवृद्धौयदा
कालवृद्धिस्तदाचतुर्णामपिवृद्धिर्नियताक्षेत्रवृद्धौकालवृद्धिर्भाज्यास्यात्कालवृ
॥ स्यान्नेतिद्रव्यभावयोस्तुवृद्धिर्नियताद्रव्यवृद्धौभाववृद्धिर्नियताक्षेत्रकालवृ
द्धिः॥ पुनर्भाज्यास्याद्वानवेतिभाववृद्धावपिद्रव्यवृद्धिर्नियताक्षेत्रकालवृद्धिर्भा
साएषोवधिज्ञानोपयोगोद्विधाभवति॥ एकक्षेत्रोनेकक्षेत्रश्चश्री
वत्साद्यन्यतमोपयोगोपकरणएकक्षेत्रः तदनेकोपकर
णोपयोगोनेकक्षेत्रोयद्येवंपरायत्तत्वात्परोक्षत्वप्रसंग॥ नेद्रियेषुपरत्वरूढेरिं
द्रियाणिपराण्याहुरिंद्रियेभ्यः परंमनः मनसस्तुपराबुद्धिर्बुद्धेः॥ परतरोहिसइत्ये

वंबहुधाव्याख्यातंअवधिज्ञानंमनःपर्य्ययस्येदानीमवसरप्राप्तस्यभेदपुरःसरं
लक्षणंव्याचिख्यासुरिदमाह॥ऋजुविपुलमतीमनःपर्ययः॥ऋज्वीनिवर्त्ति
ताप्रगुणाचकस्मान्निवर्त्तितवाक्कायमनस्कृतार्थस्यपरमनोगतस्यविज्ञानात्
ऋज्वीमतिर्यस्यसोयमृजुमतिः॥अनिवर्त्तिता॥कुटिलाचविपुलाकस्मादनिवर्त्तितवा
क्कायमनस्कृतार्थस्यपरकीयमनोगतस्यविज्ञानाद्विपुलामतिरस्यसविपुलमतिः
ऋजुमतिश्चविपुलमतिश्चऋजुविपुलमतीएकस्यमतिशब्दस्यगतार्थत्वादप्र
योगः॥अथवाऋज्वीचविपुलाचऋजुविपुले॥ऋजुविपुलेमतीययोस्तौ॥ऋजु
विपुलमती॥इतिसएषमनःपर्ययोद्विधा॥ऋजुमतिर्विपुलमतिरिति॥अयंचोक्तोभे
दः लक्षणमस्येदानीवक्तव्यमित्यत्रोच्यतेमनःसंबंधेनलब्धवृत्तिर्मनःपर्ययःवी
र्यांतरायमनःपर्ययज्ञानावरणक्षयोपशमांगोपांगनामलाभोपष्टंभादात्मीयप
रकीयमनःसंबंधेनलब्धवृत्तिरुपयोगोमनःपर्ययः मतिज्ञानप्रसंगइतिचेन्ना
न्यदीयमनोपेक्षामात्रत्वादभ्रेचंद्रव्यपदेशवत्स्यान्मतंयथामनश्चक्षुरादिसं

वंधा। चक्षुरादिज्ञानमाविर्भवतितन्मतिज्ञानंतथामनः पर्ययोपिमनः संवंधा
ल्लब्धवृत्तिरितिमतिज्ञानंप्राप्नोतीतितन्नकिंकारणं। अन्यदीयमनोपेक्षामा
त्रत्वात्कथमभ्रेचंद्रव्यपदेशवत्यथाभ्रेचंद्रमसंपश्येति। अभ्रमपेक्षाकारण
मात्रंभवतिनचचक्षुरादिवन्निर्वर्तकं। चंद्रज्ञानस्यतथान्यदीयमनोप्यपेक्षा
कारणमात्रंभवतिपरकीयमनसिव्यवस्थितमर्थंजानातिमनः पर्ययइतित
तोनास्यतदायत। प्रभवइतिनमतिज्ञानप्रसंगः स्वमनदेशेवातदावरणकर्मक्ष
योपशमव्यपदेशाच्चक्षुष्यवधिज्ञाननिर्देशवत्। अथवाचक्षुर्देशस्थानां
मात्मप्रदेशानामच आवरण। क्षयोपशमाद्यथाचक्षुष्यवधिज्ञानव्यपदेश
इष्ट नचावधिर्मतिर्भवतितथामनः पर्ययज्ञानावरणक्षयोपशमात्स्वम
नोदेशस्थानामात्मप्रदेशानांमनः। पर्ययव्यपदेशोनचास्यमतित्वंमनः प्रति
वंधज्ञानादनुमानप्रसंगइतिचेन्नप्रत्यक्षलक्षणाविरोधात् स्या
धूमप्रतिवंधाद्धूमसंपर्के स्यादनुमानं। तथान्यदीयमनः प्रतिवंधात्तन्मनः

संयक्तानर्थाज्ज्ञानंमनःपर्ययोनुमानमितितन्नकिंकारणंप्रत्यक्षलक्षणा-
विरोधात्प्रत्यक्षलक्षणमुक्तमिंद्रियानिंद्रियनिरपेक्षमतीतव्यभिचारंसा
कारग्रहणंप्रत्यक्षमितितेनाविरोधोनमनः। पर्ययोनुमानंहितेनविरुध्य
ते। उपदेशपूर्वकत्वाच्चक्षुरादिकरणनिमित्तत्वाच्चानुमानस्यउपदेशाद्धिस्वय
मग्निरयंधूमइत्युपलभ्यपश्चाद्धूमदर्शनादग्नावनुमानंकरोतिचक्षुरादिक
रणसंबंधाच्चततोस्योक्तप्रत्यक्षलक्षणंविरुध्यतेनचतथामनः। पर्ययउप
देशंचक्षुरादिकरणसंबंधंचापेक्षते। सद्विधास्त्रोक्तविकल्पात्। मनःपर्य्य
योद्विधाकृतःस्त्रोक्तविकल्पादृजुमतिर्विपुलमतिरिति। आद्यस्त्रेधाऋजुमनोवा
क्कायविषयभेदाद्विपुलमतिमनः। पर्ययस्त्रिधाकृतः। ऋजुमनोवाक्कायवि
षयभेदादृजुमनस्कृतार्थज्ञः ऋजुवाक्कृतार्थज्ञः ऋजुकायकृतार्थज्ञश्चे
तद्यथामनसार्थव्यक्तंसंचिंत्यवार्त्तवाधर्मादिमुक्तामसंकीर्णमुच्चार्यकाय
प्रयोगंचोभयलोकफलनिष्पादनार्थमंगोपांगप्रत्यंगनिपातना। कुंचनप्र

स्मरणादिलक्षणं कृत्वा पुनरनंतरे समये कालांतरे वा तमेवार्थं चिंतितं मुक्तं कृतं वावि
स्मृतत्वान्न शक्नोति चिंतयितुं तमेवंविधमर्थं ऋजुमतिमनः। पर्यय। पश्यो। पश्ये
या जानाति। अपरमं सावद्यं अनेन विधिना त्वया चिंतितः। उक्तः कृतो चेति कथम
यमर्थो लभ्यते आगमाविरोधात् आगमे ह्युक्तं मनसा मनः। परिछिद्य परेषां संज्ञादी
न् जानातीति मनसात्मनात्मने त्यर्थः परमनः समंताद्धि हित्वा परिछिद्य मनसा चिं
तितस्य सचेतनेतरस्यार्थस्य मनस्यवस्थानान्मनो व्यपदेशः। मंचस्थानां पुरुषा
णां मंचव्यपदेशवमात्मना आत्मा वद्युध्यात्मनः। परेषां चिंतां जीवितमरणसुख
दुःखलाभालाभादीन् विजानाति व्यक्तमनसां जीवानामर्थं। जानाति नाव्यक्तम
नसां व्यक्तः स्फुटीकृतोर्थः। चिंतया सुनिवर्तितः। येते जीवा व्यक्तमनसस्तैरर्थं
चिंतितं ऋजुमति जानाति नेतरैः। कालतो जघन्येन जीवानामात्मनश्च द्वित्रि
ण्युत्कर्षेण सप्ताष्टानि भवग्रहणानि गत्यागत्यादिभिः प्ररूपयति क्षेत्रतो ज
घन्येन गव्यूतिपृथक्त्वस्याभ्यंतरं नवहिरुत्कर्षेणायोजनपृथक्त्व

वहि। द्वितीयः। षोढाऋजुवक्रमनोवाक्कायविषयभेदात् द्वितीयो विपुलमतिः षोढाभि
द्यतेकुतः ऋजुवक्रमनोवाक्कायविषयभेदादृजुविकल्पा। उक्ता। वक्रविकल्पा
श्चतद्विपरीतायोज्याः। तथात्मनः परेषांचचिंताजीवितमरणसुखदुःखलाभा
लाभादीनव्यक्तमनोभिर्व्यक्तमनोभिश्चचिंतितान् जानातिविपुलमति। काल
तोजघन्येनसप्ताष्टानिभवग्रहणाण्युत्कर्षेणासंख्येयानिगत्यागतिभिः। प्ररू
पयतिक्षेत्रतोजघन्येनयोजनपृथक्त्वमुत्कर्षेणमानुषोत्तरशैलाभ्यंतरेनबहि
एवंद्विभेदोमनःपर्ययोवर्णितस्तस्यकिंपरस्परतोविशेषोनास्तिउतास्तीत्यतआह
विशुद्ध्यप्रतिपाताभ्यांतद्विशेषः॥ तदावरणकर्मक्षयोपशमेसतिआत्मनः
प्रसादोविशुद्धिः प्रतिपतनंप्रतिपातः। उपशांतकषायस्यचारित्रमोहोद्रेकात्प्र
च्युतसंयमशिखरस्यप्रतिपातोभवतिक्षीणकषायस्यप्रतिपातकारणाभावाद
प्रतिपातः। विशुद्धिश्चअप्रतिपातश्चविशुद्ध्यप्रतिपातौताभ्यांविशुद्ध्यप्रतिपात
भ्यांतयोर्विशेषस्तद्विशेष। पूर्वसूत्रस्वतयोर्विशेषोनिरुक्तः। किमर्थंपुनरिदमुच्य

तौ॥ विशेषांतरप्रतिपत्त्यर्थं पुनर्वचनं॥ पूर्वसूत्रे विशेष उक्तस्तावता स्यन परितोष
स्ततो विशेषांतरप्रतिपत्त्यर्थं पुनरिदमुच्यते॥ चशब्दप्रसंग इति चेन्नप्राथमकर्म
कर्मेदाभावात्॥ यथामनः पर्ययस्य ऋजुविपुलमती भेदौ तथा विशुद्ध्यप्रतिपा
तावपि तस्यैव यदि भेदौ स्यातामित्युक्तश्चशब्दः स्यान्मतं ऋजुविशुद्ध्यप्रतिपातौ ऋजु
विपुलमत्योर्विशेषो न भेदावतश्चशब्दाप्रसंगस्तत्र विशुद्ध्या तावदृजुमतेर्वि
लमतिर्द्रव्यक्षेत्रकालभावैर्विशुद्धतरः॥ कथमिह यत्र॥ कार्म्मणद्रव्यानंतभागोंत्यः
सर्वावधिना ज्ञातस्तस्य पुनरनंतभागीकृतस्य मनः पर्ययज्ञेयोनंतभागो नंतस्यानं
तभेदत्वात् ऋजुमतिकार्म्मणद्रव्यानंतभागात् दूरविप्रकृष्टोत्यायानंतभागो विपु
लमतेर्द्रव्यक्षेत्रकालविशुद्धिरुक्ता भावतो विशुद्धिरुक्ता भावतो विशुद्धिः॥ सूक्ष्म
तरद्रव्यविषयत्वादेव वेदितव्या प्रकृष्टक्षयोपशमविशुद्धिभावयोगात् प्रतिपा
तेनापि विपुलमतिर्विशिष्टः॥ स्वामिनां प्रवर्द्धमानचारित्रोदयत्वात् ऋजुमति॥ पुनः
प्रतिपाति स्वामिनां कषायोद्रेकाद्धीयमानचारित्रोदयत्वाच्चान्यस्य मनःपर्यय

स्यप्रत्यात्ममर्यविशेषः॥ अथानयोरवधिमनः॥ पर्ययपयोः कुतो विशेष इत्यत आ
ह॥ विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्ययपयोः॥ विशुद्धिः प्रसादः॥ क्षे
त्रं यत्रस्थान्भावान्प्रतिपद्यते स्वामी प्रयोक्ता विषयो ज्ञेयः॥ अवधिज्ञानान्मनः॥
पर्ययस्य विशुद्धभावो ल्पद्रव्यविषयत्वादिति चेन्न भूय॥ पर्यायज्ञानात्स्यात्म
तमवधिज्ञानात्मनः॥ पर्ययो विशुद्धतरः कुतः॥ अल्पद्रव्यविषयत्वाद्यतः सर्वा
वधिरूपिद्रव्यानंतभागो मनः पर्ययद्रव्यमिति तन्मा किं कारणं भूयः पर्यायज्ञाना
द्यथा कश्चिद्बहूनि शास्त्राणि व्याचष्टे एकदेशेन न साकल्येन तद्गतमर्थं शक्नोति
वक्तुं॥ अपरस्त्वेकं शास्त्रं साकल्येन व्याचष्टे यावंतस्तस्यार्थास्तान्सर्वान् शक्नोति
वक्तुं॥ अयं पूर्वस्माद्विशुद्धतरविज्ञानो भवति तथावधिज्ञानविषयानंतभागस्ता
पि मनः॥ पर्ययो विशुद्धतरः॥ यतस्तमनंतभागं रूपादिभिर्बहुभि॥ पर्ययैः प्ररू
पयति क्षेत्रमुक्तं विषयो वक्ष्यते॥ स्वामित्वं प्रस्तूयते विशिष्टसंयमगुणो कार्यस
मवायि मनः॥ पर्ययः॥ विशिष्टः संयमगुणो यत्र विद्यते तत्रैव वर्त्तते मनः॥ पर्यय

घिर्भवति न देवनारकतिर्यग्योनेषु मनुष्येषु चोत्पद्यमानो गर्भजेषूत्पद्यते न संमू
र्छनजेषु गर्भजेषूत्पद्यमानः। कर्मभूमिजेषूत्पद्यते नाकर्मभूमिजेषु कर्मभूमिजे
षूत्पद्यमानः पर्याप्तकेषूत्पद्यते नापर्याप्तकेषूपजायमानः। सम्यग्दृष्टिषूपजा
यते न मिथ्यादृष्टिसासादनसम्यग्दृष्टिसम्यग्मिथ्यादृष्टिषु सम्यग्दृष्टिषूपजायमा
नः संयतेषूपजायते नासंयतसम्यग्दृष्टिसंयतासंयतेषु संयतेषूपजायमानः।
प्रमत्तादिषु क्षीणकषायांतेषूपजायते नोत्तरेषु तत्रोपजायमानः
चारित्रेषूपजायते न हीयमानचारित्रेषु सप्रवर्द्धमानचारित्रेषूपजायमानः स
मविधान्यतमर्द्धिप्राप्तेषु जायते नेतरेषु ऋद्धिप्राप्तेषु चकेषुचिन्न सर्वेष्विति वि
शिष्टसंयमग्रहणं वाक्ये कृतमवधिः। पुनश्चानुगामिकेष्विति स्वामिभेदादप्यन
योर्विशेषः। इदानीं केवलज्ञानलक्षणाभिधानं प्राप्तकालं तदुल्लंघ्य ज्ञाना
षयनिबंधपरीक्ष्यते। कृत्स्नस्य मोहक्षयाज्ञानदर्शनावरणांतरायक्षयाच्च के
वलमित्यत्र वक्ष्यमाणत्वाद्ध्येवमाद्ययोरेव तावन्मति

च्यतामित्यत आह ॥ मतिश्रुतयोर्निबंधो द्रव्येष्वसर्वपर्यायेषु ॥ निबंधनं निबं
धः॥ कस्य मतिश्रुतविषयस्य तत्तर्हि विषयग्रहणं कर्त्तव्यं न कर्त्तव्यं प्रत्यासत्तेः
प्रकृतविषयग्रहणाभिसंबंधः॥ प्रकृतं विषयग्रहणमस्ति क प्रकृतं विशुद्धि
क्षेत्रस्वामिविषयेभ्य इति तत्र प्रत्यासत्तेः॥ विषयग्रहणमिहाभिसंबध्यते तेन न च स-
विभक्तेतरनिर्द्दिष्टेन शक्यमतः इह संबंद्धुं अर्थवशाद्विभक्तिपरिणामः॥ यथा उच्चानि
देवदत्तस्य गृहाणि आमंत्रयस्वैनं देवदत्तमिति गम्यते॥ देवदत्तस्य गावो अश्वा हिर
ण्यमाढ्यो वैधवेयो देवदत्त इति गम्यते॥ एवमिहापि निबंधः कस्य विषयस्येत्यभि
संबध्यते॥ अथ द्रव्येष्विति बहुत्वनिर्देशः॥ किमर्थः द्रव्येष्विति बहुत्वनिर्देशः सर्व
द्रव्यपर्यायसंग्रहार्थं जीवधर्माकाशकालपुद्गलाभिधानानि षट् द्रव्याणि ते
षां सर्वेषां संग्रहार्थं॥ द्रव्येष्विति बहुत्वनिर्देशः॥ किं यत्तेन हि शेषणार्थमसर्वप
र्यायग्रहणं तेषां द्रव्याणामविशेषेण मतिश्रुतयोर्विषयभावप्रसंगे तद्विशेषणा
र्थमसर्वपर्यायग्रहणं क्रियते॥ तानि द्रव्याणि मतिश्रुतयोर्विषयभावमापद्य

राजवा॰
१०५

मानानि कतिपर्यायैरेव पर्यायैर्विषयभावमापद्यंते न सर्वपर्यायैरनंतैरपीति तत्कथमिह
मतिश्रुतयोश्चक्षुरादिकरणनिमित्तात् रूपाद्यालंबनासायामिन्द्रियेषु रूपादयो वर्त्तंते न तत्र
सर्वान्पर्यायानवगाहंते चक्षुरादिविषया नेवालंबते श्रुतमपि शब्दलिंगग्राह्य
श्च सर्वसंख्येयानेव द्रव्यपर्याय पुनः संख्येयानंतभेदाः न ते सर्वे विशेषाकारे
णते विषयीक्रियंते उक्तंच पन्नवणिज्जा भावा अणंतभागो दु अणभिलप्पा
णं पन्नवणिज्जाणं पुण अणंतभागो सुदणिबद्धोत्ति अतींद्रियेषु मतेरभावात् स
र्वद्रव्यासंप्रत्यय इति चेन्न नोइंद्रियविषयत्वात् स्यान्मतं धर्मास्तिकायादिषु
मतेरभावस्तेषां अतींद्रियत्वात् कृतो मतिः सर्वद्रव्यविषयनिबंधेति लक्षणमयुक्तमि
ति तन्न किं कारणं नोइंद्रियविषयत्वात् नोइंद्रियावरणक्षयोपशमलब्ध्यपेक्षं
नोइंद्रियं तेषु व्याप्रियते अथ हि तत्र न वर्त्ततावधिना सह निर्दिष्टेतरूपिष्वव
वृत्तेः अथ मतिश्रुतयोरनंतरनिर्दिष्टस्यावधेः को विषयनिबंध इत्यत्रा
ह ॥ रूपिष्ववधेः ॥ रूपशब्दस्यानेकार्थत्वे सामर्थ्याच्छुक्लादिग्रहणं अथ रू

पमनंतस्वभामितिनन्वेहसामर्थ्याच्चक्षुर्विषयेष्वल्पकादौवर्त्तमानोग्रह्यतेयदिस्वभाव
वाचिनोग्रहणंस्यादनर्थकंस्यान्नहिकस्यचित्स्वभावोनास्तीतिभूमाद्यनेकार्थत्वं
भवेन्नित्ययोगोभिधानवशाद्यद्यपिमत्वर्थीयस्यभूमादयोर्थाबहवःसंभवंति इ
हाभिधानवशान्नित्ययोगोवेदितव्य।नित्यंहिपुद्गलाद्रूपादयोयथाक्षी
रिणोवृक्षाइतियद्येवमबाधिस्थानस्यपुद्गलास्वरूपमस्वेनैवविषयभावंप्रतिपद्ये
रन्ननेरसादिस्वेननैषदोषस्तदुपलक्षणार्थत्वात्तदविनाभाविरसादिग्रहणं
तद्रूपंग्रहस्योपलक्षणत्वेनोपादीयते।अतस्तदविनाभाविनोरसादयोपिग
ह्यंते।यद्येवंतज्ज्ञानेषुसर्वेष्वनंतेषुपर्यायेषुवधेविषयनिबंधःप्राप्नोतीत्य
तआह।असर्वपर्यायग्रहणात्तव्रत्तेर्न्नसर्वगतिरिति।असर्वपर्यायेष्वितिएत
ग्रहणमनुवर्तते।यथादेवदत्तायगौर्दीयतांजिनदत्तायकंबलइतिदीयतेत्य
भिसंबंध्यतेएवमिहाप्यसर्वपर्यायेष्विति।अभिसंबंधात्तसर्वगतिर्भवति
ततोरूपिषुपुद्गलेषुप्राप्त्याकल्प्यादिपरिमाणेषुजीवपर्यायेषुद्रव्यषिको

पशमिकक्षायोपशमिके उत्पद्यते अवधिज्ञानं रूपिद्रव्यसंबंधात् क्षायिकपा
रिणामिकेषु नापि धर्मास्तिकायादिषु तत्संबंधाभावात् ॥ अथ मनःपर्ययस्य
विषयनिबंध इत्यत आह ॥ तदनंतभागे मनःपर्ययस्य ॥ यद्रूपिद्रव्यं सर्वा
ज्ञानस्य विषयत्वेन समर्थितं तस्यानंतभागीकृतस्य एकस्मिन् भागे मनःपर्यय
प्रवर्तते ॥ अथांते यन्निर्दिष्टं केवलज्ञानं तस्य को विषयनिबंध इत्यत आह ॥ स
र्वद्रव्यपर्यायेषु केवलस्य ॥ अत्राह किं द्रव्यं स्वपर्यायान् द्रवति द्रूयते वा तैरिति
द्रव्यं आत्मना पर्यायान् द्रवति गच्छतीति द्रव्यं बहुलापेक्षया कर्तरि साधुत्वं द्रूयते
वा तैरिति द्रव्यं कथंचिद्भेदसिद्धौ तत्कर्तृकर्मव्यपदेशसिद्धिः द्रव्यस्य पर्यायाणां
च कथंचिद्भेदस्त्वयुक्तः कर्तृकर्मव्यपदेशसिद्धेरिति इतरथा हि तदप्रसिद्धेरत्यंता
व्यतिरेकाद्यन्येकांते नैकत्वमवधार्य तस्य कर्तृकर्मव्यपदेशाप्रसिद्धिः स्यात् तु नः
अत्यंताव्यतिरेकात् हि तदेव निर्विशेषमेकं शक्यं तत्रापेक्षया विना कर्तृकर्म च
भवितुमर्हति ॥ अथ कः पर्यायस्तस्य मिथो भवनं प्रति विरोध्यविरोधिनां धर्माणां

स्पात्तानुपात्तहेतुकानांशब्दांतरात्मलाभनिमित्तत्वादर्पितव्यवहारैर्विषयोव
स्याविशेषः।पर्यायः।मिथोभवनंप्रतिकेचिद्धर्माविरोधिनःकेचिद्विरोधिनःत
त्रजीवस्यतावदनादिपारिणामिकचैतन्यजीवत्वभव्याभव्योर्ध्वगतिस्वभावास्ति
त्वादिभिरौदयिकादयोभावायथासंभवंयुगपद्भावादविरोधिनोविरोधिनश्चना
रकतैर्यग्योनदेवमनुष्यस्त्रीपुंनपुंसकएकद्वित्रिचतुःपंचेंद्रियबाल्यकौमा
रकोपप्रसादादयः।सहानवस्थानात्तथापौद्गलिका।अनादिपारिणामिकाःरू
परसगंधस्पर्शशब्दसामान्यास्तित्वादयः।शुक्लादिपंचकतिक्तादिपंचकगंध
द्वयस्पर्शाष्टकशब्दषट्कपर्यायैःप्रत्येकमेकद्वित्रिचतुः।पंचादिसंख्येयानंतगु
णपरिणामिभिर्यथासंभवंयुगपद्भावादविरोधिनोविरोधिनश्चशुक्लकृष्णनील
तिक्तकटुकसुरभेतरगंधादयः।प्रायोगिकाःवैस्रसिकाश्चपरमाणुस्कंधेषु
चसहानवस्थानादेवंधर्मास्तिकायादिष्वप्यमूर्त्तत्वाचेतनत्वासंख्येयप्रदेशत्व
गतिकारणस्वभावास्तित्वादयःअनंतभेदागुरुलघुगुणहानिवृद्धिविकारैः

प्रत्ययैः॥ परप्रत्ययैरगतिकारणत्वविशेषादिभिरविरोधिनः॥ परस्परविरोधि
नश्च ज्ञेयाः तेषु केषुचिदुपात्तहेतुकाद्रव्यक्षेत्रकालभावनिमित्ताऽऽदयिकाद
यश्चानुपात्तहेतुकाश्च त्रिषु कालेष्वविकारिणः॥ पारिणामिकाश्चैतन्यादयस्ते
षां विरोध्यविरोधिनां धर्माणामुपात्तानुपात्तहेतुकानां शब्दांतराल्लाभान्नि
मित्तत्वाच्चेतनो नारको बालक इत्यर्पितव्यवहारविषय इति व्यवहारश्च तत्रा
त्रिविधशब्दनयात्मकः॥ द्रव्यार्थिकानर्पणात्पर्यायार्थिकेनार्पितस्तस्यावि
षयत्वद्रव्यस्यावस्थाविशेष॥ पर्याय इत्युच्यते॥ तयोरितरेतरयोगलक्षणो
तयोरितरेतरयोगलक्षणो द्वंद्वो वेदितव्यः द्रव्याणि च पर्यायाश्च द्रव्यपर्यायाः इ
ति द्वंद्वे न्यत्वं न्यक्षन्यग्रोधवदिति चेन्न॥ तस्य कथंचिद्भेदे पि दर्शनाद्गोत्वगोपिंडव
तस्यान्मतं यदि द्वंद्वः॥ न्यक्षन्यग्रोधवदन्यत्वं द्रव्यपर्यायाणां प्राप्नोतीति तन्न किं
कारणं तस्य कथंचिद्भेदे पि दर्शनात् गोत्वगोपिंडवद्यथा गोत्वं च गोपिंडश्च गो
पिंडाविति अनन्यत्वे पि द्वंद्वो भवति तथा द्रव्यपर्यायेष्विति ननु सामान्यविशेष

योरन्यत्वात्साध्यसमेतदिति नैष दोषः॥ उक्तमेतत् द्रनन्यत्वं सामान्यविशेषयोर्द्रव्य
ग्रहणं पर्यायविशेषणं चेन्नानर्थक्यात्स्यादेतत् द्रव्याणां पर्यायाः द्रव्यपर्याया इति
द्रव्यग्रहणं पर्यायविशेषणमिति तन्न किं कारणमानर्थक्यात् द्रव्यं सति द्रव्यग्रहण
मनर्थकं स्यात् तस्य द्रव्यस्य पर्यायाः संतीति द्रव्याज्ञानप्रसंगाच्च केवलेन पर्याय
एव ज्ञायते न द्रव्याणीति द्रव्याज्ञानं प्राप्नोति उत्तरपदार्थप्रधानत्वात्॥ अथ मत
मेतत् सर्वेषु पर्यायेषु ज्ञातेषु न किंचिदज्ञातमस्ति ततो व्यतिरिक्तस्य द्रव्यस्याभावा
द्धेवं द्रव्यग्रहणमनर्थकमित्युक्तं परस्तात्तस्मात्साधूक्तं हेयमिति नत्तु बह्व
ह्वपि द्रव्यग्रहणमनर्थकं पर्यायव्यतिरेकेणानुपलब्धेरिति नैष दोषः। संज्ञास्व
लक्षणादिभेदाद्भेदोपपत्तेः॥ अथ सर्वग्रहणं किमर्थं ननु बहुवचननिर्देशादेव
बहुत्वसंप्रत्ययसिद्धेः॥ सर्वग्रहणं निरवशेषप्रतिपत्त्यर्थं ये लोकालोकवेदभि
न्नास्त्रिकालविषया द्रव्यपर्याया अनंतास्तेषु निरवशेषेषु केवलज्ञानविषय
निबंध इति प्रतिपत्त्यर्थं सर्वग्रहणं यावाँल्लोकालोकस्वभावोऽनंतस्तावंतोऽनंता

राजवा०
१०६

नंतो॥यद्यपिस्तुस्तानपिज्ञानमेस्यसामर्थ्यमस्तीत्यपरिमितमाहात्म्यंतत्केवलज्ञा
नेवेदितव्यं॥आहविषयनिबंधोवध्ननोमत्यादीनांमिदंतुननिज्ञातंएकस्मिंन्ना
त्मनिस्वनिमित्तसंनिधानोपजनितवृत्तीनिज्ञानानियौगपद्येनकतिभवंतीत्य
तउच्यते॥एकादीनिभाज्यानियुगपदेकास्मिन्ना चतुर्भ्यः॥ एकइतिकोयं
शब्दः अनेकार्थसंभवेविवक्षातःप्राथम्यवचनएकशब्दः॥अयमेकशब्दः
नेकस्मिन्नर्थेदृष्टप्रयोगः॥कचित्संख्यायांवर्त्ततेएकोद्वौवहवइतिक्कचिदन्य
लेएकेआचार्याअन्येआचार्याइतिक्कचिदसहायेएकाकिनस्तेविचरंतिवीराद्
तिक्कचित्प्राथम्येएकमागमनंप्रथममागमनंमितिक्कचित्प्राधान्येएकहतांसे
नांकरोमिप्रधानहतांसेनांकरोमीत्यर्थः॥तत्रेहविवक्षातःप्रथम्यवचनएकशब्दो
वेदितव्यः॥आदिशब्दश्चावयववचनः॥आदिशब्दश्चायमनेकार्थसंभवेविव
क्षातइहावयववचनोवेदितव्यः कचिद्व्यवस्थायांवर्त्ततेयथाब्राह्मणादयश्चत्वारोव
र्णाः ब्राह्मणाअवस्थाः ब्राह्मणक्षत्रियविट्शूद्राइत्यर्थः॥कचित्प्र

दद्यासरिद्दृत्तस्याः भुजंगप्रकाराविषवंतइत्यर्थः॥ क्वचित्सामीप्येनंद्यादीनिक्षे
त्राणिनदीसमीपानीत्यर्थः॥ क्वचिदवयवेऽंगादिमधीतेऽंगावयवमधीतइत्य
र्थः॥ तेनैतदुक्तंभवति॥ एकस्यादिरेकादिः प्रथमावयवइतिकस्यप्रथमस्यपरोक्ष
स्यकः पुनरवयव॥ मतिज्ञानंसामीप्यवचनोवा॥ अथवाऽयमादिशब्दःसमी
प्यवचनोद्रष्टव्यस्तेनप्रथमस्यमतिज्ञानस्यश्रुतंसमीपमित्युक्तंभवतिमतेर्वहिर्भाव
प्रसंगइतिचेन्नानयोः॥ सदाव्यभिचारात्तस्यादेनदेवंसतिमतेर्वहिर्भावि॥ प्राप्नोतीति
तन्नकिंकारणमनयोः॥ सदाव्यभिचारादेहिमतिश्रुतेसर्वकालमव्यभिचारिणीना
रदपर्वतवत्तस्मादनयोरन्यतरग्रहणेद्वितीयस्यग्रहणंसन्निहितंभवति॥ ततोन्यय
दार्धवृत्तावेकस्यादिशब्दस्यनिवृत्तिरुष्ट्रमुखवद्यथानष्ट्रमुखंउष्ट्रमुखवन्मुख
मस्येतिवृत्तावेकस्यमुखशब्दस्यनिवृत्तिरेवमिहापिएकादिर्येषांतानीमान्येकादी
नीतिएकस्यादिशब्दस्यनिवृत्तिरवयवेनाविग्रहःसमुदायोवृत्त्यर्थः॥ अवयवेनवि
ग्रहः॥ क्रियतेवृत्त्यर्थः॥ समुदायोभवतितेनैकादीन्यभ्यंतरीकृत्यभाज्यानित्यर्थः

त्यर्थः॥ किंसर्वाणीनेत्याह॥ आचतुर्भ्यः॥ कुतएतत्॥ केवलस्यासहायत्वादिति
यौगपद्याभावः॥ यत्केवलंज्ञानंक्षायिकंतदसहाय
मितराणिचज्ञानानिक्षयोपशमनिमित्तान्यतो
नाभावोभिभूतत्वादहनिनक्षत्रवदितिचेन्नक्षायिक
देतन्नाभावः॥ क्षायोपशमिकानांज्ञानानांकेवलिनि किंतुकेवलज्ञानेनमहता
ऽभिभूतानिस्वप्रयोजनेनव्याप्रियंतेभास्करप्रभाभिभूतनक्षत्रवदितितन्नकिंका
रणं॥ त्वात्संक्षीणसकलज्ञानावरणेभगवत्यर्हतिकथंक्षायोपशमिका
ज्ञानानांसंभवः॥ नहिपरिशुद्धसर्वस्थ्योपदेशप्रदेशाशुद्धिरस्ति॥ इंद्रियवत्वादितिचे
न्नार्षार्थानवबोधात्॥ स्यादेतदेवमागमः॥ प्रवृत्ताःपंचेंद्रियाः॥ असंज्ञिपंचेंद्रिया
दारभ्य आयोगिकेवलिनइति॥ अतइंद्रियवत्वात्तत्कार्येणापिज्ञानेनभवितव्या
तितन्नकिंकारणमार्षार्थानवबोधात्॥ आर्षेहिसयोगायोगिकेवलिनोःपंचेंद्रि
यत्वमुक्तंनभावेंद्रियंप्रति॥ यदिहिभावेंद्रियमभविष्यदपितर्ह्यसंक्षीणसक

लावरणात्सर्वज्ञेनैवान्यवर्तिष्यतः। तस्मादेतदुक्तंभवति। एकस्मिन्नात्म
निद्वेमतिश्रुतेकस्यचित्त्रीणिमतिश्रुतावधिज्ञानानिमतिश्रुतमनः। पर्ययज्ञाना
निवाकस्यचिच्चत्वारिमतिश्रुतावधिमनः। पर्ययज्ञानानिनपंचैकस्मिन्युगप
त्संभवंतीति। संख्यावचनश्चैकशब्दः। अथवासंख्यावचनोयमेकशब्दएकमादि
र्येषांतानीमानिएकादीनिकथंमतिज्ञानंएकस्मिन्नात्मनिएकंयक्षरस्थतंद्य
नेकत्वादशाभेदमपदेशपूर्वकंतद्भजनीयंस्याज्ज्ञानवेतितत्पूर्ववदपरआह अ
संख्यासहायप्राधान्यवचनेएकशब्देसतिएकादीनिकेवलादीनीत्यर्थः। एकस्मि
न्नात्मन्येकंकेवलज्ञानंक्षायिकत्वात् द्वेमतिश्रुतेइत्यादिपूर्ववत्। अथोक्तानिम
त्यादीनिज्ञान्यपदेशमेवलभंतेउतान्यथापीत्यतआह। मतिश्रुतावधयो
विपर्ययश्च। विपर्ययोन्यथाकृतः सम्यगधिकाराच्चशब्द समुच्चयार्थः। वि
पर्ययश्चसम्यक्चेतिकुतःपुनरेषांविपर्ययः। मिथ्यादर्शनपरिग्रहात्तत्पादि
विः। पर्यय। योसौदर्शनमोहनीयोदयेसतिमिथ्यादर्शनपरिणामः। तेनसहै

राजवा॰
१५७

कार्थसमवायान्मत्यादीनांविपर्ययोभवति।ननुचमणिकनकादीनांवर्चोगृहग
तानामपिस्वभावविनाशोनभवतितद्वन्मत्यादीनामपिस्यान्नैषदोषः।सरजस
कटुकालाबूगतदुग्धवत्तद्गुणाविनाशः।यथासरजस्कटुकालाबूभाजने
निहितंदुग्धंस्वगुणंपरित्यजतितथामत्यादीन्यपिमिथ्यादृष्टिभाजनगतानि
दुष्यन्तीति।आधारस्यदोषाद्धि।आधेयस्यदोषोजायते।ननुचनायमेकान्तउ
क्तमेतन्मणिकनकादयोवर्चोगृहगताअपिस्वभावंनत्यजन्तीतितत्रकथमे
तदवसीयते।आलाबूदुग्धवद्दुष्यन्तिमत्यादीनिनपुनर्मण्यादिवन्नदुष्यन्ती
तिपरिणामशक्तिविशेषात्परिणामकस्यहिवस्तुनः।शक्तिविशेषादन्यथाभा
वोभवतियथालाबूकंदुग्धंविपरिणामयितुंशक्नोतितथामिथ्यादर्शनम
पिमत्यादीनामन्यथात्वंकर्तुमलंतद्वदयेऽन्यथानिरूपणाद्दर्शनाद्वर्चोगृहं
तुमण्यादीनांविकारंन्यास्यादयत्तुमलंविपरिणामकद्रव्यसंनिधानेतेषाम
पिभवत्येवान्यथात्वंयदातसम्यग्दर्शनंप्रादुर्भूतंतदा

भावात्तेषांमत्यादीनांसम्यक्त्वमतःसम्यग्दर्शनमिथ्यादर्शनोदयविशेषात्तेषां
त्रयाणांद्विधाकृतिर्भवतिज्ञानंमत्यज्ञानंश्रुतज्ञानंश्रुताज्ञानंअवधिज्ञानं
विभंगज्ञानमिति।अत्राहरूपादिविषयोपलब्धिव्यभिचाराभावाद्विपर्यया
भावः।यथैवमतिज्ञानेनसम्यग्दृष्टयोरूपादीनुपलभंतेतथामिथ्यादृष्टयो
पिमत्यज्ञानेनयथैवपटादिषुरूपादीन्श्रुतेननिश्चिन्वंत्युपदिशंतिचपरे
भ्यस्तथाश्रुताज्ञानेनापि।यथैवावधिनारूपिणोर्थानवयंतितथाविभंगेना
पीतितस्मान्नास्तिविपर्ययइति।अतआह॥सदसतोरविशेषाद्यदृच्छोपल
ब्धेरुन्मत्तवत्॥सच्छब्दस्यानेकार्थसंभवेविवक्षातःप्रशंसार्थग्रहणं।अ
येसच्छब्दोनेकार्थइतिव्याख्यातः।तस्येहविवक्षातःप्रशंसार्थस्यग्रहणंवे
दितव्यं।प्रशस्तंतत्त्वज्ञानमित्यर्थः।असदज्ञानंतयोःसदसतोरविशेषणा
यदृच्छयोपलब्धेःविपर्ययोभवतिकथमुन्मत्तवद्यथोन्मत्तोदोषोदयादु
पहतेंद्रियमतिर्विपरीतग्राहीभवतिसोश्वंगोरित्यध्यवस्यतिगांवाऽश्वम्

इति लोष्टं सुवर्णं सुवर्णं लोष्टमिति लोष्टं लोष्टमिति सुवर्णं सुवर्णमिति तस्यैवमवि
शेषेणाध्यवस्यतः अज्ञानमेव भवति। नह्यन्मिथ्यादर्शनोपहतेन्द्रियमतेर्मति
श्रुतावधयोपि अज्ञानमेव भवन्तीति भवत्यर्थग्रहणं वा अथवा सच्छब्दोयं भ
वत्यर्थे वेदितव्यः सद्विद्यमानमित्यर्थः असदविद्यमानं तयोरविशेषेण यदृ
च्छोपलब्धेः विपर्ययो भवति कदाचिद्रूपादि सदप्यसदिति प्रतिपद्यते असदपि
सदिति कदाचित्तु सत्सदेव असदप्यसदेवेति कुतः प्रवादिपरिकल्पनाभेदाद्वि
पर्ययग्रहः प्रवादिनां कल्पनाभेदाद्विपर्ययग्रहो भवति तद्यथा केचित्तावदाहुः
द्रव्यमेव न रूपादय इति अपर आहुः रूपादय एव न द्रव्यमिति अपरेषां दर्शनं
अन्यद्द्रव्यं अनेके रूपादय इति कथमेषां विपर्ययग्रहणं उच्यते यदि द्रव्यमेव
न रूपादयः लक्षणाभावाल्लक्ष्यानवधारणप्रसंगः किंचेन्द्रियाणां सन्नि
कर्षमन्तरेण द्रव्यं रूपाद्यभावे सर्वात्मनां सन्निकर्षे तत्तत्सर्वमिन्द्रियाणां ग्रहणप्र
संगः करणभेदाभावप्रसंगश्च न चासीद्दृष्टेष्टा वा

एवमपिनिराधारत्वादभावप्रसंगः। किंचपरस्परविलक्षणानांरूपादीनांसमु
दयेपिसतिएकानर्थांतरभावात्समुदयस्यस्वभावः। परस्परतोर्थांतरभूत
त्वादर्थांतरान्यद्रव्यमन्येरूपादयः। एवमपितेषांलक्ष्यणाभावाभावः। परस्प
रतोर्थांतरत्वात्दंडिदंडवत्। लक्ष्यलक्षणाभावइतिचेन्नवैप्राम्यान्यथत्व
तोल्लक्ष्यलक्षणाभावोयुक्तोनासतोरितिकिंचरूपादिगुणोद्व्यमूर्तेषुद्र
व्यार्थांतरभूतेषुनेंद्रियसंनिकर्षयुक्तस्तत्श्चज्ञानाभावः। नचार्थांतरभू
तद्रव्यंकारणंभवितुमर्हतिकिंचामूलकारणविप्रतिपत्तेः एषांचरूपा
दीनांमूलकारणेप्रवादिनांविप्रतिपत्तिरन्यथाकेचिदाहुः। अव्यक्तान्मह
दहंकारतन्मात्रेंद्रियमहाभूतमूलपिंडादिनिवृत्तिक्रमेणघटादेर्विश्वरूप
स्यजगतउत्पादइतितदयुक्तं। नहिप्रधानस्यामूर्तेनिरवयवत्वानिःक्रियत्वा
तींद्रियत्वानित्यत्वापरप्रयोज्यत्वादिविशेषोपेतस्यतद्विलक्षणोघटादेःका
र्यंभवितुमर्हत्यदृष्टत्वान्नवापरप्रयोज्यस्यप्रधानस्यस्वयमेभिप्रायरहि

र्वकत्वसक्रमोयुक्तः पुरुषस्तावन्निष्क्रियत्वान्नमहदादिसर्गा
र्थी प्रधानंप्रयुंक्ते स्वयंचनिष्क्रियत्वात्प्रधानंनात्मानंमहदादिसर्गार्थंप्रयोक्तुम
नहिस्वयंगतिविकलः परानात्मानमेवाष्टम्भो त्थापयन्दृष्टः किंचात्र
योजनस्यप्रधानस्यमहदादिसर्गोनयुक्तिमान पुरुषभोगः प्रयोजनमितिचेन्न
त्यस्यविभोरात्मनभोगपरिणामाभावात्त्व किंवाचेतनत्वादिहलो
केचेतनश्चैत्रः उदनार्थी क्रियाफलसाधनज्ञस्तदर्थंह्वाग्निसंधुक्षणादिषुप्र
वर्तमानोदृष्टः नचतथाप्रधानंचेतनमतोस्यमहदादिक्रियाप्रसवक्रमाभावः न
क्रमस्यप्रयोजकोनिः क्रियत्वादपरआह परमाणुभ्यः प्रतिनि
यतपार्थिवादिजातिविशिष्टेभ्यः अदृष्टादिसंनिधानेसतिसंहतेभ्यः अर्थान्त
कार्यात्मलाभइतितदप्युक्तंनित्यत्वादणूनांकार्यारंभशक्त्यभावा
तेचारंभेनित्यत्वहानेर्न्नचार्थान्तरभूतस्यकार्यस्यारंभोयुक्तः व्यतिरेकानुपल
ब्धेरुपलब्धौवाणुमहत्वाभावः नचजातिप्रतिनियमाद्भिन्नजाती

रंभदर्शनाद्भिन्नजातीयेष्वसमुदयमात्रमितिचेत्तुल्यजातीयेष्वपितत्प्रसंगा॥नचा
त्मनोघटाद्यारंभेकर्तृत्वमुपपन्नंनिः॥क्रियत्वान्नित्यत्वाच्चनाप्यात्मगुणस्यादृष्ट
देर्नि॥क्रियत्वादेवनचनि॥क्रियोवार्थांतरेक्रियाहेतुर्दृष्टः॥अन्येमन्यंतेवर्णादिपर
माणुसमुदायात्मकारूपपरमाणवोतींद्रियाःसमुदिताःसंतः॥इंद्रियग्राह्यत्व
मनुभूयघटादिकार्यमिलाभहेतुत्वंप्रतिपद्यंतइतितदयुक्तंप्रत्येकंरूपपरमाणू
नामतींद्रियत्वात्तेनान्यस्यकार्यस्याप्यतींद्रियत्वप्रसंगात्तत्रदृश्यविषयप्रमा
णाभासविकल्पाभावः॥कार्याभावाच्चतल्लिंगकारणस्याप्यभावः॥किंचक्षणि
कत्वान्निःक्रियत्वाच्चकार्यारंभाभावा॥विविक्तरूपाणांपरस्पराभिसंबंधाभावश्च
नचान्योर्थश्चेतनस्तेषांसंबंधस्यकर्तास्तितदभावात्संबंधाभाव एवमन्येष्वपिप्र
वादिषुसत्यसदिति॥असत्यपिसदितिविपर्ययोमिथ्यादर्शनोदयवशाद्भवतीत्यः
पित्तोदयाकुलितरसनेंद्रियविपर्ययवत्ततोयद्युक्तंरूपादिविषयोपलब्धिव्यभि
चाराभावान्नमिथ्यादृष्टेर्ज्ञानंत्रयमज्ञानमितितदसम्यक्व्याख्यातंज्ञानंलक्ष

रागादिभिरितिनीचारित्रंनिर्दिष्टंवा तदुल्लंघ्यनयाउच्यंते। कस्मान्मोक्षविधानेनतस्य
वक्ष्यमाणत्वात्कृतः। पुनस्तन्मोक्षविधौवक्ष्यतइतिचेन्मोक्षंप्रतिप्रधानकारण
त्वात्किंकृतंप्राधान्यंकृत्स्नकर्मेंधननिर्दहनंकृतंयतः आत्माव्युपरतक्रियाध्यानावि
र्भूतात्मबलः। कृत्स्नकर्मेंधननिर्दहनसमर्थोभवतिननुक्षायिकसम्यक्त्वकेव
लज्ञानोपेतोपि। यदिस्यात्क्षायिककेवलज्ञानोत्पत्त्यनंतरमेवकृत्स्नकर्मक्षयः
व्युपरतक्रियाध्यानोत्पत्त्यनंतरमेवभवतितस्योत्तमंचारित्रंकर्मादानहेतुक्रिया
रिक्तमितिवचनाद्यदीहतदुच्यतमोक्षविधानेपितदुक्तमितिगौर
वंस्यादेवमपिजीवादयोनिर्दिष्टाउच्यंतेप्रमाणात्मप्रमाणैकदेशानयाः
तदनंतरंवचनाहानयाश्चेवंकेतेनयाइत्यतआह
नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूतानयाः॥ शब्दापेक्षया
एकादिसंख्येयविकल्पानयाः तत्रातिसंक्षेपाद्व्रतिपत्तिरतिविस्तरेचाल्पप्र
नामननुग्रहइतिमध्यमतयाप्रतिपत्त्यासप्तनयाःसूत्रोच्यंते। तेषांसामान्यविशे

षलक्षणोवक्तव्यंतत्र। सामान्यलक्षणमुच्यते। प्रमाणप्रकाशितार्थविशेषप्ररूपको
नयः। प्रकर्षेणमानंप्रमाणंसकलादेशइत्यर्थः। तेनप्रकाशितानांप्रमाणाभासप
रिगृहीतानामित्यर्थस्तेषामर्थानामस्तित्वनास्तित्वनित्यत्वानित्यत्वाद्यनंतात्मनांजी
वादीनांयेविशेषाःपर्यायास्तेषांप्रकर्षेणरूपकःप्ररूपकनिरूद्धदोषानुषंगद्वा
रेणेत्यर्थः। सचलक्षणोनयस्तस्यद्वौमूलभेदौद्रव्यास्तिकःपर्यायास्तिकश्चद्रव्य
मस्तीतिमतिरस्यद्रव्यभवनमेवनातोन्येभावविकारानाप्यभावस्तद्व्यतिरेकेणानुप
लब्धेरितिद्रव्यास्तिकः। पर्यायएवास्तीतिमतिरस्यजन्मादिभावविकारमात्रमेवभव
नंनततोन्यद्द्रव्यमस्तितद्व्यतिरेकेणानुपलब्धेरितिपर्यायास्तिकः। अथवाद्रव्यमे
वार्थोस्यनतुगुणःकर्मणीतदवस्थारूपादितिद्रव्यार्थिकः। पर्यायएवार्थोस्यरूपा
द्युत्क्षेपणादिलक्षणोनततोन्यद्द्रव्यमितिपर्यायार्थिकः। अथवार्यतेगम्यतेनिष्प
द्यतइत्यर्थः। कार्यंद्रवतिगच्छतीतिद्रव्यंकारणंद्रव्यमेवार्थोस्यकारणमेवकार्यं
नार्थांतरंनचकार्यकारणयोःकश्चिद्रूपभेदः। तदुभयमेकाकारमेवपर्वांगुलिद्र

व्यवदितिद्रव्यार्थिकः परिसमंताद्आयः पर्यायपर्यायिराव्यार्थः ॥ कार्यमस्यनद्रव्यमतीता
नागतयोर्विनष्टानुत्पन्नत्वेव्यवहाराभावात्सएवैकः ॥ कार्यकारणव्यपदेशभागिति
पर्यायार्थिकः अथवार्थनमर्थः प्रयोजनंद्रव्यमेवार्थोस्यप्रत्ययाभिधानानुप्रवृ
त्तिलिंगदर्शनस्यनिन्होतुमशक्यत्वादितिद्रव्यार्थिकः पर्यायोर्थ प्रयोजनमस्य
वाग्विज्ञानव्यावृत्तिनिबंधव्यवहारप्रसिद्धेरितिपर्यायार्थिकः ॥ तद्भेदानैगमाद
य एषांविशेषलक्षणमुच्यते ॥ अर्थसंकल्पमात्रग्राहीनैगमः ॥ निगच्छंत्यस्मिन्नि
तिनिगमनमात्रंवानिगमः ॥ निगमेकुशलोभवोवानैगमस्तस्यलोकेव्यापारः ॥ अ
र्थसंकल्पमात्रग्रहणंप्रस्थेंद्रगृहगमनादिषु ॥ तद्यथा ॥ कश्चित्सुगृह्यपरशुंपुरु
षंगच्छंतमभिसमीक्ष्याहकिमर्थंगच्छतिभवानितिसतस्मैआचष्टेप्रस्थार्थमिति
एवमिहगृहादावपितथाकत्तरोत्रगमीत्युक्तेआचष्टेअहंगमीतिसंप्रत्यगच्छन्न
पिगमीतिव्यवहारः एवंप्रकारोन्योपिनैगमनयस्यविषयः ॥ भाविसंज्ञाव्यवहारइति
चेन्नभूतद्रव्यासन्निधानात्स्यादेतन्नायंनैगमनयविषयः भाविसंज्ञाव्यवहारइ

तितन्नकिंकारणंभूतद्रव्यासंनिधानाद्भूतंहिकुमारतंडुलादिद्रव्यमाश्रित्यराजौदना
दिकाभाविनीसंज्ञाप्रवर्त्ततेनचतथानैगमनयविषयेकिंचिद्भूतंद्रव्यमस्तियदाश्रया
भाविनीसंज्ञाविज्ञायेत।उपकारेउपलंभात्संव्यवहारानुपपत्तिरितिचेन्नाप्रतिज्ञाना
त्स्यादेतन्नैगमनयवक्तव्येउपकारोनोपलभ्यतेभाविसंज्ञाविषयेतुराजादावुपल
भ्यतेततोनायंयुक्तइतितन्नकिंकारणंअप्रतिज्ञानान्नैतदस्माभिःप्रतिज्ञातंउपका
रेसतिभवितव्यमितिकिंतर्ह्यस्यनयस्याविषयःप्रदर्श्यतेऽपिचउपकारंप्रत्यभिमु
खत्वादुपकारवानेव।स्वजात्यविरोधेनैकत्वोपनयात्समस्तग्रहणंसंग्रहःस्वाभिधा
नानुप्रवृत्तिलिंगसादृश्यंस्वरूपानुगमोवाजातिसाचेतनाचेतनात्मिकाशब्दप्र
वृत्तिनिमित्तत्वेनप्रतिनियमात्स्वार्थव्यपदेशभाक्स्वाजातिःस्वाजातिरप्रच्यवन
मविरोधःस्वजातेरविरोधःस्वजात्यविरोधःतेनस्वजात्यविरोधेनैकत्वोपनयात्के
षांभेदानांसमस्तग्रहणंसंग्रहःयथासद्द्रव्यंघटइत्यादिसदित्युक्तेसत्तासंबंधाहो
णांद्रव्यपर्यायतद्भेदप्रभेदानांतद्व्यतिरेकान्नैकेनसंग्रहःद्रव्यमितिवोक्तेजी

वाजीवद्वेदप्रभेदानंद्रव्यत्वाविरोधात्तेनैवसंग्रहः। घटइतिचोक्तेनामादिभेदात्स्वस्तुव
र्णादिकारणविशेषाद्गुणसंस्थानादिकिविकाराच्चभिन्नानांघटशब्दाच्यानांतद्व्य
तिरेकादेकत्वेनसंग्रह एवमितरेष्वपीतितत्राभिधानप्रत्ययोःसामान्यंनिराकृतवि
शेषभावाद्दाहसत्ताद्यर्थांतरभूतमस्तिनदभिसर्वंस्वात्सदादिव्यपदेशः इतितन्न
उभयथाउपपत्तेरिदमिहसंप्रधार्यंसत्तासंबंधात्प्राग्द्रव्यादिषुसदित्यभिधानप्रत्य
यश्चस्या न्नवेतियदिस्यात्सत्तासंबंधवैयर्थ्यंप्रकाशितप्रकाशनवैयर्थ्यवसत्ताहू
यप्रसंगश्चएकास्मिर्नंतरीन्नपरावास्येत्यत्तश्चसमवविरोध।
घलिंगाभावाच्चैकोभावइति। अथनास्तिखरविषाणादिष्वतिप्रसंग।
यविशेषइतिचेन्नतस्यप्रतिषिद्धत्वात्किंचरात्तत्तायाःसदितिव्यपदेशस्यसत्तांतद
हेतुकत्वाहेतुकत्वयोरनवस्थाप्रतिज्ञाहानिदोषप्रसंगः अथपदार्थशक्तिप्रति
नियमाद्द्रव्यादिषुसदितिव्यपदेशोनिमित्तांतरहेतुकःसत्तायांस्वतएवेतिचेत्प्रस
गवादत्याग इच्छामात्रकल्पनाप्रसंगश्च। किंचसत्तादेःपदार्थो

वृत्तिः सोऽस्येति वा स्यात् सोऽयमिति वा यदि सोऽस्येति वृत्तिर्मत्वर्थीयेन भवितव्यं सत्तावद्
द्रव्यमिति यथा गोमान् यवमानित्यतो मत्वर्थस्य भावार्थस्य च निवृत्तिर्वक्तव्या। अथ सो
ऽयमित्यभिसंबंधेन वृत्तिः सत्ता द्रव्यमिति प्राप्नोति यथा यष्टिः पुरुष इति न सद्द्रव्यमि
ति तत्र भावार्थस्य निवृत्तिर्वक्तव्या किंच दृष्टांताभावान्नह्येकं किंचिदनेकसंबंधि
दृष्टं यदिदमिति समीक्ष्य सत्तैकानेकसंबंधिनी गम्येत नीलीद्रव्यवदिति चेन्न त
स्यानेकत्वान्नीलित्ववदिति चेन्न तस्यासिद्धत्वात्। अतो विधिपूर्वकमवहरणं व्यवहा
रः एतस्मादतः कुतः संग्रहात् संग्रहनयाक्षिप्तानामर्थानां विधिपूर्वकमवहरणं व्य
वहारः को विधिः संग्रहगृहीतोऽर्थस्तदानुपूर्व्येणैव व्यवहारः प्रवर्त्तत इत्ययं विधिस्त
द्यथा सर्वसंग्रहेण सत्संगृहीतं तच्चानपेक्षितविशेषं नालं संव्यवहारायेति व्यवहार
नय आश्रीयते यत्सत्तद्द्रव्यं गुणो वेति द्रव्येणापि च संग्रहाक्षिप्तेन जीवाविशेषानपे
क्षेण न शक्यः संव्यवहार इति जीवद्रव्यमजीवद्रव्यमिति वा व्यवहार आश्रीयते जीवा
जीवावपि च संग्रहाक्षिप्तौ नालं संव्यवहारायेति प्रत्येकं देवनारकादिर्घटादिश्च व्य

वहारेणाश्रीयतेकषायोभैषज्यमित्युक्तेचसामान्यस्यविशेषात्मकत्वात्तैयग्रोधादिवि
शेषसामर्थ्येनाहिशक्यंउभयणापिचक्रमरुतासव: कषायसमाहारकर्तुंनामस्थापना
द्रव्याणिचसंगृहीभातानिनालंव्यवहारायेतिभावस्वगच्छते एवमर्थनयस्तावत्प्रवर्त्त
तेयावत्सन्नोस्तिविभाग सूत्रपातवत्ऋजुसूत्र:।यथाऋजु:सूत्रपातस्तथाऋ
जुप्रगुणंसूत्रयतितंत्रयतिऋजुसूत्र सर्वांस्त्रिकालविषयानतिशय्यवर्तमानका
लविषयमादत्तेअतीतानागतयोर्विनष्टानुत्पन्नत्वेनव्यवहाराभावात्समवायमात्र
मस्यनिर्दिदिक्षितंकषायोभैज्यमित्यत्रचसंजातरसकषायोभैषज्येनग्राह्यमिक
षायोऽल्पोनभिव्यक्तरसत्वादस्यविषय: पच्यमान: पक्क पक्कस्तुस्यात्पच्य
मान:स्यादुपरतपाकस्त्यसदेतद्विरोधात्पच्यमानइतिवर्त्तमान: पक्कइतिअतीत
स्तयोरेकस्मिन्नवरोधोविरोधीतिनैषदोष पचनस्याद्यावविभागसमयेकश्चिद्दृष्टा नि
र्वृत्तोवान्वायदिननिर्वृत्तस्तद्वीयीदिष्वपिअनिर्वृत्ते: पाकाभाव:स्यात्ततोभिनिर्वृत्ति
स्तदपेक्षयापच्यमान पक्कइतरथाहिसमयस्यत्रैविध्यप्रसंग सएवौदन:

नन्वुच्यते। घटकुटाभिप्रायस्यानिवृत्तेः घटं हि सुविशब्दस्तु खिन्नोदने घटाभिप्राय
स्यादुपरततयाकइतिचोच्यतेकस्यचित्कुटस्तावत्तेवक्तृतार्थत्वादेवक्रियमाणकृत
भुज्यमानभुक्तवध्यमानवद्धसिद्ध्यत्सिद्धादयोयोज्यास्तथाव्रतिष्वंतेस्मिन्निति प्र
स्था। यदेवामिमीतेतीतानागतधीन्यमानासंभवात्कुंभकाराभाव। शिवकादिपर्या
यकरणेतदभिधानाभावात्कुंभपर्यायसमयेवस्वावयवेभ्यएवनिवृत्ते। स्थितप्र
श्नेचकुतोद्यागच्छसीतिनकुतश्चिदित्ययंमन्यतेतत्कालक्रियापरिणामाभावाद्य
मेवाकाशदेशमवगाढुंसमर्थः आत्मपरिणामेवातत्रैवास्यवसतिर्नकृष्णकाकः
उभयोरपिस्वात्मकत्वात्कृष्ण। कृष्णात्मकोनकाकात्मकः यदिकाकात्मकः स्यात्क्र
मरादीनामपिकाकत्वप्रसंगः काकश्चकाकात्मकोनकृष्णात्मक। यदिकृष्णात्मक
स्तुक्लकाकाभावः स्यात्पंचवर्णत्वाच्चपित्तास्थिरुधिरादीनांपीतस्तुक्लरक्तादिव
र्णत्वात्तद्व्यतिरिक्तेणकाकाभावाच्चनसामानाधिकरण्यमेकस्यपर्यायेभ्योनन्यत्वा
त्पर्यायाएवविविक्तशक्तयोद्रव्यंनामनकिंचिदस्तीतिकृष्णगुणप्राधान्यादितिचे

न्याऽस्तिरक्तादिध्वनिप्रसंगात्केशायमधुरेचमधुनिविरोधात्प्रत्यक्षेवाख्यायमाने
काकविशेषशेनकेनचित्द्वीपांतरनिवासिन्यउपलब्धेकृत्स्न
काकविशेषेपुरुषेप्रतिपाद्यमानेसंशयोजायते किमयंकाकस्यकार्ष्ण्यंपाप्ता
धान्यादिंचष्टेद्रव्यस्यैववानथापरिणामादित्यतः पलालादिदाहाभावः प्रतिवि
शिष्टकालपरिग्रहादस्यहिनयस्याविभागोवर्तमानसमयोविषयः अग्निसंबं
धनदीपनज्वलनदहनान्यसंख्येयसमयांतरालानियतीस्यदहनाभावः किंच य
स्मिन्समयेदाहः नतस्मिन्पलालंभस्मताभिनिवृत्तेः यस्मिंश्चपलालंनतस्मिन्दा
हइतियत्पलालंतद्दहतीतिचेन्नसावशेषात्समुदायाभिधायिनीशब्दानामवय
वेष्ववृत्तिदर्शनाद्दोषइतिचेन्न तदवस्थत्वादेकदेशदाहाभावस्योक्तत्वान्निरव
शेषदाहासंभवादितिचेन्नवचनाविरोधात्तदवस्थत्वाच्चवचनविरोधस्तावद्यदिनि
रवशेषस्यपलालस्यदाहस्यासंभवइत्येकदेशदाहात्पलालदाहोनादाहः ननुभ
वद्वचनस्यनिरवशेषपरपक्षदूषकत्वाभावात्परपक्षैकदेशस्यदूषकत्वमतः

कदेशादूषकत्वात्कृत्स्नमयीदं दूषकमेवेत्यस्यसाधकत्वासामर्थ्याभावइतिनद्व
स्थूलमप्येकसमयेदाहाभावइत्युक्तत्वादवयवानेकत्वेयद्यवयवदाहात्सर्वत्रदा
हः अवयवांतरादाहात्तत्सर्वदाहाभावः अथदाहः सर्वत्रकस्मान्नादाहः अतो
नदाहएवंपानभोजनादिव्यवहाराभावाः नष्टस्कः कृत्स्नीभवत्तुभयोर्भिन्नकाला
वस्थयोस्त्रत्युत्पन्नविषयेनिवृत्तपर्यायानभिसंबंधात्सर्वसंव्यवहारलोपइति
चेन्नविषयमात्रप्रदर्शनात्पूर्वनयवक्तव्यात्संव्यवहारसिद्धिर्भवतिशपत्यर्थमा
ह्वयतिप्रत्याययतीतिशब्दउच्चरितः शब्दः कृतसंगतेः पुरुषस्यस्वाभिधेयेप्र
त्ययमादधातीतिशब्दइत्युच्यते सचलिंगसंख्यासाधनादिव्यभिचारनिवृत्तिपरः
लिंगंस्त्रीत्वपुंस्त्वनपुंसकत्वानिसंख्याएकत्वद्वित्वबहुत्वानिसाधनमस्मदाद्येवमा
दीनांव्यभिचारोनन्याय्यइतितन्निवृत्तिपरोयंनयस्तद्यथा लिंगव्यभिचारस्तावत्स्त्री
लिंगेपुल्लिंगाभिधानंतारकास्वातिरितिपुंल्लिंगेस्त्र्यभिधानमावगमोविद्येतिस्त्री
त्वेनपुंसकाभिधानंवीणाआतोद्यमितिनपुंसकेस्त्र्यभिधानंआयुधशक्तिरितिपुंल्लिं

गेनपुंसकाभिधानंपटोवस्त्रमितिनपुंसकेपुंल्लिंगाभिधानंद्रव्यंपरशुरितिसंख्याव्य
भिचारः एकत्वेद्वित्वंनक्षत्रंपुनर्वसूइत्येकत्वेबहुत्वंनक्षत्रंशतभिषजाइतिद्वित्वेए
कत्वंगोदौग्रामइतिद्वित्वेबहुत्वं पुनर्वसूपंचतारकाः इति बहुत्वेएकत्वं आम्राव
नमिति बहुत्वेद्वित्वंदेवमनुष्याउभौराशीइतिसाधनव्यभिचारः एहिमन्येरथेनया
स्यसिनहियास्यसियातस्तेपितेति आदिशब्देनकालादिव्यभिचारः विश्वदृ
श्वास्यपुत्रोजनिताभाविकृत्यमासीदितिकालव्यभिचारः संतिष्ठतेअवतिष्ठतेवि
रमत्युपरमत्युपग्रहव्यभिचारः एवमादयोव्यभिचाराःअयुक्ताःकुतः अन्यार्थ
स्यान्यार्थेनसंबंधाभावात्यदिस्यात्घटः पटोभवतुपटोवाप्रासादइतितस्माद्यथा
लिंगंयथासंख्यंयथासाधनादिचन्याय्यमभिधानं लोकसमयविरोधइतिचेद्वि
रुध्यतांतत्वंमीमांस्यतेसुहृदुपचारनानार्थसमभिरोहणात्समभिरूढः यतो
नानार्थान्समतीत्यैकमर्थमाभिमुख्येनरूढत्वात् समभिरूढः कुतोवस्त्वंतरा
संक्रमेणात्तल्लिंगत्वात्कथमवितर्कध्यानवद्यथात्रीयंथ्यसंक्रेसूक्ष्मक्रियम

वितर्क्कमविचारंध्यानमर्थव्यंजनयोगसंक्रांत्यभावात्सूक्ष्मकायपयोगनिष्ठत्वात्त
थागौरित्ययंशब्दोवागादिषुवर्त्तमानोगव्यधिरूढः एवंशेषेष्वपिरूढिशब्दोस्य
विषयः अथवार्थगत्यर्थो॥ शब्दप्रयोगइतितत्रैकस्यार्थस्यैकेनगतत्वात्पर्याय
शब्दप्रयोगोनर्थकः॥ शब्दभेदश्चेदस्ति अर्थभेदेनाप्यवश्यंभवितव्यमितिना
नार्थसमभिरोहणात्समभिरूढः इंदनादिंद्रः शकनाच्छक्रः पूर्दारणात्पुरंद
र इत्येवंसर्वत्र अथवायोयत्राधिरूढः सतत्रसमेत्याभिमुख्येनारोहणात्समभि
रूढः यथाक्वभवानास्ते स्वात्मनीतिकुतः वस्त्वंतरवृत्त्यभावाद्यद्यन्यस्यान्य
त्रवृत्तिः स्यात्ज्ञानादीनांरूपादीनांचाकाशेवृत्तिः स्यात्येनात्मनाभूतस्ते
नैवाध्यवसाययतीत्येवंभूतः येनात्मनायेनाभिधेयेनभूतः शब्दस्तेनैवा
ध्यवसाययतियथेंद्रशब्दः परमेश्वरत्वाभिधेयः सपरिणामोयत्रयदावर्त्त
तेतत्रतदैवयुक्तोननामस्थापनाद्रव्येषुतत्परिणामाभावादित्येवमितरेष्वपिशब्दे
षुस्वाभिधेयक्रियापरिणतिक्रियाक्षणएवयुक्तिर्नान्यदेति अथवायेनात्मनायेन

पेणाभूतोर्थस्तेनैवाध्यवसाययंतियथागच्छतीतिगौरितियदैवगच्छतितदैव
गच्छतितदैवगौरितिनस्थितोनशायितइतिपूर्वोत्तरकालयोस्तदर्थाभावात् इडिवत्
एवमितरेष्वपि॥ अथवायेनात्मनायेन यैनज्ञानेनभूतः परिणतस्तेनैवाध्यवसा
ययंतियथाइंद्राग्निज्ञानपरिणतआत्मैवेंद्रोग्निश्चेत्येवंभूतार्थप्रत्यायनाच्छब्द
एवंभूतः तत्कार्यत्वाच्छब्दासिद्धेः दाहकत्वाद्यतिप्रसंगइतिचेत्तदव्यतिरेकादप्र
स्यादेतदग्न्यादिव्यपदेशोयद्यात्मनिक्रियतेदाहकत्वाद्यतिप्रस
ज्यतेतदव्यतिरेकादप्रसंगस्तानिनामादीनियेनरूपेणाव्यपदिश्यंतेततस्तेषाम
व्यतिरेकः प्रतिनियतार्थवृत्तित्वात्तुनामादीनांतनोनोआगमभावाग्नौवर्तमानंदाहक
त्वंकथमागमभावाग्नौवर्त्ततउक्तानैगमादयोनयाः॥ उत्तरोत्तरसूक्ष्मविषयत्वादे
षांक्रमः पूर्वपूर्वहेतुकत्वाच्च॥ एवमेतेनयाः पूर्वमेतेनयाः पूर्वपूर्वविरुद्धमहावि
षयाउत्तरोत्तरानुकूलाल्पविषयाद्रव्यस्यानंतशक्तेः प्रतिशक्तिभिद्यमानाव
पाजायंते॥ एतेगुणप्रधानतयापरस्परतंत्राः सम्यग्दर्शनहेतवःपुरु

षार्थक्रियासाधनसामर्थ्यात्तंत्वाद्यवयवयथोपार्पविनिवेश्यमानाः पताद्दिसंज्ञा
स्वतंत्राश्चासमर्थास्तंत्वादिवद्देवविषमउपन्यासः ॥ तंत्वादयो निरपेक्षा अपिकां
चिदर्थमात्रां जनयंति हि काश्चित्प्रत्येकं तंतुस्त्वक्त्राणे समर्थ एकश्च वल्कजो वं
धने समर्थः ॥ इमे पुनर्नया निरपेक्षाः संतः न कांचिदपि सम्यग्दर्शनमात्रां प्रा
दुर्भावयंतीति नैष दोषः ॥ अभिहितानवबोधादभिहितमर्थमनवबुध्य परेणोद
मुपालभ्यते ॥ एतदुक्तं निरपेक्षेषु तंत्वादिषु पटादिकार्यं नास्तीति यत्तु तेनोप
दर्शितं न तत्पटादिकार्यं किं तर्हि तंत्वादिकार्यमपि तंत्वाद्यवयवेषु नास्त्येकैकस्य
त्पक्षसिद्धिरेवाथ तंत्वादिकार्यं शक्त्यपेक्षयास्तीत्युच्यते नयेष्वपि निरपेक्षेषु बु
द्ध्यभिधानरूपेषु कारणवशात्सम्यग्दर्शनहेतुत्वविपरिणतिसद्भावात्क्रमात्त
नास्तित्वमिति साम्यमेवोपन्यासस्य ॥ ज्ञानदर्शनयोस्तत्त्वं नयानां चैव लक्षणं ज्ञा
नस्य च प्रमाणत्वमध्यायेस्मिन्निरूपितमिति ॥ इति तत्त्वार्थश्लोकवार्तिकव्याख्यालं
कारे प्रथमोऽध्यायः ॥

प्रभावतीति मवदंतिसंतः २ तस्याममूद्धिभ्यजनीनवृत्तिदानांबुवाहो भुवि हीरपाख्यः स्वगोत्रविस्तारन
भोंशुमाली सम्यक्त्वरत्नाभरणार्चितांगः ३ तस्योपरोधवशतो विशदोरुकीर्तेर्माणिक्यनंदिकृतशा
स्त्रमगाधबोधम् ॥ स्पष्टीकृतं कतिपयैर्वचनैरुदारैर्बालप्रबोधकरमेतदनंतवीर्यैः ४ इति परीक्षामु
खलघुवृत्तौ समाप्तम्

गूढपदप्रायंयत्रमाहुरनाकुलमिति इदानीमात्मनः प्रारब्धनिर्वहणमौद्धत्यपरिहारंचदर्शयन्नाह परी-
मुखमादर्शहेयोपादेयोतत्वयोः संविदेमादृशोबालः परीक्षादक्षवद्व्यधां ॥१॥ व्यधांकृतवानस्मिकिमर्थं
संविदेकस्यमादृशः अहंचकथंभूतइत्याह बालोमंदमतिः ॥ अनौद्धत्यसूचकंवचनमेतत् ॥ तत्वज्ञत्वंचप्रार
ब्धनिर्वहणादेवावसीयते किंतत्परीक्षामुखंतदेवनिरूपयति आदर्शमितिकयोः हेयोपादेयतत्वयोः
वादर्शआत्मनोलंकारमंडितस्यसौरूप्यंवैरूप्यंवाप्रतिबिंबोपदर्शनद्वारेणसूचयति तथेदमपिहेयो
यतत्वंसाधनदूषणोपदर्शनद्वारेणनिश्चाययतीत्यादर्शत्वेननिरूप्यते कथमिवपरीक्षादक्षवत् परी
क्षादक्षइवयथापरीक्षादक्षः स्वप्रारब्धशास्त्रंनिरूढवांस्तथाहमपीत्यर्थः अकलंकशशांकैयत् प्रकटीकृत
मखिलमाननिभनिकरं तत्संक्षिप्तंसूरिभिरुरुपपतिभिर्व्यक्तिमेतेन ॥ इतिपरीक्षामुखलघुवृत्तौप्रमाणा
समुद्देशः षष्ठः परिच्छेदः ॥ श्रीमान्वैजेयनामाभूदग्रणीर्गुणशालिनां बुंदीपालवंशालिव्यो
रोरुजितः १ तदीयपत्नीभुविविश्रुतासीनाणांबनामागुणशालिधामा यांरेवतीतिप्रथितांविवेकी

माणत्वान्नयस्वरूपं शास्त्रांतरप्रसिद्धम् विचारणीयमिहयुक्तया प्रतिपत्तव्यं तत्रमूलनयौ द्वौ द्रव्यार्थिकपर्या
यार्थिकभेदात्तत्रद्रव्यार्थिकस्त्रेधा नैगमसंग्रहव्यवहारभेदात् पर्यायार्थिकस्तु चतुर्धा ऋजुसूत्रशब्दसमभिरूढैवं
भूतभेदात् अन्योन्यगुणप्रधानभूतभेदाभेदप्ररूपणो नैगमः नैकंगमो नैगम इति निरुक्तेः सर्वथाभेदवाद
स्तदाभासः प्रतिपक्षव्यपेक्षा सन्मात्रग्राही संग्रहः ब्रह्मवादस्तदाभासः संग्रहगृहीतभेदको व्यवहारः कल्प
निको भेदस्तदाभासः शुद्धपर्यायग्राही प्रतिपक्षसापेक्षः ऋजुसूत्रः क्षणिकैकांतनयस्तदाभासः कालकारक
लिंगानां भेदाच्छब्दस्य कथंचिदर्थभेदकथनं शब्दनयः अर्थभेदं विना शब्दानानात्वैकांतस्तदाभासः पर्याय
भेदात् पदार्थनानात्वनिरूपकः समभिरूढः पर्यायनानात्वमंतरेणापींद्रादिभेदकथनं तदाभासः क्रियाश्रये
णभेदप्ररूपणमित्थंभावः क्रियानिरपेक्षत्वेन क्रियावाचकेषु काल्पनिको व्यवहारस्तदाभास इति इतिनयतदाभा
सलक्षणं संक्षेपेणोक्तं विस्तरेण नयचक्रात् प्रतिपत्तव्यं अथवा संभवद्विद्यमानमत्यद्वादशलक्षणं यत्र ल
क्षणं वान्यत्रोक्तमिह द्रष्टव्यं तथा चाह समर्थवचनं वाद इति प्रसिद्धावयवं वाक्यं स्वेष्टस्यार्थस्य साधकं साधु

सं दूषयन्नाह भेदेत्वात्मांतरवत्तदनुपपत्तेः अथयत्रैवात्मनिप्रमाणं समवेतं फलमपितत्रैवसमवेतमिति समवायिलक्षणाप्रत्यासत्त्या प्रमाणफलव्यवस्थितिनात्मांतरे तत्प्रसंगइतिचेतपिनसत्कमित्याह समवायेतिप्र

इतिसमवायस्यनित्यत्वाद्व्यापकत्वाच्च सर्वात्मनामपिसमवायसमवायसमानधर्मकत्वान्नततःप्रतियम

इत्यर्थः इदानींस्वपरपक्षसाधनदूषणव्यवस्थामुपदर्शयति प्रमाणतदाभासौदुष्टतयोद्भावितौपरिहृतदो

वादिनः साधनतदाभासौप्रतिवादिनोदूषणभूषणेचवादिनाप्रमाणमुपन्यस्तंतच्च प्रतिवादिनादुष्टत योद्भावितम् पुनर्वादिनापरिहृतंतदेवतस्यसाधनंभवतिप्रतिवादिनश्चदूषणमिति यदातुवादिनाप्रमाणा

म् प्रतिवादिनातथैवोद्भावितम् वादिनाचपरिहृतं तदातद्वादिनः साधनाभासोभवतिप्रतिवा

मिति अथोक्तप्रकारेणाशेषविप्रतिवादिनातथैवोद्भावितम् वादिनापरिहृतम् तदातद्वादिनः

भासोभवतिवादिनश्चभूषणमिति अथोक्तप्रकारेणाशेषविप्रतिपत्तिनिराकरणद्वारेणप्रमाणतत्त्वंस्वप्र तिज्ञातं परीक्षनयादितत्त्वमन्यत्रोक्तमितिदर्शयन्नाह संभवदन्यद्विचारणीयमितिसंभवविद्यमानमन्य

च्चकिंचनतदेकमात्मकं तत्वम् स्वयं समर्थं वा कारि स्यात् प्रथमपक्षे दूषणमाह समर्थस्य करणे सर्वदोत्पत्तिरनपेक्ष
त्वात् सहकारिसांनिध्यात्तत्कारणान्नेति चेदत्राह परापेक्षणे परिणामित्वमन्यथा तदभावात् वियुक्तावस्था
यामकुर्वतः सहकारिसमवधानवेलायां कार्यकारिणः पूर्वेतराकारपरिहारावाप्तिस्थितिलक्षणपरिणा
मोपपत्तेरित्यर्थः अन्यथा कार्यकारणाभावात् प्रागभावावस्थायामिवेत्यर्थः अथ सिद्धितीयपक्षे दोषमाह
स्वयमसमर्थस्य अकारकत्वात्पूर्ववत् अथ फलाभासं प्रकाशयन्नाह फलाभासं प्रमाणादभिन्नं भिन्नमेव वा
कुतः पक्षद्वयेपि तदाभासत्वाशंकायामाद्यपक्षे तदाभासत्वे हेतुमाह अभेदे तद्व्यवहारानुपपत्तेः फल
मेव प्रमाणमेव वा भवेदिति भावः व्यावृत्त्या संवृत्त्यपरनामधेयया तत्कल्पना स्त्विसाह व्यावृत्त्यापि न तत्कल्प
ना फलांतरात्वप्रसंगात् इयमत्रेपि था फलाद्विजातीयात् फलस्य व्यावृत्त्या फलव्यवहारस्तथा फलांतराद
पि सजातीयाद्व्यावृत्तिरप्यस्तीति फलत्वमत्रैवाभेदपक्षे दृष्टांतमाह प्रमाणांतराद्व्यावृत्तेवाप्रमाणत्वस्येति
अत्रापि प्राक्तन्येव प्रक्रिया योजनीया अभेदपक्षं निराकृत्याचार्य उपसंहरति तस्मात्वास्तवोभेदइति भेदप

संख्याभासमिति दर्शयति सौगतसांख्ययोगप्रभाकरजैमिनीयानां प्रत्यक्षानुमानागमोपमानार्थापत्त्य
भावैरेकैकाधिकैर्व्याप्तिवत् यथा प्रत्यक्षादिभिरेकैकाधिकैर्व्याप्तिः प्रतिपत्तुं न शक्यते सौगतादिभिस्तथा प्रत्यक्षे
णालोकायतिकैः परबुध्यादिरपीत्यर्थः अथ परबुध्यादिप्रतिपत्तिः प्रत्यक्षेण माभूदन्यस्माद्भविष्यतीत्य
त्याशंक्याह अनुमानादेस्तद्विषयत्वे प्रमाणान्तरत्वं तच्छब्देन परबुध्यादिरभिधीयते अनुमानादेः परबुध्या
दिविषयत्वे प्रत्यक्षैकप्रमाणवादो हीयत इत्यर्थः अत्रोदाहरणमाह तर्कस्येव व्याप्तिगोचरत्वे प्रमाणान्तर
त्वं अप्रमाणस्याव्यवस्थापकत्वात् सौगतानामिति शेषः किंच प्रत्यक्षैकप्रमाणवादिना प्रत्यक्षाद्येकैकाधि
कप्रमाणवादिभिश्च स्वसंवेदनेन्द्रियप्रत्यक्षभेदोऽनुमानभेदश्च प्रतिभासभेदेनैव कर्तव्यो गत्यन्तराभावात् स
च तद्वादीलौकायतिकं प्रतिपक्षानुमानयोरितरेषां व्याप्तिज्ञानप्रत्यक्षादिप्रमाणेष्वस्तीति सर्वेषां प्रमाणसंख्या
विघटते एतदेव दर्शयति प्रतिभासभेदस्य च भेदकत्वादिति इदानीं विषयाभासमुपदर्शयितुमाह विषया
भासः सामान्यं विशेषो द्वयं वा स्वतंत्रमिति कथमेषां तदाभासतेत्याह तथाऽप्रतिभासनात् कार्याकरणा

उदाहरणमाह यथा नद्यास्तीरे मोदकराशयः संति धावध्वं माणवका कश्चिन्माणवकैराकुलीकृतचेतास्तत्संगपरिजि
हीर्षया प्रतारणवाक्यं नद्यादेशं तान् प्रस्थापयतीत्याप्तोक्तेरन्यत्वादागमाभासत्वं प्रथमोदाहरणमात्रेणानु
घ्यन्नुदाहरणांतमाह अंगुल्यग्रे हस्तियूथशतमास्ते इति अत्रापि सांख्यपशुः स्वदुरागमजनितवासनाहि
तचेता दृष्टेष्टविरुद्धं सर्वं सर्वत्र विद्यत इति मन्यमानस्तथोपदिशतीत्यनाप्तवचनात्वादिदमपि तथेत्यर्थः कथ
मनंतरयोर्वाक्ययोस्तदाभासत्वमित्यारेकायामाह विसंवादात् अविसंवादरूपप्रमाणलक्षणाभावान्न तद्धि
प्रामाणरूपमपीत्यर्थः इदानीं सांख्याभासमाह प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्याभासं प्रत्यक्षपरोक्षभे
दात् द्वैविध्यमुक्तं तद्विपरीतेन प्रत्यक्षमेव प्रत्यक्षानुमाने एतेषामवधारणं संख्याभासं प्रत्यक्षमेवैकमिति
कथं संख्याभासमित्याह लौकायतिकस्य प्रत्यक्षतः परलोकादिनिषेधस्य प्रारब्धादेश्चासिद्धेरतद्विषयत्वात्
अतद्विषयत्वात् अप्रत्यक्षविषयत्वादित्यर्थः शेषं सुगमं प्रपंचेतमेवैतत्संख्याविप्रतिपत्तिनिराकरणइ
तिनेह पुनरुच्यते इतरवादिप्रमाणेयत्तावधारणमपि विघटत इति लौकायतिकदृष्टांतद्वारेण तन्मतेपि सं

पादितं तद्विपरीतदर्शनमपि तदाभासमित्याह विपरीतान्वयश्च यदपौरुषेयं तदमूर्तं कुतोस्य

विद्युदादिनातिप्रसंगादिति तस्याप्यमूर्तताप्राप्तेरित्यर्थः व्याप्तिरेकोदाहरणाभासमाह व्यतिरेके

सिद्धताव्यतिरेकः परमाण्विन्द्रियसुखाकाशवदिति अपौरुषेयः शब्दोमूर्तत्वादित्यत्रैवासिद्धा साध्यसाधनो

यव्यतिरेका यत्रेति विग्रहः तत्रसिद्धसाध्यव्यतिरेकः परमाणुस्तस्यापौरुषेयत्वादिन्द्रियसुखमसिद्धसा

व्यतिरेकं आकाशत्वसिद्धोभयव्यतिरेकमिति साध्याभावे साध्यव्यावृत्तिरिति व्यतिरेकोदाहरणप्रघट्टके

ख्यापितं तत्र तद्विपरीतमपि तदाभासमित्युपदर्शयति विपरीतव्यतिरेकश्च यन्नामूर्तं तन्नापौरुषेयमि

बालव्युत्पत्त्यर्थं तत्र योपगम इत्युक्तमिदानीं तानप्रति एव क्रियद्धीनतायां प्रयोगाभासमाह बालप्रयोगा

पंचावयवेषु कियद्धीनता तदेवोदाहरणा अग्निमानयं देशो धूमवत्वादिति इदं यथा महानसमित्यवय

विपर्यायितत्वमाह तस्मादग्निमान्धूमवांश्चायमिति कथमवयवविपर्यये प्रयोगाभास इत्याशंकायामाह स्पष्ट

तयाप्रकृतप्रतिपत्तेरयोगात् इदानीमागमाभासमाह रागद्वेषमोहाक्रांतपुरुषवचनात् जातमागमाभासम्

शंक्याह आकाशेनित्येप्यस्यनिश्चयात् शंकितवृत्तिमुदाहरति शंकितवृत्तिस्तुनास्तिसर्वज्ञोवक्तृत्वादिति अ
स्यापिकथंविपक्षेवृत्तिराशंक्यतत्यत्राह सर्वज्ञेनवक्तृत्वाविरोधादि अविरोधश्चज्ञानोत्कर्षेवचनानामपकर्ष
दर्शनादिति निरूपंतमाय अकिंचित्करस्वरूपंनिरूपयति सिद्धेप्रत्यक्षादिबाधितेचसाध्येहेतुरकिंचित्करइ
तिउदाहरति सिद्धःश्रावणःशब्दः शब्दत्वादिति कथमस्याकिंचित्करत्वमित्याह किंचिदकरणादिति अ
परंचभेदंप्रथमस्यदृष्टांतीकरणद्वारेणोदाहरति यथानुष्णोग्निर्द्रव्यत्वादित्यादोकिंचित्कर्तुमशक्यत्वादकिंचित्क
रत्वमितिशेषः अयंचदोषोहेतुलक्षणविचारावसरएवनचाद्वकालइतिव्यक्तीकुर्यान्नाह लक्षणएवासौ
दोषोव्युत्पन्नप्रयोगस्यपक्षदोषैवदुष्टत्वादिति दृष्टांतोन्वयव्यतिरेकभेदाद्विविधइत्युक्तं तत्रान्वयदृष्टांता
भासमाह दृष्टांताभासाअन्वयेअसिद्धसाधनोभयाः साध्यंचसाधनंचोभयंचसाध्यसाधनोभयानि अ
सिद्धानितानियेष्विति विग्रहः एताननेकत्रानुमानेदर्शयति अपौरुषेयःशब्दोमूर्तत्वादिंद्रियसुखपरमाणु
घटवत् इंद्रियसुखमसिद्धसाध्यंतस्यपौरुषेयत्वात् परमाणुरसिद्धसाधनंदर्शनीयामिति दृष्टांतावसरेऽस

न्नाह हेत्वाभासा असिद्धविरुद्धानैकान्तिका किंचित्कराः येषां यथाक्रमेण लक्षणं सोदाहरणमाह अ
सत्सत्तानिश्चयो सिद्धः सत्ता च यस्य सत्तानिश्चयो असंतौ सत्तानिश्चयौ यस्य भवत्य सत्सत्तानिश्चयः तत्रप्रथ
मभेदमाह अविद्यमानसत्ताकः परिणामी शब्दः चाक्षुषत्वात् प्रथमस्यासिद्धत्वमाह गच्छ स्वरूपेणासत्वात्
द्वितीयासिद्धभेदमुपदर्शयति अविद्यमाननिश्चयो मुग्धबुद्धिं प्रत्यग्निरत्र धूमादिति अस्याप्यसिद्धता कथ
मित्यारेकायामाह सांख्यं प्रति परिणामी शब्दः कृतकत्वादिति अस्यासिद्धताया कारणमाह तेनाज्ञातत्वा
दिति तेन सांख्येनाज्ञातत्वात् तन्मते ह्याविर्भावतिरोभावावेव प्रसिद्धौ नोत्पत्त्यादिरिति अस्याप्यनिश्चयाद
सिद्धत्वमित्यर्थः विरुद्धहेत्वाभासमुपदर्शयन्नाह विपरीतनिश्चिताविनाभावो विरुद्धः अपरिणामी शब्दः कृत
कत्वात् कृतकत्वस्य परिणामविरोधिना परिणामेन व्याप्तमिति अनैकान्तिकत्वे हेत्वाभासमाह विपक्षेप्यविरुद्ध
वृत्तिरनैकान्तिकः अपिशब्दान्न केवलं पक्षसपक्षयोरिति द्रष्टव्यं स च द्विविधो विपक्षे निश्चितवृत्तिः शंकितवृत्ति
श्चेति तत्राद्यं दर्शयन्नाह निश्चितवृत्तिरनित्यः शब्दः प्रमेयत्वात् घटवदिति कथमस्य विपक्षे निश्चितावृत्तिरित्या

मनुमानाभासमाह इदमनुमानाभासं इदंवक्ष्यमाणमितिभावः तत्र तदवयवाभासो पदर्शनेन समुदायरू
पानुमानासमुपदर्शयितु कामःप्रथमावयवाभासमाह तत्रापि निष्टादिः पक्षाभासः इष्टमवाधितमित्यादि
तल्लक्षणमुक्तमिदानीं तद्विपरीतं तदाभासमिति कथयति अनिष्टोमीमांसकस्यानित्यःशब्दः असिद्धाद्विप
रीतं तदाभासमाह सिद्धःश्रावणः शब्दइति अनुमानागमलोकस्ववचनैः एतेषांक्रमेणोदाहरणमाह तत्रप्र
त्यक्षादिवाधितो यथा अनुष्णोग्निर्द्रव्यत्वाज्जलवत् स्पर्शनप्रत्यक्षेण्यष्णःस्पर्शात्मकोग्निरनुभूयते अनु
वाधितमाह अपरिणामीशब्दः कृतकत्वात् घटवत् इति अत्र पक्षोपरिणामीशब्दः कृतकत्वादित्यनेन वाध्य
ते आगमवाधितमाह प्रेत्यासुखप्रदोधर्मः पुरुषाश्रितत्वादधर्मवदिति आगमेहिपुरुषाश्रितत्वाविशेषे
पिपरलोकेधर्मस्यसुखहेतुत्वमुक्तं लोकवाधितमाह शुचिनरशिरः कपालंप्राण्यंगत्वाछंखशुक्तवदिति
लोकेहिप्राण्यंगत्वेपिकस्यचिछुचित्वमशुचित्वंचतत्र नरकपालादीनामशुचित्वमेवेतिलोकवाधितत्वंस्व
वचनवाधितमाह मातामेवंध्यापुरुषसंयोगेप्यगर्भत्वात्सिद्धवंध्यावदिति इदानींहेत्वाभासानुक्रमाप

सतिभवति नचक्रमप्राप्तोप्रमाणांतरमस्तितैजसत्वमस्तीतिचेन्नतस्यासिद्धेः अथचक्षुःतैजसंरूपादी
नांमध्येरूपस्यैवप्रकाशकत्वात् प्रदीपवदितितदपर्यालोचिताभिधानमन्यंजनादेः पार्थिवत्वेपिरूपप्रकाशत्वदर्श
नात् पृथिव्यादिरूपप्रकाशकत्वेपृथिव्यादात्मत्वप्रसंगाच्च तस्मात्संनिकर्षस्याव्यापकत्वान्नप्रमाणत्वंमू
कारणज्ञानेनव्यवधानाच्चेतिप्रत्यक्षाभासमाह अवैशद्येप्रत्यक्षंतदाभासंबौद्धस्याकस्माद्धूमदर्शनाद्वह्निवि
ज्ञानवदिति परोक्षाभासमाह वैशद्येपिपरोक्षंतदाभासंमीमांसककरणज्ञानवदिति प्राक्प्रपंचितमेतत्
परोक्षभेदाभासमुपदर्शयन् प्रथमक्रमप्राप्तंस्मरणाभासमाह अतस्मिंस्तदितिज्ञानंस्मरणाभासंजिनद
त्तेसदेवदत्तोयथेति अतस्मिन् अननुभूतइत्यर्थःशेषंसुगमं प्रत्यभिज्ञाभासमाह सदृशेतदेवेदंतस्मिन्ने
वतेनसदृशंयमलकवदित्यादि प्रत्यभिज्ञानाभासंद्विविधंप्रत्यभिज्ञानाभासमुपदर्शितमेकत्वनिबंधनंसादृ
श्यनिबंधनंचतितत्रैकत्वेसादृश्यावभासः सादृश्येचैकत्वावभासस्तदाभासमितितर्काभासमाह असंबद्धे
तितज्ज्ञानंतर्काभासंयावांस्तत्पुत्रःसश्यामइतियथायावत् ज्ञानमितिव्याप्तिलक्षणंसंबंधज्ञानमित्यर्थः इदानीं

प्रमाणमितरत्तदाभासमिति संशयादयश्च प्रसिद्धा एव तत्र संशय उभयकोटिसंस्पर्शी स्थाणुर्वा पुरुषो वेति प
रामर्शो विपर्ययः पुनरतस्मिंस्तदिति विकल्पः विशेषानवधारणमनध्यवसायः कथमेषामस्वसंविदितादीनां
तदाभासतेति आह स्वविषयोपदर्शकत्वाभावादिति गतार्थमेतत् अत्र दृष्टांतं यथाक्रममाह पुरुषांतरपूर्वा
र्थगच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् पुरुषांतरं च पूर्वार्थश्च गच्छत्तृणस्पर्शश्च स्थाणुपुरुषादिश्च तेषां ज्ञानं
तद्वित्तद्वत् अपरं च संनिकर्षवादिनं प्रति दृष्टांतमाह चक्षूरसयोर्द्रव्ये संयुक्तसमवायवाच्च अयमर्थः यथा
चक्षूरसयोः संयुक्तसमवायः सन्नपि न प्रमाणं तथा चक्षूरूपयोरपि तस्माद्द्वयमपि प्रमाणाभासमेवेति उपलक्ष
णमेतत् अतिव्याप्तिकथनमव्याप्तिश्च संनिकर्षप्रत्यक्षवादिनां चक्षुषि संनिकर्षस्यासंभवात् अथ चक्षु
प्राप्तार्थपरिच्छेदकं व्यवहितार्थानां प्रकाशकत्वात् प्रदीपादिवदिति तत्सिद्धिरिति मतं तदपि न साधीयः का
चाभ्रपटलादिव्यवहितार्थानामपि चक्षुषा प्रतिभासनं हेतोरसिद्धेः शाखाचन्द्रमसोरेककालदर्शनानुपप
त्तिप्रसंगेश्च न तत्र क्रमेऽपि यौगपद्याभिमान इति वक्तव्यं कालव्यवधानानुपलब्धेः किं च क्रमप्रतिपत्तिः व्याप्तिनिश्चये

क्षत्वायो मर्थकर्मत्वेनाप्रतीयमानाद्प्रत्यक्षत्वं नहि फलज्ञानस्याप्रत्यक्षतानत एव स्यात् अथ फलत्वेन प्रतिभा

नानो चेत्करणज्ञानस्यापि करणत्वेनावभासनाप्रत्यक्षमस्तु अथ करणस्य चक्षुरादेरप्रत्यक्षत्वेपि रूपप्राकव्या

इति चेन्न भिन्नकर्तृकरणस्यैव तद्व्यभिचारादभिन्नकर्तृके करणे सति कर्तृप्रत्यक्षतायां तदभिन्नस्यापि

करणस्य कथंचित्प्रत्यक्षत्वेनाप्रत्यक्षैकांतविरोधात्प्रकाशात्मनोप्रत्यक्षत्वेपि प्रदीपप्रत्यक्ष्यविरोधवदिति ग्र

गृहीधारावहिज्ञानं गृहीतार्थं दर्शनं सौगताभिमतम् निर्विकल्पं तज्जुस्व विशयानुपदर्शकत्वादप्रमाणं व्य

।यस्यैव तज्जनितस्य तदुपदर्शकत्वाद्व्यवसायस्य प्रत्यक्षाकारेणानुरक्तत्वामतः प्रत्यक्षस्यैव प्रमाण्यं व्य

गृहीतग्राहित्वादप्रमाणमिति तन्न सुभाषितम् दर्शनस्याविकल्पस्यानुपलक्षणानुपलक्षणा तद्भाव

सद्भावे वा नीलादाविवक्षयादावपि तदुपदर्शकत्वप्रसंगानत्र विपरीतसमारोपान्नेतं चेत् तर्हि सिद्धं नीला

रोपविरोधिग्रहणालक्षणं तत्सद्भावायोगात् सद्भावे वा नीलादाविवक्षणक्षयादावपि तदुपदर्शकत्वप्र

गात्र विपरीतसमारोपान्नेति चेत् तर्हि सिद्धं नीलादौ समारोपविरोधिग्रहणालक्षणो निश्चय इति तदात्मकमेव

प्रमाणात्तदिहोदितं इति परीक्षामुखस्य लघुवृत्तौ फलसमुद्देशः पंचमः ॥५॥ अथेदानीमुक्तप्रमाणस्वरूपादि
चतुष्टयाभासमाह ततोन्यत्तदाभासमिति ततः उक्तात् प्रमाणस्वरूपसंख्याविषयफलभेदादन्यद्विपरीतं
तदाभासमिति तत्र क्रमप्राप्तं स्वरूपाभासं दर्शयति अस्वसंविदिति गृहीतार्थदर्शनसंशयादयः प्रमाणाभासाः
अस्वसंविदितं च गृहीतार्थं च दर्शनं च संशय आदिर्येषां ते संशयादयश्चेति सर्वेषां द्वंद्वः आदिशब्देन विपर्य
यानध्यवसाययोरपि ग्रहणं तत्र स्वसंविदितं ज्ञानं ज्ञानांतरप्रत्यक्षत्वादिति नैयायिकाः तथा हि ज्ञानं स्व
व्यतिरिक्तवेदनवेद्यं वेद्यत्वात् घटवदिति तदसंगतं धर्मिज्ञानस्य ज्ञानांतरवेद्यत्वे साध्यांतःपातित्वेन धर्मित्वा
योगात् स्वसंविदितत्वे तेनैव हेतोरनेकांतात् महेश्वरज्ञानेन च व्यभिचारात् व्याप्तिज्ञानेनाप्यनेकांतादर्थप्रति
पत्त्ययोगाच्च नहि ज्ञापकमप्रत्यक्षं ज्ञाप्यं गमयति शब्दलिंगादीनामपि तथैव गमकत्वप्रसंगात् अनंतरभाविज्ञा
नग्राहकत्वे तस्याप्यगृहीतस्य पराज्ञापकत्वानंतरं कल्पनीयं तत्रापि तदंतरमित्यनवस्था तस्मान्नायं पक्षः
श्रेयान् एतेन करणज्ञानस्य परोक्षत्वेनास्वसंविदितत्वं ब्रुवन्नपि मीमांसकः प्रत्युक्तः तस्यापि ततोर्थप्रत्य

मास्वेदहमिति रेव स्थितः द्वितीयं विशेषभेदमाह अर्थान्तरगतो विसदृशपरिणामो व्यतिरेको गोमहि
षादिवदिति वैसादृश्यं हि प्रतियोगिग्रहणे सत्येव भवति नचापेक्षत्वादस्यावस्तुत्वमवस्तुनःपेक्षिकत्वा
योगादपेक्षाया वस्तुनिष्ठत्वात् स्यात्कारलांछितमबाध्यमनंतधर्मसंदेहवर्मितमशेषमपि प्रमेयं देवैः प्र
माणावलितानिरवादितं तच्च संक्षिप्तमेव मुनिभिर्विवृतं मयेननु ॥९॥ इति परीक्षामुखस्य लघुवृत्तौ विषय
समुद्देशश्चतुर्थः ॥४॥ अथेदानीं फलविप्रतिपत्तिनिरासार्थमाह अज्ञाननिवृत्तिर्हानोपादानोपेक्षाश्च फलं
साक्षात्तदज्ञाननिवृत्ति पारंपर्येण हानादिकमिति प्रमेयनिश्चयोत्तरकालभावित्वात्तस्येति तद्विधमपि फलं प्रमा
णाद्भिन्नमेवेति योगः अभिन्नमेवेति सौगतास्तन्मतद्वयनिरासेन स्वमतं व्यवस्थापयितुमाह प्रमाणादभिन्नं च
कथंचिदभेदसमर्थनार्थं हेतुमाह यः प्रमिते स एव निवृत्ताज्ञानो जहात्यादत्त उपेक्षते चेति प्रतीतेः अयमर्थो यस्यैवा
त्मनः प्रमाणाकारेण परिणतिस्तस्यैव फलरूपतया परिणाम इत्येकप्रमात्रपेक्षया प्रमाणफलयोरभेदः कारणक्रियाप
रिणामभेदाद्भेदः इत्यस्य सामर्थ्यसिद्धत्वान्नोक्तं पारंपर्येण साक्षाच्च फलं द्विधाभिधायि तत् देवैर्भिन्नमभिन्नं च ।

नापिपृथिव्यादिचतुष्टयात्मकत्वमात्मनः संभाव्यते अचेतनेभ्यश्चैतन्योत्पत्तियोगात् धारणेरण इवो

क्तालक्षणान्वयाभावाच्च तदहर्जातवालकस्य स्तन्यादावभिलाषाभावप्रसंगाच्च अभिलाषो हि अत्य

भिज्ञाने भवति तच्च स्मरणे स्मरणं चानुभवे भवतीति पूर्वानुभवः सिद्धः मध्यदशायां तैस्थ्याक्षेः मृतानां

रक्षोयक्षा हि कूलेषु स्वयमुत्पन्नत्वेन कथयतां दर्शनात् केषांचित्भवस्मृतेरुपलंभाच्चानादिश्चेतनसिद्धु

एव तथा चोक्तम् तदहर्जस्तनेहानुरक्षोदृष्टेर्भवस्मृतेः भूतानन्वयनात्सिद्धिः प्रकृतिज्ञः सनातनः इति

॥२॥ न च स्वदेहप्रमितिरात्मेत्यत्रापि प्रमाणाभावात्सर्वत्र संशय इति वक्तव्यम् तत्रानुमानस्य सद्भाव

त् तथा हि देवदत्तात्मा तद्देह एव तत्र सर्वत्रैव च विद्यते तत्रैव सर्वत्रैव स्वासाधारणगुणाधारतयोप

लंभात् यो यत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलभ्यते स तत्रैव सर्वत्रैव तत्र च विद्यते यथा

देवदत्तगृह एव सर्वत्रैव च उपलभ्यमानः स्वासाधारणभास्वरत्वादिगुणः प्रदीपः तथा चायं तस्मा

त्तथेति तदसाधारणगुणा ज्ञानदर्शनसुखवीर्यलक्षणास्ते च सर्वांगिणास्तत्रैव चोपलभ्यंते सुख

माल्हादनाकारं विज्ञानं मेयबोधनशक्तिः क्रियानुमेयास्याप्तः कांतासमागम इति वचनात् तस्माद

परिमाणसामान्याधिकरणत्वमात्मन इत्युक्तं तच्चानुपपन्नं व्यधिकरणासिद्धिप्रसंगात् नहि परिमा
णसामान्यमात्मनि व्यवस्थितम् किन्तु परिमाणव्यक्तिष्वेवेति नचावान्तरमहापरिमाणद्वयाधारत
यात्मन्यप्रतिपन्ने परिमाणमात्राधिकरणता तत्र निश्चेतुं शक्या दृष्टान्तश्च साधनविकलः आकाशस्य
महापरिमाणाधिकरणतया परिमाणमात्राधिकरणत्वायोगात् नित्यद्रव्यत्वं च सर्वथासिद्धं नित्यस्य
क्रमाक्रमाभ्यामर्थक्रियाविरोधादिति प्रसज्यपक्षेपि भावस्य ग्रहणोपायासंभवात् नच विशेषणत्वेन
वागृहीतविशेषणं मनागृहीतविशेषणाविशेष्यबुद्धिरिति वचनात् नच प्रत्यक्षं तद्ग्रहणोपायः संबंधाभा
वात् इन्द्रियार्थसन्निकर्षजं हि प्रत्यक्षं त्वन्मते सिद्धं विशेषणविशेष्यभावकल्पनायामभावस्य नागृही
तस्य विशेषणत्वमिति तदेव दूषणं तस्मात् न व्यापकमात्मद्रव्यं नापि वटकणिकामात्रं कमनीयकां
ताकुचजघनसंस्पर्शकाले प्रतिलोमकूपमाह्लादनाकारस्य सुखस्यानुभवात् अन्यथा सर्वांगीणरोमांचा
दिकार्योदयायोगात् आशुवृत्त्यालातचक्रवत्क्रमेणोत्पत्तेः सुखमित्यनुपपन्नं परापरान्तःकरणसम्बंधस्य
तत्कारणस्य परिकल्पनायां व्यवधानप्रसंगात् अन्यथा सुखस्य मानसप्रत्यक्षत्वायोगादिति

त्ता याकारव्याप्तिर्वदेकस्य क्रमभाविपरिणामिव्यापित्वमित्यर्थः विशेषस्यापिद्वैविध्यमितिदर्शयति वि
शेषस्यापिद्वैविध्यमितिदर्शयति विशेषश्चेतिद्वेधेत्यभिक्रियमाणेनाभिसंबंधः तदेवप्रतिपादयति प
र्यायव्यतिरेकभेदादिति प्रथमविशेषभेदमाह एकस्मिन्द्रव्ये क्रमभाविनः परिणामाः पर्याया आत्मनि
हर्षविषादादिवदिति अत्रात्मद्रव्यं स्वदेहप्रमितमात्रमेव नव्यापकं नापिवटकणिकामात्रं नचकाय
कारपरिणतभूतकदंबकमिति तत्र व्यापकत्वेपरेषामनुमानमात्माव्यापकः द्रव्यत्वेसत्यमूर्तत्वादाकाशवदि
ति तत्र यद्रिरूपादिलक्षणंमूर्तत्वं तत्प्रतिषेधोमूर्तत्वं तदमनसानेकांतः अथसर्वगतद्रव्यपरिमाणं
मूर्तत्वं तन्निषेधस्तथाचेत्यंप्रतिसाध्यसमोहेतुः यच्चापरमनुमानमात्माव्यापकः अणुपरिमाणानधिकर
णत्वेसतिनित्यद्रव्यत्वादाकाशवदिति तदपिनसाधनमणुपरिमाणानधिकरणत्वमित्यत्र किमयंनञ
र्थः पर्युदासः प्रतिषेधोवाभवेत् तत्राद्यपक्षेणुपरिमाणमाप्रतिषेधेनमहापरिणामावान्तरपरिमा
णाधिकरणत्वं यव्यापकत्वमेवसाधयतीति परिमाणमात्रं चेत्परेणसामान्येमांगीकर्तव्यं तथाचाणु

तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तेश्चेति अनुवृत्ताकारो हि गौर्गौरित्यादिप्रत्ययः
व्यावृत्ताकारः श्यामः शबल इत्यादिप्रत्ययस्तयोर्गोचरस्तस्य भावस्तत्त्वं तस्मादनेन तिर्यक्सामान्यव्यतिरे
कलक्षणविशेषद्वयात्मकं वस्तु साधितं पूर्वोत्तराकारयोर्यथासंख्येन परिहारावाप्ती ताभ्यां स्थितिः सैव
लक्षणं यस्य स चासौ परिणामस्तेनार्थक्रियोपपत्तेश्चेत्यनेन तूर्द्धतासामान्यपर्यायाख्यविशेषद्वयरूपं व
स्तु समर्थितं भवति अथ प्रथमोद्दिष्टसामान्यभेदं दर्शयन्नाह सामान्यं द्वेधा तिर्यगूर्द्धताभेदात् प्रथम
भेदं सोदाहरणमाह सदृशपरिणामस्तिर्यक् खण्डमुण्डादिषु गोत्ववत् नित्यैकरूपस्य गोत्वादेः क्रमयौगपद्या
भ्यामर्थक्रियाविरोधात् प्रत्येकं परिसमाप्त्या व्यक्तिषु वृत्त्ययोगाच्चानेकं सदृशपरिणामात्मकमेवेति तिर्य
क्सामान्यमुक्तं द्वितीयभेदमपि सदृष्टान्तमुपदर्शयति परापरविवर्तव्यापि द्रव्यमूर्द्धता मृदिव स्थासादि
ष्विति सामान्यमिति वर्त्तते नायमर्थः ऊर्द्धतासामान्यं भवति किं तद्द्रव्यं तदेव विशिष्यते तदेव विशिष्यते प
परविवर्तव्यापीति पूर्वापरकालवर्त्तित्रिकालानुयायीत्यर्थः चित्रज्ञानस्यैकस्य युगपद्भाव्यनेकस्वगतनी

नित्यद्रव्येभ्यइतिकिंच समवायस्यानाश्रितत्वेसंबंधरूपतयैवनघटंतेतथाचप्रयोगः समवायोनसंबंधः अनाश्रित
तत्वाद्दिगादिवदिति अत्रसमवायस्यधर्मिणः कथंचितादात्म्यरूपस्यानेकस्याचपरैः प्रतिपन्नत्वाद्धर्मिग्राहकप्र
माणवाधाआश्रयासिद्धश्चनवाध्येतिनस्याश्रितत्वेप्यतदभिधीयते नसमवायिएकः संबंधात्मकेसत्याश्रित
त्वात्संयोगवत् सतायानेकांतइतिसंबंधविशेषणं अथसंयोगेविरोनिविडसिथलादिप्रत्ययत्वानानात्वाना
त्वंनान्यत्रविसर्पयादितिचेत् नसमवायेप्युत्पतिमत्वनश्वरत्वप्रत्ययनानात्वस्यसुलभत्वात्संबंधिभेदाद्भेदो
न्यत्रापिसमानइतिनेकश्चैवपर्यनुयोगोयुक्तस्यात्मसमवायस्ययोगपरिपरकल्पितस्यविचारासहत्वान्नद्रव्या
द्गुणगुण्यादिष्वभेदप्रतीतिः अथभिन्नप्रतिभासादवयवावयव्यादीनांभेदएवेतिचेन्नभेदप्रतिभासस्याभेदा
विरोधात् घटपटादीनामपिकथंचिदभेदोपपतेः सर्वथाप्रतिभासतद्रूस्यासिद्धेश्च इदामित्याद्यभेदप्रतिभास
स्यापिभावाततः कथंचिद्भेदाभेदात्मकंद्रव्यपर्यायात्मकंसामान्यविशेषात्मकंचतत्वंनीरादर्शिसकुनिन्यायेन्यायात
मित्यलमितिप्रसंगेन इदानीमनेकांतात्मकंवस्तुसमर्थनार्थमेवहेतुद्वयमाह अनुवृत्तव्यावृत्तप्रत्ययगोचरत्वात् पूर्वो

नेनसामान्यविशेषदृष्टांतेनचपरिहृतो अथतत्रतथाप्रतिभासनेपरस्यापिवस्तुनितथैवप्रतिभासोस्तु तस्यपक्ष
पाताभावात् निर्णीतेसंशयोपिनयुक्तः तस्यचलितप्रदतिपतिरूपत्वादचलितप्रतिभासेदुर्घटत्वात् प्रतिपन्नेव
स्तुन्यप्रतिपतिरित्यतिसाहसं अपलब्धमिधानादनुपलंभोपिनसिद्धस्ततोनाभावइतिदृष्टेष्टाविरुद्धमनेकांतशा
सनंसिद्धमेतेनावयवायविनोर्गुणगुणिनोः कर्मतद्वतोश्चकथंचिद्दाभेदोप्रतिपादितोबोधव्यो अथसमवाय
वशाद्भिन्नेष्वप्यभेदप्रतीतिरनुत्पन्नप्रमतुलाख्यज्ञानस्येतिचेन्न तस्यापितत्तोभिन्नस्यव्यवस्थापयितुमशक्तेः
तथाहिसमवायवृत्तिः स्वसमवायिषुवृत्तिमतीस्यादवृत्तिर्वावृत्तिमत्वेनैववृत्त्यंतरेणचानवतावदाद्यःपक्षः समवाय
समवायानभ्युपगमात् पंचानांसमवायित्वमितिवचनात् वृत्त्यंतरकल्पनायांतदपिस्वसंबंधिषुवर्तते नवेतिकल्पना
यांवृत्त्यंतरपरंपराप्राप्तेरनवस्थावृत्त्यंतरस्यस्वसंबंधिषुवृत्त्यंतरानभ्युपगमानानवस्थेतिचेत्तर्हि समवायेपिवृत्त्यंतरं
माभूत् अथसमवायिषुसत्स्वेवसमवायप्रतीतेस्तस्याश्रितत्वमुपकल्प्यते तर्हिमूर्तद्रव्येषुसत्स्वेवदिग्लिंगस्येद
मतः पूर्वेणेत्यादिभस्यकाललिंगस्यचपरादिप्रत्ययस्यसद्भावतयोरपितदाश्रितत्वंस्यात् तथाचायुक्तमेतदन्यत्रद्रव्य

कृत्वेचवस्तुनोसाधारणाकारेणनिश्चेतुमशक्तेः संशयस्तत्रश्चाप्रतिपत्तिस्ततोभावः इत्यनेकांतात्मकमपि नसौख्यमा
भजतीतिकेचित् तेपीनप्रातीतिकवादिनः विरोधस्यप्रतीयमानयोरसंभवादनुपलंभसाध्यो हिविरोधस्तत्रोपलभ्य
मानयोः कोविरोधः यच्च शीतोष्णस्पर्शयोरिवेतिदृष्टांततयोक्तं तच्चधूपदहनाद्येकावयविनः शीतोष्णस्पर्शस्वभा
वस्योपलब्धेरयुक्तमेव एकस्यचलाचलरक्तावृतादिविरुद्धधर्माणांयुगपदुपलब्धेश्च प्रकृतयोरपिनविरोधइति ए
तेनवैयधिकरण्यमप्यपास्तं तयोरेकाधिकरणत्वेनप्रतीतेरत्रापिप्रागुक्तनिदर्शनान्येववोद्धव्यानि यच्चानवस्था
नंदूषणंतदपिस्याद्वादिमतानभिज्ञैरेवापादितं तन्मतंहिसामान्यविशेषात्मकेवस्तुनिसामान्यविशेषावेवभेदध्व
निनातयोरेवाभिधानाद्द्रव्यरूपेणाभेदइतिद्रव्यमेवाभेदः एकानेकात्मकत्वाद्वस्तुनः यदिवाभेदनयप्राधान्येन
वस्तुधर्माणामानंत्यान्नानवस्था तथाहि यत्सामान्यंयश्चविशेषस्तयोरनुवृत्तव्यावृत्ताकारेणभेदस्तयोश्चार्थक्रि
याभेदात्तद्भेदश्चशक्तिभेदात्सोपिसहकारिभेदादित्यनंतधर्माणामंगीकरणात् कुतोनवस्था तथाचोक्तं मूलक्षतिक
रीमाहुरनवस्थांहिदूषणां वस्त्वानंत्येप्यशक्तौचनानवस्थाविचार्यतइतियौचसंकरव्यतिकरौ तावपिमेचकज्ञाननिदर्श

युक्तं प्रसंगसाधनात् प्रागभावादौ हि सत्वाद्ध्रौ सत्वेन व्याप्तउपलभ्यते ततश्च व्याप्यस्य द्रव्यादावभ्युपगमो व्यापका
भ्युपगमनांतरीयकइति प्रसंगसाधनं अस्य दोषस्याभावादेतेन द्रव्यादीनामप्यद्रव्यादित्वं द्रव्यत्वादेर्भेदे चिंतितं
वाद्रव्यं कथं नाप्यसंगु पदार्थानां परस्परं भेदप्रति नियतस्वरूपव्यवस्था द्रव्यस्य हि द्रव्यमिति व्यपदेशस्य द्रव्यत्वाभि
संबंधाद्विधाने ततः पूर्वं द्रव्यस्वरूपं किंचिद्वाच्यं येन सह द्रव्यत्वाभिसंबंधः स्यात् द्रव्यमेव स्वरूपमिति चेन्न तस्यापि
सतासंबंधादेव तद्व्यपदेशकारणादेवं गुणादिष्वपि वाच्यं केवलं सामान्यविशेषसमवायानामेव स्वरूपसत्वेन तया
व्यपदेशोपपतेः तत्रयव्यवस्थैव स्यात् ननु जीवादिपदार्थानां सामान्यविशेषात्मकं स्याद्वादिभिरभिधीयेते न
योश्च वस्तुनं भेदाविति तौ च विरोधादिदोषोपनिपातान्नैकत्रयं भविता विताविति तथा हि भेदाभेदयोर्विधिप्र
तिशेधयोरेकत्राभिन्नवस्तुन्यसंभवः शीतोष्णसंस्पर्शयोरिवेति भेदस्यान्यदधिकरणमभेदस्य चान्यदिति वैयधि
करण्यं यमात्मानं तु पुरोधाय भेदो पंचसमाश्रित्याभेदस्तावात्मानौ भिन्नौ वाभिन्नौ च तत्रापि तथा परिकल्पनाद
नवस्था येन रूपेणाभेदस्तेन भेदश्चाभेदश्चेति संकरः येन भेदस्तेनाभेदो येनाभेदस्तेन भेद इति व्यतिकरः भेदाभेदात्म

वैया सा

तु

सहकारिभावइति नस्वभावभेदइष्यते तर्हि नित्यस्यैकरूपस्यापि वस्तुनः क्रमेणनानाकार्यकारिणः स्वभावभेदः का
र्यसांकार्यमाभूत् अक्रमा क्रमिणामनुत्पत्तेर्नैवमिति चेदेकानंशकारणायुगपदनेककारणसाध्यानेककार्यविरोधा
त् क्रमिणोपि न भिकस्य कार्यकारित्वमिति किंच भवत्पक्षे सतोसतोवा कार्यकारित्वं सतः कार्यकर्तृत्वे सकलकालक
लाव्यापिक्षणानामेकक्षणावृत्तिप्रसंगः द्वितीयपक्षेखरविशाणादेरपि कार्यकारित्वमसत्वाविशेषात्स्वलक्षणस्य
व्यभिचारश्च तस्मान्नविशेषैकांतपक्षः श्रेयान् नापिसामान्यविशेषौपरस्परानपेक्षाविति योगमपितमप्युक्ति
युक्तमवभाति तयोरन्योन्यभेदे द्वयोरन्यतरस्यापि व्यवस्थापयितुमशक्तेः तथाहि विशेषास्तावद्द्रव्यगुणकर्मात्म
नः सामान्यं तु परापरभेदाद्द्विविधं तत्र परसामान्यात्सत्तालक्षणाभेदे सत्वापतिरिति तथाच द्रव्ययोगः द्रव्यगुण
कर्माण्यसद्रूपाणिसत्वादत्यंतं भिन्नत्वात्प्रागभावादिति नसामान्यविशेषसमवायैर्व्यभिचारः तत्रस्वरूप
सत्वस्याभिन्नस्य परैरभ्युपगमात् ननुद्रव्यादीनां प्रामाणोपपन्नत्वे धर्मिग्राहकप्रमाणबाधितो हेतुर्येन हि प्रमा
णेन द्रव्यादयो निश्चियंते तेन तत्सत्वमपीति अथमप्रमाणप्रतिपन्ना द्रव्यादयस्तर्हि हेतोराश्रयासिद्धिरिति तद

प्रत्यभिज्ञानस्य बहुलमुपलंभात्तस्मात्प्रयस्य च प्रागेवोक्तत्वात् तत्कार्यमिथ्यानुपपत्तेश्चासिद्धत्वात् पक्षान्यत्साधने सा
त्वाख्यं तदपि विपक्षवत्स्वपक्षेपि समानत्वात् साध्यसिद्धिर्निबंधनं न तथाहि सत्वमर्थक्रियया समर्थक्रिया च क्रमयो
गपद्याभ्यां चेत्क्षणिकान्निवर्तमाने स्वव्याप्यामर्थक्रियामादाय निवर्तते सा च निवर्तमाना स्वव्याप्यं सत्वमिति
नित्यस्येव क्षणिकस्यापि खरविषाणवदसत्वमिति न तत्र सत्वव्यवस्थानं च क्षणिकस्य वस्तुनः क्रमयौगपद्याभ्यामर्
थक्रियाविरोधो सिद्धस्तस्य देशकृतस्य कालकृतस्य वा क्रमस्यासंभवात् अवस्थितस्यैकस्य हि नानादेशकालकाल
व्यापित्वं देशक्रमः कालक्रमश्चाभिधीयते न च क्षणिके सोस्ति योयत्रैव स तत्रैव यो यदैव तदैव सः न देशकालयो
र्व्याप्तिर्भावानामिह विद्यते इति स्वयमभिधानात् न च पूर्वोत्तरक्षणानामेकत्वेन क्रमायोगात् क्षणिकत्वेनैव सत्वादिसा
धनमनेकांतिकं अवास्तवत्वेन तदपेक्षक्रमो युक्त इति नापि यौगपद्येन तत्रार्थक्रिया संभवति युगपद्येन तत्रार्थक्रिया
संभवति युगपदेकस्वभावेन नानाकार्यकरणे तत्कार्यैकत्वस्यान्नानास्वभावकल्पना यां ते स्वभावास्तेन व्यापनीयास्त
त्रैकेन स्वभावेन तद्व्याप्तौ तेषामेकस्वरूपता नानास्वभावेन चेदनवस्था अथैकस्यैकस्योपादानस्वभाव एवान्यत्र
संतानापेक्षया क्रमसंभवति ॥ संतानस्यावास्तवत्वेन स्याक्षणिकत्वेन

रूपेण वृत्तिरवसीयते तत्र यथोक्तदोषाणामनवकाशाद्विरोधादिदोषश्चात्रप्रतिशेत्स्य इति नेह प्रतन्यते यच्चोक्त
नाश्यायित्वे साधनं यो यद्भावं प्रती त्याद्युक्तं तदप्यसाधनं असिद्धादिदोषदुष्टत्वात् तत्रान्यानपेक्षत्वं तावद
सिद्धं घटाद्यभावस्य मुद्गराद्यादिव्यापारान्वयव्यतिरेकानुविधायित्वात्तत्कार्यत्वोपपत्तेः कर्मलादिपर्यायांतरभा
वो हि धटादेरभावस्तुत्वाभावस्य सकलप्रमाणागोचरातिक्रांतत्वात् किंचाभावो यदि तत्रो भवेत्तदान्यानपेक्षत्वं
विशेषणं युक्तं न च सौगतमते सौगमत सोस्तिइतिहेतुप्रयोगा चसातिक्रांतत्वात् ॥ न च सौगतमते सोस्ति इति हेतुप्रयोगा
नवतारएवानैकांतिकं चेदं शालिबीजस्य कोद्रवांकुरजननं प्रत्यन्यानपेक्षत्वे तज्जननस्वभावानियतत्वात्तत्स्वभावत्वे
सतीति विशेषणान्न दोष इति चेन्न सर्वथा पदार्थानां विनाशस्वभावासिद्धेः पर्यायरूपेणैव हि भावानामुत्पादविनाशावंगी
क्रियेते न द्रव्यरूपेण समुदेति विलयमृच्छति भावो नियमेन पर्यायनयस्य नोदेति नो विनश्यति भावनया लिंगितो नित्यं इति
वचनात् न हि निरन्वयविनाशे पूर्वक्षणस्य ततो मृताच्छिखिनः केकाइत सैवोत्तरक्षणस्योत्पत्तिर्घटते द्रव्यरूपेण कथंचिद
सुरूपस्यासंभवात् न सर्वथा भावानां विनाशस्वभावत्वं युक्तं न च द्रव्यत्वमस्य गृहीतुमशक्यत्वादभावः न द्रव्यग्रहणो पायस्य

तिवालबिलसितंनिर्विकल्पवोधस्यानुपलक्षणात् गृहीनेहि निर्विकल्पकेनर योर्भेदे अन्याकारानुरागस्यान्यत्रक
ल्पनायुक्ता स्फटिकजपाकुसुमयोरिवनान्यथेति एतेन तयोर्युगपद्वृत्तेः लघुवृत्तेर्वा तदेकत्वाध्यवस्याय इतिभरसं
तस्यापि कोशपानप्रत्येयत्वादिति कृनचानयोरेकत्वाध्यवसायोनतावद्विकल्पेन तस्याविकल्पवार्तानभिज्ञत्वात् ना
प्यनुभवेन तस्यविकल्पागोचरत्वात् नचतदुभयाविशयाविशयं तदेकत्वाध्यवसाये समर्थमतिप्रसंगात् ततोनप्र
त्यक्षवुद्धौ तथाविधविशेषावभासः नाप्यनुमानवुद्धौ तद विनाभूतस्वभावकार्यलिंगाभावादनुपलंभोसिद्धस्ववा
नुवृत्ताकारस्यस्थूलाकारस्यचोपलब्धेरुक्तत्वात् यदपि परमाणूनामेकदेशेन सर्वात्मना वा संवंधो नोपपद्यते इतित
त्रानुगम्य एवपरिहारः स्निग्धरूक्षाणांसजातीयानांद्व्यधिकगुणानांकथंचित् स्कंधाकारपरिणामात्मकस्यसं
वंधस्याभ्युपगमात् यच्चावयविनिवृत्तिविकल्पादिवाधकमुक्तं तत्राय विनोवृत्तिरवयविनोपपद्यते तदानवर्ततेइत्य
भिधातव्यं नैकदेशादिविकल्पस्तस्य विशेषांतरनांतरीयकत्वात् तथाहि नैकदेशेनवर्तते नापिसर्वात्मनेत्युक्तेप्रकारां
तरावृत्तिरित्यभिहितं स्यादन्यथा नवर्तत इत्येव वक्तव्यं इतिविशेषप्रतिषेधस्यशेषाभ्यनुज्ञानरूपत्वात्कथंचिनात्य

कदोषइतिचेतदपिनसाधुसंगतं नित्यस्यसमर्थस्यपरापेक्षायोगात् गेः सामर्थ्यकरणेनित्यताहानिः तस्माद्भिन्न
मेवसामर्थ्यं तैर्विधीयतइतिननित्यताहानिरितिचेतर्हिनित्यमकिंचित्करमेवस्यात् सहकारिजनितसामर्थ्यस्यै
वकार्यकारित्वात्संबंधात्तस्यापिकारित्वेतत्संबंधस्यैकस्वभावित्वेसामर्थ्यनानात्वाभावान्नकार्यभेदः अनेकस्व
भावित्वेक्रमवत्त्वेचकार्यवत्तस्यापिसांकार्यमितिसर्वभावर्तते इतिचक्रकप्रसंगः तस्मान्नक्रमेणकार्यकारित्वंनि
त्यस्यनापियुगपदशेषकार्याणांयुगपदुत्पत्तौद्वितीयक्षणेकार्याकारणादनर्थक्रियाकारित्वेनावस्तुत्वप्रसंगादिति
नित्यस्यक्रमयौगपद्याभावः सिद्धएवेतिसौगतः प्रतिपेदिरे नापिनयुक्तवादिनः सजातीयेतरव्यावृत्तात्मनांविशे
षामनंशानांग्राहकस्यप्रमाणस्याभावात् प्रत्यक्षस्यास्थिरस्थूलसाधारणाकारवस्तुग्राहकत्वेन निरंशवस्तुग्रहणायो
गात् नहिपरमाणवः परस्परासंबद्धाश्चक्षुरादिबुद्धौप्रतिभांति तथासत्यविवादप्रसंगाद्यानुभूयतएवाप्रथमंतथा
क्षणः पश्चात्तुविकल्पवासनाबलादांतरालानुपलंभलक्षणाद्दोषाद्विद्यमानोपिस्थूलाद्याकारोविकल्पबुद्धौचका
स्तिसचतदाकारेणानुरज्यमानः स्वव्यापारंतिरस्कृत्यप्रत्यक्षव्यापारपुरस्सरत्वेनप्रकृतत्वात् प्रत्यक्षायतइति तदप्य

करणे घटस्यास्थितिरेवस्याद्यविनाश संबंधान्नष्टइतिव्यपदेशइति चेद्भावाभावयोः कः संबंधो नतावदीभेदास्यं न
योर्भेदान्नापि तदुत्पतिरभावस्य कार्याधारत्वाघटाद्भिन्नस्य करणे धटादिरेवकृतः स्यात्तस्य च प्रागेव निःपन्नत्वा
दूयर्थंकरणमित्यन्यानपेक्षत्वंसिद्धमिति विनाशस्वभाव नियतत्वं साधयत्येव सिद्धेवानित्यानां नत्स्वभावनियतत्वे
नदितरेषामात्मादीनां विमत्यधिकरणभावापन्नानां सत्वादिना साधनेन दृष्टांतावद्धुवत्सेवक्षणस्थितिस्वभावत्वं
तथाहि यत्सत्तत्सर्वमेकक्षणस्थितिस्वभावं यथा धटः संतश्चामी भावइति अथवा सत्वमेव विपक्षेबाधकप्रमाणमि
मिति नहिनित्यस्य क्रमेण युगपद्वा संभवति नित्यस्यैकेनैवस्वभावेन पूर्वापरकालभाविकार्यद्वयं कुर्वतः कार्या
भेदकत्वात्तस्यैवस्वभावत्वात् तथाहि कार्यनानात्वे अन्यत्रकार्यभेदा कारणभेदकल्पना विफलैवस्यात् दृशमेकमे
व किंचित्कारणं कल्पनीयं येनैकेस्वभावेनैव चराचरमुत्पद्यत इति अथस्वभावनानात्वमेव तस्य कार्यभेदादिस्य
तइतिचेत्तर्हिते स्वभावस्तस्य सर्वदा संभविनस्तदा कार्ये नो चेत्तदुत्पतिकारणं वाच्यं तस्मादेवमित्येकस्वभावानां क्र
दुत्पत्तो तत्स्वभावानां सदा संभवात्सैव कार्याणां युगपत्प्राप्तिः सहकारिक्रमापेक्षया तत्स्वभावानां क्रमेणाभावान्नो
यसांध

तदुक्तं एकत्र दृष्टो भावो हि क्वचिन्नान्यत्र दृश्यते तस्मान्न भिन्नमस्त्येतत्सामान्यं बुद्ध्यभेदतः इति तेच विशेषाः परस्परा
संबद्धा एव न तत्संबंधस्य विचार्यमाणस्यायोगात् एकदेशेन संबंधे अणुशब्देन युगपद्योगादणोः षडंशतापत्तेः सर्वात्मना
भिसंबंधे पिंडस्याणुमात्रतापत्तेः अवयवविशेषाश्च संबंधत्वमेषामुपपद्यत एव तन्निरोधश्च वृत्तिविकल्पादिबाधना
त् तथा हि अवयवा अवयवविनिवर्तंत इति नाभ्युपगतमवयवी चावयवेषु वर्तमानः किमेकदेशेन वर्तते सर्वात्मना वा ए
कदेशेन वृत्त्यावयवांतरप्रसंगस्तत्राप्येकदेशांतरेणावयविनो वृत्तावनवस्था सर्वात्मना वर्तमानोपि प्रत्यवयवं स्वभावभेद
न वर्तिताहोस्वित् एकरूपेणेति प्रथमपक्षे अवयविबहुत्वापत्तिः द्वितीयपक्षे त्ववयवानामेकरूपतापत्तिरिति प्रत्येकं प
रिसमाप्त्यापत्तावप्यवयविबहुमिति तथा यद्दृश्यं सन्नोपलभ्यते तन्नास्त्येव यथा गगनेन्दीवरं नोपलभ्यते चावयवे
ष्ववयवीति तथा पटग्राहे पटबुद्धिभावस्तन्तोभावार्थांतरं यथा वृक्षाग्रहे वनमिति न ततश्च निरंशा एवान्योन्यासंस्पर्शि
नो रूपादिपरिमाणवः ते चैकक्षणस्थायिनो न नित्या विनाशं प्रत्यन्यानपेक्षणात् प्रयोगश्च यो यद्भावं प्रत्यन्यानपे
क्षस्तत्स्वभावनियतो यथान्त्या कारणसामग्री स्वकार्ये नाशो हि मुद्गरादिना क्रियमाणस्ततो भिन्नो वा क्रियेत भिन्नस्य

मान प्रधान संसर्गादेरात्मनोपि तथाप्रतिभास इति तदप्यनुपन्नमप्रतिभासमानस्यापि संसर्गकल्पनायां तत्त्वेयत्तया निश्चेतुम
शक्तेः तदुक्तं संसर्गादिविभागश्चेद्योगोलकवह्निवत् भेदाभेदव्यवस्थैव मुच्छिन्ना सर्ववस्तुष्विति यदपि परिमाणाख्यं साधनं
तदप्येकप्रकृतिकेषु घटघटीशरावोदञ्चनादिष्वेनकप्रकृतिकेषु पटमुकुटशकटादिषु चोपलंभादनैकान्तिकमिति न ततः प्रकृति
सिद्धिः तदेवं प्रधानग्रहणोपायासंभवात् संभवे वा ततः कार्योदयायोगाच्च यदुक्तं परैः प्रकृतेर्महान् ततोहंकारः तस्माद्गुण
श्च षोडशकस्तस्मादपि षोडशकात् पंचभ्यः पंचभूतानीति सृष्टिक्रमो मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोड
शकश्च विकारो न प्रकृतिः पुरुष इति स्वरूपाख्यानं च वंध्यासुतसौरूप्यवर्णनमिवासद्विषयत्वादुपेक्षामर्हति अमूर्तस्याकाश
स्य मूर्तस्य पृथिव्यादेश्चैककारणकत्वायोगाच्च अन्यथा अचेतनादपि पंचभूतकदंबकाच्चैतन्यसिद्धिश्चार्वाकमतसिद्धिप्रसंगा
त्सांख्यमलगन्ध एव न भवेत् सत्कार्यवादप्रतिषेधश्चान्यत्र विस्तरेणोक्त इति नेहोच्यते संक्षेपस्वरूपत्वादस्येति तथा विशे
षा एव तत्त्वं तेषामसमानेरविशेषात्मनाविश्लेषात्मकत्वात्सामान्यस्यैकस्यानेकत्रस्वैव्याप्यावर्तमानस्य संभवाभावाच्च
तस्यैकव्यक्तिनिष्ठस्य सामस्त्येनोपलब्धेस्तद्व्यक्तिवदन्यथा व्यक्तयोपि भिन्ना माभूवन्निति ततो बुद्ध्यभेद एव सामान्यं

तत्र सांख्यैः प्रधानं सामान्यमुक्तं त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि व्यक्तं तथा प्रधानं तद्विपरीतस्त
थाच पुमानिति वचनात् तच्च केवलं प्रधानं महदादिकार्यनिः पादनाय प्रवर्तमानं किमप्यपेक्ष्य प्रवर्तते निरपेक्षं वा प्रथम
पक्षे तन्निमित्तं वाच्यं यदपेक्ष्य प्रवर्तते ननु पुरुषार्थ एव तत्र कारणं पुरुषार्थेन हेतुना प्रधानं प्रवर्तते पुरुषार्थश्च द्विधा श
ब्दाद्युपलब्धिर्गुणपुरुषान्तरविवेकदर्शनं चेत्यभिधानादिति चेत् सत्यं तथा प्रवर्तमानमपि [illegible] पुरुषकृतं किंचि
दुपकारं समासादयेत् प्रवर्तेत नासादयद्वा प्रथमपक्षे स उपकारस्तस्माद्भिन्नोऽभिन्नो वा यदि भिन्नः तदा तस्येति व्य
पदेशाभावः संबंधाभावात् तदभावश्च समवायादेरनभ्युपगमात् तादात्म्यं च भेदविरोधीति अथाभिन्न उपकार इति
पक्ष आश्रीयते तदा प्रधानमेव तेन कृतं स्यात् अथोपकारनिरपेक्षमेव प्रधानं प्रवर्तते तर्हि मुक्तात्मानं प्रत्यपि प्रवर्तेता
विशेषादनेन निरपेक्षप्रवृत्तिपक्षोऽपि प्रयुक्तस्तत एव किंच सिद्धे प्रधाने सर्वमेतदुपपन्नं स्यान्न च तत्सिद्धिः कुतश्चिन्नि
श्चीयते इति ननु कार्याणामेकान्वयदर्शनादेककारणभवत्वं भेदानां परिणामदर्शनाच्चेति तदप्यचारु चर्चितं सुखदुःख
मोहरूपतया घटादेरन्वयाभावात् तत्त्वस्यैव तयोपलंभात् अथात्मतत्त्वस्य न सुखादिपरिणामः किंतु तथापरिणाम

त्वभावकार्ययोरसंभवात् किंचगोशब्दस्यागोपोहाभिधायित्वेगोरित्यत्रगोशब्दस्यकिमभिधेयंस्यादज्ञानस्यविधि
निशेधयोरनधिकारात् अगोनिवृत्तिरितिचेदितरेतराश्रयत्वमगोव्यवच्छेदोहि अगोनिश्चयेभवतिसचागोगोनि
वृत्यात्मागोश्चागोव्यवच्छेदरूपइति अगोरित्यत्रोत्तरपदार्थोप्यनयैवदिशाचिंतनीयः नन्वगोरित्यत्रान्यएवविधि
रूपोगोशब्दाभिधेयस्तदापोहशब्दार्थइतिविघटेनतस्मादयोहस्योक्तयुक्त्याविचार्यमाणस्यायोगान्नान्यापोहशब्दार्थ
इतिस्थितं सहजयोग्यतावशाच्छब्दादयोवस्तुप्रतिपत्तिहेतवइति स्मृतिस्तुपहतेयंप्रत्यभिज्ञानवन्नाप्रमितिनिरस्त
निताल्लोकसंगतार्थप्रवचनंबंधनिश्चितंदेवचारचितमुचितवाग्मिनथ्यमेतेनगीतं ॥ इतिपरीक्षामुखस्यलघुवृत्तौ
परोक्षप्रपंचतृतीयःसमुद्देशः ॥३॥ अथस्वरूपसंख्याविप्रतिपत्तिंनिराकृत्यविषयविप्रतिपत्तिनिरासार्थमाह सामा
न्यविशेषात्मातदर्थोविषयः तस्यप्रमाणस्यग्राह्योर्थोविषयइतियावत् सएवविशिष्यतेसामान्यविशेषात्मासा
मान्यविशेषौवक्ष्यमाणलक्षणौतावात्मानौयस्येतिविग्रहः तदुभयग्रहणंआत्मग्रहणंचकेवलस्यसामान्यस्यवि
शेषस्यतदुभयस्यवास्वतंत्रस्यप्रमाणविषयत्वप्रतिषेधार्थंतत्रसन्मात्रदेहस्यपरब्रह्मणोनिरस्तत्वात्तदितरद्विचार्य

लैकनानास्वादिविकल्पानां प्रतीतेः भेदकाजभावस्य वस्तुतापत्ति तद्धक्षणत्वाद्वस्तुत्वस्य न चापोह्यलक्षणसंबंधिभेदा
द्भेदः प्रमेयाभिधेयादिशब्दानामप्रवृत्तिप्रसंगात् व्यवच्छेद्यस्य तद्रूपेणाप्यप्रमेयादिरूपत्वे ततोव्यवच्छेदायोगात्
कथं तत्र संबंधिभेदाद्भेदः किंच शावलेयादिषु कोपोहो स सज्येत किंतु प्रतिव्यक्तिभिन्न एव स्यादयसांवलेयाद्य न
तन्न भिदंति तर्ह्यश्वादयोपि भेदका मा भूवन् प्रत्यासत्तंगाः शावलेयादयो न भेदकास्तस्याश्वादयो भेदका इत्यनि
साहसं वस्तुनोपि संबंधिभेदाद्भेदो नोपलभ्यते किमुतावस्तुनि तथाह्येक एव देवदत्तादिः कटककुंडलादिभिरभिसंबध्य वस्
मानो ननात्वमास्तिघुवानः समुपलभ्यते इति भवतु वा संबंधिभेदाद्भेदस्तथापि न वस्तुभूतसामान्यमंतरेणान्यापोहा
श्रयः संबंधी भवति भवितुमर्हति तथाहि यादि शावलेयादिषु वस्तुभूतसारूप्याभावोश्वादिपरिहारेण तत्रैव विशिष्य
भिधानप्रत्ययो कथं स्यातां ततः संबंधिभेदाद्भेदमिच्छतापि सामान्यं वास्तवमंगीकर्तव्यमिति किंचापोहशब्दार्थप
क्षे संकेत एवानुपपन्नस्तद्ग्रहणोपायासंभवात् न प्रत्यक्षं तद्ग्रहणसमर्थं तस्य वस्तुविषयत्वादन्यापोहस्य चावस्तुत्वा
दनुमानमपि न तद्भावमवबोधयति तस्य कार्यस्वभावलिंगसंपाद्यत्वापोहस्य निरुपाख्यत्वे नार्थक्रियाकारित्वेन च

धात् नहि गवादिशब्दश्रवणादेव गवादिव्यावृत्तिः प्रतीयते ततस्सास्नादिमत्यर्थे प्रवृत्तिदर्शनाद्गवादिबुद्धिजन
कं तत्र शब्दांतरं मृग्यमर्थे कस्मादेव गोशब्दादर्थद्वयस्यापि संभावनान्नार्थः शब्दांतरेणेति चेन्नैवमेकस्य परविरुद्ध
र्थद्वयप्रतिपादनविरोधात् किंच गोशब्दस्यागोव्यावृत्तिविषयत्वे प्रथमं गोरिति प्रतीयेत नचैवमतो नान्यापो
हः शब्दार्थः किंचापोहाख्यं सामान्यं वाच्यत्वेन प्रतीयमानं पर्युदासरूपं प्रसज्यरूपं वा प्रथमपक्षे गोत्वमेव ना
मांतरेणोक्तं स्याद्भावाभावस्य भावांतरस्वभावेन व्यवस्थितत्वात् कश्चायमश्वादिनिवृत्तिलक्षणो भावोऽभिधीयते न
तावत्स्वलक्षणरूपस्तस्य सकलविकल्पगोचरातिक्रांतत्वान्नापि शाबलेयादिव्यक्तिरूपस्तस्यासामान्यत्वप्र
संगात् तस्मात्सकलगोव्यक्तिष्वनुवृत्तप्रत्ययजनकं तत्रैव प्रत्येकं परिसमाप्त्या वर्तमानं सामान्यमेव गोशब्दवाच्यं त
स्यापोह इति नामकरणे नाममात्रं भिन्नं नार्थ इति अतो नाद्यः पक्षः श्रेयान् नापि द्वितीयो गोशब्दादेः क्वचिद
र्थे प्रवृत्त्ययोगात् तुच्छाभावाभ्युपगमे परमतप्रवेशानुषंगाच्च किंच गवाद्यो ये सामान्यशब्दा ये च शाबलेयादयस्तेषां
भवदभिप्रायेण पर्यायतास्यादर्थभेदाभावाद्वृक्षपादपादिशब्दवत् न खलु तुच्छाभावस्य भेदो युक्तो वस्तुन्येव संसृष्ट

इति तदप्ययुक्तं पराभिप्रायापरिज्ञानात् नास्माभिर्वक्तुरभावे वेदस्य प्रामाण्याभावः समुद्भाव्यते किन्तु तद्व्याख्यात्
णां मतीन्द्रियार्थदर्शनाद्गुणाभावे ततो दोषाणामनपोदितत्वान्न प्रामाण्यनिश्चय इति ततोऽपौरुषेयत्वेऽपि वेदस्य
प्रामाण्यनिश्चयायोगात् नानेन लक्षणस्याव्यापित्वमसंभवित्वं वेति कृतमतिजल्पितेन ननु शब्दार्थयोः संबन्धाभावा
दन्यापोहमात्राभिधायित्वादाप्तप्रणीतादपि शब्दात् कथं वस्तुभूतार्थावगम इत्य आह सहजयोग्यतासंकेतवशाद्धि
शब्दादयो वस्तुप्रतिपत्तिहेतव इति सहजा स्वभावभूता योग्यता शब्दार्थयोर्वाच्यवाचकशक्तिस्तस्यां संकेतस्तद्वशाद्धि
स्फुटं शब्दादयः प्रागुक्ता वस्तुप्रतिपत्तिहेतव इति उदाहरणमाह यथा मेर्वादयः सन्तीति ननु य एव शब्दास्ते सत्यर्थे
दृष्टास्त एवार्थाभावेऽपि दृश्यन्ते तत्कथमर्थाभिधायकत्वमिति तदप्ययुक्तमनर्थकेभ्यो शब्देभ्योऽर्थवतामन्यत्वान्न चान्य
स्य व्यभिचारेऽन्यस्यासौ युक्तोऽतिप्रसंगादन्यथा गोपालघटिकान्तर्गतस्य धूमस्यापावकस्य च व्यभिचारे पर्वतादिधूम
स्यापि तत्प्रसंगात् यत्नतः परीक्षितं कार्यं कारणं नातिवर्तते इत्यन्यत्रापि समानं सुपरीक्षितो हि शब्दोऽर्थं न व्य
भिचरति तथा चान्यापोहस्य शब्दार्थत्वकल्पनं प्रयासमात्रमेव न चान्यापोहः शब्दार्थो व्यवतिष्ठते प्रतीतिविरो

कप्रतिपादितत्वादभावप्रमाणोपन्यासायोगात् प्रमाणपंचकाभावे भावप्रमाणाप्रवृत्तेः प्रमाणपंचकं यत्र वस्तुरूपेन जायते वस्तुस्वभाव बोधार्थं तत्राभावप्रमाणतेति परैरभिधानात् ततोनवादिनः कर्तुरस्मरणमुपपन्नं नापि प्रतिवादिनः स्मरणात् ननु प्रतिवादिनावेदैककाद्यो बहवः कर्तारः स्मर्यंते अतस्तत्स्मरणस्य विवादविषयत्वात् प्रामाण्याद्वेदेव सर्वस्य कर्तुरस्मरणमिति चेन्न कर्तृविशेषविषय एवासौ विवादो न कर्तृसामान्ये ततः सर्वस्य कर्तुरस्मरणमप्यसिद्धं सर्वात्मज्ञानविज्ञानरहितो वा कथं सर्वस्य कर्तुरस्मरणमेवेति तस्मादपौरुषेयत्वस्य वेदे व्यवस्थापयितुमशक्यत्वान्न तद्धेतुरस्य व्यापकत्वमसंभवित्वं वा संभवति पौरुषेयत्वे पुनः प्रमाणानि बहूनि संत्येव सजन्ममरणर्षिगोत्रचरणादिनामश्रुतेरनेकपदसंहति प्रतिनियमसंदर्शनात् अपौरुषेयत्वेपि वा न प्रामाण्यं वेदस्योपपद्यते तद्धेतूनां गुणानामभावात् ननु न गुणकृतमेव प्रामाण्यं किंतु दोषाभावप्रकारेणापि स च दोषाश्रयपुरुषाभावेपि निश्चीयते न गुणसद्भावएवेति तथा चोक्तं शब्दे दोषोद्भवस्तावद्वक्त्रधीनमिति इति स्थितं तदभावः क्वचिद्वक्तृगुणवत्त्वकृतः तद्गुणैरपकृष्टानां शब्दे संक्रांत्यसंभवात् यद्वा वक्तुरभावेन नस्युर्दोषा निराश्रयाः ~~शब्दे दोषोद्भवः तावद्वक्त्रधीनमिति इति स्थितं तदभावः संक्रांत्यसंभवात्~~ यद्वा वक्तुरभावेन नस्युर्दोषा निराश्रयाः

क

गसाधनाद्दोष इति चेन्न परं प्रति साध्यसाधनयोर्व्यापकभावाभावादिदानीमपि देशांतरे वेदकारस्याष्टकादेः सौगतादि
भिरभ्युपगमात् यदप्यपरं वेदाध्ययनमित्यादि तदपि विपक्षेपि समानं भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकं तदध्ययनवा
च्यत्वादधुना[illegible]नाध्ययनं यथेति यच्चान्यदुक्तमनवच्छिन्नसंप्रदायत्वे सत्यस्मर्यमाणकर्तृत्वादिति तत्र जीर्णकूपारामादि
भिर्व्यभिचारनिवृत्त्यर्थमनवच्छिन्नसंप्रदायत्वविशेषणेपि विशेष्यस्यास्मर्यमाणकर्तृकत्वस्य विचार्यमाणस्यायोगाद
साधनत्वं कर्तुरस्मरणं हि वादिनः प्रतिवादिनः सर्वस्य वा वादिनश्चेदनुपलब्धेरभावाद्वा आद्ये पक्षेपि टकत्रयेपि स्याद
नुपलब्धेरविशेषात् तत्र परैः कर्तुरंगीकरणान्नो चेदत एवात्रापि न तदस्तु अभावादिति चेदस्मात्तदभावसिद्धौ वितराश्र
यत्वं सिद्धौ हि तदभावे नान्निबंधनं तदस्मरणमस्माच्च तदभाव इति प्रामाण्यान्यथानुपपत्तेस्तदभावान्नेतरेतराश्रयत्वमिति
चेन्न प्रामाण्येनाप्रामाण्यकारणस्यैव पुरुषविशेषस्य निराकरणात् पुरुषमात्रस्यानिराकृतेः अथातींद्रियार्थदर्शिनो
भावादन्यस्य च प्रामाण्यकारणत्वानुपपत्तेः सिद्ध एव सर्वथा पुरुषाभाव इति चेन्न कृतं सर्वज्ञभावो विभावितः प्रामाण्यान्य
थानुपपत्तेरिति वदितेरतराश्रयत्वं कर्तुरस्मरणादिति चेच्चक्रकप्रसंगः अभावप्रमाणादिति चेन्न तत्साधकस्यानुमानस्य प्रा

सत्यार्थएववेदोवसीयतइतिचेत् नकिंचिज्ज्ञानामतींद्रियार्थेषुनिःसंशयव्याख्यानायोगांदृष्टेनाकृष्यमाणस्या
देशपरिहारेणाभिमतमंत्रार्थप्राप्यणानुपपत्तेः किंचानादिव्याख्यानपरंपरागतत्वेपिवेदार्थस्यगृहीतविस्मृतस
नाकौशलदुष्टाभिप्रायतयाव्याख्यानस्यान्यथैवकारणादविसंवादायोगादप्रमाण्यमेवस्यात् दृश्यंतेह्यधुना
ज्योतिःशास्त्रादिषुरहस्यंयथार्थमवयंतोपिदुरभिसंधेरन्यथाव्याचक्षाणाः ॥ केचिज्जानंतोपिवचनाकौशला
थोपदिशंतः केचिच्चविस्मृतिसंबंधाः अयाथातथ्यमभिदधानाइतिकथमन्यथाभावनाविधिनियोगवाक्यार्थ
प्रतिपत्तिःवेदस्यान्मनुयाज्ञवल्क्यादीनांश्रुत्यर्थानुसारिस्मृतिनिरूपणायांवातस्मादनादिप्रवाहपतितत्वेपि
मयार्थत्वमेवस्यादितिस्थितम् ॥ यच्चोक्तमतीतानागतावित्यादितदपिस्वमतनिर्मूलनहेतुत्वेनविपरीतसाधनात्तदा
स्तमेवेति तथाहि अतीतानागतौकालौवेदार्थज्ञविवर्जितौ कालशब्दाभिधेयत्वादधुनातनकालवदिति किंच काल
शब्दाभिधेयत्वमतीतानागतयोः कालयोर्ग्रहणेसतिभवति तद्ग्रहणंचनाध्यक्षतस्तयोरतींद्रियत्वादनुमानतद्ग्र
पिनसाध्येनसंबंधस्तयोर्निश्चेतुंपार्यतेप्रत्यक्षगृहीतस्यैवसंबंधाभ्युपगमान्नचकालाख्यंद्रव्यंमीमांसकस्यास्ति

उभदीपदृष्टांताभ्यांकारकव्यंजकपक्षयोर्विशेषसिद्धेरित्यलमितिजल्पेनेन यच्चान्यत्प्रवाहनित्यत्वेदस्यापौरुषेयत्वमिति
तत्र किंशब्दमात्रस्यानादिनित्यत्वमुत विशिष्टानामिति आद्यपक्षे यएवशब्दालौकिकास्तएववैदिका इत्यत्य इदमभिधीय
यतेवेद एवापौरुषेय इति किंतु सर्वेषामपिशास्त्राणां अपौरुषेयतेति अथविशिष्टपूर्विका एवशब्दा अनादित्वेनाभिधीयंते
तर्ह्येषामवगततार्थानामवगतार्थानां वा अनादितास्याद्यदितावदुत्तरः पक्षस्तदाज्ञानलक्षणमप्रामाण्यमनुषज्यते अथ
आद्यः पक्ष आश्रीयते तद्व्याख्यातारः किंचिज्ज्ञाः भवेयुः सर्वज्ञा वा प्रथमपक्षे दुरधिगमः संबंधनामन्यथाप्यर्थस्य कल्पयि
तुंशक्यत्वात् मिथ्यात्वलक्षणमप्रामाण्यं स्यात्तदुक्तं । अयमर्थो नायमर्थ इतिशब्दा वदंति न कल्प्योयमर्थः पुरुषैस्तैर्वरादि
विष्णुताः किंच किंचिज्ज्ञता व्याख्यातारो विशेषादग्निहोत्रं जुहुयात् स्वर्गकाम इत्यस्य खादेच्छ्वमांसमित्ययमपिवाक्यार्थः किंनस्या
त् संशयलक्षणमप्रामाण्यं वा अथ सर्वविद्वदितार्थ एववेदोनादिपरंपरायात इतिचेत्तर्हि धर्मेचोदनैव प्रमाणमि
ति हतमेतत् अतींद्रियार्थप्रत्यक्षीकरणसमर्थस्य पुरुषस्य सद्भावेच तद्वचनस्यापि चोदनावदवबोधकत्वेन प्रामाण्या
दुदस्यपुरुषाभावसिद्धेः तत्प्रतिबंधकं स्यात् अथ तद्व्याख्यातॄणां किंचिज्ज्ञोपि यथार्थज्ञानपरंपराभ्यां किंच्छिन्नसंतानत्वेन

लंभेन न शक्यते निश्चेतुं  न च प्रत्यभिज्ञानबलेनैवांतराले सत्ता संभवत्तस्य सादृश्यादपि संभवाविरोधात्  न च घटादावेवं प्रसं
गस्तस्योत्पत्तावपरापरमृत्पिंडांतरलक्षणस्याकारणस्यासंभाव्यमानत्वेनांतराले सत्तायाः साधयितुं शक्यत्वादत्र तु कारणान
मपूर्वेषां व्यापारसंभावनतो नांतराले सत्तासंभव इति  यच्चान्यदुक्तं संकेतान्यथानुपपत्तेः शब्दस्य नित्यत्वमितीदमप्यनात्म
ज्ञभाषितमेवानित्येपि योजयितुं शक्यत्वात् तथाहि गृहीतसंकेतस्य दंडस्य प्रध्वंसे सत्यगृहीतव्यासंकेत इदानीमन्य एव दंडः स
मुपलभ्यते इति दंडीति न स्यात् तथा धूमस्यापि गृहीत  व्याप्तिकस्य नाशेऽन्यधूमदर्शनाद्वह्निविज्ञानभावस्य  अथ सादृश्यात्त
थाप्रतीतिर्निर्दोष इति चेदत्रापि सादृश्यवशादर्थप्रत्यये को दोषो येन नित्यत्वे न्न दुर्निवेश आश्रीयते तथाकल्पनायामनराले स
त्त्वमप्यदृष्टं न कल्पितं स्यादिति यच्चान्यदभिहितं व्यंजकानां प्रतिनियतत्वान्न युगपच्छ्रुतिरिति तदप्यशिक्षितलक्षितम्  समानेंद्रि
द्रियग्राह्येषु समानदेशेषु विषयविषयेषु नियमायोगात्  तथाहि श्रोत्रं मानदेशं समानेन्द्रियग्राह्यसमानधर्मापन्नानामर्था
नां ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्यं न भवतीन्द्रियत्वात् चक्षुर्वत्  शब्दा वा प्रतिनियतसंस्कारकसंस्कार्या न भवंति समानदे
शसमानेन्द्रियग्राह्यसमानधर्मापन्नत्वे सति युगपदिंद्रियसंबद्धत्वात्  घटादिवत्  उत्पत्तिपक्षेप्ययं दोषः समान इति न वाच्यमुत्प

घटः सर्वगतश्चक्षुरादिसंनिधानादनेकत्र देशे प्रतीयत इती ननु घटोत्पादकस्य मृत्पिंडादेरनेकस्योपलंभादनेकत्वमेव तथा मह
दृग्परिमाणासंभवाच्चेति तच्च वर्णेष्वपि समानं तत्रापि प्रतिनियतताल्वादिकारणकलापतो आदिधर्मभेदस्य च संभवाविरोध
तु ताल्वादीनां व्यंजकत्वमत्रैव निषेत्स्यत इत्यास्तां तावदेतत् अथ व्यापित्वेपि सर्वत्र सर्वात्मनाश्रुतमत्वान्न दोषोयमिति चे
न्न तथा सति सर्वथैकत्वविरोधान्न हि देशभेदेन युगपत्सर्वात्मना प्रतीयमानस्यैकत्वमुपपन्नं प्रमाणविरोधात् तथा च प्रयोगः
प्रत्येकं गकारादिवर्णोनेक एव युगपद्भिन्नदेशतया तत्रैव सर्वात्मनोपलभ्यमानत्वात् घटादिवत् न सामान्येन व्यभि
चारः तस्यापि सदृशपरिणामात्मकस्यानेकत्वात् नापि पर्वतादिनेकप्रदेशस्थतया युगपदनेकदेशस्थिततया पुरुषपरिक्ष्य
मानेन चन्द्रार्कादिना व्यभिचारः तस्यातिदविष्ठतयैकदेशस्थितस्यापि भ्रांतवशादनेकदेशस्थत्वेन प्रतीतेः न चाभ्रांतस्य
भ्रान्तेन व्यभिचारकल्पना युक्तेति नापि जलपात्रप्रतिबिंबेन तस्यापि चन्द्रार्कादिसन्निधमपेक्ष्य तथा परिणममानस्यानेक
त्वात् तस्यादनेकप्रदेशेषु युगपत्सर्वात्मनोपलभ्यमानविशेषस्यैकस्यासंभाव्यमानत्वात् तत्र प्रवर्तमानं प्रत्यभिज्ञानं न प्रमाण
मिति स्थितम् तथा नित्यत्वमपि न प्रत्यभिज्ञानेन निश्चीयत इति नित्यत्वं हि एकस्यानेकक्षणव्यापित्वं तच्चांतराले सत्तानुप

नाऽसन्निकृष्टेऽर्थे बुद्धिरित्यभिधानात् नाप्यर्थापत्तेस्तत्सिद्धिरनन्यथाभूतस्यार्थस्याभावात् उपमानोपमेययोरप्रत्यक्षत्वाच्च नाप्युपमानं साधकं केवलमभावप्रमाणमेवावशिष्यते तच्च तदभावसाधकमिति न च पुरुषसद्भाववदस्यापि दुःसाध्यत्वात् संशयापत्तिस्तदभावसाधकप्रमाणानां सुलभत्वात् अधुना हि तदभावे प्रत्यक्षमेवातीतानागतयोः कालयोः अनुमानं तदभावसाधकमिति तथा चातीतानागतौ कालौ वेदकारविवर्जितौ कालशब्दाभिधेयत्वादिदानींतनकालवत् वेदस्याध्ययनं सर्वं तदध्ययनपूर्वकं वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथेति तथापौरुषेयो वेदः अनवच्छिन्नसंप्रदायत्वे सति सत्यस्मर्यमाणकर्तृकत्वात् आकाशवत् अर्थापत्तिरपि प्रामाण्यलक्षणस्यार्थस्यान्यथाभूतस्य दर्शनात् तदभावे निश्चीयते धर्माद्यतींद्रियार्थविषयस्य वेदस्यार्वाग्भागदर्शिनः कर्तुमशक्यत्वात् अतींद्रियार्थदर्शिनश्चाभावात् प्रामाण्यमपौरुषेयतामेव कल्पयतीति अत्र प्रतिविधीयते यत्तावदुक्तं वर्णानां व्यापित्वे नित्यत्वे च प्रत्यभिज्ञा प्रमाणमिति तदसत् प्रत्यभिज्ञायास्तत्र प्रमाणत्वायोगात् देशांतरेपि तस्यैव वर्णस्य सत्वे खंडशः प्रतिपत्तिः स्यात् नहि सर्वत्र व्याप्त्या वर्तमानस्यैकस्मिन् प्रदेशे सामस्त्येन ग्रहणमुपपत्तियुक्तमव्यापकत्वप्रसंगात् घटादेरपि व्यापकत्वप्रसंगः शक्यं हि वक्तुमेव

श्रवणप्रसंगः सर्वदा तदभिव्यक्तेरसंभवश्चाभिव्यंजकवायूनां प्रतिनियतत्वात् नचैतेषामनुपपन्नत्वं प्रमाणप्रतिपन्न
त्वात् तथाहि वक्तृमुखनिकटदेशवर्तिभिः स्पर्शनेनाध्यक्षेणाव्यंजका वायवो गृह्यंते दूरदेशस्थितेन मुखसमीपस्थित
तूलचलनादनुमीयन्ते श्रोतृश्रोत्रदेशे शब्दश्रवणान्यथानुपपत्तेरर्थापत्त्या विनिश्चीयंते किंचोत्पत्तिपक्षे [illegible] नायं दोष
स्तथाहि वाय्वाकाशसंयोगादसमवायिकारणादाकाशाच्च समवायि[illegible]कारणादिदिग्देशाद्यविभागेनोत्पद्यमानोयं शब्दो न
सर्वैरनुभूयते अतु नियतदिग्देशस्थैरेव तथाभिव्यज्यमानेपि नाप्यभिव्यक्तिसाकार्यमुभयत्रापि समानत्वादियं तथा
हि अन्यैस्ताल्वादिसंयोगैर्यथान्यो वर्णो निष्क्रियते तथाधान्यतरसारिभिस्ताल्वादिभिरन्यो ध्वनिनिरभ्यते इत्युत्प
भिव्यक्त्योः समानत्वे नैकत्रैव पर्यनुयोगावसर इति सर्वं स्वस्थं माभूद्गुणानां तदात्मकस्य वा शब्दस्य कौटस्थ्यनित्यत्वं
तथाप्यनादिपरंपरायातत्वेन वेदस्य नित्यत्वात् प्रकृतलक्षणस्याव्यापकत्वं नच प्रवाहनित्यत्वमप्रमाणकमेवास्ये
ति युक्तं वक्तुमधुना तत्कर्तुरनुपलंभादतीतानागतयोरपि कालयोस्तदनुमापकस्य लिंगस्याभावात्तदभावोपि सर्वदा प्रती
द्रियसाध्यसाधनसंबंधस्येन्द्रियग्राह्यत्वायोगात् प्रत्यक्षप्रतिपन्नमेव हि लिंगमनुमानांगगृहीतसंबंधस्यैकदेशसंदर्शि

भिप्रतिपत्तेन हेतुना पक्षस्तदाधारसूचनाय साध्यव्याप्तसाधनाद्याधारसूचनीयोक्तं ततो यदुक्तं परेण तद्भावो हि दृष्टांते तदवेदिनः
व्याप्तौ विदुषां वाच्यो हेतुरेव हि केवल इति तन्निरस्तं सुत्परां प्रति यथोक्तहेतुप्रयोगोपि पक्षप्रयोगाभावे साधनस्य नियताधा
रतानवधारणात् अथानुमानस्वरूपं प्रतिपाद्येदानीं क्रमप्राप्तमागमस्वरूपं निरूपयितुमाह आप्तवचनादिनिबंधनमर्थज्ञा
नमागम इति यो यत्रावंचकः स तत्राप्तः आप्तस्य वचनमादिशब्देनांगुल्यादिसंज्ञापरिग्रहः आप्तवचनमादिर्यस्य स तत
थोक्तं तन्निबंधनं यस्यार्थज्ञानस्येति आप्तशब्दोपादानादपौरुषेयत्वव्यवच्छेदः अर्थज्ञानमित्यनेनार्थज्ञानस्याभिप्रा
यसूचनस्य च निरासः ननु संभवीदं लक्षणं शब्दस्य नित्यत्वेनापौरुषेयत्वादाप्तप्रणीतत्वायोगान्नित्यत्वं च तदवयवानां व
र्णानां व्यापकत्वान्नित्यत्वाच्च तच्च व्यापकत्वमसिद्धमेकत्र प्रयुक्तस्य गकारादेः प्रत्यभिज्ञया देशांतरेपि ग्रहणात् स एवायं गका
र इति नित्यत्वमपि तयैवावसीयते कालांतरेपि तस्यैव गकारादेर्निश्चयात् इतो वा नित्यत्वं शब्दस्य संकेतान्यथानुपपत्तेरिति
तथाहि गृहीतसंकेतस्य प्रध्वंसे त्वगृहीतसंकेतः शब्द इदानीमन्य एवोपलभ्यते इति तत्कथमर्थप्रत्ययः स्यात् न चासौ न भवती
ति स एवायं शब्द इति प्रत्यभिज्ञानस्यात्रापि सुलभत्वाच्च न च वर्णानां शब्दस्य वा नित्यसत्वे सर्वदा श्रवणप्रसंगः सर्वदा

उनस्यहि कारणंमृगस्तस्य विरोधिमृगारिस्तस्यकार्यंतच्छब्दमिति इदं यथा विरुद्धकार्योपलब्धावेतद्भवति यथाप्रकृतमपी
त्यर्थः बालव्युत्पत्त्यर्थंपंचावयवप्रयोगइत्युक्तं व्युत्पन्नंप्रतिकथंप्रयोगनियमइतिशंकायामाह व्युत्पन्नप्रयोगस्तुतथोपपत्त्या
न्यथानुपपत्तैवचवा व्युत्पन्नस्यव्युत्पन्नायवाप्रयोगः क्रियतइतिशेषः तथोपपत्त्यातथासाध्येसत्येवोपपत्तिस्तया अन्यथा
नुपपत्त्यैववा अन्यथासाध्याभावेनुपपत्तिस्तस्यातामेवानुमानमुद्रामुन्मुद्रयति अग्निमानयंदेशस्तथैवधूमवत्त्वोपपत्तेः ध
मत्वान्यथानुपपत्तेर्वेति ननुदतिरिक्तदृष्टांतादेरपिव्याप्तिप्रतिपत्तानुपयोगित्वात् व्युत्पन्नापेक्षया कथंतदप्रयोगइत्याह हे
तुप्रयोगोहि यथाव्याप्तिग्रहणंविधीयते सानुतावन्मात्रेणाव्युत्पन्नैरवधार्यते इतिहिशब्दोयस्मादर्थे यस्माद्यथाव्याप्तिग्र
हणंव्याप्तिग्रहणानतिक्रमेणायंहेतुप्रयोगोविधीयतेसावतावन्मात्रेणाव्युत्पन्नैस्तथोपपत्त्यान्यथानुपपत्त्यावधार्यते दृष्टांतादि
मंतरेणावेत्यर्थः यथादृष्टांतादेर्व्याप्तिप्रतिपत्तिंप्रत्यनंगत्वं तथाप्राक्प्रपंचितमिति नेहपुनःप्रतन्यते नापिदृष्टांतादिप्रयोगः
साध्यसिध्यर्थंफलवानित्याह तावताचसाध्यसिद्धिः चकारएवकारार्थेनिश्चितविपक्षासंभवेहेतुप्रयोगमात्रेणसाध्यसिद्धिरि
त्यर्थः तेनपक्षप्रयोगोपिसफलइतिदर्शयन्नाह तेनपक्षस्तदाधारसूचनायोक्तः यतःस्तथोपपत्त्यन्यथानुपपत्तिप्रयोगमात्रेणव्या

भवात् विरुद्धकार्याद्यनुपलब्धिर्विधौ संभवतीति विरुद्धकारणकार्यस्वभावानुपलब्धिरिति तत्र विरुद्धकार्यानुपलब्धिमाह यथास्मि
न्प्राणिनि व्याधिविशेषोऽस्ति निरामयचेष्टानुपलब्धेरिति व्याधिविशेषस्य हि विरुद्धस्तदभावस्तस्य कार्यं निरामयचेष्टा तस्यानुपलब्धे
रिति विरुद्धकारणानुपलब्धिमाह अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् दुःखविरोधि सुखं तस्य कारणमिष्टसंयोगस्त
दनुपलब्धिरिति विरुद्धस्वभावानुपलब्धिमाह अनेकान्तात्मकं वस्त्वे ~~नात्मकं व~~ कान्तस्वरूपानुपलब्धेः अन्येका
न्तात्मकं विरोधिनित्याद्येकान्त न पुनस्तद्विषयविज्ञानं तस्य मिथ्याज्ञानरूपतयोपलंभसंभवात् तस्य स्वरूपमात्रास्तत्वाकारतस्या
नुपलब्धिः ननु च व्यापकविरुद्धकार्यादीनां परंपरया विरोधिकार्यादिलिंगानां च बहुलमुपलंभसंभवात्तान्यपि किमिति ना
चार्यैरुदाहृतानीत्याशंकायामाह परंपरया संभवत्साधनमत्रैवान्तर्भावनीयं अत्रैवैतेषु कार्यादिष्वित्यर्थः तस्यैव साध
नस्योपलक्षणार्थमुदाहरणद्वयं प्रदर्शयति अभूदत्र चक्रे शिवकः स्थासात् एतच्च किंसंज्ञिकं कान्तर्भवतीत्याशंकायामाह
कार्यकार्यमविरुद्धकार्योपलब्धौ अन्तर्भावनीयमिति संबन्धः शिवकस्य हि कार्यं छत्रं तस्य कार्यं स्थासः इति दृष्टान्तद्वारेण
द्वितीयमुदाहरति नास्त्यत्र गुहायां मृगक्रीडनं मृगारिसंशब्दनात् कारणविरुद्धकार्यं विरुद्धकार्योपलब्धौ यथेति मृगक्री

शक्यमपि विरुद्धपूर्वचरमाह नोदेष्यति मुहूर्तान्ते शकटं रेवत्युदयात् शकटोदयविरुद्धो ह्यश्विन्युदयस्तत्पूर्वचरो रेवत्यु
दय इति विरुद्धोत्तरचरलिंगमाह नोदगाद्भरणिर्मुहूर्तात्पूर्वं पुष्योदयात् भरण्युदयविरुद्धो हि पुनर्वसूदयः तदुत्तरचरः पु
ष्योदय इति विरुद्धसहचरमाह नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागदर्शनादिति परभागाभावस्य विरुद्धः सद्भावस्तत्
सहचरोऽर्वाग्भाव इति अविरुद्धानुपलब्धिभेदमाह अविरुद्धानुपलब्धिः प्रतिषेधे सप्तधा स्वभावव्यापककार्यकारणपू
र्वोत्तरसहचरानुपलंभभेदादिति उदाहरणमाह नास्त्यत्र भूतले घटोऽनुपलब्धेः अत्र पिशाचपरमाण्वादिभिः व्यभिचारपरिहारा
र्थमुपलब्धिः लक्षणप्राप्तत्वे सतीति विशेषणमुन्नेयं व्यापकानुपलब्धिमाह नास्त्यत्र शिंशपा वृक्षानुपलब्धेः शिंशपा
त्वं हि वृक्षत्वेन व्याप्तं तदभावे तद्व्याप्यशिंशपाया अप्यभावः कार्यानुपलब्धिमाह नभविष्यति मुहूर्तान्ते शकटं कृत्तिको
दयानुपलब्धेः उत्तरचरानुपलब्धिमाह नोदगाद्भरणिर्मुहूर्तात्प्रागत एव तत एव कृत्तिकोदयानुपलब्धेरेवेत्यर्थः सहचरा
नुपलब्धिः प्राक्कालेस्याह नास्त्यत्र समतुलायामुन्नामो नामानुपलब्धेः विरुद्धकार्याद्यनुपलब्धिर्विधौ संभवतीति सा
त्रसाराणां संदृष्टान्तमप्यर्थेति नवैव प्रदर्शयितुमाह विरुद्धानुपलब्धिर्विधौ त्रेधा विरुद्धकार्यकारणस्वभावानुपलब्धि
नास्त्यत्राप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धेः ॥ अप्रतिबद्धसामर्थ्यं हि कार्यं कृत्यनुपहतत्वा...
न्द भावश्च कार्यानुलभादिति । कारणानुपलब्धिमाह ॥ नास्त्यत्र धूमोऽनलेः पूर्वचरानुपलब्धिमाह ॥

णामी शब्दः कृतकत्वात् य एवं स एवं दृष्टो यथा घटः कृतकश्चायं तस्मात्परिणामीति यस्तु न परिणामी स न कृतको दृष्टो
वंध्यास्तनंधयः कृतकश्चायं तस्मात्परिणामीति स्योत्पत्तौ आश्रयोऽस्ति परव्यापारो हि भावः कृतक उच्यते तच्च कृत
कत्वं न कूटस्थानित्यपक्षे नापि क्षणिकपक्षे किंतु परिणामित्वे सत्येवेत्यग्रे वक्ष्यते कार्यहेतुमाह अस्त्यत्र देहिनि बुद्धिर्व्या
हारादेः कारणहेतुमाह अस्त्यत्र छाया छत्रात् अथ पूर्वचरहेतुमाह उदेष्यति शकटं कृत्तिकोदयात् मुहूर्तान्त इति
संबंधः अथोत्तरचरः उदगाद्भरणिः प्राक्तन एव अत्रापि मुहूर्तात् प्रागिति संबंधनीयं तत एव कृत्तिकोदयादित्यर्थः
सहचरलिंगमाह अस्त्यत्र मातुलिंगे रूपं रसात् विरुद्धोपलब्धिमाह विरुद्धतदुपलब्धिः प्रतिषेधे तथेति प्रतिषेध्येसा
ध्ये प्रतिषेध्येन विरुद्धानां संबंधिनस्ते व्याप्यादयः तेषामुपलब्धय इत्यर्थः तथेति षोढेति भावः तत्र साध्यविरुद्धव्या
प्योपलब्धिमाह नास्त्यत्र शीतस्पर्श औष्ण्यादिति शीतस्पर्शप्रतिषेध्येन हि विरुद्धोऽग्निस्तद्व्याप्यमौष्ण्यमिति विरुद्ध
कार्योपलंभमाह नास्त्यत्र शीतस्पर्शो धूमात् अत्रापि प्रतिषेध्यस्य साध्यस्य शीतस्पर्शस्य विरुद्धोऽग्निस्तस्य कार्यं धूम
धूम इति विरुद्धकारणोपलब्धिमाह नास्मिन्शरीरिणि सुखमस्ति हृदयशल्यात् सुखविरुद्धं दुःखं तस्य कारणं हृदय

दात्स्य संभवादनंतरयोरेव पूर्वेतिरक्षणयोर्हेतुफलभावस्य दृष्टत्वात् व्यवहितयोस्तदघटनात् ननु कालव्यवधानेपि कार्य
कारणाभावो दृश्यत एव यथा जाग्रद्बुद्धदशाभाविप्रबोधयोर्मरणारिष्टयोर्वेति तत्परिहारमाह भाव्यतीतयोर्मरणजा
गृद्बोधयोरपि नारिष्टोद्बोधं प्रति हेतुत्वं सुगममेतत् अत्रैवोपपत्तिमाह तद्व्यापाराश्रितं हि तद्भावभावित्वं हिशब्दो यस्मा
दर्थे यस्मात्तस्य कारणस्य भावे कार्यस्य भावित्वं तद्भावभावित्वं तच्च तद्व्यापाराश्रितं तस्मान्न भक्तयोः कार्यकारण
भाव इत्यर्थः अयमर्थः अन्वयव्यतिरेकसमधिगम्यो हि सर्वत्र कार्यकारणभावः तौ च कार्यं प्रति कारणव्यापारव्यपेक्षा
वेवोपपद्येते कुलालस्येव कलशं प्रति न चातिव्यवहितेषु तद्व्यापाराश्रितत्वमिति सहचरस्याप्युक्तहेतुघनं तभावं दर्शयति
सहचारिणोरपि परस्परपरिहारेणावस्थानात्सहोत्पादाच्च हेत्वं तरत्वमितिशेषः अयमभिप्रायः परस्परपरिहारेणोपल
मातादास्याः संभवात्स्वभावाहेतावनंतभाविसहोत्पादाच्च न कार्यकारणेवेति न च समानसमवर्तिनोः कार्यकारणभा
वः सव्येतरगोविषाणवत् कार्यकारणयोः प्रतिनियमाभावप्रसंगाच्च तस्माद्धेतुत्वं तरत्वमेवेति इदानीं व्याप्यहेतुं
क्रमप्राप्तमुदाहरन्नकान्वयव्यतिरेक [illegible] शयवशात् प्रतिपादितप्रतिज्ञाद्यवयवपंचकं दर्शयति परि

तयाविद्यमानस्यापि निश्चेतुमशक्यत्वादिति तदसमीक्षिताभिधानमिति दर्शयितुमाह रसादेकसामग्र्यनुमानेन रूपा
नामिव दृष्टमेव किंचित्कारणं हेतुर्यत्र सामर्थ्याप्रतिबन्धकारणांतरावैकल्ये इति आस्वाद्यमानाद्धि रसात्तज्जनिका
मग्र्यनुमीयते ततोनुमानं भवति प्राक्तनो हि रूपलक्षणः सजातीयं रूपलक्षणांतरलक्षणां कार्यं कुर्वन्नेव विजातीयं रसलक्ष
णं कार्यं करोतीति रूपानुमानमिच्छद्भिरिष्टमेव किंचित्कारणं हेतु प्राक्तनस्य रूपलक्षणस्य सजातीयरूपलक्षणांतराव्यभिचाराद
रससमानकालरूपप्रतिपत्तेरयोगात् नह्यनुकूलमात्रमंत्यक्षणप्राप्तं वा कारणं लिंगमिष्यते येन मणिमंत्रादिना साम
प्रतिबन्धात् कारणांतरवैकल्येन वा कार्य्यव्यभिचारः स्यात् द्वितीयक्षणे कार्यप्रत्यक्षीकरणे नानुमानर्थक्यं वा कार्याभि
भावितया निश्चितस्य विशिष्टकारणस्य छत्रादेः लिंगत्वेनांगीकरणात् यत्र सामर्थ्याप्रतिबन्धकारणांतरावैकल्ये च निश्च
तस्यैव लिंगत्वं नान्यस्येति नोक्तदोषप्रसंगः इदानीं पूर्वोत्तरचरयोः स्वभावकार्यकारणेष्वनंतर्भावाद्भेदांतरत्वमेवेति द
यति न च पूर्वोत्तरचारिणोस्तादात्म्यं तदुत्पत्तिर्वा कालव्यवधाने तदनुपलब्धेरिति तादात्म्यसंबंधे साध्यसाधनयोः स्वभावहेत
वेः तदुत्पत्तिसंबंधे च कार्ये कारणे वांतर्भावो विभाव्यते न च तदुभयसंभवः कालव्यवधाने तदनुपलब्धेः सहभाविनोरेव ता

संबंधः अस्मिन्नुपक्षे कार्यकारणस्योपचारइतिशेषः वचनस्यानुमानत्वेच प्रयोजनं मनुमानावयवाः प्रतिज्ञादयइतिशास्त्रव्यव
हारएव ज्ञानात्मन्यनंशेन व्यवहारस्याशक्यकल्पत्वात् तदेवंसाधनात्साध्यविज्ञानमनुमानमित्यनुमानसामान्यलक्षणं
तदनुमानं द्वेधेत्यादिना तत्प्रकारं च सप्रपंचं च ममिधाय साधनमुक्तलक्षणापेक्षयैकमप्यतिसंक्षेपेण भिद्यमानं द्विविधमित्य
पदर्शयति सहेतुर्द्वेधोपलब्ध्यनुपलब्धिभेदादितिसुगमेतत् तत्रोपलब्धिर्विधौ एवानुपलब्धिः प्रतिषेधसाधिकैवेतिप
रस्यनियमं विघटयन्नुपलब्धेरनुपलब्धेश्चाविशेषेण विधिप्रतिषेधनत्वमाह उपलब्धिर्विधिप्रतिषेधयोरनुपलब्धिश्चेतिगता
र्थमेतत् इदानीमुपलब्धेरपि संक्षेपेण विरुद्धाविरुद्धभेदात् द्वैविध्यमुपदर्शयन्न विरुद्धोपलब्धेर्विधौ साध्ये विस्तरतो भेदमा
ह अविरुद्धोपलब्धिर्विधौ षोढा व्याप्यकार्यकारणपूर्वोत्तरसहचरभेदादिति पूर्वं चोत्तरं च सह चेति द्वंद्वः पूर्वोत्तरसहइत्य
तिभ्यश्चरं इत्यनुकारणनिर्देशः द्वंद्वात्परूयमाणश्चरशब्दः प्रत्येकमभिसंबध्यते नायमर्थः पूर्वचरोत्तरचरसहचरा इति पञ्च
व्याप्यादिभिः सह द्वंद्वः अत्राह सौगतः विधिसाधनं द्विविधमेवस्वभावकार्यभेदात् कारणस्य तु कार्याविनाभावाभावा
दलिंगत्वं नावश्यं कारणानि कार्यवंती वचनात् अप्रतिबद्धसामर्थ्यस्य कार्यं प्रतिगमकत्वमित्यपि नोत्तरं सामर्थ्यस्यातीन्द्रि

नशक्यते इतितत्स्वरूपमपि शास्त्रेभिधातव्यमेवेति तदेवं मतभेदेन द्वित्रिचतुःपंचावयवरूपमनुमानं द्विप्रकारमेवेतिदर्शयन्नाह तदनुमानं द्वेधा तद्द्वैविध्यमेवाह स्वार्थपरार्थभेदादिति स्वपरविप्रतिपत्तिनिरासफलत्वाद्द्विविधमेवेति भावः स्वार्थानुमानभेदं दर्शयन्नाह स्वार्थमुक्तलक्षणं साधनात्साध्यविज्ञानमनुमानमिति प्रागुक्तं लक्षणं यस्य तत्तथोक्तमित्यर्थः द्वितीयमनुमानभेदं दर्शयन्नाह परार्थं तु तदर्थपरामर्शिवचनाज्जातमिति तस्य स्वार्थानुमानस्यार्थः साध्यसाधनलक्षणः तं परामृशतीत्येवं शीलं तदर्थपरामर्शि तच्च तद्वचनं च तस्माज्जातमुत्पन्नं विज्ञानं परार्थानुमानमिति ननु वचनात्मकं परार्थानुमानं प्रसिद्धं तत्कथं तदर्थप्रतिपादकवचनजनितज्ञानस्य परार्थानुमानत्वमभिदधता न संगृहीतमिति न वाच्यं मचेतनस्य साक्षात्प्रमितिहेतुत्वाभावेन निरुपचरितप्रमाणाभावात् मुख्यानुमानहेतुत्वेन तस्योपचरितानुमानव्यपदेशो न बाध्यत एवं चोपचरितं परार्थानुमानत्वं तद्वचनस्याचष्टे आह तद्वचनमपि तद्धेतुत्वादिति उपचारो हि मुख्याभावे सति प्रयोजने निमित्ते च प्रवर्तते तत्र वचनस्य परार्थानुमानत्वे निमित्तं तद्धेतुत्वं तस्य प्रतिपाद्यानुमानस्य हेतुस्तद्धेतुस्तस्य भावस्तत्त्वं तस्मान्निमित्तात् तद्वचनमपि परार्थानुमानं हेतुर्यस्य तत्तद्धेतुस्तस्य भावस्तत्त्वं ततस्तद्वचनमिति तथेति

भेदेन प्रमाणं द्वैविध्यं प्रथमभेदं व्याख्यायेतरं व्याचष्टे परोक्षमितरदिति उक्तप्रतिपक्षमितरशब्दो ब्रूते: ततः प्रत्यक्षादितरदि

ति लभ्यते तत्र परोक्षमिति तस्य च सामग्रीस्वरूपे निरूपयन्नाह प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभे

दमिति प्रत्यक्षादिनिमित्तमित्यादिशब्देन परोक्षमपि गृह्यते तच्च यथावसरं निरूपयिष्यते प्रत्यक्षादिनिमित्तं यस्येति

विग्रहः तत्र स्मृतिं प्रक्रमप्राप्तां दर्शयन्नाह संस्कारोद्बोधनिबंधना तदित्याकारा स्मृतिरिति संस्कारस्योद्बोधः प्राक्

स निबंधनं यस्याः सा तथोक्ता तदित्याकारा तदित्युल्लेखनी एवंभूता स्मृतिर्भवतीति शेषः उदाहरणमाह स देवदत्तो यथे

ति प्रत्यभिज्ञानं प्राप्तकालमाह दर्शनस्मरणकारणकं संकलनं प्रत्यभिज्ञानं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्या

दि अत्र दर्शनस्मरणकारणकत्वात् सादृश्यादिविषयस्यापि प्रत्यभिज्ञानत्वमुक्तं तेषां तु सादृश्यविषयमुपमानाख्यं प्र

मांतरं तेषां वैलक्षण्यादिविषयं प्रमाणांतरमनुषज्येत तथा चोक्तं उपमानं प्रसिद्धार्थसाधर्म्यात्साध्यसाधनं तद्वैधर्म्या

त्प्रमाणं किं स्यात् संज्ञिप्रतिपादनं इदमल्पं महद्दूरमासन्नं प्रांशु नेति वा व्यपेक्षातः समक्षेर्थे विकल्पः साधनांतरमिति

एषां क्रमेणोदाहरणं दर्शयन्नाह यथा स एवायं देवदत्तः गोसदृशो गवयः गोविलक्षणो महिषः इदमस्माद्दूरं वृक्षोयमित्या

तिसमर्थकारणे कार्यस्यावश्यंभावात् अन्यथा क्रमेणापि सा ततो न स्यात् अथ स्वभावादसौ जगन्निर्मिनोति यथाग्निर्द
हति वायुर्वातीति मतं तदपि बालभाषितमेव पूर्वोक्तदोषानिवृत्तेः तथाहि क्रमवर्ति विवर्तजातमपि युगपदुत्पद्येतापेक्षणी
यस्य सहकारिणोऽपि तत्साध्यत्वेन यौगपद्यसंभवात् उदाहरणवैषम्यं च वह्न्यादेः कदाचित्कत्वे हेतुजनितस्य नियतश
क्तिकत्वोपपत्तेरन्यत्र नित्यव्यापिसमर्थैकस्वभावकारणजन्यत्वे तद्देशकालप्रतिनियमस्य कार्ये दुरुपपादात् तदेवं आप्त
सिद्धो वेदानां तत्सुप्रबुद्धो वस्यात्वप्रतिपादनं परमपुरुषस्य महाभूतनिश्वसिताभिधानं च गगनारविंदमकरंदव्या
वर्णनवदनवधेयार्थविषयत्वादुपेक्षामर्हति यच्चागमः प्रमाणं सर्वं वै खल्विदं ब्रह्मेत्यादि ऊर्णनाभ इत्यादि च तत्सर्वमु
क्तविधिना अद्वैतविरोधीति नावकाशं लभते न चापौरुषेय आगमो लोके प्रपंच्यते तस्मात्पुरुषोत्तमोऽपि विचार
णं प्राञ्चति प्रत्यक्षेतरभेदभिन्नममलं मानं द्विधैवोदितं देवैः प्रदीप्तगुणैर्विचार्य विधिसंख्यानतः संग्रहात् मानानामि
ति तद्धि गण्यमभिहितं श्रीरत्ननंद्याख्यैस्तद्व्याख्यानमतो विशुद्धधिषणैर्बोद्धव्यमाहतं सुखसंव्यवहाराभ्यां प्रत्यक्षमुपदर्शि
तं देवोकमुपजीवद्भिः सुरभितापिनम् ॥ इति परीक्षामुखस्य लघुवृत्तौ द्वितीयः समुद्देशः ॥ अथेदानीमुद्दिष्टप्रत्यक्षेतर

दीति आदिशब्देन पयोंबुजदीहंसः स्यात् षट्पादेभ्रमरः स्मृतः सप्तपर्णेर्सुजनत्वज्ञेविज्ञेयोविशामच्छदः पंचवर्णैर्भवेद्भूते
मेचकाख्यंष्टथुस्तनी युवतीभैकश्रृंगोपिगंडकःपरिकीर्तितः शरभोप्यष्टभिःपादेहिंसः वाहसदान्वितः इत्येवमादिश
ब्दश्रवणातया विधानेन मरालादीनवलोक्य तथासत्यापयति यदा तदा तत्संकलनमपिप्रत्यभिज्ञानमुक्तं दर्शनस्मरण
कारणत्वाविशेषात् परेषांतु तत्प्रमाणांतरमेवोपपद्यते उपमानादौ तस्यांतर्भावाभावात् अथाहोवसरप्राप्तस्याह उ
पलंभानुपलंभनिमित्तंव्याप्तिज्ञानमूहः इदमस्मिन् सत्येव भवत्यसति न भवत्येवेति च उपलंभः प्रमाणमात्रमत्र गृ
ह्यते यदि प्रत्यक्षमेवोपलंभशब्देनोच्यते तदा साधनेष्वनुमेयेषु व्याप्तिज्ञानं न स्यात् अथव्याप्तिः सर्वोपसंहारेण प्र
तीयते सा कथमतीन्द्रियस्य साधनस्यातीन्द्रियेण साध्येन भवेदिति नैवं प्रत्यक्षविषये इवानुमानविषयेष्वपि व्याप्ते
रविरोधात् तल्लक्षणस्याप्रत्यक्षात्त्वाभ्युपगमात् उदाहरणमाह यथाग्नावेव धूमस्तदभावेन भवत्येवेति च न इदानीम
नुमानं क्रमायातमिति तल्लक्षणमाह साधनात्साध्यविज्ञानमनुमानमिति साधनस्य लक्षणमाह साध्याविनाभावि
त्वेन निश्चितो हेतुरिति ननु त्रैरूप्यमेव हेतोर्लक्षणं तस्मिन्सत्येव हेतोरसिद्धादिदोषपरिहारोपपत्तेः तथा हि पक्ष

धर्मत्वमसिद्धत्वव्यवच्छेदार्थमभिधीयते सपक्षेसत्वं तु विरुद्धत्वापनोदार्थं विपक्षेचासत्वमेवानैकांतिकव्युदासार्थ
मिति तदुक्तं हेतोस्त्रिष्वपि रूपेषु निर्णयस्तेन वर्णितः असिद्धविपरीतार्थव्यभिचारविपक्षत इति यदप्युक्तं अविनाभाव
नियमनिश्चयादेव दोषत्रयपरिहारोपपत्तेः अविनाभावो ह्यन्यथानुपपन्नत्वं तच्चासिद्धस्य न संभवत्येव अन्यथानु
पपन्नत्वमसिद्धस्य न सिध्यतीत्यभिधानात् नापि विरुद्धस्य तल्लक्षणस्योपपत्तिर्विपरीतेनाश्रिताविनाभाविनी
यथोक्तसाध्याविनाभावनियमलक्षणस्यानुपपत्तेः विरोधात् व्यभिचारिण्यपि न प्रकृतलक्षणावकाशः तत एव ततोन्य
थानुपपत्तिरेव श्रेयसी न त्रिरूपता तस्यां सत्यामपि यथोक्तलक्षणाभावे हेतोर्गमकत्वादर्शनात् तथाहि श्यामस्तत्पु
त्रादितरं तत्पुत्रवदित्यत्र त्रैरूप्यसंभवेपि न गमकत्वमुपलक्ष्यते अथ विपक्षाद्व्यावृत्तिर्नियमवती तत्र न गमकत्वमिति
तदपि मुग्धविलसितमेव तस्या एवाविनाभावरूपत्वात् इतररूपसद्भावेपि तदभावे हेतोः स्वसाध्यसिद्धं प्रतिगमकत्वा
निष्टे[illegible]व प्रधानं लक्षणमसूणमुपलक्षणीयमिति तत्सद्भावे चेतररूपद्वयनिरपेक्षतया गमकत्वोपपत्तेश्च यथासंस
द्वैतवादिनोपि प्रमाणनिष्टानिष्टसाधनदूषणान्यथानुपपत्तेर्न चात्र पक्षधर्मत्वं सपक्षान्वयो वास्ति केवलमविनाभावमा

न्नेरागमकत्वप्रतीतेः यदप्यपरमुक्तं परैः पक्षधर्मताभावेपि काकस्य काल्स्याद्धवलः प्रसादइत्यस्यापिगमकत्वापत्तिरिति त
दप्यनेन निरस्तमन्यथानुपपत्तिकृतत्वेनैव पक्षधर्मस्यापि साधुत्वाभ्युपगमान्न चेह सास्ति ततो ऽविनाभाव एव हेतोः प्रधानं
लक्षणमभ्युपगन्तव्यं तस्मिन्सत्यसति त्रिलक्षणत्वेपि हेतोर्गमकत्वदर्शनादिति नैरूप्यं हेतुलक्षणमव्यापकत्वात् स
र्वे [illegible]क्षणिकत्वे साध्ये सत्त्वादेः साधनस्य सपक्षे सतोपि स्वयं सौगतैर्गमकत्वाभ्युपगमात् एतेन पंचलक्षणत्वमपि यौ
गपरिकल्पितम् न हेतोरूपयति नियतस्याभिहितं वोद्धव्यं पक्षधर्मत्वे सत्यन्वयव्यतिरेकावबाधितविषयत्वमसत्प्रतिपक्ष
त्वं पंच चैतानि लक्षणानि तेषामप्यविनाभावप्रपंचतैव बाधितविषयस्याविनाभावयोगात् न ह्यतिपक्षस्यैवेति साध्या
भावात् विषयत्वेनासम्यग्हेतुत्वाच्च यथोक्तपक्षविषयत्वाभावात् दोषेणैव दुष्टः नात् अतः स्थितं साध्याविनाभावित्वे
न निश्चितो हेतुरिति इदानीमविनाभावभेदं दर्शयन्नाह सहचारिणोः व्याप्यव्यापकयोश्च सहभाव इति सहचारिणो
रूपरसयोर्व्याप्यव्यापकयोश्च वृक्षत्वशिंशपात्वयोरिति सप्तम्या विषयो निर्दिष्टः क्रमभावनियमस्य विषयं दर्शयन्ना
ह पूर्वोत्तरचारिणोः कार्यकारणयोश्च क्रमभावः पूर्वोत्तरचारिणोः कृत्तिकोदयशकटोदययोः कार्यकारणयोश्च धूमधूमध्व

नयोः क्रमभावः नन्वेवंभूतस्याविनाभावस्य नप्रत्यक्षेण ग्रहणं तस्य संन्निहितविशयत्वात् नाप्यनुमानेन अकृता परानु
मानकं नयामि नेरतुराश्रयत्वानवस्थावतारादागमादेरपि भिन्नविशयत्वेन सुभसिद्धत्वान्न ततोपि तत्प्रतिपत्तिरित्योर
कायामाह इष्टमबाधितमसिद्धं साध्यमिति अत्रापरे दूषणमाचक्षते आसन शयन भोजन पान निधुवनादेरपीष्ट
त्वात् तदपि साध्यमनुशाज्यत इति तेप्यतिबालिशाः अप्रस्तुतप्रलापित्वात् अत्र हि साधनविशयत्वेनेप्सितमिष्ट
मुच्यते इदानीं स्वाभिहितसाध्यलक्षणस्य विशेषणानि सफलपन्न सिद्धविशेषणसमर्थयितुमाह संदिग्धवि
पर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यसिद्धपदं तत्र संदिग्धं स्थाणुर्वा पुरुषो वेत्यनवधारणेनोभयकोटिप
रामर्षि संशयाकलितं वस्तु उच्यते विपर्यस्तं तु विपरीतावभासविपर्ययज्ञानविशयभूतं रजतादि अव्युत्पन्नं तु नामजा
ते संख्यादिविशेषापरिज्ञानेणानीतविषयानवध्यवसायग्राह्यमेषां साध्यत्वप्रतिपादनार्थमसिद्धपदोपादान
मित्यर्थः अधुनेष्टाबाधितविशेषणद्वयस्य साफल्यं दर्शयन्नाह अनिष्टाध्यक्षादिबाधितयोः साध्यत्वं माभूदिति
बाधितवचनं अनिष्टो मीमांसकस्यानित्यः शब्दः प्रत्यक्षादिबाधितयोः साध्यत्वं श्राश्रावणत्वादिः आदि

शब्दे नानुमानागमलोकस्ववचनबाधितानां ग्रहणं चाकिंचित्करस्य हेत्वाभासस्य निरूपणावसरे स्वयमेव ग्रन्थकारः प्रपञ्चयिष्यतीत्युपरम्यते तत्रासिद्धपदं प्रतिवाद्यपेक्षयैव द्रष्टव्यं पदं तु वाद्यपेक्षयेति विशेषमुपदर्शयितुमाह नचासिद्धवदिष्टं प्रतिवादिनमिति अयमर्थो नहि सर्वं सर्वापेक्षया विशेषणमपि तु किंचित्कमुद्दिश्य भवतीति असिद्धवदिति व्यतिरेकमुखेनोदाहरणं यथा असिद्धं प्रतिवाद्यपेक्षया न तथेष्टमित्यर्थः कुत एतदित्याह प्रत्यायनाय हीच्छा वक्तुरेव इच्छया खलु विषयीकृतमिष्टमुच्यते प्रत्यायनाय हीच्छा वक्तुरेवेति तत्र साध्यं धर्मः किंवा तद्विशिष्टो धर्मीति दर्शयितुमाह साध्यधर्मः क्वचित्तद्विशिष्टो वा धर्मी सोपस्काराणि वाक्यानि भवंति ततो मर्थो लभ्यते व्याप्तिकालापेक्षया तु साध्यं धर्मः क्वचित्प्रयोगकालापेक्षया तु तद्विशिष्टो धर्मी साध्यः अस्यैव धर्मिणो नामांतरमाह पक्ष इति यावत् ननु धर्मधर्मिसमुदायः पक्ष इति पक्षस्वरूपस्य पुरातनैर्निरूपितत्वाद्धर्मिणस्तद्वचने कथं न राद्धान्तविरोध इति नैवं साध्यधर्माधारतया विशेषः स्तस्य धर्मिणः पक्षत्ववचनेपि दोषानवकाशात् रचनावैचित्र्यमात्रेण तात्पर्यस्यानिराकृतत्वात्सिद्धांताविरोधात् अत्राह सौगतः भवतु नाम धर्मी पक्षव्यपदेशभाक् तथापि सविकल्पबुद्धौ परिवर्तमान एव न वास्तवः सर्व एवा

नुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन बहिः सदसत्त्वमपेक्षत इत्यभिधानादिति तन्निरासार्थमाह प्रसिद्धो
धर्मीति अयमर्थः नेयं विकल्पबुद्धिर्बहिरन्तर्वा नासादितालंबनभावा धर्मिणं व्यवस्थापयति तद्वास्तवत्वे न तदाधार
साध्यसाधनयोरपि वास्तवत्वानुपपत्तेः तद्बुद्धेः पारंपर्येणापि वस्तुव्यवस्थानिबंधनत्वायोगात् ततो विकल्पेनान्येन वा
व्यवस्थापितः पर्वतादिर्विषयभावं भजन्ने धर्मितां प्रतिपद्यत इति स्थितं प्रसिद्धो धर्मीति न त्वसिद्धिश्च क्वचिद्विकल्प
तः क्वचित्प्रमाणतः क्वचिदुभयत इति नैकान्तेन विकल्पादिरूढस्य प्रमाणप्रसिद्धस्य वा धर्मित्वं ननु धर्मिणो विक
ल्पात् प्रतिपत्तौ किं नव मित्याशंकयाह विकल्पसिद्धे तस्मिन्सत्तेतरे साध्ये तस्मिन् धर्मिणि विकल्पसिद्धे सत्ता
व तदपेक्षयेतरा सत्ता च ते द्वे अपि साध्ये सुनिर्णीतासंभवद्बाधकप्रमाणबलेन योग्यानुपलब्धिबलेन चेति शेषः अत्रो
दाहरणमाह अस्ति सर्वज्ञो नास्ति खरविषाणमिति सुगमं ननु धर्मिण्यसिद्धसत्ताके भावो भावोभयधर्मिणामसिद्धविरुद्ध
नैकान्तिकत्वादनुमानविषयत्वायोगात् कथं सत्तेतरयोः साध्यत्वं तदुक्तं असिद्धो भावधर्मश्चेद्व्यभिचार्युभयाश्रितः
विरुद्धो धर्मोऽभावस्य सा सत्ता साध्यते कथमिति यदुक्तं मानसप्रत्यक्षे भावरूपस्यैव धर्मिणः प्रतिपन्नत्वात् कथम्

नचतात्सिद्धौतत्त्वस्यापिप्रतिपन्नत्वात् अर्थमनुमानं तदभ्युपेतमपिवैयात्याद्यदापरेणनप्रतिपद्यतेतदानुमानस्यस
फल्यात् नचमानसज्ञानादगगनकुसुमादेरपिसद्भावसंभावनतोतिप्रसंगः तज्ज्ञानस्यवाधकप्रत्ययव्यपाकृतसत्ताकव
स्तुविषयतयामानसप्रत्यक्षाभासत्वात् कथंतर्हितुरगशृंगादेः धर्मित्वमितिनचोद्यंधर्मिप्रयोगकालेवाधकप्रत्ययानुदया
त् सत्वसंभावनोत्पत्तेः नचसर्वज्ञादौसाधकप्रमाणासत्वेनसत्वंप्रतिसंशीतिः सुनिश्चितासंभवद्बाधकप्रमाणत्वेनसु
खादाविवसत्वनिश्चयात् तत्रसंशयायोगात् इदानींप्रमाणोभयसिद्धेधर्मिणिकिंसाध्यमित्याशंक्याह प्रमाणो
भयसिद्धेतुसाध्यधर्मविशिष्टतासाध्येइतिशब्दः प्राग्द्विवचनांतोप्यर्थवशादेकवचनतयासंबध्यते प्रमाणंचोभयंच
विकल्पद्वयंताभ्यांसिद्धेधर्मिणिसाध्यधर्मविशिष्टतासाध्या अयमर्थः प्रमाणप्रतिपन्नमपिवस्तुविशिष्टधर्माधारतया
विवादपदमारोहतीतिसाध्यतांनातिवर्ततइति एवमुभयसिद्धेपियोज्यं प्रमाणोभयसिद्धंधर्मिद्वयंक्रमेणदर्शयन्नाह अ
ग्निमानयंदेशः परिणामीशब्दइतियथेति देशोहिप्रत्यक्षेणप्रसिद्धः शब्दस्तूभयसिद्धः नहिप्रत्यक्षेणार्वाग्दर्शिभिरनिय
तदिग्देशकालावच्छिन्नाः सर्वेशब्दाः निश्चेतुंपार्यंते सर्वदर्शिनस्तुतन्निश्चयेपितंप्रत्यनुमानानर्थक्यात् प्रयोगकालापेक्ष
याधर्मविशिष्टधर्मिणः साध्यत्वमभिधायव्याप्तिकालापेक्षयासाध्यनियमंदर्शयन्नाह व्याप्तौतुसाध्यंधर्मएवेतिसुगमं

धर्मिणोपि साध्यत्वे को दोष इत्यत्राह अन्यथा तदघटनादिति उक्तविपर्यये अन्यथाशब्दः धर्मिणः साध्यत्वे तदघटनात् व्या
घटनादिति हेतुः नहि धूमदर्शनात् सर्वत्र पर्वतो ग्निमानिति व्याप्तिः शक्या कर्तुं प्रमाणविरोधात् नन्वनुमाने पक्षप्रयोग
संभवात् प्रसिद्धो धर्मीत्यादिवचनमयुक्तं तस्य सामर्थ्यलब्धत्वात् तथापि तद्वचने पुनरुक्तप्रसंगात् अर्थादापन्नस्या
पि पुनर्वचनं पुनरुक्तमित्याभिधानादिति सौगतः तत्राह साध्यधर्माधारसंदेहापनोदाय गम्यमानस्यापि पक्षस्य वचनं सा
धर्मस्तस्याधारस्तत्र संदेहो महानसादिः पर्वतादिर्वेति तस्यापनोदो व्यवच्छेदः स्तदर्थं गम्यमानस्यापि साध्यसाध
व्याप्यव्यापकभावप्रदर्शनान्यथानुपपत्तेस्तदाधारस्य गम्यमानस्यापि पक्षस्य वचनं प्रयोगः अत्रोदाहरणमाह सा
णि साधनधर्मावबोधनाय पक्षधर्मोपसंहारवत् ॥ साध्येन विशिष्टो धर्मी पर्वतादिस्तत्र साधनधर्मावबोधनाय पक्षध
पसंहारवत् पक्षधर्मस्य हेतोरुपसंहार उपनयः स्तद्वत् इति अयमर्थः साध्यव्याप्तसाधनप्रदर्शनेन तदाधारावगतावपि नि
तधर्मिसंबंधिताप्रदर्शनार्थं यथोपनयस्तथा साध्यस्य विशिष्टधर्मिसंबंधितावबोधनाय पक्षवचनमपीति किंच हेतुप्रयोगे
र्थनावश्यं वक्तव्यमसमर्थितस्याहेतुत्वायोगात् तथाच समर्थनोपन्यासादेव हेतोः सामर्थ्यसिद्धत्वात् हेतुप्रयोगोनर्थ
स्यात् हेतुप्रयोगाभावे कस्य समर्थनमिति चेत् पक्षः प्रयोगाभावे क्व हेतुवर्तनामिति समानमेतत् तस्मात्कार्यस्वभावानुपलंभ

कोवा

भेदेन पक्षधर्मत्वादिति भेदेन च त्रियोहमुक्त्वा समर्थयमानेन पक्षप्रयोगोप्यभ्युपगंतव्य एवेति अमुमेवार्थमाह त्रिधा

हेतुमुक्त्वा समर्थयमानो न पक्षयतीति को वा वादी प्रतिवादी चेत्यर्थः किलार्थे वा शब्दः युक्त्या पक्षप्रयोगस्यावश्यं भावे

कः किल न पक्षयति पक्षं न करोत्यपि तु करोत्येव किं कुर्वन् समर्थयमानः किं कृत्वा हेतुमुक्त्वा न पुनरमुक्त्वेत्यर्थः समर्थ

नं हि हेतोरसिद्धत्वादिदोषपरिहारेण स्वसाध्यसाधनसामर्थ्यप्ररूपणं वचनं तच्च हेतुप्रयोगोत्तरकालं परेणांगीकृत

मित्युक्तेति वचनं ननु भवतु पक्षः प्रयोगस्तथापि पक्षहेतुदृष्टांतभेदेन त्र्यवयवमनुमानमिति सांख्यः प्रतिज्ञा

हेतूदाहरणोपनयभेदेन चतुरवयवमिति मीमांसकाः प्रतिज्ञाहेतूदाहरणोपनयनिगमनभेदात् पंचावयवमिति यो

गः तन्मतमपाकुर्वन् स्वमतसिद्धमवयवद्वयमेवोपदर्शयन्नाह एतद्वयमेवानुमानांगं नोदाहरणमिति एतयोः

पक्षहेत्वोः द्वयमेव नातिरिक्तमित्यर्थः एवकारेणैवोदाहरणादिव्यवच्छेदसिद्धेपि परमतनिरासार्थं पुनर्नोदाहरण

मित्युक्तं तद्धि किं साध्यप्रतिपत्त्यर्थमुत स्विद्धेतोरविनाभावनियमार्थमाहोस्वित् व्याप्तिस्मरणार्थमिति विकल्प्य क्रमे र्थ

णाद्दूषयन्नाह नहि तत्साध्यप्रतिपत्तौ यथोक्तस्य साध्याविनाभावित्वेन निश्चितस्य हेतोर्व्यापारादिति द्वितीयविकल्पं

तदूषयन् साध्यप्राप्ते परोरंग कारणं इति सर्वेषाः तत्र साध्यप्रतिपत्तौ पक्षो न कस्य सा [illegible] गमाविति

प्रमाणलक्षणा

क्रोशेयत्वाह तदविनाभावनिश्चयार्थे वा विपक्षे बाधकादेव तत् सिद्धेः तदिति वर्तते नेति च तेनायमित्यर्थः तदुदाहरण साध्येनाविनाभावनिश्चयार्थे वा न भवतीति विपक्षे बाधकादेव तत्सिद्धेरविनाभावनिश्चयसिद्धेः किंच व्याप्ति रूपं निदर्शनं तत्कथं सकलेन व्याप्तिं गमयेत् व्यक्त्यंतरेषु व्याप्त्यर्थं पुनरुदाहरणांतरं मृग्यं तस्यापि व्यक्तिरूपत्वे न व्याप्तेरवधारयितुमशक्यत्वात् अपरापरदृष्टांतरापेक्षयामनवस्था स्यात् एतदेवाह व्यक्तिरूपं च निदर्शनं सामान्येन तु व्याप्तिस्तत्रापि तद्विप्रतिपत्तावनवस्थानं स्याद्दृष्टांतांतरापेक्षणात् तत्रापि उदाहरणेपि तद्विप्रतिपत्तौ सामान्यव्याप्तिविप्रतिपत्तावित्यर्थः शेषं व्याख्यानं तृतीयविकल्पे दूषणमाह नापि व्याप्तिस्मरणार्थं तथापि विधिहेतुप्रयोगादेव तत्स्मृतेः गृहीतसंबंधस्य हेतुप्रदर्शनेनैव व्याप्तिसिद्धिरगृहीतसंबंधस्य दृष्टांतशतेनापि न तत्स्मरणमननुभूतविषयत्वात् स्मरणस्येति भावः तदेवमुदाहरणप्रयोगस्य साध्यार्थं प्रति नोपयोगित्वं प्रत्युत संशयहेतुत्वमेवेति दर्शयति तत्परमभिधीयमानं साध्यधर्मिणि साध्यसाधने ... ने संदेहयति तदुदाहरणं परं केवलमभिधीयमानं साध्यधर्मिणि साध्यसाधने संदेहयति संदेहवती करोति दृष्टांतः धर्मिणि साध्यव्याप्तिसाधनोपदर्शने

पिसाध्यधर्मिणीतन्निर्णयस्यकर्तुमशक्यत्वात् इतिशेषः अनुमेवार्थं व्यतिरेकमुखेनसमर्थयमानः प्राह कुतोन्य
थोपनयनिगमने अन्यथासंशयहेतुत्वाभावेकस्माद्धेतोरुपनयनिगमनेप्रयुज्येते अपरः प्राह उपनयनिगम
नयोरप्यनुमानांगत्वमेवतदप्रयोगेनिस्वरूपसाध्यसंवित्तेरयोगादिति तन्निषेधार्थमाह नचैतेतदंगेसाध्यधर्मि
णिहेतुसाध्ययोर्वचनादेवासंशयात् ॥ उपनयनिगमनेअपिवक्ष्यमाणलक्षणेनस्यानुमानस्यांगेनभवतः साध्यध
र्मिणिहेतुसाध्ययोर्वचनादेवेत्यवकारेणदृष्टांतादिकमंतरेणेत्यर्थः किंचाविधायापिदृष्टांतादिकंसमर्थनमवश्यं
वक्तव्यमसमर्थितस्याहेतुत्वादितितदेववरंहेतुरूपमनुमानावयवोवास्तुसाध्यसिद्धौतस्यैवोपयोगान्नोदाहरणा
दिकमेतदेवाह समर्थनंवावरं हेतुरूपमनुमानावयवोवास्तुसाध्येतदुपयोगादिति प्रथमोवाशब्द एवकारार्थेद्वितीयो
यस्तु पक्षांतरसूचनेशेषंसुगमं ननुदृष्टांतादिकमंतरेणमंदधियामवबोधयितुमशक्यत्वात् कथंपक्षहेतुप्रयोगमा
त्रेणतेषांसाध्यप्रतिपत्तिरितितत्राह बालव्युत्पत्त्यर्थंतत्त्रयोपगमेशास्त्रएवासौनवादेऽनुपयोगादिति बालानाम
ल्पज्ञानांव्युत्पत्त्यर्थंतेषामुदाहरणादीनांत्रयोपगमेशास्त्रएवासौतत्रयोपगमोनवादेनहिवादकालेशिष्याव्युत्पा

ध्याः व्युत्पन्नानामेव तत्राधिकारादिति बालव्युत्पत्त्यर्थं तत्रयोपगम इत्यादिनाशास्त्रेऽभ्युपगतमेवोदाहरणादि
त्रयमुपदर्शयति दृष्टांतो द्वेधा अन्वयव्यतिरेकभेदादिति दृष्टावंतौ साध्यसाधनलक्षणौ धर्मावन्वयमुखेन
तिरेकद्वारेण वा यत्र स दृष्टांत इत्यन्वर्थसंज्ञाकरणात् स द्विधैवोपपद्यते तत्रान्वयदृष्टांतं दर्शयन्नाह साध्य
व्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टांतः साध्येन व्याप्तं नियतं हेतुः यत्र प्रदर्श्यते व्याप्तिपूर्वकतयेति भावः
तोयभेदमुपदर्शयति साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टांतः असत्यसद्भावो व्यतिरेकः
नो दृष्टांतो व्यतिरेकदृष्टांतः साध्याभावे साधनस्याभाव एवेति सावधारणं द्रष्टव्यं क्रमप्राप्तमुपनयस्वरूपनिरूप
ति हेतोरुपसंहार उपनयः। पक्ष इत्याद्याहारः तेनायमर्थः हेतोः पक्षधर्मतोपसंहार उपनय इति निगमनस्वरूपमुपदर्श ५
यति प्रतिज्ञायास्तु निगमनमिति उपसंहार इति वर्तते प्रतिज्ञाया उपसंहारः साध्यधर्मविशिष्टत्वेन प्रदर्शनं नि
मित्यर्थः ननु शास्त्रे दृष्टांतादयो वक्तव्या एवेति नियमानभ्युपगमात् कथं तत्र हि मिह सूरिभिः प्रपंचितमिति न चोद्यं
यमनभ्युपगमेऽपि प्रतिपाद्यानुरोधेन जिनमतानुसारिभिः प्रयोगपरिपाट्याः प्रतिपन्नत्वात् साचाज्ञाततत्त्वसंबंधे कर्तु

वा प्रस्तुतसाधकत्वमेव न वाधकत्वमित्यलमतिप्रसंगेन तथा सौगतस्य प्रमाणसंख्याविरोधिविध्वस्तबाधं तर्क

स्यमुपयैकृत एव नचैतत्प्रत्यक्षेण भवति साध्यसाधनयोर्व्याप्यव्यापकभावस्य साकल्येन प्रत्यक्षा विप्रत्यक्षा विषयत्वा

त् नहि तदखिलोव्यापारान् कर्तुं शक्नोमि अविचारकत्वात् संनिहितविशयत्वाच्च नाप्यनुमाने तस्यापि देशादिवि

शयविशिष्टत्वेन व्याप्त्यविशयत्वात् तद्विषयत्वे वा प्रकृतानुमानांतरविकल्पद्वयानतिक्रमात् तत्र प्रकृतानुमानेन

व्याप्तिप्रतिपत्तावितरेतराश्रयत्वप्रसंगः व्याप्तौ हि प्रतिपन्नायामनुमाननिर्विकल्पकत्वात्प्रमासाद्यति तदात्म

लाभे च व्याप्तिप्रतिपत्तिरिति अनुमानांतरेणाविनाभावप्रतिपत्तावनवस्था चेत् परपक्षचूर्णं च मीति नानुमानगम्या

व्याप्तिः नापि संख्यादिपरिकल्पितैरागमोपमानार्थापत्त्यभावैः साकल्येनाविनाभावावगतिः तेषां समयसंगृहीत

सादृश्यान्यथाभूताभावविशयत्वेन व्याप्त्यविशयत्वात् परैस्तथानभ्युपगमाच्च अन्यप्रत्यक्षपृष्ठभावविकल्पा

त् साकल्येन साध्यसाधनभावप्रतिपत्तेर्न प्रमाणांतरमर्थं मृग मित्यपरः सोपि न युक्तवादी विकल्पस्य ध्यक्षगृहीतवि

विशयस्यैवात ध्रुवस्यापकत्वमाधेपक्षे दर्शनस्यैव तदनंतरभाविनिर्णयस्यापि नियतविशयत्वेन व्याप्त्यगोच

रत्वात् द्वितीयपक्षेपि विकल्पद्वयमुपैर्षैक तएव तद्विकल्पज्ञानं प्रमाणमन्यथावेति प्रथमपक्षे प्रमाणांतरम्
मंतव्यं प्रमाणद्वयेऽन्तर्भावात् उत्तरपक्षेतु नततोनुमानव्यवस्था नहिव्याप्तिज्ञानस्याप्रामाण्ये तत्पूर्व
मनुमानं प्रमाणमास्कंदति संदिग्धादिलिंगादप्युत्पाद्यमानस्य प्रामाण्यप्रसंगात् ततो व्याप्तिज्ञानं सविक
मपिसंवादकंच प्रमाणद्वयादन्यदभ्युपगम्यमिति नसौगताभिमतप्रमाणसंख्यानियमः एतेनानुपलं
त्कारणाव्यापकानुपलंभाच्च कार्यकारणव्यापकभावसंवित्तिरिति वदन्नपि प्रयुक्तः अनुपलंभस्यप्रत्यक्षवि
शेषत्वेन कारणाद्यनुपलंभस्यच लिंगत्वेन तज्जनितस्यानुमानत्वात् प्रत्यक्षानुमानाभ्यां व्याप्तिग्रहणपक्षोपक्षि
प्तानुसंगात् एतेनप्रत्यक्षफलेनोहापोहविकल्पज्ञानेन व्याप्तिप्रतिरित्यप्ययास्तं प्रत्यक्षफलस्यापि प्रत्य
क्षानुमानयोरन्यतरत्वे व्याप्तेरविषयीकारणात् तदन्यत्वेच प्रमाणांतरत्वमनिवार्यमिति अथव्याप्तिविक
ल्पत्वान्नप्रामाण्यमितिनयुक्तं फलस्यानुमानलक्षणफलहेतुतयाप्रमाणत्वाविरोधित्वात् यथासंन्निकर्षफ
लस्यापि विशेषणज्ञानस्य विशेष्यज्ञानलक्षणफलापेक्षया प्रमाणत्वमिति नैयोशिकाभ्युपगतोहापोहवि

रूपादिगोचरचारित्वेन चरितार्थत्वाच्च नाप्यदृष्टसहकारिसव्यपेक्षमिंद्रियमेकत्वविशयमुक्तदोषादेव किंचादृष्टसंस्का
दिसव्यपेक्षादेवात्मनः स्तद्विज्ञानमिति किंन कल्प्यंते दृश्यंते हि स्वप्नसारस्वतचांडालिकादिविद्यासंस्कृतादात्मनो वि
शिष्टज्ञानोत्पत्तिरिति न चांजनादिसंस्कृतमपि च क्षुरणातिशयमपुलक्षत इति चेत् न तस्य स्वार्थानतिक्रमेणैवातिश
योपलब्धेन विशयांतरग्रहणलक्षणातिशयस्य यथा चोक्तं यत्राप्यतिशयो दृष्टः स स्वार्थानतिलंघनात् दूरसूक्ष्मा
दिदृष्टौ स्याद्योगोजैनं प्राक्तनरूपश्रोत्रवृत्तितः इति नन्वयं वार्त्तिकस्य सर्वज्ञप्रतिषेधपरत्वाद्विशमो दृष्टांत इति
चेत् न इन्द्रियाणां विशयांतरप्रवृत्तावतिशयाभावमात्रे सादृश्यात् दृष्टांतत्वोपपत्तेः न हि सर्वो दृष्टांतधर्मो दार्ष्टांति
के भवितुमर्हत्यन्यथा दृष्टांत एव न स्यादिति ततः स्थितं प्रत्यक्षानुमानाभ्यामर्थांतरप्रत्यभिज्ञानं सामग्रीस्वरूपभेदा
विति न चैतदप्रमाणं ततोर्थं परिछिद्य प्रवर्तमानस्यार्थक्रियायामविसंवादात् प्रत्यक्षवदिति नचैकत्वापलापे बंध
मोक्षादिव्यवस्था अनुमानव्यवस्था वा एकत्वाभावे बहुस्येव मोक्षादेगृहीतसंबंधस्येव लिंगस्यादर्शनादनुमानस्य
च व्यवस्थायोगादिति नचास्य विशये बाधप्रमाणसद्भावादप्रामाण्यं न हि विषये प्रत्यक्षस्य लैंगिकस्य चाप्रवृत्तेः प्रवृत्तौ

त्यक्षमभिज्ञानमपि सौगतीयप्रमाणसंख्या विघटयत्येव तथापि प्रत्यक्षानुमानयोरंतर्भावात् ननु तदिति स्म
रणं मिदमिति प्रत्यक्षमिति ज्ञानद्वयमेव नताभ्यां विभिन्नं प्रत्यभिज्ञानाख्यंवयं प्रतिपद्यमाने प्रमाणांतरमुपल
भामहे ततः कथं तेन प्रमाणसंख्या विघटनमिति तदप्यघटितमेव यतः स्मरणप्रत्यक्षाभ्यां प्रत्यभिज्ञानविशय
स्यार्थस्यगृहीतमशक्यत्वात् नापि प्रत्यक्षेणातस्य वर्तमानविवर्तवर्तित्वात् यदप्युक्तं ताभ्यां भिन्नमन्यद्ज्ञानं
नास्तीति तदप्ययुक्तमभेदपरामर्शरूपतया भिन्नस्यैवावभासनात् नच तयोरन्यतरस्यवाभेदपरामर्शात्मक
त्वमस्ति विभिन्नविषयत्वात् नचैतरस्यवाभेदपरामर्शात्मकत्वमस्ति विभिन्नविशयत्वात् नचैतत्प्रत्यक्षेतभव
त्यनुमाने वा तयोः पुरोवस्थितार्थविशयत्वेनानुभूतलिंगसंभाविषयत्वेनच॥ पूर्वापरविकारव्याप्येकत्वाविषयत्वात् न
पि स्मरणे नेनापि तदेकत्वस्याविशयीकरणात् अथ संस्कारस्मरणसहकृतमिन्द्रियमेव प्रत्यभिज्ञानं जनयतीन्द्रिय
जं चाध्यक्षमेवेति न प्रमाणांतरमित्यपरः सोप्यतिवालिश एव स्वविशयाभिमुख्येन प्रवर्तमानस्येन्द्रियस्य सहकारिशत
समवधानेपि विशयांतरप्रवृत्तिलक्षणातिशयायोगात् विशयांतरं चातीतसांप्रतिकावस्थाव्याप्येकद्रव्यमिंद्रियाणां

विना

पूर्वापरविवर्तिवर्त्येकद्रव्यं हि प्रत्यभिज्ञान विषयः। नच तत्स्म
रणेनोपलक्ष्यते तस्याननुभूत विषयत्वात् ४

तःप्रतिभातत्वान्न ततोनुमानं नह्यहि भावे नैरवहेतोर्व्यभिचारः अप्रतिभासमानत्वेपि तद्व्यवस्थाभावात् ततो नानुमानमिमि
अथानाद्यविद्याविजृंभितत्वात्सर्वमितद्संबंधनित्यनन्यतमो विलसितं अविद्यायामप्युक्तदोषानुषंगात् सकलविक
ल्पविकलत्वात्तस्या नैव दोष इत्यप्यतिमुग्धभाषितम् केनापि रूपेण तस्याः प्रतिभासाभावे तत्स्वरूपानवधारणात्
अपरमन्यत्र विस्तरेण देवागमालंकारे तमितिनेमतन्यते यच्च परब्रह्म विवर्तत्वमखिलभेदानामित्युक्तं तत्राप्येकरूपे
णान्वितत्वं हेतुरन्वेत्रन्वीयमानद्वया विनाभावित्वेन पुरुषाद्वैतं प्रतिबध्नातीति स्वेष्टविघातकारित्वाद्विरुद्धः अन्वित
त्वमेकहेतुके घटादावनेकहेतुके स्तंभकुंभांभोरुहादावप्युपलभ्यत इत्यनैकांतिकः अक्रमस्य चेदं कार्यमसौ विदधाति
अन्येन प्रयुक्तत्वात् कृपावशात् क्रीडावशात् स्वभावाद्वा अन्येन प्रयुक्तत्वे स्वातंत्र्यहानिर्द्वैतप्रसंगश्च कृपावशादिति मान
रं कृपायां दुःखिनामकरणाप्रसंगात् परोपकरणनिष्ठत्वात्तस्याः सृष्टेः प्रागनुकंपाविषयप्राणिनामभावाच्च न
सा युज्यते कृपापरस्य प्रलयविधानायोगाच्च अदृष्टवशात्तद्विधाने स्वातंत्र्यहानिः कृपापरस्य पीडाकारणादृष्टव्यपेक्षा
योगाच्च क्रीडावशात् प्रवृत्तौ न प्रभुत्वं क्रीडोपायव्यपेक्षणाद्बालकवत् क्रीडोपायस्य तत्साध्यस्य च युगपदुत्पत्तिप्रसंगश्च स

गमोप्यस्ति उरगेनाभद्रवांशूनां चन्द्रकांतद्रवांभसां प्ररोहणमिव ह्यस्यः संहेतुः सर्वजन्मनामिति तदेतन्मदिरा
गद्गदतोदितमेव मदनकोद्रवाद्युपयोगजनितव्यामोहमुग्धविलसितमिव निखिलमवभासते विचारासहत्व
तथाहि यत्प्रत्यक्षस्य सताविषयत्वमभिहितम् तत्र किं निर्विशेषसत्ताविषयत्वं सविशेषसत्तावबोधकत्वं वानन्तता
रस्त्यः पक्षः सत्तायाः सामान्यरूपत्वाद्विशेषनिरपेक्षतयानवभासनात् शाबलेयादिविशेषानवभासने गोत्वा
वभासवत् निर्विशेषं हि सामान्यं भवेच्छशविषाणवदित्यभिधानात् सामान्यरूपत्वं च सत्तायाः तत्सदित्यन्वय
विषयत्वेन सुप्रसिद्धमेव अथ पाश्चात्यः पक्षः कक्षीक्रियते तदा न परमपुरुषसिद्धिः परस्परव्यावृत्ताकारविशेषा
मध्यक्षतोवभासनात् यदपि साधनमभ्यधायि प्रतिभासमानत्वं तदपि न साधु विचारासहत्वात् तथाहि प्रतिभा
नत्वं स्वतः परतो वा न तावत्स्वतोसिद्धत्वात् परतश्चेद्विरुद्धं परतः प्रतिभासमानत्वं हि परं विना नोपपद्यते प्रतिभा
मात्रमपि न सिद्धिमधिवसति तस्य तद्विशेषनांतरीयकत्वात् तद्विशेषाभ्युपगमे द्वैतप्रसक्तिः किंच धर्मिहेतुदृष्टांता
मानोपायभूताः प्रतिभासंते न वेति प्रथमपक्षे प्रतिभासान्तःप्रविष्टाः प्रतिभासबहिर्भूता वा यद्याद्यः पक्षस्तदा साध्य

नापि ब्रह्मणः ॥ तस्यापि सद्भावावेदकप्रमाणाभावात् न तावत्प्रत्यक्षं तदावेदकम् अविप्रतिप्रसंगात् नचानुमानमवि
नाभावि लिंगाभावात् ननु प्रत्यक्षं तद्ग्राहकमस्त्येवाक्षविस्फालनानंतरं निर्विकल्पकस्य सन्मात्रविधिविषयतयोत्प
त्तेः सत्तायाश्च परब्रह्मरूपत्वात् तथा चोक्तं अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकं बालमूकादिविज्ञानसदृशं
शुद्धवस्तुजं नच विधिवत् परस्परव्यावृत्तिरप्यध्यक्षतः प्रतीयते इति द्वैतसिद्धिः तस्य निषेधाविषयत्वात् तथा चोक्तं
आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः नैकत्वे आगमस्तेन प्रत्यक्षेण न बाध्यते अनुमानादपि तत्सद्भावो विभाव्य
त एव तथा हि ग्रामारामादयः पदार्थाः प्रतिभासांतः प्रविष्टाः प्रतिभासमानत्वात् यत्प्रतिभासते तत्प्रतिभासांतः
प्रविष्टं यथा प्रतिभासस्वरूपं प्रतिभासंते च विवादापन्ना इति तदागमनामपि पुरुष एवेदं यद्भूतं यच्च भाव्यमिति ब
हुलमुपलंभात् सर्वं वै खल्विदं ब्रह्म नेह नानास्ति किंचन ॥ आरामं तस्य पश्यंति न तं पश्यति कश्चनेति श्रुतेश्च ननु प
ब्रह्मण एव परमार्थसत्त्वे कथं घटादिभेदोवभासते इति न चोद्यं सर्वस्यापि तद्विवर्ततयावभासनात् न चाशेषभेदस्य त
द्विवर्तत्वमसिद्धं प्रमाणप्रसिद्धत्वात् तथा हि विवादाध्यासितं विश्वमेककारणपूर्वकमेकरूपान्वितं च निखिलं वस्तु वि

नुविधाइत्वंचकारणमात्रापेक्षयायदीष्यंते तदाविरुद्धं साधनं कारणविशेषापेक्षयाचेदितरेतराश्रयत्वं सिद्धे
हि कारणविशेषेबुद्धिमती तदपेक्षया कारणव्यापारानुविधाइत्वंकार्यत्वं ततःस्तद्विशेषसिद्धिरिति संन्निवेशविशि
ष्टत्वमप्येतेनोपादानत्वं चोक्तदोषदुष्टत्वान्नप्रथक्चिंत्यते स्वरूपभागासिद्धत्वादस्तत्रापिसुलभत्वात् विरुद्धाश्चामीहेतवो
दृष्टांतानुग्रहेणसशरीरासर्वज्ञपूर्वकत्वसाधनात् नधूमात्पावकानुमानेप्ययंदोषः तत्रतार्णपार्णादिविशेषाधारणा
निमात्रव्याप्तधूमस्यदर्शनात् नैवमात्रसर्वज्ञाकर्तृविशेषाधिकरणतत्सामान्येनकार्यत्वस्यव्याप्तिःसर्वज्ञस्यकर्तुरे
तोनुमानात्प्रागसिद्धत्वात् व्यभिचारिणश्चामीहेतवःबुद्धिमत्कारणमंतरेणापिविद्युदादीनाप्रादुर्भावसंभवात् सु
प्तावस्थायामबुद्धिपूर्वकस्यापिकार्यस्यदर्शनात् तदवस्यतत्रापिभगीरथ्यंकारणमिस्यतिमुग्धविलसितं तद्व्याप
रस्याप्यसंभवादशरीरत्वाज्ज्ञानमात्रेणकार्यकारित्वाघटनादिच्छाप्रयत्नयोः शरीराभावेसंभावात्तुदर्शभवश्च
पुरातनैर्विस्तरेणाभिहितआप्तपरीक्षादौअतःपुनरत्रनोच्यते यच्चमहेश्वरस्यक्लेशादिभिरपराभृष्टत्वंनिरतिशयत्व
मैश्वर्याधिपतत्वं तत्सर्वमपिगगनाब्जसौरभ्यावर्णनमिवनिर्विशयत्वादुपेक्षामर्हति ततोन्महेश्वरस्याशेषत्वं तत्त

अथप्रथमपक्षेअवयवसामान्येनानेकांतात् द्वितीयपक्षेसाध्याविशिष्टत्वात् अथसंन्निवेशएवसावयवत्वंतच्चघटादि
वत् पृथिव्यादावुपलभ्यतइत्यभूत्वाभावित्वमभिधीयते तदप्यपेशलं संन्निवेशस्यापिविचारासहत्वात् सह्यवयव
संबंधोभवेद्रचनाविशेषोवा यद्यवयवसंबंधस्तदागगनादिनानेकांतः सकलमूर्तिमद्द्रव्यसंबंधस्याप्युपचरितत्वान्
वेगतत्वमप्युपचरितंस्यात् श्रोत्रस्यार्थकारित्वंनचस्यात् उपचरितप्रदेशरूपत्वात् धर्मादिनासंस्कारात्ततःसंस
युक्तं उपचरितस्यासद्रूपस्यतेनोपकारायोगात् खरविषाणस्येवततोनकिंचिदेतत् अथरचनाविशेषः तदापरम
निभागासिद्धत्वं तदवस्थमेवेति नाभूत्वाभावित्वंविचारंसहते नाप्यक्रियादर्शिनोपिकृतबुद्धिउत्पादकत्वं तद्धिकृत
समयस्यवाभवेत् कृतसमयस्यचेत् गगनादेरपिबुद्धिमद्धेतुकत्वंस्यात् तत्रापिखननोत्सेचनात् कृतमति गृहीतसंके
स्य कृतबुद्धिसंभावात् सामिथ्येति चेत् वदीयापिकिंनस्यात् बाधासद्भावस्य प्रतिप्रमाणाविरोधस्यचान्यत्रापिक
र्तुरग्रहणात् क्षित्यादिकं बुद्धिमद्धेतुकत्वं नभवति असमदाद्यनवग्राह्यपरिमाणाधारत्वात् गगनादितिप्रमाणस्यस
धारणत्वात् तन्नकृतसमयस्यकृतबुद्ध्युत्पादकत्वंनाप्यकृतसमयस्यासिद्धत्वात् अविप्रतिसंगाच्च कारणव्यापारा

भूतदुपादानमित्यपि वा तु वस्तूत्पादपेक्षयाऽभिव्यक्तेरघटनात् वस्त्वपेक्षयाभिव्यक्तौ कारणसंपातात्प्रागपि कार्यवस्तु
सद्भावप्रसंगात् उत्पादस्याप्यभिव्यक्तिरसंभाव्या स्वकारणसत्तासंबंधलक्षणस्योत्पादकस्यापि कारणव्यापारात्
प्राक् सद्भावे वस्तुसद्भावप्रसंगात् नद्युक्षणत्वादूस्तुसत्त्वस्य प्राक् सत एव हि केनचित्तिरोहितस्याभिव्यंजकेनाभि
व्यक्तिरस्तमस्ति रोहितस्य घटस्येव प्रतिपादितेति तन्नाभिव्यक्त्यर्थं कारणोपादानं युक्तं तन्न स्वकारणसत्तासंबंधः
कार्यत्वं नाप्यभूत्वाभावित्वं तस्यापि विचारासहत्वात् अभूत्वाभावित्वं हि भिन्नकालक्रियाद्वयाधिकरणभूते कर्तरि सि
द्धमसाध्यं स्तेकांतपदविशेषितवाक्यार्थत्वात् भुक्त्वा व्रजति इत्यादिवाक्यार्थवत् न चात्र भावनाभवनयोराधारभूतस्य
कर्तुरनुभवोस्ति अभवनाधारस्याविद्यमानत्वेन भावनाधारस्य च विद्यमानतया भावाभावयोरेकाश्रयविरोधात् अ
विरोधे च तयोः पर्यायमात्रेणैव भेदो न वास्तव इति अस्तु वा यथा कथंचिदभूत्वाभावित्वं तथापि तत्वादीसर्वेशं न्युपगमा
द्वा सिद्धं न हि महीधराकूपारारामादयः प्रागभूत्वाभवंतोऽभ्युपगम्यंते परैस्तेषां तैः सर्वदावस्थानाभ्युपगमात् अथ
सावयवत्वेन तेषामपि सादित्वं प्रसाध्यते तदप्यपरीक्षितलक्षितं अवयवद्भिरवयवैरारभ्यत्वेन च सावयवत्वानुपपत्तेः

समुत्पन्नानां भवेदुत्पद्यमानानां सत्तासमवायो न तावदसतां खरविषाणादेरपि तत्प्रसंगात् सतां चेत् सत्तासमवायात् स्व
तो वा न तावत्सत्तासमवायादनवस्थाप्रसंगात् प्रागुक्तविकल्पद्वयानतिवृत्तेः स्वतः सतां तु सत्तासमवायानर्थक्ये ऽथोत्प
द्यमानानां सत्तासंबंधः नित्यसंबंधयोरेककालत्वाभ्युपगमादिति मतं तदा सत्तासंबंध उत्पादाद्भिन्नः इति यदि भिन्नस्तदो
त्पत्तेरसत्त्वाविशेषवद्उत्पद्यमानावस्थाः किंकृतो भेदः अथोत्पत्तिसमाक्रांतवस्तुसत्त्वेनोत्पत्तिरपि तथा व्यपदिश्यत इति मतं तद
प्यतिजाड्यविलसितमेवोत्पत्तिसत्त्वं प्रति सत्त्वं प्रति विवादे वस्तुसत्त्वस्यातिदुर्घटत्वात् इतरेतराश्रयदोषश्च इत्युत्पत्तिसत्त्वव
स्तुनि तदेककालीनसत्तासम्बन्धावगमस्तदवगमे च तत्सत्त्वे नोत्पत्तिसत्त्वनिश्चय इति अथैतद्दोषपरिजिहीर्षया तयोरैक्य
मभ्यनुज्ञायते तर्हि तत्संबंध एव कार्यत्वमिति ततो बुद्धिमद्धेतुकत्वे गगनादिभिरनैकांत्यं एतेन स्वकारणसंबंधोपि चिंतितः उ
भयसंबंधकार्यत्वमिति भक्तिः सापि न युक्ता तत्संबंधस्यापि कदाचित्कत्वे समवायस्यानियमत्वप्रसंगात् घटादिवत् अकदा
चित्कत्वे सर्वदोपलंभः प्रसंगः अथ वस्तूत्पादककारणानां संनिधानाभावान्न सर्वदोपलंभनप्रसंगः ननु वस्तुसम्बंधे कारणा
नां व्यापारः उत्पादश्च स्वकारणसत्तासमवायः स च सर्वदाप्यस्ति इति तदर्थं कारणोपादानमनर्थकमेव स्यात् अभिव्यय

त्वादीनामुपलम्भात् अथ तादृशः प्रासादादेः संनिवेशविशेषो दृष्टान्त तादृशस्य कस्यचिदप्यभावात् सातिशयं सं
हिंसातिशयं कर्तारं गमयति प्रासादादिवत् नच दृष्टकर्तृकादृष्टकर्तृकाभ्यां बुद्धिमन्तमितेतरत्वसिद्धिः कृतिमेनेरामुक्ता
दिभिर्व्यभिचारात् एतेनाचेतनोपादानत्वादिकमपि समर्थितमिति सूक्तं बुद्धिमद्धेतुकत्वं ततश्च सर्ववेदित्वमिति तदे
वमनुमानमुद्भविरादरि द्रुवचनमेव कार्यत्वादेः असम्यग्धेतुकत्वेन तज्जनितस्य मिथ्यारूपत्वात् तथाहि कार्यत्वं स्वका
रणसत्तासमवायः स्यात् अभूत्वाभावित्वम् अक्रियादर्शिनापि कृतबुद्ध्युत्पादकत्वं कारणव्यापारानुविधायित्वं वा स्यात् गत्यं
तराभावात् अथाद्यः पक्षः तदा योगिनामशेषकर्मपक्षेपपक्षांतःपातिनि हेतोः कार्यत्वलक्षणस्य प्रवृत्तेर्भागासिद्ध
नच तत्र सत्तासमवायः स्वकारणसमवायो वास्ति तस्य सप्रध्वंसरूपत्वेन सत्तासमवाययोरभावात् सत्ताया
गुणक्रियाधारत्वाभ्यनुज्ञानात् समवायस्य च परैः द्रव्यादिपंचपदार्थवृत्तियोगःत्वाभ्युपगमात् अथाभावपरित्यागेन
भावैस्यैव विवादाध्यासितस्य पक्षीकरणान्नायं दोषः प्रवेशभागिनि चेत् नहि मुक्त्यर्थिनां तदर्थमीश्वराराधनमनर्थकमे
स्यात् तत्र स्वकृतं किंचित्कस्त्वात् सत्तासमवायस्य विचारमधिरोहतः शतधा विशीर्यमाणत्वात् स्वरूपासिद्धं च कार्यत्वं

संवाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एक इति व्यासवचनं च अतो जंतुरनीशोयमात्मनः सुख
दुःखयोः ईश्वरप्रेरितो गच्छेत्स्वर्गं वाश्वभ्रमेव वा नचाचेतनेनैव परमाण्वादिकारणैः पर्याप्तत्वाद्बुद्धिमतः का
रणस्यानर्थक्यं अचेतनानां स्वयं कार्योन्मुखो व्यापारायोगात् तुर्यादिवत् नचैवं चेतनस्यापि चेतनांतरपूर्वकत्वा
दनवस्था तस्य सकलपुरुषज्येष्ठत्वान्निरतिशयत्वात् सर्वज्ञबीजस्य क्लेशकर्मविपाकाशयैरपरामृष्टत्वादनादि
भूतानश्वरज्ञानसंभवाच्च यदाह पतंजलिः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषः सर्वज्ञः सपूर्वेषामपि गुरुः का
लेनविच्छेदादिति च ऐश्वर्यमप्रतिहतं सहजो विरागः तृप्तिर्निसर्गजनिता वशितेन्द्रियेषु आत्यंतिकं सुखम
मनावरणा च शक्तिर्ज्ञानं च सर्वविषयं भगवंस्तवैव इत्यवधूतवचनाच्च नचात्र कार्यत्वमसिद्धं सावयवत्वेन कार्यत्व
सिद्धं विपक्षे एव वस्त्वभावात् नाप्यनैकांतिकं विपक्षे परमाण्वादावप्रवृत्तेः प्रतिपक्षसिद्धिनिबंधनस्याभावात् न
प्रकरणसमं अथ तन्वादिकं बुद्धिमद्धेतुकं नभवति दृष्टकर्तृकप्रासादादिविलक्षणत्वादाकाशादिवदित्यस्येव
प्रतिपक्षसाधनमिति नेतद्युक्तं हेतोरसिद्धत्वात् सन्निवेशविशिष्टत्वेन प्रासादादिसमानजातीयत्वेन त

ज्ञस्मरणे च सर्वज्ञनास्तिताज्ञानमभावप्रमाणं युक्तं नापरथा नकस्यचिदर्वाग्दर्शिनस्त्रिजगत्त्रिकालज्ञानमुप
सर्वज्ञस्यातीन्द्रियस्यवा सर्वज्ञत्वं हि चेतो धर्मस्तया सतीन्द्रियं तदपि न प्राकृतपुरुषविषयं इति कथमभावप्रमाण
यमासादयेत् असर्वज्ञस्य तदुत्पादसामग्र्या असंभवात् असंभवे तथाज्ञातुरेव सर्वज्ञत्वमिति अत्राधुना तद्
वसाधनमित्यपि नयुक्तं सिध्यसाध्यतानुषंगात् ततः सिद्धं मुख्यतीन्द्रियज्ञानमशेषतो विशदं सार्वज्ञज्ञानस्या
तीन्द्रियत्वाच्चक्षुर्व्यादिदर्शनं तद्रसास्वादनदोषोपि परिहृत एव कथमतीन्द्रियज्ञानस्य वैशद्यमिति चेत् तथा सत्य
स्व प्रज्ञानस्य भावनाज्ञानस्य चेति दृश्यते हि भावनाबलादतद्देशवस्तुनोपि विशददर्शनमिति पिहिते कारणं
सिचस्त्रीमुखाग्रहभेद्यमयि चनिमिलिन नयेतनयापिकांताननं व्यक्तमिति बहुलमुपलंभात् ननु च नावरणविश्ले
शेषज्ञत्वमपि तु तनुकरणभुवनादिनिमित्तत्वेन न चाशनत्वादीनां बुद्धिमद्धेतुकत्वमसिद्धमनुमानादेस्तस्य सुप्रसिद्ध
त्वात् तथा हि विकल्पादिकरणभावापन्नं पर्यायविभेन रुतन्वादिकं बुद्धिमद्धेतुकं कार्यत्वादचेतनोपादानत्वात्संनिवेश
विशिष्टत्वाद्वावस्त्रादिवदिति आगमोपि तदावेदकः श्रूयते विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतः यात्

क्रमिति सिद्धं सकलपदार्थसाक्षात्कारित्वं कस्यचित्पुरुषस्यातोऽनुमानादिति न प्रमाणपंचकाविशयत्वमशेषज्ञस्य अथा
स्मिन्ननुमानेऽर्हतः सर्ववित्वमर्हतो वा अनर्हतश्चेद्देहाद्यप्रमाणं स्यात् अर्हतश्चेत्सोपि न श्रुत्यासामर्थ्येन वावगंतु
पार्यते स्वशक्त्या दृष्टांतानुग्रहेण वा हेतोः पक्षांतरेपि तुल्यवृत्तित्वादिति तदेतत्परेशं स्ववधाय कृत्योत्थापनमेव वि
धिनिशेधप्रश्नस्य सर्वज्ञसामान्याभ्युपगमपूर्वकत्वात् अन्यथा न कस्याप्यशेषज्ञत्वमित्येवं वक्तव्यं प्रसिद्धानुमानेप्य
स्य दोषस्य संभवो न जात्यंतरत्वाच्च तथाहि नित्यः शब्दः प्रत्यभिज्ञायमानत्वादित्युक्ते व्यापकः शब्दो नित्यः नि
त्यः प्रसाध्यते अव्यापको वा यद्यव्यापकः तदाव्यापकत्वे नोप्यकत्समानो न किंचिदर्थं पुष्णाति अथ व्यापकः
सोपि न श्रुत्यासामर्थ्येन वावगम्यते स्वशक्त्या दृष्टांतानुग्रहेण वा पक्षांतरेपि तुल्यवृत्तित्वादिति सिद्धमतो निर्दोषात्सा
धनादशेषज्ञत्वमिति यच्चाभावप्रमाणसत्ताकवलितमशेषज्ञस्येति यदुक्तमेवानुमानस्य तद्ग्राहकस्य सद्भावे सति प्रमा
णपंचकाभावमूलस्याभावप्रमाणस्योत्थानायोगात् गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनं मानसं नास्तिताज्ञा
नं जायतेक्षानपेक्षयेति च भावात् कं दर्शनं तथा चकालत्रयत्रिलोकलक्षणवस्तुसद्भावग्रहणे अन्यथान्यदाग्रहीतसर्व

शक्तेः मदिरामदनकोद्रवादिभिरावरणोपपत्तेः नचेन्द्रियस्यैतैरावरणमिन्द्रियाणामचेतनानामप्यनावृतप्रख्यत्वा
त् स्मृत्यादिप्रतिबंधायोगात् नापि मनसस्तैरावरणमात्मव्यतिरेकेणापस्य मनसो निवेश्यमानत्वात् ततो नामू
र्तस्यावरणाभावः अतो नासिद्धं तद्ग्रहणस्येभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वं नापि विरुद्धं विपरीतनि
श्चिता विनाभावाभावात् नाप्यनैकांतिकं देशतः सामस्त्येन वा विपक्षे वृत्त्यभावात् विपरीतार्थोपस्थाभावात् अ
थेदमस्त्येव विवादापन्नः पुरुषो नाशेषज्ञो वक्तृत्वात् पुरुषत्वा पाण्यादिमत्वाच्च रथ्यापुरुषवदिति नैतच्चारुवक्तृत्वा
देरसम्यग्घेतुत्वात् वक्तृत्वं हि दृष्टेष्टविरुद्धार्थवक्तृत्वं तदविरुद्धवक्तृत्वं वक्तृत्वसामान्यं वागत्यंतराभावान्न प्रथमः पक्षः
सिद्धसाध्यतानुषंगान्नापि द्वितीयः पक्षः विरुद्धत्वात् तदविरुद्धवक्तृत्वं हि ज्ञानातिशयमंतरेण नोपपद्यत इति वक्तृत्व
सामान्यमपि विपक्षाविरुद्धत्वात् न प्रकृतिसाधनायालम् ज्ञानप्रकर्षे वक्तृत्वापकर्षादर्शनात् प्रत्युत ज्ञानातिशयवतो
वचनातिशयवतो स्यैव संभवात् एतेन पुरुषत्वमपि निरस्तं पुरुषत्वं हि रागादिदोषदूषितं तदा सिद्धसाध्यता तद्दूषि
तं तु विरुद्धं वैराग्यविज्ञानादिगुणयुक्तपुरुषत्वस्याशेषज्ञत्वमंतरेणायोगात् पुरुषत्वसामान्यं तु संदिग्धविपक्षव्यावृत्ति

शयत्वमशेषज्ञस्येति यदुक्तं तन्न ग्राहकस्यानुमानस्य संभवात् तथा हि कश्चित्पुरुषः सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभा
वत्वे सति प्रक्षीणप्रतिबंधप्रत्ययत्वात् यद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबंधप्रत्ययं तत्साक्षात्कारि यथापगततिमि
रं लोचनं रूपसाक्षात्कारि तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबंधप्रत्ययश्च विवादापन्नः कश्चिदिति सकलपदार्थग्रहण
स्वभावत्वं चेदात्मनोऽसिद्धं। चोदनातः सकलपदार्थपरिज्ञानस्यान्यथायोगाद्धूमादेरग्न्यादिप्रतीतेरिति व्या
प्तिज्ञानोत्पत्तिबलाच्चाशेषविषयज्ञानसंभवः केवलं वैशद्ये विवादः तत्र चावरणापायोग एव कारणं रजोनीहाराद्यावृता
र्थज्ञानस्येव तदपगम इति प्रक्षीणप्रतिबन्धप्रत्ययत्वं कथमिति चेदुच्यते दोषावरणे क्वचिन्निर्मूलं प्रलयमुपव्रजतः
प्रकृष्यमाणहानिकत्वात् यस्य प्रकृष्यमाणा हानिः स क्वचिन्निर्मूलं प्रलयमुपव्रजति यथाग्निपुटपाकापसारितकिट्ट
कालिकाद्यंतरंगबहिरंगमलद्वयात्मनि हेम्नि मलमिति निर्ह्रासातिशयवती च दोषावरणे इति कथं पुनर्विवादाध्या
सितस्याज्ञानस्यावरणं सिद्धं प्रतिषेधस्य विधिपूर्वकत्वात् इति चेदुच्यते विवादापन्नं सावरणं मविशदतया स्ववि
षयावबोधकत्वाद्रजोनीहाराद्यंतरितार्थज्ञानवत् न चात्मनोऽमूर्तत्वादावारकस्यायोगः अमूर्ताया अपि चेतना

द्वर्तमानविशयत्वाच्च नचाशेषवेदी संबद्धो वर्तमानश्चेति नाप्यनुमानात्तत्सिद्धिरनुमानं हि गृहीतसंबंधस्यैकदेश
दर्शनादसंन्निकृष्टेर्थे बुद्धिः नच सर्वज्ञसद्भावाविनाभाविकार्यलिंगं स्वभावलिंगं वा संपश्यामः तद्धि पूर्वं तत्स्वभावस्य त
त्कार्यस्य वा तत्सद्भावाविनिभाविनो निश्चेतुमशक्तेः नाप्यागमात्तत्सद्भावः स हि नित्योऽनित्यो वा तत्सद्भावं भावयेत् न ताव
न्नित्यः तस्यार्थवादरूपस्य कर्मविशेषसंबोधकत्वायोगात् अनादेरागमस्यादिमत्पुरुषवाचकत्वाघटनाच्च ना
ऽऽगमः सर्वज्ञं साधयति तस्यापि तत्प्रणीतस्य तन्निश्चयमंतरेण प्रामाण्यानिश्चयात् इतरेतराश्रयत्वाच्च इतरप्रणी
तत्वनासादितप्रमाणभावस्याशेषज्ञप्ररूपणसमर्थं नितरामसंभाव्यमिति सर्वज्ञसदृशस्य परस्याग्रहणात्संभा
नोपमानमनन्यथाभूतस्यार्थस्याभावान्नार्थापत्तिरपि सर्वज्ञावबोधिकेति धर्माद्युपदेशस्य व्यामोहादपि संभवात्
धर्माद्युपदेशः सम्यक्मिथ्योपदेशभेदात् तत्र मन्वादीनां सम्यगुपदेशो यथार्थज्ञानोदयवेदमूलत्वात् बुद्धादीनां
मोहपूर्वकः तदमूलत्वात् तेषामवेदार्थज्ञत्वात् ततः प्रमाणपंचकाविशयत्वादभावप्रमाणस्यैव प्रवृत्तिः तेन वा
ऽऽवज्ञायते सर्वांशेऽप्यस्य प्रत्यक्षादिप्रमाणपंचकस्याव्यापारादिति अत्र प्रतिविधीयते यत्तावदुक्तं प्रत्यक्षादिप्रमाणावि

कारणादिनाव्यभिचारइति कारणादिकारणंनपरिच्छेद्यमितितेनव्यभिचारःनभ्रमः कारणत्वात् परिच्छेद्यत्वमपितुपरिच्छे
द्यत्वमपिपरिच्छेद्यत्वमपिपरिच्छेद्यत्वात्कारणत्वमितिचेन्न तथापिकेशोडुकादिनाव्यभिचारात् इदानीमतीन्द्रियप्रत्य
क्षंव्याचष्टे सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतोमुख्यं सामग्रीद्रव्यक्षेत्रकालभावलक्षणातस्या
विशेषसमग्रतालक्षणस्तेन विश्लेषितानि अखिलान्यावरणानियेनतत्तथोक्तं किंविशिष्टं अतीन्द्रियमिन्द्रियाण्यतिक्रा
न्तं पुनरपिकीदृशमेवतःसामस्त्येनविशदं अशेषतोविशदे किंकारणमितिचेत्प्रतिबन्धाभावइतिभ्रूमः तत्रापिकिंकारणमि
तिचेत् अतीन्द्रियत्वमनावरणत्वंचेतिभ्रूमः एतदपिकुतइत्याह सावरणत्वेकरणजन्यत्वेच प्रतिबन्धसंभवात् नन्ववधिम
नः पर्यययोरनेनासंग्रहादव्यापकमेतल्लक्षणमितिनवाच्यं तयोरपिस्वविषये अशेषतो विशदत्वादिधर्मसंभवान्नचैवंमति
श्रुतयोरित्यतिव्याप्तिपरिहारः तदेतदिन्द्रियमवधिमनःपर्ययकेवलप्रभेदात्त्रिविधमपिमुख्यंप्रत्यक्षमात्मसंनिधिमा
त्रापेक्षत्वादिति नन्वशेषविषयविशदावभासित्वंतस्य तद्वतोवाप्रत्यक्षादिप्रमाणंपंचकाविषयत्वेनाभावप्रमाणवि
षयविध्वस्तशंकाकत्वात् कस्यमुख्यत्वं तथाहि नाध्यक्षमशेषज्ञविषयं तस्य रूपादिनीयतगोचरचारित्वात् सं

पीत्यर्थः उभयत्रापि प्रतीपस्यातज्जन्यस्यातदाकारधारिणोपि तत्प्रकाशकत्वं तथा ज्ञानस्यापीत्यर्थः ननु यद्यर्थादिजा
स्यार्थरूपाननुकारिणो ज्ञानस्यार्थसाक्षात्कारित्वं तदानियतदिग्देशकालवर्तिपदार्थप्रकाश
सर्वविज्ञानमप्रतिनियतविषयं स्यादिति शंकायामाह स्वावरणक्षयोपशमलक्षणयोग्यतया हि प्रतिनियतमर्थं
व्यवस्थापयति स्वानि च तान्यावरणानि च स्वावरणानि तेषां क्षयउदयाभावः तेषामेव सद्वस्थाउपशमः तावेव
यस्याः योग्यतायाः तया हेतुभूतया प्रतिनियतमर्थं व्यवस्थापयति प्रत्यक्षमिति शेषः हि यस्मादर्थे यस्मादेव
कारणादित्यर्थः इदमत्रतात्पर्यं कल्पयित्वापि ताद्रूप्यं तदुत्पत्तिं तदध्यवसायं च योग्यतावश्याभ्युपगंतव्या ताद्रूप्यस्य
समानार्थैर्जनुत्पत्तेरिन्द्रियादिभिस्तद्वयस्यापि समानार्थसमनंतरप्रत्ययैश्चितयस्यापि शुक्ले शंखे पीतिका
नेनव्यभिचाराद्योग्यताश्रवणमेवश्रेयइति एतेन यदुक्तं परेण अर्थेन घटयत्येनां नहि मुक्त्वार्थरूपतां तस्मात्प्रमेयाधि
प्रमाणरूपतेति तन्निरस्तं समानार्थाकारनानाज्ञानेषु मेयरूपतायासद्भावात् नच परेषां सारूप्यं नास्ति वस्तुभूत
तियोग्यतयोवार्थप्रतिनियम इति स्थितं इदानीं कारणं त्वा परिच्छेद्योऽर्थ इति मतं निराकरोति कारणस्य परिच्छेद्यत्वे

संग्रहाद्विनेयव्यामोह एव स्यात् तदियत्तानवधारणात् न च भगवतः परमकारुणिकस्य चेष्टा तथ्यामोहाय एवं प्रभव
तीत्याशंकायामुच्यते नार्थालोकौ कारणं परिच्छेद्यत्वात् तमोवत् सुगममेतत् ननु तथाप्यालोकाभावाविशिष्टस्य तमसो
न्यस्याभावात् साधनविकलो दृष्टान्त इति नैवमेवं सति बाह्यालोकस्यापि तमोभावादन्यस्यासंभवात् तेजोद्रव्यसं
संभव इति विस्तरेणैतदलंकारे प्रतिपादितं बोद्धव्यं अत्रैव साध्यहेत्वन्तरमाह तदन्वयव्यतिरेकानुविधानाभावा
च्च अत्र व्याप्तिः अयस्यान्वयव्यतिरेकौ नानुविधत्ते न तत्कारणकं यथा केशोण्डुकज्ञानं नानुविधत्ते च ज्ञानम
र्थान्वयव्यतिरेकाविति तथा आलोकेऽपि एतावान् विशेषस्तु नक्तंचरदृष्टान्त इति नक्तंचरा मार्जारादयः ननु विज्ञान
मर्थजनितमर्थाकारं चार्थस्य ग्राहकम् तदुत्पत्तिमन्तरेण विषयं प्रति नियमायोगात् तदुत्पत्तेरालोकादाविशिष्ट
त्वात् तद्रूपसहिताया एव तस्यास्तं प्रति नियमहेतुत्वात् भिन्नकालत्वेऽपि ज्ञानज्ञेययोर्ग्राह्यग्राहकभावाविरोधात्
तथा चोक्तं भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः हेतुत्वमेव युक्तिज्ञास्तदाकारार्पणक्षममित्याशंकारार्पणं यामि
दमाह अतज्जन्यमपि न प्रदीपकं प्रकाशवत् अर्थाजन्यमप्यर्थकं प्रकाशमित्यर्थः अतज्जन्यत्वमुपलक्षणं तेन तदाका

कमिति अर्थः समीचीनः प्रवृत्तिनिवृत्तिरूपो व्यवहारः संव्यवहारः तत्रभवं सांव्यवहारिकं भूयः किंभूतमिन्द्रि
निन्द्रियनिमित्तं इंद्रियं चक्षुरादि अनिंद्रियं मनः तेनिमित्तं कारणं यस्य समस्तं व्यस्तं च कारणमभ्युपगंतव्यं
इंद्रियप्रधान्यादनिन्द्रियबलाधानादुपजातमिन्द्रियप्रत्यक्षमनिन्द्रियादेव विशुद्धिसाव्यपेक्षादुपजाय
नमनिंद्रियप्रत्यक्षं तेनेन्द्रियप्रत्यक्षमवग्रहादिधारणापर्यंततया चतुर्विधमपि बह्वादिद्वादशभेदमष्टच
त्वारिंशतसंख्यं प्रतीन्द्रियं प्रतिपत्तव्यमनिंद्रियप्रत्यक्षस्य चोक्तप्रकारेणाष्टचत्वारिंशद्भेदेन मनोनयन
योश्चतुर्थमपीन्द्रियाणां व्यंजनावग्रहस्याष्टचत्वारिंशद्भेदेन च समुदितस्येन्द्रियानिन्द्रियप्रत्यक्षस्य षट्त्रिं
शदुत्तरात्रिशतीसंख्याप्रतिपत्तव्या ननु स्वसंवेदनभेदमन्यदपि प्रत्यक्षमस्ति तत्कथं नोक्तमिति न वाच्यं
सुखादिज्ञानस्वरूपसंवेदनस्य मानसप्रत्यक्षत्वात् इंद्रियज्ञानरूपसंवेदनस्य चेन्द्रियसमक्षत्वादन्यथा
स्वव्यवसायायोगात् स्मृत्यादिस्वरूपसंवेदनं मानसमेवेति नापरं स्वसंवेदनं नामाध्यक्षमस्ति ननु प्रत्यक्षस्यो
त्पत्तौ कारणं वदतां ग्रंथकारेण यथानिन्द्रियवदर्थालोकावपि किं न कारणत्वेनोक्तौ तदवचने कारणानां साकल्यस्या

कल्पप्रमाणान्तरत्वमतिवर्तते एतेन त्रिचतुःपंचषट्प्रमाणवादिनोपि सांख्याक्षपादप्रभाकरजैमिनयः स्वप्र
माणसंख्यानव्यवस्थापयितुंक्षमा इतिप्रतिपादितमवगंतव्यमुक्तन्यायेन स्मृतिप्रत्यभिज्ञानातर्काणां वदस्यु
पगतप्रमाणसंख्यापरिपंथित्वादिति प्रत्यक्षेतरभेदाद्द्वेएवप्रमाणे इतिस्थितं ॥४॥ अथेदानीं प्रथमप्रमाण
भेदस्य स्वरूपं निरूपयितुमाह विशदंप्रत्यक्षमिति ज्ञानमिति वर्तते प्रत्यक्षमितिधर्मनिर्देशः विशदज्ञानात्म
कं साध्यं प्रत्यक्षादितिहेतुः तथाहि प्रत्यक्षं विशदज्ञानात्मकं एव प्रत्यक्षत्वात् यन्न विशदज्ञानात्मकं तन्न प्र
त्यक्षं यथा परोक्षं प्रत्यक्षंच विवादापन्नं तस्माद्विशदज्ञानात्मकमिति प्रतिज्ञार्थैकदेशासिद्धो हेतुरितिचेत् कापु
नः प्रतिज्ञा तदेकदेशोवा धर्मिधर्मिसमुदायः प्रतिज्ञाः तदेकदेशो धर्मी धर्मोवा हेतुः प्रतिज्ञार्थैकदेशासिद्धइति
चेन्न धर्मिणो हेतुत्वे असिद्धत्वायोगात् धर्मिणोहेतुत्वे अनन्वयदोषइतिचेत् न विशेषस्यधर्मित्वात् सामान्य
स्यच हेतुत्वात् तस्यविशेषमुममो विशेषनिष्टत्वात् तस्यसामान्यस्य अथसाध्यधर्मस्यहेतुत्वे प्रतिज्ञार्थैकदे
शासिद्धत्वमिति तदप्यसंमतं साध्यस्यस्वरूपेणैवासिद्धत्वात् न प्रतिज्ञार्थैकदेशासिद्धत्वेन तस्यासिद्धत्वं धर्मिणा

व्यभिचारात् सपक्षेवृत्त्यभावाद्धेतोरनन्वयत्वस्यप्यसत् सर्वभावानां क्षणभंगसंगमेवांगअंगारमंगीकुर्वतां
तथागतानां सत्वादिहेतुनामनुदयप्रसंगात् विपक्षेबाधकप्रमाणाभावात् पक्षव्यापकत्वाच्चान्वयवत्त्वं प्रतिज्ञा
तेपिसमानंइदानीं स्वोक्तमेव विशदत्वं व्याचष्टे प्रतीत्यंतराव्यवधानेन विशेषवत्तया वाप्रतिभासनं वैशद्यमिति
एकस्याप्रतीतेरन्याप्रतीतिः प्रतीत्यंतरं तेनव्यवधानं तेनप्रतिभासनं वैशद्यं यद्यप्यवायस्यावग्रहेहाप्रतीतिभ्यां
व्यवधानं तथापिनपरोक्षत्वं विशयविशयिणोभेदनाप्रतीतेः यत्र विशयविशयिणोभेदेसति व्यवधानंतत्रपरोक्ष
त्वं तर्हि अनुमानाध्यक्षविशयस्यैकात्मग्राह्यस्यग्रामेरभिन्नस्योपलंभाद्ध्यक्षस्यपरोक्षतेति तदप्ययुक्तंभि
न्नविशयत्वाभावात् विसदृशसामग्रीजन्याभिन्नविषयाप्रतीतिः प्रतीत्यंतरमुच्यते नान्यदितिनदोषः नकेव
लमेतदेव विशेषवत्तयावाप्रतिभासनं सविशेषवर्णसंस्थानादिग्रहणं वैशद्यं तच्च प्रत्यक्षं द्विधा मुख्यसं
व्यवहारभेदादिति मनासिकृत्यमनसाव्यवहारिकप्रत्यक्षस्योत्पादिकांसामग्रीतद्भेदं च प्राह इंद्रियाणानिं
द्रियनिमित्तंदेशतः संव्यवहारिकमिति विशदंज्ञानमितिचानुवर्तते देशतोविशदंज्ञानमितिसांव्यवहारि

पादयेत् परस्य प्रत्यक्षेणागृहीतमशक्यत्वात् व्याहारादिकार्यप्रदर्शनात्तं प्रतिपद्यतेनिचेत् ज्ञायात्तं नहि कार्यसि

कारणानुमानं अथलोकव्यवहारापेक्षयेष्यत एवानुमानमपि परलोकादावेवानयुगमादभावादिति कथं तदभा

वोनुपलब्धेः इतिचेत् तदानुपलब्धिलिंगजनितमनुमानं परमापतितमितिप्रत्यक्षस्य प्रामाण्यमपिस्वभावहेतुज्ञा

नानुमितिमंतरेणनोपपत्तिमियतातिति प्रागेवोक्तमित्युपरम्यते तदप्युक्तं धर्मकीर्तिना प्रमाणेतरसामान्य

स्थितेरन्यधियोगतेः प्रामाण्यंतरसद्भावः प्रतिशेधाच्च कस्यचिदिति ततः प्रत्यक्षमनुमानमिति प्रमाणद्वयमेवे

तिसौगतः सोपिनयुक्तवादि स्मृतेरपिसंवादिन्याः स्मृतीयायाः वर्धकिं प्रतिप्रमाणंनएवादनं ततः प्रमाणभूता

याः सद्भावात् स्मृतेरप्रमाण्यं नतथाप्यनुभूते नार्थेनस्य लंबनत्वोपपत्तेः अन्यथामत्यक्षस्याप्यनुभूतार्थविशा

यत्वादप्रामाण्यमनिवार्यंस्यात् स्वविशयावभासने स्मरणेप्यविशिष्टमिति किंचस्मृतेरप्रामाण्येनुमानवार्ता

विदुर्लभा तयाव्याप्तेरविशयीकरणे तदुच्छामायोगादिति ततः इदंवक्तव्यं स्मृतिः प्रमाणं अनुमानप्रामाण्या

न्यथानुपपत्तेरिति सैव प्रत्यक्षानुमानस्वरूपतया प्रमाणस्य द्वित्वसंख्या नियमं विघटयतीकिंनश्चितया तथाप्र

थापिभावात् प्राक्कव्यभिचार्यैवततः प्रत्यक्षमेवैकं प्रमाणमस्यैवाविसंवादकत्वादिति तदेतद्बालविलसितमिवा

स्युपपतिशून्यत्वात् तथाहि किमप्रत्यक्षस्योत्पादककारणाभावाज्जालंबनाद्वा प्रामाण्यं निषिध्यते। तत्रनतावत्प्राथ

माकनः पक्षः तदुत्पादकस्य सुनिश्चितान्यथाउपपतिनियमनिश्चयलक्षणस्य साधनस्य सद्भावात् नोखल्वा द्वितीयो

नः पक्षः स्वदालंबनस्य पावकादेः सकलविचारचतुरचेतसि सर्वदाप्रतीयमानत्वात्॥ यदपिस्वभावहेतोर्व्य

भिचारसंवनमुक्तं तदप्यनुचितमेवस्वभावमात्रस्याहेतुत्वात् व्याप्यरूपस्यैवस्वभावस्यव्यापकंप्रतिगमक

त्वाभ्युपगमात् नचव्याप्यस्यव्यापकव्यभिचारित्वं व्याप्यत्वविरोधप्रसंगात् किंचैवंबाधितोनाध्यसंप्रा

तिष्ठते तत्राप्यविवादस्यागोगणस्वातस्यप्रामाण्याविनाभावित्वेननिश्चेतुमशक्यत्वात् यच्चकार्यहेतो

न्यथापिसंभावनंतदप्याशिक्षतलसितंसुविवेचितस्यकार्यस्यकारणाव्यभिचारित्वात् यादृशो

ह्लनकार्योभूधरनितंबादावतिबहलधवलतयाप्रसर्पन्नुपलभ्यते (स्पतेन) धटिकादाविति यदप्युक्तं शक्रमूर्द्धनि धूमस्या

थापिभावइति तत्रशक्रमूर्द्धा अग्निस्वभावोसौधूमस्तत्रकथंभवेदिति किंचप्रत्यक्षंप्रमाणमितिकथमयंप्रति

शक्रमूर्द्धाग्निस्वभावोऽन्यथावा यद्यग्निस्वभावस्तदाग्निरेवेति क... तदुद्भूत

अथ प्रमाणस्वरूपविप्रतिपत्तिं निरस्येदानीं संख्याविप्रतिपत्तिं प्रतिक्षिपन् सकलप्रमाणभेदसंदर्भसंग्रहपरं प्रमाण
यत्ताप्रतिपादकं वाक्यमाह तद्धेयतितच्छब्देन प्रमाणं परामृश्यते तत्प्रमाणं स्वरूपेणावगतं द्व्याद्विप्रकारमेव सकलप्र
माणभेदानामत्रैवांतर्भावात् तद्वित्वमध्यक्षानुमानप्रकारेणापि संभवतीति तदाशंकानिराकरणार्थं सकलप्रमाण
भेदसंग्रह[illegible]लनीं संख्या प्र[illegible]करोति प्रत्य[illegible]दादिति प्रत्यक्षं वक्ष्यमाणलक्षणमितरत्परोक्षं ताभ्यां भेदा
भेदात् प्रमाणस्येति शेषः नहि परपरिकल्पितैकद्वित्रिचतुःपंचषट्प्रमाणसंख्यानियमे निखिलप्रमाणभेदाना
मंतर्भावविभावना शक्या कर्तुं तथाहि प्रत्यक्षैकप्रमाणवादिनश्चार्वाकस्य नाध्यक्षे लैंगिकस्यांतर्भावो युक्तः तस्य
तद्विलक्षणत्वात् सामग्रीस्वरूपभेदात् अथ नाप्रत्यक्षं प्रमाणमस्ति विसंवादसंभावनात् निश्चिताविनाभावाल्लिंगा
ल्लिंगिनि ज्ञानमनुमानमित्यानुमानिकं शासनं तत्र च स्वभावलिंगस्य बहुलमन्यथापि भावो दृश्यते तथाहि कषाय
रसोपेतानामे तद्देशकालसंबंधिनां दर्शनेपि देशांतरे कालांतरे द्रव्यांतरसंबंधे चान्यथापि दर्शनात् स्वभावहेतुव्य
भिचार्येव लताचूतवत् लताशिंशपादिसंभावनाच्च तथा कार्यलिंगमपि गोपालघटिकादौ धूमस्य शक्रमूर्ध्नि चान्य

विशय एव परानपेक्षत्वव्यवस्थानात् । अनभ्यस्ते तु जलमरीचिकासाधारणप्रदेशे जलज्ञानं परापेक्षमेव सत्यमिदं जलं शिष्टाकारधारित्वात् यद्वैनिकायेटकदर्दुरएवसरोजगन्धत्वात् परिदृष्टजलवदित्यनुमानज्ञानाद्योऽर्थक्रियाज्ञानाद्वा सिद्धप्रामाण्या प्राचीनज्ञानस्य यथार्थत्वमाकल्पमवकल्पत एव यदप्यभिहितं प्रामाण्यग्रहणोत्तरकालमुत्पत्य-

रिच्छित्तेर्विशेषो नाभावसत इति तत्र यदभ्यस्ते विशये नाभावसत इत्युच्यते तदा न हि दृश्यत एव तत्र प्रथममेव निःसंशयं परिच्छित्ति विशेषः पूर्वमप्रमाणप्रमाणसाधारण्या एव परिच्छित्तेरुत्पत्तिः नन्वप्रामाण्यपरिच्छित्त्योरभेदात्कथं पौर्वापर्यमिति नैवं नहि सर्वापि परिच्छित्तिः प्रामाण्यात्मिका प्रामाण्यं तु परिच्छित्त्यात्मकमेवेति न दोषः तदप्युक्तं बाधककारणज्ञानाभ्यां प्रामाण्यमपोद्यत इति तदपि फल्गुभाषितमेवाप्रामाण्येऽपि तथा वक्तुं शक्यत्वात् तथाहि प्रथममप्रामाण्ये ज्ञानमुत्पद्यते पश्चाद्बाधकबोधगुणज्ञानोत्तरकालं तदपोद्यत इति तस्मात्प्रामाण्यमप्रामाण्यं वा स्वकार्ये क्वचिदभ्यनभ्यासापेक्षया स्वतः परतश्चेति निर्णेतव्यमिति द्वयस्य संमतमपास्तसमस्तदोषं वीक्ष्य प्रपंचरुचिरं रचितं समस्य नंदिविभुनाशिशुबोधहेतोर्मानस्वरूपममुना स्फुटमभ्यधायि ॥ इति परीक्षामुखलघुवृत्तौ प्रमाणस्वरूपो-

भ्यो दोषाणामभाव इत्यत्र किंचिन्निबंधनमुत्पत्र किंचिन्निबंधनमुपलभ्यामोऽन्यत्र महामोहात् अथानुमाने त्रिरूपलिं
गमात्रजनितप्रामाण्योपलब्धिरेव तत्र हेतुरिति चेन्न उक्तोत्तरत्वात् तत्र हि त्रैरूप्यमेव गुणो यथा नैद्रूकत्वं दोष इति
न्यासंमतो हेतुरपि चाप्रामाण्ये एवं वक्तुं शक्यत एव तत्र हि दोषेभ्यो गुणा नाम भावस्तदभावाच्च प्रामाण्यासत्त्वे अ
प्रमाण्यमौत्सर्गिकमास्त इत्यप्रामाण्यं स्वत एवेति तस्य भिन्नकारणप्रभवत्ववर्णनमुन्मत्तभाषितमेव स्यात् किं
च गुणेभ्यो दोषाणामभाव इत्यभिदधता गुणेभ्यो गुणा एवेत्यभिहितं स्यात् भावांतरस्वभावत्वादभावत्वादभावस्य
ततो प्रामाण्यासत्त्वं प्रामाण्यमेवेति नैतावता परपक्षः प्रतिक्षेपः अविरोधित्वात् तथानुमानगुणः प्रतीयं
एव तथाहि प्रामाण्यं विज्ञानकारणातिरिक्तकारणप्रभवं विज्ञानान्यत्वे सति कार्यत्वात् अप्रमाणप्रामाण्यवत्
तथा प्रमाणप्रामाण्ये भिन्नकारणजन्ये भिन्नकार्यत्वात् घटवस्त्रवदिति च ततः स्थितं प्रामाण्यमुत्पत्तौ परापेक्ष
मिति तथा विषयपरिच्छित्तिलक्षणे प्रवृत्तिलक्षणे वा स्वकार्ये स्वग्रहणं नापेक्षत इति नैकांतः क्वचिदभ्यस्तवि

यावन्न ज्ञानं नतावस्तु विषया त्युरूपं निवर्तयतीति तदेतत्सर्वं मनल्पतमो विलसितं तथाहि नतावत्प्रामाण्य
त्पत्तौ सामग्र्यंतरापेक्षत्वमसिद्धं नाप्तप्रणीतत्वलक्षणगुणसंनिधाने सत्ये वाप्तप्रणीतवचनेषु प्रामाण्यदर्श
यद्भावाभावाभ्यां यस्योत्पत्त्यनुत्पत्ती तत्कारणकमिति लोकेपि सुप्रसिद्धत्वात् यदुक्तं विधिमुखेन कार्यमुखेन गुणा
नाम प्रतीतिरिति तत्र तावदाप्तप्रणीतशब्देन प्रतीतिर्गुणानामित्ययुक्तमाप्तप्रणीतत्वहानिप्रसंगात् ॥ अथ
क्षुरादौ गुणानाम प्रतीतिरित्युच्यते तदप्ययुक्तं नैर्मल्यादिभिरप्युपलब्धेः अथ नैर्मल्यं स्वरूपमेव न गुण
रविनाभाववैकल्यमपि स्वरूपविकलतैव न दोष इति समानं अथ नैर्मल्यमेव दोषस्तर्हि लिंगस्य चक्षुरादेर्वा
तत्स्वरूपसाकल्यमेव गुणः कथं न भवेत् आप्तोक्तेपि शब्दे मोहादिलक्षणस्य दोषस्याभावमेव यथार्थज्ञानादि
क्षणगुणसद्भावमभ्युपगच्छन्नन्यत्र तथा नेच्छतीति कथमनुन्मत्तः अथोक्तमेव शब्दे गुणाः संतोपि न प्रमा
त्पत्तौ व्याप्रियंते किंतु दोषाभाव एवेति सत्यमुक्तं किंतु न युक्तमेतत् प्रतिज्ञामात्रेण साध्यसिद्ध्ययोगात् नहि गुणे

व्यनान्यथेति ॥ तत एवाप्तोक्तत्व गुणसद्भावेपि नतत्कृत मागमस्य प्रामाण्यं तत्रहि गुणेभ्यो दोषाणा मभावस्तदभावाच्च संश

य विपर्यास लक्षण प्रामाण्यद्वयासत्वे प्रामाण्यमौत्सर्गिकमनयोदित मास्त एवेति ततः स्थितं प्रामाण्यं मुत्पत्तौ सामग्र्यं

तरसापेक्ष मिति ॥ नापि विशय शिछिति लक्षणे स्वकार्यग्रहणसापेक्ष मगृहीतप्रामाण्यादेवज्ञानादिशाय परिछिति लक्षण

कार्यदर्शनात् ननु परिछिति मात्रं प्रमाण कार्यं तस्य मिथ्याज्ञानेपि सद्भावात् । परिछितिविशेषं तु नागृहीत प्रमाणं वि

ज्ञानं जनयतीति तदपि वाल विलसितं नहि प्रामाण्य गृहणोत्तरकाल मुत्पत्स्य वस्यातः परिछितेर्विशेषो वभासते गृ

हीत प्रामाण्यादपि विज्ञानान्निर्विशय परिछेदोपलब्धेः ननु परिछिति मात्रस्य शक्तिकार्यो रजतज्ञानेपि सद्भावा

त्तस्यापि प्रमाणकार्यत्वप्रसंगइति चेत् भवेदेवं यदियथान्यथात्वप्रसहस्वहेतु पदोषज्ञानाभ्यां तन्नापोद्येत तस्मा

त्त्र कारणदोषज्ञानं वाथकप्रत्ययो वानोदेति तत्रस्वत एव प्रामाण्य मिति नचैव मप्रामाण्येप्याशंकनीयं तस्य विज्ञा

नकारण निरिक्तदोषस्वभाव सामग्रीसमये क्षतयोत्पत्तेः निवृत्ति लक्षणे च स्वकार्ये स्वगृहणसापेक्षत्वात् ॥ नहिया

सति अदृष्टानुपायिकरणत्वात् प्रदीपभासुराकारवत् अथ भवतु नामोक्तलक्षणलक्षितं प्रमाणं तथापि तत्प्रामाण्यं स्वतः
परतो वा न तावत्स्वतः अविप्रतिपत्तिप्रसंगात् नापि परतोऽनवस्थाप्रसंगादिति मतः द्वयमाशंक्य तन्निराकरणेन स्वमत
मवस्थापयन्नाह तत्प्रामाण्यं स्वतः परतःश्चेति सोपस्काराणीहि वाक्यानि भवंति ततइदं प्रति पत्तव्यमभ्यासदशायां
स्वतः
च परतइति तेन प्रागुक्तकाक्षद्वयनिरासः नचानभ्यासदशायां परतः प्रामाण्येऽप्यनवस्थासमानाज्ञानांतरस्याभ्यस्त
विशयस्य स्वतः प्रमाणभूतस्यांगीकरणात् अथवा प्रामाण्यमुत्पन्नौ परतएव विशिष्टकारणप्रभवत्वाद्धि विशिष्टका
र्यस्येति विशयपरिछित्तिलक्षणे प्रवृत्तिलक्षणे वास्वकार्ये अभ्यासेतरदशापेक्षया क्वचित्स्वतः परतःश्चेति निश्चीयते
ननूत्पत्तौ विज्ञानकारणातिरिक्तकारणान्तरसव्यपेक्षत्वमसिद्धं प्रामाण्यस्य तदितरस्येवाभावात् गुणाख्यमस्तीति
वाग्मात्रं विधिमुखेन कार्यमुखेन वा गुणानामप्रतीतेः नाप्यप्रामाण्यं स्वतएव प्रामाण्यं तु परतएवेति पर्ययः शक्य
ते कल्पयितुमन्वयव्यतिरेकाभ्यां हि त्रिरूपाल्लिंगादेव केवलात् प्रामाण्यमुद्यमानं दृष्टं प्रत्यक्षादिष्वपि तथैव प्रतिपत्त-

णा
रागमेव प्रतीतिरित्यन्ये तेषांमतमखिलमपि प्रतीतिबाधितमितिदर्शयन्नाह कर्मवत्कर्तृकरणक्रियाप्रतीतेः
ज्ञानविशयभूतंवस्तुकर्माभिधीयते तस्यैवज्ञप्तिक्रियाव्याप्यत्वात् तस्येवतद्वत्तत्साकारणंप्रमाणंक्रियाप्रमि
तिः कर्ताचकरणंचक्रियाचतासांप्रतीतिस्तस्याइतिहेतोःकाप्राग्गुक्तानुभवोद्धेषे यथाक्रमंतत्प्रतीतिर्दृश्यता
ननुशब्दपरामर्शसाविशेषंप्रतितिर्निवस्तुतत्वबलोपजातेत्सयाह शब्दानुच्चारणेपिस्वस्यानुभवनमर्थवत् यथा
घटादिशब्दानुच्चारणेपि घटाद्यनुभवस्तथाह महमिकयायोपमंतंमुखाकारतयावभासः सशब्दानुच्चारणेपिस्वय
मनुभूयतइत्यर्थः अनुमेवार्थमुपपत्तिपूर्वकंप्रतिसोल्लुंठमाचष्टे कोवातत्प्रतिभासनमर्थमध्यक्षमिछंस्तदेव
तदानेछतु। कोवालौकिकः परीक्षकोवातेनप्रतिभासितुशीलंयस्यसतथोक्तस्तंप्रत्यक्षमिवन् विशयिधर्मस्य
विशयेउपचारात् तदेवज्ञानमेवतथाप्रत्यक्षत्वेनपेछन् अपितिर्छेदिव अन्यथाऽप्रमाणिकत्वप्रसंगःस्यादि
त्यर्थः अत्रोदाहरणमाह प्रदीपवत् इदमत्रतात्पर्यंज्ञानंस्वातिरिक्तसजातीयार्थान्तरानपेक्षंप्रत्यक्षार्थगुणत्वे

वृक्षस्य अथेदानीं सविशेषेण मर्थग्रहणं समर्थयमानः तदेवस्पष्टीकुर्वन्नाह अनिश्चितोपूर्वार्थइति ठ यः

दिव्यवच्छेदेनानध्यवसितः सोपूर्वार्थइत्यर्थः तेनेहाज्ञान विशयस्यावग्रहादिगृहीतत्वेपिनपूर्वार्थत्वं

हादिविशयभूतार्थांतर विशेषनिश्चयाभावात् अथोक्तप्रकार एवपूर्वार्थः किमन्योप्यस्तीत्याह दृष्टोपि

तादृगिति दृष्टोपि गृहीतोपिध्यामलिताकारतयायन्निर्णेतुं नशक्यते तदपिकस्वपूर्वमितिव्यपा

समारोपाव्यवच्छेदात् ननुभवतुनामापूर्वार्थव्यवसायात्मकत्वं विज्ञानस्यव्यवसायंतुनविद्मइत्यत्राह ॥ ठः

प्रतिभासनं स्वस्यव्यवसाय इति स्वस्योन्मुखता स्वोन्मुखतातया स्वानुभवनतया प्रतिभासनं

ः ठ अत्रदृष्टांतमाह अर्थस्येवतदुन्मुखतयेति तच्छब्देनार्थोभिधीयते यथार्थोन्मुखतयाप्रति

व्यवसायस्तथा स्वोन्मुखतया प्रतिभासनं स्वस्यव्यवसायोभवति अत्रोल्लेखमाह घटमहमात्मना वेद्मीति ननु

मर्थमेवाध्यवस्यति नत्वात्मानं मात्मानं लभ्यत्वं वेतिकेचित् कर्तृकर्मणोरेव प्रतीतिरित्यपरे कर्तृकर्म

भवतीति न चैतदसिद्धं हितप्राप्त्यहितपरिहाराय च प्रमाणमन्वेश्यंति प्रेक्षापूर्वकारिणो न व्यसनितया सकलप्रमाण

वादिभिर्मत्वात् अत्राह सौगतः भवतु नाम संन्निकर्षादिव्यवच्छेदेन तस्यैव प्रामाण्यं न तदस्माभिर्निषिध्यते ननु व्य

वसायात्मकमेवेत्यत्र न युक्तिमुत्पश्यामः अनुमानस्यैव व्यवसायात्मनः प्रामाण्याभ्युपगमात् प्रत्यक्षस्य तु निर्विकल्प

त्वेप्यविसंवादकत्वेन प्रामाण्योपपत्तेः इति तत्राह तन्निश्चयात्मकं समारोपविरुद्धत्वादनुमानवदिति तत्प्रमाण

त्वेनाभ्युगतं वाग्ज्ञानमिति धर्मिनिर्देशः व्यवसायात्मकमिति साध्यं समारोपविरुद्धत्वादिति हेतुः अनुमानवदिति दृ

ष्टांत इति अयमभिप्रायः संशयविपर्यासानध्यवसायस्वभावसमारोपविरोधग्रहणलक्षणव्यवसायात्मकत्वे सत्येवा

विसंवादित्वमुपपद्यते अविसंवादित्वे च प्रमाणत्वमिति चतुर्विधस्यापि प्रत्यक्षस्य प्रमाणत्वमभ्युपगच्छता समारो

पविरोधग्रहणलक्षणं निश्चयात्मकमभ्युगंतव्यं ननु तथापि समारोपविरोधिव्यवसायात्मकत्वयोः समाना

र्थत्वात्कथं साध्यसाधनभाव इति न मंतव्यं ज्ञानस्वभावतया तयोरभेदेपि व्याप्यव्यापकत्वधर्माधारतया भेदोपपत्तेः शिंशपात्व

सिद्धो हेतुः स्यादिति चेन्न विशेषं धर्मिणं कृत्वा सामान्यहेतुं ब्रुवतो दोषाभावात् एतेनापक्षधर्मत्वमपि प्र
युक्तं सामान्यस्याशेषविशेषनिष्ठत्वात् न च पक्षधर्मताबलेन हेतोर्गमकत्वमपि त्वन्यथानुपपत्तिबलेनेति
सा चात्र नियमवती विपक्षे बाधकप्रमाणबलान्निश्चितैव एतेन विरुद्धत्वमनैकान्तिकत्वं च निरस्तं बोद्धव्यं वि
रुद्धस्य व्यभिचारिणश्चाविनाभावनिश्चयलक्षणत्वायोगात् तौ भवत्येव साध्यसिद्धिरिति केवलव्यतिरेकिणोऽपि
हेतोर्गमकत्वात् सात्मकं जीवच्छरीरं प्राणादिमत्त्वादित्यादिवत् अथेदानीं श्लोकप्रमाणलक्षणस्य ज्ञानमिति
विशेषणं समर्थयमानः प्राह हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणं ततो ज्ञानमेव तत् हितं सुखं कारणं च
ःखं तत्कारणं च हितं वाहितं च हिताहिते तयोः प्राप्तिश्च परिहारश्च तत्र समर्थं हि शब्दो यस्मादर्थे तेनायं
मर्थः संपादितो भवति यस्माद्धितप्राप्तिपरिहारसमर्थं प्रमाणं ततः तत्प्रमाणत्वेनाभ्युपगतं वस्तु ज्ञानमेव भवितुमर्हति
ज्ञानरूपं संनिकर्षादि तथा च प्रयोगः प्रमाणं ज्ञानमेव हिताहितप्राप्तिपरिहारसमर्थं चविवापन्नं तस्माद्ज्ञान

त्यक्षस्य निर्विकल्पस्य प्रत्यक्षत्वेन प्रामाण्यं सौगतैः परिकल्पितं तन्निरासार्थं व्यवसायात्मकग्रहणं तथा बहिरर्थाप

ह्नोतॄणां विज्ञानाद्वैतवादिनां पुरुषाद्वैतवादिनां पश्यतोहराणां शून्यैकांतवादिनां च विपर्यासव्युदासार्थमर्थग्रह

णं अस्य चापूर्वविशेषणं गृहीतग्राहिधारावाहिज्ञानस्य प्रमाणतायाः परिहारार्थमुक्तं तथा परोक्षज्ञानवादिनां

मीमांसकानामस्वसंवेदनज्ञानवादिनामान्तरप्रत्यक्षज्ञानवादिनां यौगानां च मतमपाकर्तुं स्वपदोपादानमित्यव्या

प्त्यसंभवदोषपरिहारात् सुव्यवस्थितमेव प्रमाणलक्षणं अस्य च प्रमाणस्य यथोक्तलक्षणत्वे साध्ये प्रमाणत्वा

दिति हेतुः अत्रैव द्रष्टव्यः प्रमांतस्यापि हेतुपरत्वेन निर्देशोपपत्तेः प्रत्यक्षं विशदं ज्ञानमित्यादिवत् तथाहि

प्रमाणं स्वापूर्वार्थव्यवसायात्मकं ज्ञानं भवति प्रमाणत्वात् यत्तु स्वापूर्वार्थव्यवसायात्मकं ज्ञानं न भवति न तत्प्रमाणं

यथा संशयादिर्घटादिश्च प्रमाणं च विवादापन्नं तस्मात्स्वापूर्वार्थव्यवसायात्मकं ज्ञानमेव भवतीति न च प्रमाणत्वमसि

द्धं सर्वप्रमाणस्वरूपवादिनां प्रमाणसामान्ये विप्रतिपत्त्यभावात् अन्यथा स्वेष्टानिष्टसाधनदूषणायोगात् अथध

दिवाकरस्य नमस्कारपरतामिधीयते अर्थस्यहेयोपादेयलक्षणसंसिद्धिर्ज्ञप्तिर्भवति कस्मात्प्रमाणात्

तुष्टयस्वरूपांतरंगलक्षणादिस्वभावाबहिरंगलक्षणाच लक्ष्मीमाइत्युच्यते अणानमाणः शब्दः माचआ

णाश्च माणो प्रकृष्टो माणो यस्या सो प्रमाणः हरिहराद्यसंभवि विभूतियुक्ते दृष्टेष्टाविरुद्धवाक्भगवान्हन्नि

भिधीयत इत्यसाधारणगुणोपदर्शनमेव भगवतः संस्तवनमभिधीयते तस्मात्प्रमाणादवधिभूतादर्थसिं

र्भवति तदाभासाच्च हरिहरादेरर्थसिद्धिर्नभवति इति हेतोः सर्वज्ञतदाभासयोर्लक्ष्मलक्षणमहं वक्ष्ये

विशेषेत्यादिना अथेदानीमुपक्षिप्तप्रमाणतत्वस्वरूपसंख्याविशयफललक्षणासु चतसृषु विप्रति

पु मध्ये स्वरूपविप्रतिपत्तिनिराकरणार्थमाह स्वापूर्वार्थव्यवसायात्मिकं ज्ञानं प्रमाणमिति प्रकर्शेन संश

व्यवच्छेदेन मीयते परिछिद्यते वस्तुतत्वं येन तत्प्रमाणं तस्य च ज्ञानमिति विशेषणमज्ञानरूपस्य संन्निक

नैय्यायिकादिपरिकल्पितस्य प्रमाणत्वव्यवच्छेदार्थमुक्तं तथा ज्ञानस्यापि स्वसंवेदनेन्द्रियमनोयोगिक

वदिति सम्यक्प्रमाणतदाभासपदोपादानात् तदभिधेयमभिहितमेव प्रमाणतदाभासयोरनेन प्रकरणेनाधायतसं
बंधश्चार्थात् प्रकरणतदभिधेययोर्वाच्यवाचकभावलक्षणः प्रतीयत एव तथा प्रयोजनं चोक्तलक्षणं मादि
लक्षणे श्लोकेनैव संलक्ष्यते प्रयोजनं हि द्विधा भिद्यते साक्षात् परं पर्येति तत्र साक्षात् प्रयोजनं वक्ष्यते नाभिधी
यते शास्त्रव्युत्पन्नैरेव विनेयैः। न्वे [illegible]र्णात् पारंपर्येणानु प्रयोजनमर्थसंसिद्धिरित्यनेनोच्यते शास्त्रव्युत्पन्नानंतर
भावित्वात् अर्थसंसिद्धेरिति ननु निःशेषविघ्नोपशमनाय इष्टदेवतानमस्कारः शास्त्रकृता कथं न कृत इति न वा
च्यं तस्य मनःकायाभ्यामपि संभवात् अथवा वाचनिकोपि नमस्कारोनेनैवादिवाक्येनाभिहितो वेदितव्यः
केषांचिद्वाक्यानामुभयार्थप्रतिपादनपरत्वेनापि दृश्यमानत्वात् यथा श्वेतो धावति इत्युक्ते श्वा इतो धा
वति श्वेतगुणयुक्तो धावति इत्यर्थद्वयप्रतीतिः तत्रागत्वमसिद्धं सर्वप्रमाणस्वरूपवादिनां प्रमाणसा
मान्ये विप्रतिपत्त्यभावात् अन्यथा स्वेष्टानिष्टसाधनदूषणायोगात् अथ धर्मिण एव हेतुत्वे प्रतिज्ञार्थैक

लाघवं मतिकृत मिह गृह्यते न परिमाणकृतं· नापि कालकृतं तस्य प्रति पाद्यत्व व्यभिचारात् कयोस्तल्लघुस्मतयोः

प्रमाणतदाभासयोः कुतः यतोर्थस्य परिच्छेद्यस्य संसिद्धिः संप्राप्तिर्वाभवति कस्मात् प्रमाणात् नकेवलं

संसिद्धिर्भवति विपर्ययो भवति अर्थसंसिद्ध्यभावो भवति कस्मात्तदाभावात् इतिशब्दो हेत्वर्थे इतिहे

तोः अय मत्र समुदायार्थः यतः कारणात् प्रमाणादर्थसंसिद्धिर्भवति· यस्माच्च तदाभासाद्विपर्ययो भवति

हेतोस्तयो प्रमाण तदाभासयो लक्ष्म लक्षण महं वक्ष्ये ननु संबंधाभिधेयशक्यानुष्ठानेष्ट प्रयोजनवंति

शास्त्राणि भवंति तत्रास्य प्रकरणस्यैवन् भिधेयं संबंधो वा नाभिधीयते। नतावदस्यो पादेयत्वं भवितुमर्हति

वंध्यासुतो याति इत्यादि वाक्यवत् दशदाडिमादि वाक्यवच्च तथा शक्यानुष्ठानेष्ट प्रयोजनमपि शास्त्रादाव

यवक्तव्यमेव अशक्यानुष्ठानुष्ठानस्य इष्ट प्रयोजनस्य सर्वज्वर हर तक्षकचूडारत्नालंकारोपदेशस्येव प्रेक्ष्म

नादरणीयत्वात्। तथा शक्यानुष्ठानस्याप्य निष्टप्रयोजनस्य विद्वद्भिरवधीरणात् मातृविवाहादिप्रदर्शकवाक्य

॥श्रीवीतरागायनमः॥ॐनमः सिद्धेभ्यः॥ नतामरशिरोरत्नप्रभाप्रोतनखत्विषे॥ नमो जिनाय दुर्वारमारवीरमदच्छि
दे॥१॥ अकलंकवचोंभोधेरुद्दध्रे येन धीमता॥ न्यायविद्यामृतं तस्मै नमो माणिक्यनंदिने॥२॥ प्रभेंदुवचनोदारचं
द्रिकाप्रसरे सति॥ मादृशाः क्व नु गण्यन्ते ज्योतिरिंगणसन्निभाः॥३॥ तथापि तद्वचोपूर्वरचनारुचिरं सतां॥ चेतोहरं
भृतं यद्वन्नद्या नवघटे जलम्॥४॥ वैजेयप्रियपुत्रस्य हीरपस्योपरोधतः॥ शांतिषेणार्थमारब्धा परीक्षामुखपंचि
का॥५॥ श्रीमन्न्यायावारपारस्यामेयप्रमेयरत्नसारस्यावगाहनमव्युत्पन्नैः कर्तुं न पार्यते॥ इति तदवगाहनाय पोतप्राय
मिदं प्रकरणमाचार्यः प्राह॥ तत्प्रकरणस्य च संबंधादित्रयापरिज्ञाने प्रेक्षावतां प्रवृत्तिर्न स्यादिति तत्त्रयानुवादपुरस्सरं
वस्तुनिर्देशपरं प्रतिज्ञाश्लोकमाह॥ प्रमाणादर्थसंसिद्धिस्तदाभासाद्विपर्ययः॥ इति वक्ष्ये तयोर्लक्ष्म सिद्धमल्पं ल
घीयसः॥ इत्यस्यार्थः अहं वक्ष्ये प्रतिपादयिष्ये। किं तत् लक्ष्म लक्षणं। किं विशिष्टं लक्ष्म सिद्धं पूर्वाचार्यप्रसिद्ध
त्वात्। पुनरपि कथंभूतमल्पमल्पग्रन्थवाच्यत्वात् ग्रंथतोल्पमर्थतस्तु महदित्यर्थः। कान् लघीयसो विनेयानुद्दिश्य

तत् किं भवतः ऽभिमतं नेत्याह यद्यपि कथंचिद्व्यपदेशादिभेदहेत्वपेक्षया द्रव्यादन्यत्वं तथापि तदव्यतिरेकात्तत्परिणामाच्च नान्यो यद्येवं म उच्यतां कः परिणाम इति तन्निश्चयार्थमिदमु च्यते धर्म्मादीनि द्रव्याणि येनात्मना भवंति तद्भावः तत्त्वं परिणाम इति आख्यायते स द्विविधो नादिरादिमांश्च तत्रानादिर्धर्म्मादीनां गत्युपग्रहादिः सामान्यापेक्षया म आदिमांश्च भवति वि शेषापेक्षया ॥ ४ ॥ इति तत्त्वार्थवृत्तौ सर्वार्थसिद्धिसंज्ञिकायां पंचमो ध्यायः समाप्तः ॥ ५ ॥

लोकंव्याप्यावस्थिताः उक्तंचलोयाकासप्रदेसेएक्केजेविदाहुएक्केक्कारयणाणंरासीविवत्तेकाला
णूमणोदव्वरूपादिगुणविरहादमूर्तोवर्तनालक्षणस्यमुख्यकालस्यप्रमाणमुक्तंपरिणामादिग
म्यस्यव्यवहारकालस्यकिंप्रमाणमितिअतइदमुच्यते॥सोनंतसमयः॥सांप्रतिकस्यैकसमयि
कत्वेप्यतीताअनागताश्चसमयाअनंतातीताः।इतिकृत्वाअनंतसमयइत्युच्यते अथवामुख्यस्यै
वकालस्यप्रमाणावधारणार्थमिदमुच्यते अनंतपर्यायवर्तनाहेतुत्वादेकोपिका[illegible]लाणुरनंतइ
त्युपचर्यते समयः पुनः परमनिरुद्धः कालांशस्तत्प्रचयविशेषआवलिकादिरवगंतव्यः आहगु
णपर्ययवद्द्रव्यंइत्युक्तंतत्रकेगुणाइत्यत्रोच्यते॥७॥द्रव्याश्रयानिर्गुणागुणाः॥द्रव्यमाश्रयोयेषांते
द्रव्याश्रयाणिः कोनागुणेभ्यो निर्गुणाएवंउभयलक्षणोपेता इतिनिर्गुणाइतिविशेषणंद्व्यणुका
दिनिवृत्यर्थंतान्यपिहिकारणभूतपरमाणुद्रव्याश्रयाणिगुणवंतितत्तस्मान्निर्गुणाइतिविशेषणा
त्तानिनिवर्तितानिभवंति ननुचपर्यायाअपिघटसंस्थानादयोद्रव्याश्रयानिर्गुणाश्चतेषाम
पिगुणत्वंप्राप्नोतिःद्रव्याश्रयाइतिवचनान्नित्यंद्रव्यमाश्रित्यवर्तंते येतेगुणाइतिविशेषणत्वात्
पर्यायाश्चनिवर्तिताभवंति तेहिकादाचित्काइतिअसकृत्परिणामशब्दउक्तः तस्यकोर्थइ
तिप्रश्नेउत्तरमाह ७ तद्भावपरिणामः अथवागुणाद्रव्याद्अर्थांतरभूताइतिकेषांचिद्दर्शनं

त् व्ययोदयौ परप्रत्ययौ ऽगुरुलघुगुणवृद्धिहान्यपेक्षया स्वप्रत्ययौ च तथा गुणा ऽपि कालस्य सा
धारणासाधारणरूपाः संति तत्रासाधारणा वर्तनाहेतुत्वं साधारणाश्चाचेतनत्वामूर्तत्वासूक्ष्म
त्वागुरुलघुत्वादयः पर्यायाश्च व्ययोत्पादलक्षणा योज्याः तस्मात् द्विप्रकारलक्षणोपेतत्वात्॥
ऽआकाशादिवत् कालस्य द्रव्यत्वं सिद्धं तस्यास्तित्वलिंगं धर्म्मादिवत् व्याख्यातं वर्तनालक्षणः का
लइति ननु किमर्थमयं कालः पृथगुच्यते ननु यत्रैव धर्म्मादयः तत्रैवायमपि वक्तव्यः ऽअजीव
काया धर्म्माकाशकाल इति पुद्गला इति नैवं शंक्यं तत्रोपदेशे सति कायत्वमस्य स्यात् नेष्यते च मु
ख्योपचारप्रदेशप्रचयकल्पनाभावात् धर्म्मादीनां तावत् मुख्यप्रदेशप्रचय उक्तः ऽअसंख्येयाः प्रदे
शा इत्येवमादिना ऽअणोरप्येकदेशस्य पूर्वोत्तरभावप्रज्ञापननयापेक्षया उपचारकल्पनया प्रदेश
प्रचय उक्तः कालस्य च पुनः द्विधापि प्रदेशप्रचयकल्पना नास्तीत्यकायत्वं ऽअपि च तत्र पाठे निःक्रि
याणि चेत्यत्र धर्म्मादीनां ऽआकाशांतानां निःक्रियत्वे प्रतिपादिते इतरेषां जीवपुद्गलानां सक्रियत्व
प्राप्तिस्तावत् कालस्यापि सक्रियत्वं स्यात् ऽअथाकाशात् प्राक् काल उद्दिश्यते ऽआ ऽआकाशादेकद्रव्या
णीति एकद्रव्यत्वमस्य स्यात् तस्मात् पृथगिह कालोपदेशः क्रियते ऽअनेकद्रव्यत्वे सति किमस्य प्र
माणं लोकाकाशस्य यावंतः प्रदेशाः तावंतः कालाणवः निःक्रिया एकैकाकाशःप्रदेशे एकैकवृत्त्या

व्यसंकरप्रसंगःस्यात् तद्यथाजीवःपुद्गलादिभ्यःज्ञानादिगुणैर्विशिष्यतेपुद्गलादयश्चरूपादिभिः
ततश्चाविशेषेसंकरस्यात् ततःसामान्यापेक्षयान्वयिनोज्ञानादयोजीवस्यगुणाः पुद्गलादीनांचरू
पादयःतेषांविकाराद्विशेषात्मनाभिद्यमानाःपर्यायःघटज्ञानंपटज्ञानंक्रोधोमानःवर्णोगंधः तीव्रो
मंदइत्येवमादयःतेभ्यःअन्यत्वंकथंचिदापद्यमानःसमुदायोद्रव्यव्यपदेशभाक् यदिहिसर्वथा
समुदायोऽनर्थांतरभूतमेवस्यात् सर्वाभावःस्यात् तद्यथापरस्परविलक्षणानांसमुदायेसतिए
कानर्थांतरभावात्समुदायस्यसर्वाभावःपरस्परतोर्थांतरभूतत्वाद्यदिदंरूपंतस्मादर्थांतरभूतारसा
दयःततःसमुदायोऽनर्थांतरभूतःयश्चरसादिभ्योर्थांतरभूतात्रूपादनर्थांतरभूतःसमुदायःसक
थंरसादिभ्योर्थांतरभूतोनभवेत् ततश्चरूपमात्रंसमुदायःप्रशक्तःनचैकरूपंसमुदायोभवितु
मर्हति ततःसमुदयाभावाच्चतदनर्थांतरभूतानांसमुदायिनामप्यभावइतिसर्वाभावःएवंरसादिष्व
पियोज्यं तस्मात्समुदायमिच्छताकथंचिदर्थांतरभावःएषितव्यः उक्तानांद्रव्याणांलक्षणनिर्देशात्
तद्विषयएवद्रव्याध्यवसायेप्रशक्तेअनुक्तद्रव्यसंसूचनार्थमिदमाह॥छ॥कालश्च॥ किंद्रव्यमिति
वाक्यशेषःकुतस्तल्लक्षणोपेतत्वात्तद्द्विविधलक्षणमुक्तंउत्पादव्ययध्रौव्ययुक्तंसत्गुणपर्ययव
द्द्रव्यमितिचतदुभलक्षणंकालस्यविद्यते तद्यथा ध्रौव्यंतावत्कालस्यस्वप्रत्ययंस्वभावव्यवस्थाना

योवंधोव्याख्यातः नसमगुणविषयइत्यत आहः॥छ॥वंधेधिकौपारिणामिकौच॥ अधिका रा
द्गुणशब्दःसंबध्यते अधिकगुणावधिकाविति भावांतरोपादानंपारिणामिकत्वंक्लिन्नगुडव्रत्
यथाक्लिन्नोगुडोधिकमधुररसः पतितानांरेण्वादीनांस्वगुणोपादनात्पारिणामिकः तथा अ
न्योप्यधिकगुणः अल्पीयसः पारिणामिकइतिकृत्वाद्विगुणादिस्निग्धरूक्षस्य चतुर्गुणादिस्नि
ग्धरूक्षःपारिणामिकोभवति ततःपूर्वावस्थाप्रच्यवनपूर्वकंतार्तीयीकमवस्थांतरंप्रादुर्भवतिइत्येक
त्वमुपपद्यते इतरथाहिशुक्लकृष्णतंतुवत् संयोगेसत्यपि अपरिणामिकत्वात्सर्वंविविक्तरू
पेणैवावतिष्ठते उक्तेनपारिणामिकत्वेनविधिनावंधेपुनःसतिज्ञानावरणादीनांकर्मणांत्रिंश
त्सागरोपमकोटीकोट्यादिस्थितिरुपपन्नाभवति उत्पादव्ययध्रौव्ययुक्तंसदितिद्रव्यलक्षणमुक्तं
पुनरपरेणप्रकारेणद्रव्यलक्षणप्रतिपत्त्यर्थमाह॥छ॥गुणपर्ययवद्द्रव्यं॥गुणाश्चपर्ययाश्चगु
णपर्ययाः तेस्यसंतीतिगुणपर्ययवद्द्रव्यं अत्रमतोरुत्पत्तावुक्तएवसमाधिः कथंचिद्भेदाभेदो
पपत्तेरिति केगुणाः केपर्ययाः अन्वयिनोगुणाव्यतिरेकिणःपर्यायाउभयैरुपेतंद्रव्यमिति उक्तं
च गुणइतिदव्वविधाणंदव्वविकारोछपज्जऊभणिदो तेहिं अणूणंदव्वं अजुदयसिद्धंहवदिनिच्च
मिदं एतदुक्तंभवति द्रव्यंद्रव्यांतराद्येनविशिष्यतेसगुणस्तेनहितद्द्रव्यंविधीयते असतितस्मिंद्र

वं सदृशग्रहणं किमर्थं गुणवैषम्ये वंधप्रतिपत्यर्थं सदृशग्रहणं क्रियते ऽतो विषमगुणानां तु
ल्यजातीयानामतुल्यजातीयानां च ऽनियमेन वंधप्रशक्तौ विशिष्टार्थसंप्रत्ययार्थमिदमुच्यते ॥ ७ ॥
द्व्यधिकादिगुणानां तु ॥ द्वाभ्यां गुणाभ्यामधिको द्व्यधिकः कः पुनरसौ चतुर्गुणः ऽआदिशब्दः प्रकारार्थः
कः पुनरसौ प्रकारार्थः द्व्यधिकतातेन त्रिगुणपंचगुणादीनां संप्रत्ययो भवति तेन द्व्यधिकादिगुणानां
तुल्यजातीयानामतुल्यजातीयानां च वंध उक्तो भवति नेतरेषां तद्यथा द्विगुणस्निग्धस्य परमाणोः एक
गुणस्निग्धेन द्विगुणस्निग्धेन त्रिगुणस्निग्धेन वा नास्ति वंधः चतुर्गुणस्निग्धेन पुनरस्ति वंधः तस्यैव पु
नः द्विगुणस्निग्धस्य पंचगुणस्निग्धेन षट्सप्ताष्टसंख्येयासंख्येयानंतगुणस्निग्धेन न वंधो
स्ति एवं त्रिगुणस्निग्धस्य पंचगुणस्निग्धेन वंधोस्ति शेषैः पूर्वोत्तरैर्न भवति चतुर्गुणस्निग्धस्य षड्गु
णस्निग्धेन ऽस्ति वंधः शेषैः पूर्वोत्तरैर्नास्ति एवं शेषेष्वपि योज्यः तथा द्विगुणरूक्षस्य एकद्वित्रिगु
णरूक्षैर्नास्ति वंधः चतुर्गुणरूक्षेण त्वस्ति वंधः तस्यैव द्विगुणरूक्षस्य पंचगुणरूक्षादिभिः उत्तरैर्ना
स्ति वंधः एवं त्रिगुणरूक्षादीनामपि द्विगुणाधिकैर्वंधो योज्यः एवं भिन्नजातीयेष्वपि योज्यः उक्तं च
णिद्धस्स णिद्धेण दुराधियेण लुक्खस्स लुक्खेण दुराधिकेण णिद्धस्स लुक्खेण उवेदि वंधो जहण्णवज्जो वि
समे समे वा तुसद्दो विशेषणार्थः प्रतिषेधं व्यावर्तयति वंधं च विशेषयति किमर्थमधिकगुणविष

ऽणवोः परस्परश्लेषलक्षणे बंधे सति द्व्यणुकस्कंधो भवति एवं संख्येयासंख्येयानंतप्रदेशस्कंधो
योज्यः तत्र स्नेहगुण एकद्वित्रिचतुःसंख्येयासंख्येयानंतविकल्पः तथा रूक्षगुणोपि तद्गुणाः परमा
णवः संति यथा तोयाजागोमहिषी उष्ट्री क्षीरघृतेषु स्निग्धगुणः प्रकर्षाप्रकर्षेण प्रवर्तते पांशुक
णिकाशर्करादिषु च रूक्षगुणो दृष्टः तथा परमाणुष्वपि स्निग्धरूक्षगुणयोर्वृत्तिः प्रकर्षाप्रकर्षे
णानुमीयते स्निग्धरूक्षगुणनिमित्ते बंधेऽविशेषेण प्रसक्तेऽनिष्टगुणनिवृत्त्यर्थमाह ॥छ॥
न जघन्यगुणानां ॥ जघन्यो निकृष्टो गुणो भागः जघन्यो गुणो येषां ते जघन्यगुणाः तेषां जघन्यगुणा
नां नास्ति बंधः तद्यथा एकगुणस्निग्धस्य एकगुणस्निग्धेन द्व्यादिसंख्येयासंख्येयानंतगुणस्नि
ग्धेन वा नास्ति बंधः तस्यैकगुणस्निग्धस्य एकगुणरूक्षेण द्व्यादिसंख्येयासंख्येयानंतगुणरू
क्षेण वा नास्ति बंधः तथा एकगुणरूक्षस्यापि योज्यमिति एतौ जघन्यगुणस्निग्धरूक्षौ वर्जयित्वा
ऽन्येषां स्निग्धानां रूक्षाणां च परस्परेण बंधो भवतीत्यविशेषेण प्रसंगे तत्रापि प्रतिषेधविषय
ख्यापनार्थमाह ॥छ॥ गुणसाम्ये सदृशानां ॥ सदृशग्रहणं तुल्यजातीयसंप्रत्ययार्थं गुणसाम्यग्रह
णं तु तुल्यभागसंप्रत्ययार्थं एतदुक्तं भवति द्विगुणस्निग्धानां द्विगुणरूक्षैः त्रिगुणस्निग्धानां त्रिगुणरू
क्षैः द्विगुणस्निग्धानां द्विगुणस्निग्धैः द्विगुणरूक्षाणां द्विगुणरूक्षैश्चेत्येवमादिषु नास्ति बंध इति यद्ये

तंप्रयोजनाभावात् सतोप्यविवक्षाभवतीत्युपसर्ज्जनीभूतमनर्पितंइत्युच्यते अर्पितंच अनर्पितं
च अर्पितानर्पिते ताभ्यांसिद्धिः तस्यार्पितानर्पितसिद्धेर्नास्तिविरोधः तद्यथा एकस्यदेवदत्तस्य
पितापुत्रोभ्राताभागिनेयः इतिएवमादयः संबंधाजनकत्वजन्यत्वादिनिमित्ताः नविरुध्यंते अर्प्प
णाभेदात् पुत्रापेक्षयापितापित्रपेक्षयापुत्रइत्येवमादितथाद्रव्यमपिसामान्यार्पणयानित्यंवि
शेषार्पणयानित्यमितिनास्तिविरोधः तौचसामान्यविशेषौकथंचिद्भेदाभेदाभ्यांव्यवहारहेतूभ
वतः अत्राहसतोनेकनयव्यवहारतंत्रत्वात् उपपन्नाभेदसंघातेभ्यः सतांस्कंधानामेवोत्पत्तिरि
दंतुसंदिग्धः किंसंघातः संयोगादेवद्व्यणुकादिलक्षणोभवतिउतकश्चिद्विशेषोवधार्यतइत्युच्य
तेसतिसंयोगेबंधादेकत्वपरिणामकात् संघातान्निष्पद्यतेपर्यायमिदमुच्यते कुतोनुखलुपुद्ग
लजात्यपरित्यागेसंयोगेचभवतिकेषांचिद्बंधोप्यन्येषांचनेत्युच्यते यस्मात्तेषांपुद्गलानांविशेषे
ष्वनंतपर्यायाणांपरस्परविलक्षणपरिणामाहितसामर्थ्यात् भवन्नितीतः ॥ स्निग्धरूक्षत्वाद्बंधः ॥ बाह्या
भ्यंतरकारणवशात् स्नेहपर्यायाविर्भावात् स्निग्धतेस्मिन्नितिस्निग्धः तथारूक्षणाद्रूक्षः स्निग्धश्चरू
क्षश्चस्निग्धरूक्षौतयोर्भावः स्निग्धरूक्षत्वं स्निग्धत्वंचिक्कणगुणलक्षणपर्यायः तद्विपरीतपरिणा
मोरूक्षत्वं स्निग्धत्वरूक्षत्वादितिहेतुनिर्देशः तत्कृतोबंधोद्व्यणुकादिपरिणामः द्वयोःस्निग्धरूक्षयोः

त्यर्थः उत्पादव्ययध्रौव्ययुक्तं सत् उत्पादव्ययध्रौव्यात्मकमिति यावत् एतदुक्तं भवति उत्पादादी
नि त्रीणि द्रव्यस्य लक्षणानि द्रव्यं लक्ष्यं तत्र पर्यायार्थिकनयापेक्षया परस्परतो द्रव्याच्चार्थांत
रभावः द्रव्यार्थिकनयापेक्षया व्यतिरेकेणानुपलब्धेरनर्थांतरभाव इति लक्ष्यलक्षणभावा
भावसिद्धिः आह नित्यावस्थितान्यरूपाणीत्युक्तं तत्र न ज्ञायते किं नित्यमित्यत आह ॥छ॥
तद्भावाव्ययं नित्यं ॥ तद्भाव इत्युच्यते कस्तद्भावः प्रत्यभिज्ञानहेतुता तदेवेदमिति स्मरणं प्रत्यभि
ज्ञानं तदकस्मान्न भवतीति योस्य हेतुः स तद्भावः भवनं भावः तस्य भावस्तद्भावः येनात्मना प्राग्दृष्टं
वस्तु तेनैवात्मना पुनरपि भावात् तदेवेदमिति प्रत्यभिज्ञायते यद्यत्यंतनिरोधोभिनवप्रादुर्भाव
मात्रमेव वा स्यात् ततः स्मरणानुपपत्तिः तदधीनो लोकसंव्यवहारो विरुध्यते ततस्तद्भावेना
व्ययं नित्यमिति निश्चीयते तत्कथंचिद्वेदितव्यं सर्वथा नित्यत्वे अन्यथाभावाभावात् संसारः त
द्विनिवृत्तिकारणप्रक्रियाविरोधः स्यात् ननु इदमेव विरुद्धं तदेव नित्यं तदेवानित्यमिति यदि नित्यं व्य
योदयाभावात् अनित्यताव्याघातः अथानित्यमेव स्थित्यभावात् नित्यताव्याघात इति नैतद्विरुद्धं
कुतः ॥छ॥ अर्पितानर्पितसिद्धेः ॥ अनेकात्मकस्य वस्तुनः प्रयोजनवशाद्यस्य कस्यचित्
धर्मस्य विवक्षया प्रापितप्राधान्यं अर्पितमुपनीतमभ्युपगतमिति यावत् तद्विपरीतमनर्पि

संघा-
पिकश्चिच्चाक्षुषः कश्चिदचाक्षुषः तत्र योऽचाक्षुषः स कथं चाक्षुषो भवतीति चेदुच्यते भेदसंघाताभ्यां
ताभ्यां चाक्षुषः न भेदादिति कात्रोपपत्तिरिति चेद्ब्रूमः सूक्ष्मपरिणामस्य स्कंधस्य भेदे सौक्ष्म्याप-
रित्यागादचाक्षुषत्वमेव सौक्ष्मपरिणात पुनरपरः सत्येपि तद्भेदे न्यसंघातांतरसंयोगात् सौक्ष्म्य-
परिणामोपरमे स्थौल्योत्पत्तौ चाक्षुषो भवति आह धर्म्मादीनां द्रव्याणां विशेषलक्षणान्युक्तानि
सामान्यलक्षणं नोक्तं तद्वक्तव्यं किं सदित्यत आह॥२९॥ सद्द्रव्यलक्षणमिति॥ यत्सत्तद्द्रव्यमित्यर्थः
यद्येवं तदेव तावद्वक्तव्यं किं सदित्यत आह॥३०॥ उत्पादव्ययध्रौव्ययुक्तं सत्॥ चेतनस्याचेतनस्य वा
द्रव्यस्य स्वां जातिमजहतः निमित्तवशाद्भावांतरावाप्ति उत्पादनमुत्पादः मृत्पिंडस्य घटपर्यायवत्
तथा पूर्वभावविगमनं व्ययः यथा घटोत्पत्तौ पिंडाकृतेः अनादिपरिणामिकस्वभावेन व्ययोद-
याभावात् ध्रुवति स्थिरीभवति इति ध्रुवः ध्रुवस्य भावः कर्म्म वा ध्रौव्यं यथा मृत्पिंडघटाद्यवस्था-
सु मृदाद्यन्वयात् तैरुत्पादव्ययध्रौव्यैर्युक्तं उत्पादव्ययध्रौव्ययुक्तं सदिति आह भेदे सति युक्तशब्दो
दृष्टः दंडेन युक्तो देवदत्त इति तथा सति तेषां त्रयाणां युक्तस्य द्रव्यस्य च अभावः प्राप्नोति नैष दोषः
अभेदेपि कथंचिद्भेदनयापेक्षया युक्तशब्दो दृष्टः यथा सारयुक्तः स्तंभ इति तथा सति तेषां
मविनाभावात् सद्व्यपदेशो युक्तः समाधिवचनो वा युक्तशब्दः युक्तः समाहितः तदात्मक इ-

॰आह किमेषां पुद्गलानां ॰अणुस्कंधलक्षणः परिणामो नादिरुत ॰आदिमानित्युच्यते स खलू
त्पत्तिमत्त्वादादिमान् प्रतिज्ञायते यद्येवं तस्मादभिधीयतां कस्मान्निमित्तादुत्पद्यंत इति तत्र स्कंधा
नां तावदुत्पत्तिहेतुप्रतिपादनार्थमुच्यते॥२६॥ भेदसंघातेभ्य उत्पद्यंते॥ संघातानां द्वितयनिमि
त्तवशाद्विदारणं भेदः पृथग्भूतानां एकत्वापत्तिः संघातः ननु च द्वित्वात् द्विवचनेन भवितव्यं ब
हुवचननिर्देशः तृतीयसंग्रहार्थः भेदात् संघातात् भेदसंघाताभ्यां च उत्पद्यंत इति तद्यथा द्व
योः परमाण्वोः संघातात् द्विप्रदेशस्कंध उत्पद्यते द्विप्रदेशस्याणोश्च त्रयाणां वा ॰अणूनां संघा
तात् त्रिप्रदेशः द्वयोः द्विप्रदेशयोस्त्रिप्रदेशस्याणोश्च चतुर्णां वाणूनां संघाताच्चतुः प्रदेश एवं संख्ये
यसंख्येयानंतानां ॰अनंतानंतानां च संघातात्तावत्प्रदेशः एषामेव भेदात् द्विप्रदेशपर्यंताः स्कंधा उ
त्पद्यंते एवं भेदसंघाताभ्यामेकसमयिकाभ्यां द्विप्रदेशादयः स्कंधा उत्पद्यंते ॰अन्यतो भेदेनान्यस्य सं
घातेनेति एवं स्कंधानामुत्पत्तिहेतुरुक्तः ॰अणोरुत्पत्तिहेतुप्रदर्शनार्थमाह॥२७॥ भेदादणुः॥
सिद्धे विधिरारभ्यमाणो नियमार्थो भवति ॰अणोरुत्पत्तिर्भेदादेव न संघातात् नापि भेदसंघाता
भ्यामिति ॰आह संघातादेव स्कंधानां ॰आत्मलाभे सिद्धे भेदसंघातग्रहणमनर्थकं इति तद्ग्रह
णप्रयोजनप्रतिपत्त्यर्थमाह॥२८॥ भेदसंघाताभ्यां चाक्षुषः॥ ॰अनंतानंतपरमाणुसमुदायनिष्पाद्यो

पिकश्चिच्चाक्षुषः कश्चिदचाक्षुषः तत्रयोचाक्षुषः सकथंचाक्षुषोभवतीतिचेदुच्यतेभेदसंघा
ताभ्यां चाक्षुषः नभेदादितिकातत्रोपपत्तिरितिचेद्ब्रूमः सूक्ष्मपरिणामस्यस्कंधस्यभेदेसौक्ष्म्याप
रित्यागादचाक्षुषत्वमेवसौक्ष्मपरिणातः पुनरपरः सत्यपितद्भेदेन्यसंघातांतरसंयोगात् सौक्ष्म्य
परिणामोपरमेस्थौल्योत्पत्तौचाक्षुषोभवति आह धर्म्मादीनांद्रव्याणांविशेषलक्षणान्युक्तानि
सामान्यलक्षणंनोक्तं तदुक्तव्यं किंसदित्यत आह ॥२९॥ सद्द्रव्यलक्षणमिति ॥ यत्सत्तद्द्रव्यमित्यर्थः
यद्येवंतदेवत्तावद्वक्तव्यं किंसदित्यत आह ॥३०॥ उत्पादव्ययध्रौव्ययुक्तंसत् ॥ चेतनस्याचेतनस्यवा
द्रव्यस्यस्वांजातिमजहतः निमित्तवशाद्भावांतरावाप्तिउत्पादनमुत्पादः मृत्पिंडस्यघटपर्यायवत्
तथापूर्वभावविगमनंव्ययः यथाघटोत्पत्तौपिंडाकृतेः अनादिपारिणामिकस्वभावेनव्ययोद
याभावात् ध्रुवति स्थिरीभवतीतिध्रुवः ध्रुवस्यभावः कर्म्मवाध्रौव्यं यथामृत्पिंडघटाद्यवस्था
सुमृदाद्यन्वयात् तैरुत्पादव्ययध्रौव्यैर्युक्तं उत्पादव्ययध्रौव्ययुक्तंसदिति आह भेदेसतियुक्तशब्दो
दृष्टः दंडेनयुक्तोदेवदत्तइतितथासतितेषांत्रयाणांयुक्तस्यद्रव्यस्यच अभावः प्राप्नोतिनैषदोषः
अभेदेपिकथंचिद्भेदनयापेक्षयायुक्तशब्दोदृष्टः यथासारयुक्तःस्तंभइतितथासतितेषां
मविनाभावात्सत् व्यपदेशोयुक्तः समाधिवचनोवायुक्तशब्दः युक्तःसमाहितः तदात्मकइ

त्रंवारसः सपंचविधः तिक्ताम्लकटुमधुरकषायभेदात् गंधध्यतेगंधनमात्रंवागंधः सद्वेधासुरभिर
सुरभिश्च वर्ण्यतेवर्णनमात्रंवावर्णः सपंचविधः कृष्णनीलपीतशुक्ललोहितभेदात् तएतेमूलभेदाः
प्रत्येकंसंख्येया संख्येयानंतभेदाश्चभवंति स्पर्शश्चरसश्चगंधश्चवर्णश्चस्पर्शरसगंधवर्णाः तए
तेषांसंतीतिस्पर्शरसगंधवर्णवंतइतिनित्ययोगेमतुनिर्देशः यथाक्षीरिणोन्यग्रोधाइतिननुचरू
पिणःपुद्गलाइत्यत्रपुद्गलानांरूपवत्त्वमुक्तं तदविनाभाविनश्चरसादयः तत्रैवपरिगृहीताइतिव्याख्या
तं तस्मातेनैवपुद्गलानांरूपादिमत्त्वसिद्धेःसूत्रमिदमनर्थकमितिनैषदोषः नित्यावस्थितान्यरूपा
णीत्यत्रधर्म्मादीनांनित्यत्वादिनिरूपणेनपुद्गलानामरूपत्त्वप्रसंगेतदयाकरणार्थंतदुक्तंइदंतुते
षांस्वरूपविशेषप्रतिपत्त्यर्थमुच्यतेऽवशिष्टपुद्गलविकारप्रतिपत्त्यर्थमिदमुच्यते ॥ शब्दबं
धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवंतश्च॥ शब्दोद्विविधोभाषालक्षणोविपरी
तश्चेति भाषालक्षणोद्विविधः साक्षरऽनक्षरश्चेति ऽक्षरीकृतःशास्त्राभिव्यंजकःसंस्कृत
विपरीतभेदार्यम्लेच्छव्यवहारहेतुः ऽनक्षरात्मकोद्वींद्रियादीनांऽतिशयज्ञानस्वरूपप्रतिपाद
नहेतुःसएषसर्वःप्रायोगिकःऽभाषात्मकोद्विविधःप्रायोगिकोवैश्रसिकश्चेतिवैश्रसिकोव
लाहकादिप्रभवःप्रयोगजश्चतुर्द्धाततविततघनसौषिरभेदात्तत्रचर्म्मतननिमितःपुष्करभे

दीदर्दुरादिप्रभवः ततः तंत्रीकृतवीणासुघोषादिसमुद्भवविततः तालघंटालालनाद्यभिघा
तजः घनः वंशशंखादिनिमित्तः सौषिरः बंधो द्विविधः वैस्रसिकः प्रायोगिकश्च पुरुषप्रयो
गानपेक्षो वैस्रसिकः तद्यथा स्निग्धरूक्षत्वगुणनिमित्तः विद्युदुल्काजलधराग्निंद्रधनुरादि
विषयः पुरुषप्रयोगनिमित्तः प्रायोगिकः ऽअजीवविषयो जीवाजीवविषयश्चेति द्विधाभि
न्नः तत्राजीवविषयः जतुकाष्ठादिलक्षणः जीवाजीवविषयः कर्मनोकर्मबंधः सौक्ष्म्यं द्विवि
धं ऽअंत्यमापेक्षिकं च तत्रांत्यं परमाणूनां ऽआपेक्षिकं बिल्वामलकबदरादीनां स्थौल्यमपि द्वि
विधं ऽअंत्यमापेक्षितं चेति तत्रांत्यं जगद्व्यापि ऽअन्यत्रोक्तं महास्कंधे ऽआपेक्षिकं च बदरामल
कबिल्वतालादिषु संस्थानमाकृतिः तत् द्विविधमित्थंलक्षणमनित्थंलक्षणं चेति वृत्तत्र्यस्र
चतुरस्रायतपरिमंडलादिरित्थंलक्षणं ऽअतोन्यत् मेघादीनां संस्थानमनेकविधं इत्थमिति
निरूपणाभावादनित्थंलक्षणं भेदः षोढा उत्करचूर्णखंडचूर्णिकाप्रतराणुचटनविकल्पात्
तत्रोत्करः काष्ठादीनां करपत्रादिभिरुत्करणं चूर्णो यवगोधूमादीनां शक्तुकणिकादिः खं
डो घटादीनां कपालशर्करादिः चूर्णिका माषमुद्गादीनां प्रतरो ऽअभ्रपटलादीनां ऽअणुचटनं
संतप्तायस्पिंडादिषु ऽअयोघनादिषु ऽअभिहन्यमानेषु स्फुलिंगनिर्गमः तमो दृष्टिप्रतिबं

धकरणं प्रकाशविरोधि छायाप्रकाशावरणनिमित्ता साद्वेधा वर्णादिप्रकारपरिणता प्रतिविं
बमात्रात्मिका चेति आतप आदित्यादिनिमित्त उष्णप्रकाशलक्षणः उद्योतः चंद्रमणिखद्योता
दिप्रभवः प्रकाशः त एते शब्दादयः पुद्गलद्रव्यविकारास्त एतेषां संतीति शब्दबंधसौक्ष्म्यस्थौ
ल्यसंस्थानभेदतमः छायाद्योततपोवंतः पुद्गला इत्यभिसंबध्यंते चशब्देन नोदनाभिघा
तादयः पुद्गलपरिणामा आगमे प्रसिद्धाः समुच्चीयंते उक्तानां पुद्गलानां भेदप्रदर्शनार्थमाह
॥ अणवः स्कंधाश्च ॥ प्रदेशमात्रभाविस्पर्शादिपर्यायप्रसवसामर्थ्येनाण्यंते शब्द्यंते इति
अणवः सौक्ष्म्यादात्मादयः आत्ममध्या आत्मांताश्च उक्तं च अत्तादि अत्तमज्झं अत्तंतं नेव
इंदियगेज्झं जं दव्वं अविभागी तं परमाणुं वियाणाहि स्थूलभावेन ग्रहणनिक्षेपणादिव्यापार
स्कंधा इति संज्ञायंते रूढौ क्रिया क्वचित्सती उपलक्षणत्वेनाश्रीयत इति ग्रहणादिव्यापारायो
ग्येष्वपि द्व्यणुकादिषु स्कंधाख्या संज्ञा प्रवर्तते अनंतभेदा अपि पुद्गला अणुजात्या स्कंधजात्या
च द्वैविध्यमापद्यमानाः सर्वे गृह्यंत इति तज्जात्याधारानंतभेदसंसूचनार्थं बहुवचनं क्रियते अ
णवः स्कंधा इति भेदाभिधानं पूर्वोक्तसूत्रद्वयभेदसंबंधनार्थं स्पर्शरसगंधवर्णवंतो णवः स्कं
धाः पुनः शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवंतश्च स्पर्शादिवंतश्चेति

•आह किमेषां पुद्गलानां अणुस्कंधलक्षणः परिणामो नादिरुत आदिमानित्युच्यते स खलू
त्पत्तिमत्त्वादादिमान् प्रतिज्ञायते यद्येवं तस्मादभिधीयतां कस्मान्निमित्तादुत्पद्यंत इति तत्र स्कंधा
नां तावदुत्पत्तिहेतुप्रतिपादनार्थमुच्यते ॥ ७ ॥ भेदसंघातेभ्य उत्पद्यंते ॥ संघातानां द्वितयनिमि
त्तवशाद्विदारणं भेदः पृथग्भूतानां एकत्वापत्तिः संघातः ननु च द्वित्वात् द्विवचनेन भवितव्यं ब
हुवचननिर्देशः ततीयसंग्रहार्थः भेदात् संघातात् भेदसंघाताभ्यां च उत्पद्यंत इति तद्यथा द्व
योः परमाण्वोः संघातात् द्विप्रदेशस्कंध उत्पद्यते द्विप्रदेशस्याणोश्च त्रयाणां वा अणूनां संघा
त्रि तात् त्रिप्रदेशः द्वयोः द्विप्रदेशयोस्त्रिप्रदेशस्याणोश्च तुर्णां चाणूनां संघाताच्चतुः प्रदेश एवं संख्ये
यासंख्येयानंतानां अनंतानंतानां च संघातात् तावत्प्रदेशः एषामेव भेदात् द्विप्रदेशपर्यंताः स्कंधा उ
त्पद्यंते एवं भेदसंघाताभ्यामेकसमयिकाभ्यां द्विप्रदेशादयः स्कंधा उत्पद्यंते अन्यतो भेदः नान्यस्य सं
घातेनेति एवं स्कंधानामुत्पत्तिहेतुरुक्तः अणोरुत्पत्तिः हेतुप्रदर्शनार्थमाह ॥ ७ ॥ भेदादणुः ॥
सिद्धे विधिरारभ्यमाणो नियमार्थो भवति अणोरुत्पत्तिभेदादेव न संघातात् नापि भेदसंघाता
भ्यामिति आह संघातादेव स्कंधानां आत्मलाभे सिद्धे भेदसंघातग्रहणमनर्थकं इति तद्ग्रह
णप्रयोजनप्रतिपत्त्यर्थमाह ॥ ७ ॥ भेदसंघाताभ्यां चाक्षुषः ॥ अनंतानंतपरमाणुसमुदायनिष्पाद्यो
ता

कालस्यास्तित्वंगमयइति कुतोगौणस्यमुख्यापेक्षत्वाद्द्रव्यस्यपर्यायः धर्म्मांतरनिवृत्तिः धर्म्मांतर
जनकरूपः अपरिस्पंदात्मकः परिणामः जीवस्यक्रोधादिः पुद्गलस्यवर्णादिः धर्म्माधर्म्माकाशानां
अगुरुलघुगुणवृद्धिहानिकृतः क्रियापरिस्पंदात्मिकासाद्विधाप्रायोगवैश्रसिकभेदात् तत्रप्रायोगि
कीशकटादीनांवैश्रसिकीनिमित्तामेघादीनांपरत्वापरत्वेक्षेत्रकृतेकालकृतेचस्तः तत्रकालोपकार
प्रकरणोक्तत्वात्कालकृतेगृह्येतेतएतेवर्तनादयः उपकाराः कालस्यास्तित्वंगमयंतिननुवर्तनाग्रहण
मेवास्तुतद्भेदाः परिणामादयः तेषांपृथग्ग्रहणमनर्थकंनानर्थकंकालद्वयसूचनार्थत्वात् प्रपंचस्यका
लोहिद्विविधः परमार्थःकालोव्यवहारकालश्च परमार्थकालोवर्तनालक्षणः परिणामादिलक्षणोव्य
वहारकालः अन्येनपरिच्छिन्नः अन्यस्यपरिच्छेदहेतुः क्रियाविशेषः कालइतिव्यवह्रियते सत्रेधाव्य
वतिष्ठतेभूतोवर्तमानोभविष्यन्निति तत्रपरमार्थकालेकालव्यपदेशोमुख्यः भूतादिव्यपदेशोगौणः व्य
वहारकालेभूतादिव्यपदेशोमुख्यः कालव्यपदेशोगौणः क्रियावद्द्रव्यापेक्षत्वात् कालकृतत्वाच्चअत्रा
ह धर्म्माधर्म्माकाशपुद्गलजीवकालानांउपकाराउक्ताः लक्षणंचोक्तंउपयोगोलक्षणमित्येवमादिषुपुद्ग
लानांतुसामान्यलक्षणमुक्तंविशेषलक्षणंनोक्तंतत्किमित्यत्रोच्यते॥ २३॥ स्पर्शरसगंधवर्णवंतः पुद्गलाः॥
स्पृश्यतेस्पर्शनमात्रंवास्पर्शः सोष्टविधः मृदुकठिनगुरुलघुशीतोष्णस्निग्धरूक्षभेदात् रस्यतेरसनमा

द्विभावेन वृत्तिः परस्परोपग्रहः स्वामी तावद्वित्तत्यागादिना भृत्यानामुपकारे वर्त्तते भृत्यश्च हितप्रतिपा
दनेनाहितप्रतिषेधेन च आचार्य उभयलोकफलप्रदोपदेशदर्शनेन तदुपदेशविहितक्रियानुष्ठाप
नेन च शिष्याणामनुग्रहे वर्त्तते शिष्या अपि तदानुकूल्यवृत्त्या उपकाराधिकारे पुनरुपग्रहवचनं कि
मर्थं पूर्व्वोक्तसुखादिचतुष्टयप्रदर्शनार्थं पुनरुपग्रहवचनं क्रियते सुखादीन्यपि जीवानां जीवकृत
उपकार इति आह यद्यवश्यं सतो उपकारिणा भवितव्यं संश्च कालोभिमतः तस्य क उपकार इति
अत्रोच्यते ॥२२॥ वर्त्तनापरिणामक्रियापरत्वापरत्वे च कालस्य ॥ वृतेर्णिजन्तात् कर्म्मणि भावे वा युद् स्त्री
लिंगे वर्त्तनेति भवति वर्त्यते वर्त्तनमात्रं वा वर्त्तनेति धर्म्मादीनां द्रव्याणां स्वपर्यायनिर्वृत्तिं प्रति स्वात्म
नैव वर्त्तमानानां बाह्योपग्रहाद्विना तद्वृत्त्यभावात् तत्प्रवर्त्तनोपलक्षितः काल इति कृत्वा वर्त्तना का
लस्योपकारः को णिजर्थः वर्त्तते द्रव्यपर्यायः तस्य वर्त्तयिता कालः यद्येवं कालस्य क्रियावत्त्वं प्राप्नोति
यथा शिष्यः अधीते उपाध्यायोध्यापयतीति नैष दोषः निमित्तमात्रेपि हेतुकर्तृव्यपदेशो दृष्टः यथा
कारीषोग्निरध्यापयतीति एवं कालस्य हेतुकर्तृत्वात् स कथं काल इत्यवसीयते समयादीनां क्रियावि
शेषाणां समयादिभिर्निर्वर्त्यमानानां च पाकादीनां समयः पाक इति एवमादिस्वसंज्ञारूढिसद्भावेपि स
मयः काल ओदनपाककाल इति अध्यारोप्यमाणः कालव्यपदेशः तद्व्यपदेशनिमित्तस्य मुख्यस्य

तरत्र वक्ष्यते इदं तु जीवान्प्रति पुद्गलानामुपकारप्रतिपादनार्थमेवेति उपकारप्रकरणे उ-
च्यते शरीराणि उक्तानि औदारिकादीनि सौक्ष्म्यादप्रत्यक्षाणि तदुदयोपपादितवृत्तीन्युपचयशरी-
राणि कानिचित्प्रत्यक्षाणि कानिचिदप्रत्यक्षाणि एतेषां कारणभूतानि कार्मणमपि शरीरग्र-
हणे न गृह्यंते एतानि पौद्गलिकानीति कृत्वा जीवानामुपकारे पुद्गलाः प्रवर्तंते स्यान्मतं कार्मण-
मपौद्गलिकं अनाकारत्वात् आकारवतां औदारिकानां पौद्गलिकत्वं युक्तमिति तन्न तदपि पौद्गलि-
कमेव तद्विपाकस्य मूर्तिमत्संबंधनिमित्तत्वात् दृश्यते हि व्रीह्यादीनां उदकादिद्रव्यसंबंधप्रापितप-
रिपाकानां पौद्गलिकत्वं तथा कार्मणमपि गुडकंटकादिमूर्तिमद्द्रव्योपनिपाते सति विपच्यमानत्वा-
त् पौद्गलिकमित्यवसेयं वाक् द्विविधा द्रव्यवाक् भाववागिति तत्र भाववाक् तावत् वीर्यांतरायम-
तिश्रुतज्ञानावरणक्षयोपशमांगोपांगनामलाभनिमित्तत्वात् पौद्गलिकी तदभावे तद्वृत्त्यभावात्
तत्सामर्थ्योपेतेन क्रियावतात्मना प्रेर्यमाणाः पुद्गलाः वाक्त्वेन विपरिणमंत इति द्रव्यवागपि पौद्गलि-
की श्रोत्रेंद्रियविषयत्वात् इतरेंद्रियविषया कस्मान्न भवति तद्ग्रहणायोग्यत्वात् घ्राणग्राह्ये गंधद्र-
व्ये रसानुपलब्धिवत् अमूर्ता वागिति चेन्न मूर्तिमद्ग्रहणावरोधव्याघाताभिभवादिदर्शनात् मूर्ति-
मत्वसिद्धेः मनो द्विविधं द्रव्यमनो भावमनश्चेति भावमनस्तावत् लब्ध्युपयोगलक्षणं पुद्गलावलंब-

हः॰आकाशस्योपकारोवेदितव्यः॰आहजीवपुद्गलानांक्रियावतामवगाहिनामवकाशदानंयुक्तं
धर्मास्तिकायादयःपुनर्निःक्रियानित्यसंबंधास्तेषांकथमवगाहइतिचेत् नोपचारतस्तत्सिद्धेः
यथागमनाभावेपिसर्वगतमाकाशमित्युच्यतेसर्वत्रसद्भावात् एवंधर्माधर्मावपि॰अवगाह
नक्रियाभावेपिसर्वत्रव्याप्तिदर्शनात् ॰अवगाहिनावित्युपचर्येते ॰आहयद्यवकाशदानमस्यस्व
भावःवज्रादिभिर्लोष्ठादीनांभित्त्यादिभिर्गवादीनांचव्याघातोनप्राप्नोतिदृश्यतेचव्याघातःतस्मादस्या
वकाशदानंहीयतइतिनैषदोषः वज्रलोष्ठादीनांस्थूलानांपरस्परव्याघातइतिनास्यावकाशदा
नसामर्थ्यंहीयते तत्रावगाहिनामेवव्याघाताभावाद्वज्रादयःपुनःस्थूलत्वात्परस्परंप्रत्यवका श
दानंनकुर्वन्तीतिनासावाकाशदोषःयेखलुपुद्गलाःसूक्ष्मास्तेपिपरस्परंप्रत्यवकाशदानंकुर्वन्तियद्ये
वंनेदमाकाशस्यासाधारणंलक्षणमितरेषामपितत्सद्भावादिति तन्नसर्वपदार्थानांसाधारणाव
गाहनहेतुत्वमस्यासाधारणंलक्षणमितिनास्तिदोषः ॰अलोकाकाशेतदभावादभावइतिचेत् नस्व
भावापरित्यागात् ॰अतउक्तं॰आकाशस्योपकारः॰अथतदनंतरोद्दिष्टानांकउपकारइत्यत्रोच्यते॥छ॥
शरीरवाङ्मनःप्राणापानाःपुद्गलानां॥इदमयुक्तंवर्ततेकिमत्रायुक्तंपुद्गलानांकउपकारइतिपरि
प्रश्नेपुद्गलानांलक्षणमुच्यतेभवताशरीरादीनिपुद्गलमयानीति नैतदयुक्तंपुद्गलानांलक्षणंतु

श्लेष्मणा वाभिभवः नवौ मूर्तस्य मूर्तिमद्भिरभिघातादयः स्युः ॰ अत एवात्मास्तित्वसिद्धिः यथा
यंत्रप्रतिमाचेष्टितं प्रयोक्तुरस्तित्वं गमयति तथा प्राणापानादिकर्म्मापि क्रियावंतमात्मानं साध
यति किमेतावानेव पुद्गलकृत उपकारः ॰ आहोस्विदन्योप्यस्तीत्यत ॰ आह ॥ सुखदुःखजीवितमर
णोपग्रहाश्च ॥ सदसद्वेद्योदये ॰ अंतरंगहेतौ सति बाह्यद्रव्यादिपरिपाकनिमित्तवशात् उत्पद्यमानः
प्रीतितापरूपः परिणामः सुखदुःखमित्याख्यायते भवधारणकारणायुराख्यकर्म्मोदयाद्भवस्थि
तिमादधानस्य पूर्वोक्तप्राणापानक्रियाविशेषाद्व्युच्छेदः जीवितमित्युच्यते तदुच्छेदो मरणं एता
नि सुखादीनि जीवस्य पुद्गलस्य कृत उपकारः कुतः मूर्तिमत्हेतुसन्निधाने सति तदुत्पत्तेः उपका
राधिकारादुपग्रहवचनमनर्थकं नानर्थकं स्वोपग्रहदर्शनार्थमिदं पुद्गलानां पुद्गलकृत उपका
र इति तद्यथा कंसादीनां भस्मादिभिर्जलादीनां कतकादिभिरयःप्रभृतीनां मुदकादिभिरुपकारः कि
यते चशब्दः किमर्थः समुच्चयार्थः ॰ अन्योपि पुद्गलकृत उपकारोस्तीति समुच्चीयते यथा शरीराणि ए
वं चक्षुरादीनिंद्रियाण्यपीति एवमाद्यजीवकृतमुपकारं प्रदर्श्य जीवकृतोपकारप्रदर्शनार्थमाह ॥ छ ॥
परस्परोपग्रहो जीवानां परस्परशब्दः कर्म्मव्यतिहारे वर्तते कर्म्मव्यतिहारश्च क्रियाव्यतिहारे वर्तते
परस्परस्य उपग्रहः परस्परोपग्रहः जीवानामुपकारः कः पुनरसौ स्वामिभृत्य ॰ आचार्यशिष्य इत्येवमा

नत्वात् पौद्गलिकं द्रव्यमनश्च ज्ञानावरणवीर्यान्तरायक्षयोपशमअंगोपांगनामलाभप्रत्ययाः गु
णदोषविचारस्मरणादिप्रणिधानाभिमुख्यस्यात्मनो नुग्राहकाः पुद्गलाः मनस्त्वेन परिणता इति पौ
द्गलिकं कश्चिदाह मनो द्रव्यांतरं रूपादिपरिणामविरहितं अणुमात्रं तस्य पौद्गलिकत्वमयुक्तमिति
तदयुक्तं उच्यते तदिंद्रियेणात्मना च संबद्धं वा स्यादसंबद्धं वा स्यात् यद्यसंबद्धं तन्नात्मन उपकारकं भ न
वितुमर्हति इंद्रियस्य च साचिव्यं न करोति अथ संबद्धं एकस्मिन्प्रदेशे संबद्धं सत् तदणु इतरेषु प्रदे
शेषु उपकारं न कुर्यात् अदृष्टवशादस्य अलातचक्रवत्परिभ्रमणमिति चेत् न तत्सामर्थ्याभावा
त् अमूर्तस्यात्मनो निःक्रियस्यादृष्टो गुणः स निःक्रियः सन् अन्यत्र क्रियारंभे न समर्थः
दृष्टो हि वायुद्रव्यविशेषः क्रियावान्स्पर्शवान्प्राप्तः वनस्पतौ परिस्पंदहेतुः तद्विपरीतलक्षणश्चायं इ
ति क्रियाहेतुत्वाभावः वीर्यान्तरायज्ञानावरणक्षयोपशमांगोपांगनामोदयापेक्षिणात्मना उदस्यमानः
कोष्ठ्यो वायुरुच्छ्वासलक्षणः प्राण इत्युच्यते तेनैवात्मना बाह्यो वायुरभ्यंतरीक्रियमाणो निश्वासलक्षणो
पान इत्याख्यायते त्वा एवं तावप्यात्मानुग्राहिणो जीवितहेतुत्वात् तेषां मनःप्राणापानानां मूर्तिमत्त्वमव
सेयं कुतो मूर्तिमद्भिः प्रतीघातादिदर्शनात् प्रतिभयहेतुभिरशनिपातादिभिर्मनसः प्रतीघातो दृ
श्यते सुरादिभिश्चाभिभवः हस्ततलपटादिभिरास्यसंवरणात् प्राणापानयोः प्रतीघात उपलभ्यते

नंधर्माधर्मयोर्गतिस्थित्योश्चयथासंख्यंभवतिएवंजीवपुद्गलानांयथासंख्यंज्ञाप्तेतिधर्मस्यो
पकारोजीवानांगति॰अधर्मस्योपकारःपुद्गलानांस्थितिरितितन्निवृत्त्यर्थंउपग्रहवचनंक्रि
यते॰आहधर्माधर्मयोर्यउपकारःस॰आकाशस्ययुक्तःसर्वगतत्वादितिचेत्तदयुक्तंतस्या
न्योपकारसद्भावात्सर्वेषांधर्मादीनांद्रव्याणामवगाहनंतत्प्रयोजनंएकस्यानेकप्रयोजनक
ल्पनायांलोकालोकविभागाभावःभूमिजलादीन्येवतत्प्रयोजनसमर्थानिनार्थोधर्माधर्मा
भ्यांइतिचेत्नासाधारणाश्रयइतिविशेष्योक्तत्वात्॰अनेककारणसाध्यत्वाच्चैकस्यकार्य
स्यतुल्यबलत्वात्तयोर्गतिस्थितिप्रतिबंधःइतिचेत्नाप्रेरकत्वात्॰अनुपलब्धेर्नतौस्तःखरवि
षाणवदितिचेत्नसर्वप्रवाद्यविप्रतिपत्तेःसर्वेहिप्रवादिनःप्रत्यक्षाप्रत्यक्षानर्थानभिवांछं
ति॰अस्मान्प्रतिहेतोरसिद्धेश्चसर्वज्ञेननिरतिशयप्रत्यक्षज्ञानचक्षुषाधर्मादयःसर्वेउपल
भ्यंतेतदुपदेशाच्चश्रुतज्ञानिभिरपि॰अत्राहयद्यतींद्रिययोःधर्माधर्मयोरुपकारसंबंधेनास्ति
त्वमवध्रियतेतदनंतरमुद्दिष्टस्यनभसोतींद्रियस्याधिगमेकउपकारइत्युच्यते॥छ॥॰आकाश
स्यावगाहः॥उपकारइति॰अनुवर्तते जीवपुद्गलादीनामवगाहिनामवकाशदानमवगाहः॥
॰आकाशस्योपकारोवेदितव्यः॰आहजीवपुद्गलानांक्रियावतामवगाहिनामवकाशदानमवगा

काशपरिमाणस्यप्रदीपस्यशरावमानिकायवरकाद्यावरणवशात्तत्परिमाणतेति ॥ अत्रा
हधर्म्मादीनां अन्योन्यप्रदेशानुप्रवेशात्संकरेसतिएकत्वंप्राप्नोतितन्नपरस्परात्यंतश्लेषेस
पिस्वभावंनजहति उक्तंच अण्णोण्णंपविसंतादिंताउग्गासमण्णमण्णस्स मेलंतावियणिच्चं
सगसब्भावंनविजहंति यद्येवंधर्म्मादीनांस्वभावभेदउच्यतामित्यतआह ॥ १७ ॥ गतिस्थित्युप
ग्रहौधर्म्माधर्म्मयोरुपकारः ॥ देशांतरप्राप्तिहेतुर्गतिः तद्विपरीतास्थितिः उपगृह्यतइ
तिउपग्रहःगतिश्चस्थितिश्चगतिस्थितीगतिस्थितीएवउपग्रहौगतिस्थित्युपग्रहौधर्म्मा
धर्म्मयोरितिकर्तृनिर्देशः उपक्रियतइत्युपकारः कःपुनरसौगत्युपग्रहःस्थित्युपग्रहश्च
यद्येवंद्वित्वनिर्देशःप्राप्नोतिनैषदोषः सामान्येनव्युत्पादितः शब्दः उपात्तसंख्यःशब्दांतरसंबंधे
सत्यपिनपूर्वोपात्तसंख्यांजहातियथासाधोःकार्यंतपःश्रुतेइतिएतदुक्तंभवतिगतिपरिणा
मिनांजीवपुद्गलानांगत्युपग्रहेकर्तव्येधर्मास्तिकायः साधारणाश्रयःजलवन्मत्स्यगमनेत
थास्थितिपरिणामिनांजीवपुद्गलानांस्थित्युपग्रहेकर्तव्येअधर्म्मास्तिकायःसाधारणाश्र
यः पृथिवीधातुरिवाश्वादिस्थितावितिननुचउपग्रहवचनमनर्थकमुपकारइत्येवंसिद्ध
त्वात्गतिस्थितीधर्म्माधर्म्मयोरुपकार इतिनैषदोषःयथासंख्यनिवृत्त्यर्थमुपग्रहवच

परांनाएांतेहिं विविहेहिं ॰अत्र
उनादगाढनिचिदो पुग्गलकाएहि सव्वदो लोगो सुहुमेहिं वादरेहिं
कथ्योसपिंडो दृष्टांतः ॰अथजीवानां कथमवगाहनमित्यत्रोच्यते ॥७॥ ॰असंख्येयभागादिषुजी
वानां ॥ लोकाकाश इत्युवर्तते तस्यासंख्येयभागीकृतस्य एको भागः ॰असंख्येयभाग इत्युच्यते स
॰आदिर्येषां ते ॰असंख्येयभागादयः तेषु जीवानामवगाहो वेदितव्यः तद्यथा एकस्मिन्नसंख्येयभा
गे एको जीवोवतिष्ठते एवं द्वित्रिचतुरादिष्वपि ॰असंख्येयभागेष्वा सर्वलोकादवगाहः प्रत्येतव्यः
नानाजीवानां तु सर्वलोक एव यद्येकस्मिन्नसंख्येयभागे एको जीवोवतिष्ठते कथं द्रव्यप्रमाणेना
नंतानंतो जीवराशिः सशरीरोवतिष्ठते लोकाकाशे सूक्ष्मभावदेव एकजीवनिगोदावगाहेपि प्र
देशे साधारणशरीरा अनंतानंता वसंति न ते परस्परेण वादरैश्च व्याहन्यंत इति नास्त्यवगाहविरोधः
॰अत्राह लोकाकाशतुल्यप्रदेश एको जीव इत्युक्तं तस्य कथं लोकस्यासंख्येयभागादिषु वृत्तिर्न
नु सर्वलोकस्य व्याप्त्यैव भवेतितव्यमित्युच्यते ॥७॥ प्रदेशसंहारविसर्प्पाभ्यां प्रदीपवत् ॰अमू
र्त्तस्वभावस्यात्मनोनादिकर्म्मबंधं प्रत्येकत्वात् कथंचिन्मूर्त्तत्वं बिभ्रतः कार्म्मणशरीरवशा
त्महदणुच शरीरमधितिष्ठतः तद्वशात्प्रदेशसंहरण विसर्प्पण स्वभावस्य तावत्प्रमाणतायां
सत्यां ॰असंख्येयभागादिषु वृत्तिरुपपद्यते प्रदीपवत् यथा निरावरण व्योमप्रदेशे वर्धतप्र
सूक्ष्मवादरभेदद्रव्यस्थानं प्रत्येतव्यं वादरास्ताव

वाल्लोकालोकविभागसिद्धिः तत्रावध्रियमाणानां ऽवस्थानभेदसंभवाद्विशेषप्रतिपत्त्य
र्थमाह ॥ १३ ॥ धर्माधर्मयोः कृत्स्ने ॥ कृत्स्नवचनमशेषव्याप्तिदर्शनार्थं ऽगारेवस्थितो घट
इति यथा तथा धर्माधर्मयोर्लोकाकाशेवगाहो न भवति किं तर्हि कृत्स्ने तिलेषु तैलवदिति
ऽन्योन्यप्रदेशप्रवेशव्याघाताभावोवगाहनशक्तियोगाद्वेदितव्यः ऽतो विपरीतानां
मूर्तिमतां एकप्रदेशसंख्येयासंख्येयानंतप्रदेशानां पुद्गलानां ऽवगाहविशेषप्रतिपत्त्यर्थं
माह ॥ एकप्रदेशादिषु भाज्यः पुद्गलानां ॥ एकः प्रदेशः एकप्रदेशः एकप्रदेश ऽादिर्येषां ते
इमे एकप्रदेशादयः तेषु पुद्गलानामवगाहो भाज्यो विकल्प्यो ऽवयवेन विग्रहः समुदायस
मासार्थः इति एकप्रदेशोपि गृह्यते तद्यथा एकस्मिन्नाकाशप्रदेशे परमाणोरवगाहः द्वयो
रेकत्रोभयत्र च बद्धयोरबद्धयोश्च त्रयाणामप्येकत्र द्वयोस्त्रिषु च बद्धानां ऽबद्धानां च एवं संख्ये
यानंतप्रदेशानां स्कंधानामेकसंख्येय ऽसंख्येयप्रदेशेषु लोकाकाशेवस्थानं प्रत्येतव्यं न
नु युक्तं तावदमूर्तयोर्धर्माधर्मयोरेकत्राविरोधेनावरोध इति मूर्तिमतां पुद्गलानां कथमि
त्यत्रोच्यते ऽवगाहनस्वभावत्वात् सूक्ष्मपरिणामाच्च मूर्तिमतामप्यवगाहो न विरुध्यते ए
कापवरके ऽनेकप्रदीपप्रकाशावस्थानवत् ऽागमप्रामाण्याच्च तथाध्यवसेयं उक्तं च उ

धारकल्पते आकाशस्याप्यन्यः आधारः कल्प्यः तथा सत्यनवस्थाप्रसंग इति नैष दोषः ना
काशादन्यदधिकपरिमाणं द्रव्यमस्ति यत्राकाशस्थितमित्युच्यते सर्वतोऽनंतं हि तत् धर्म्मादी
नां पुनरधिकरणमाकाशमित्युच्यते व्यवहारनयवशात् एवंभूतनयापेक्षया तु सर्वाणि द्रव्या
णि स्वप्रतिष्ठितान्येव तथा चोक्तं क्व भवानास्ते आत्मनीति धर्मादीनि लोकाकाशान्न बहिः
संतीति एतावदत्र आधाराधेयकल्पनासाध्यं फलं ननु च लोके पूर्वोत्तरकालभाविनामाधारा
धेयभावो दृष्टः यथा कुंडे बदरादीनां तथाकाशं पूर्वं धर्म्मादीनि उत्तरकालभावीनि अतो व्य
वहारनयापेक्षयापि आधाराधेयकल्पनानुपपत्तिरिति नैष दोषः युगपद्भाविनामपि आधा
राधेयभावो दृश्यते घटे रूपादयः शरीरे हस्तादय इति लोक इत्युच्यते को लोकः धर्म्मादीनि द्र
व्याणि यत्र लोक्यंते स लोक इति अधिकरणसाधनो घञ् आकाशं द्विधा विभक्तं लोकाकाश
मलोकाकाशं चेति लोक उक्तः स यत्र तल्लोकाकाशं ततो बहिः सर्वतोऽनंतमलोकाकाशं लोका
लोकालोकविभागश्च धर्म्माधर्म्मास्तिकायसद्भावात् विज्ञेयः असति हि तस्मिन् धर्मास्ति
काये पुद्गलजीवानां गतिनियमहेत्वभावात् विभागो न स्यात् असति वाधर्मास्तिकाये स्थिते
राश्रये निमित्ताभावात् स्थितेरभावो लोकालोकविभागाभावो वा स्यात् तस्मादुभयसद्भा

नमिति चेन्नानंतसामान्यात् ऽनंतप्रमाणं त्रिविधमुक्तं परीतानंतं ऽनंतानंतं चेति तत्सर्वम
नंतसामान्येन गृह्यते स्यादेतदसंख्यातप्रदेशो लोकः ऽनंतप्रदेशस्यानंतानंतप्रदेशस्य च स्कं
धस्याधिकरणमिति विरोधः ततो नानंत्यमिति नैष दोषः सूक्ष्मपरिणामावगाहनशक्तियोगा
त् परमाण्वादयो हि सूक्ष्मभावेन परिणता एकैकस्मिन्नपि ऽऽकाशप्रदेशेऽनंतानंता
ऽवतिष्ठंते ऽवगाहनशक्तिश्चैषां ऽव्याहतास्ति तस्मादेकस्मिन्नपि प्रदेशेऽनंतानंता
नां ऽवस्थानं न विरुध्यते पुद्गलानामित्यविशेषवचनात् परमाणोरपि प्रदेशवत्त्वप्रसंगे त
त्प्रतिषेधार्थमाह ॥ ७ ॥ नाणोः ॥ ऽणोः प्रदेशा न संतीति वाक्यशेषः कुतो न संतीति चेत् ॥
प्रदेशमात्रत्वात् यथाकाशप्रदेशस्यैकस्य प्रदेशभेदाभावादप्रदेशत्वं एवमणोरपि प्रदेश
मात्रत्वात् प्रदेशभेदाभावः किंच ततोल्पपरिमाणाभावात् न ह्यणोरल्पीयानन्योस्ति यतोस्य
प्रदेशा भिद्येरन् एषामवधृतप्रदेशानां धर्मादीनामाधारप्रतिपत्त्यर्थमिदमुच्यते ॥ ७ ॥ लो
काकाशेवगाहः ॥ उक्तानां धर्मादीनां द्रव्याणां लोकाकाशेवगाहो न बहिरित्यर्थः यदि ध
र्मादीनां लोकाकाशमाधारः ऽऽकाशस्य क ऽऽधार इति ऽऽकाशस्य नास्त्यन्य ऽऽधारः स्व
प्रतिष्ठमाकाशं यद्याकाशं स्वप्रतिष्ठं धर्मादीन्यपि स्वप्रतिष्ठान्येव ऽथ धर्मादीनां ऽन्य ऽऽ

सांवेतैसहनाधिक्रियतेऽजीवकाया इत्यत्र कायग्रहणेन प्रदेशास्तित्वमात्रं निर्ज्ञातं न त्वियत्तावव-
धारिता प्रदेशानां अतस्तन्निर्द्धारणार्थमिदमुच्यते॥८॥ असंख्येयाः प्रदेशाः धर्म्माधर्म्मैकजी-
वानां॥ संख्यामतीता असंख्येयाः असंख्येयस्त्रिविधः जघन्यः उत्कृष्टः अजघन्योत्कृष्टः संख्येयः
परिगृह्यते प्रदिश्यन्त इति प्रदेशाः वक्ष्यमाणलक्षणः परमाणुः स यावति क्षेत्रे व्यवतिष्ठते स प्रदेश इ-
ति व्यवह्रियते धर्म्माधर्म्मैकजीवाः तुल्याऽसंख्येयप्रदेशाः तत्र धर्म्माधर्म्मौ निःक्रियौ लोकाका-
शं व्याप्य स्थितौ जीवस्तावत्प्रदेशोपि सत्संहरणविसर्प्पणस्वभावत्वात् कर्म्मनिर्वर्तितं शरीरमणु
महद्वाऽधितिष्ठंस्तावदवगाह्य वर्त्तते यदा तु लोकपूर्णं भवति तदा मंदरस्याधः चित्रवज्रपट-
लमध्ये जीवस्याष्टौ मध्यप्रदेशा व्यवतिष्ठंते इतरे प्रदेशा ऊर्द्धमधस्तिर्यक्च कृत्स्नं लोकाकाशं व्याप्नु-
वंते अथाकाशस्य कति प्रदेशा इत्यत आह॥९॥ आकाशस्यानंताः॥ लोकेऽलोके चाकाशो व-
र्तते अविद्यमानोंतो येषां ते अनंताः के प्रदेशाः कस्य आकाशस्य पूर्ववदेवास्यापि प्रदेशकल्पना
वसेया उक्तममूर्त्तानां प्रदेशपरिमाणं इदानीं मूर्त्तानां पुद्गलानां प्रदेशपरिमाणं निर्ज्ञातव्यं इत्यत आ-
ह॥१०॥ संख्येयासंख्येयाश्च पुद्गलानां चशब्देनानंताश्चानुकृष्यंते कस्यचित्पुद्गलद्रव्यस्य द्व्यणु-
कादेः संख्येया प्रदेशाः कस्यचित् असंख्येयाः प्रदेशाः कस्यचित् अनन्ताश्च अनंतानंता परसंख्या-

तदेनेनख्याप्यते॥अधिकृतानामेवैकद्रव्याणांविशेषप्रतिपत्त्यर्थमिदमुच्यते॥७॥निःक्रियाणिच
उभयनिमित्तवशादुत्पद्यमानःपर्यायोद्रव्यस्यदेशांतरप्राप्तिहेतुःक्रियातस्यानिःक्रांतानिनिःक्रि
याणियत्रचोद्यतेधर्मादीनिद्रव्याणियदिनिःक्रियाणिततस्तेषामुत्पादोनभवेत्॥परिस्पंदक्रिया
पूर्वकोहिघटादीनांउत्पादोदृष्टःउत्पादाभावात्व्ययाभावइतिसर्वद्रव्याणामुत्पादादित्रितयरू
पकल्पनाव्याघातइतितन्नकिंकारणमन्यथोपपत्तेःक्रियानिमित्तोत्पादाभावेप्येषांधर्मादीनां
अन्यथोत्पादःकल्प्यते॥तद्यथाद्विविधउत्पादःस्वनिमित्तःपरप्रत्ययश्चस्वनिमित्तस्तावदनं
तानांअगुरुलघुगुणानांआगमप्रामाण्यादभ्युपगम्यमानानांषट्स्थानपतितयावृद्ध्या॥हान्याच
वर्तमानानांस्वभावादेषामुत्पादोव्ययश्चपरप्रत्ययोपिअश्वादिगतिस्थित्यवगाहनहेतुत्वात्क्ष
णेक्षणेतेषांभेदात्तद्धेतुत्वमपिभिन्नमितिपरप्रत्ययापेक्षउत्पादोविनाशश्चव्यवह्रियते॥ननुय
दिनिःक्रियाणिधर्मादीनिजीवपुद्गलानांगत्यादिहेतुत्वंनोपपद्यतेजलादीनिहिक्रियावंतिमत्स्या
दीनांगत्यादिनिमित्तानिदृष्टानीतिनैषदोषःबलाधाननिमित्तत्वाच्चक्षुर्वद्यथारूपोपलब्धौचक्षु
र्निमित्तमितिनव्याक्षिप्तमनस्कस्यापिभवति॥अधिकृतानांधर्माधर्माकाशानांनिःक्रियत्वेभ्युप
गतेजीवपुद्गलानांसक्रियत्वमर्थादापन्नंकालस्यापिसक्रियत्वमितिचेन्नानधिकारात्॥अतएवा

त्वमिति॥इयताव्यभिचारादवस्थितानीति उच्यतेनविद्यतेरूपमेतेषांइत्यरूपाणिरूपप्रतिषेधेन
तत्सहचारिणांरसादीनामपिप्रतिषेधः॥तेनअरूपाण्यमूर्त्तानीत्यर्थः।यथासर्वेषांद्रव्याणांनि
त्यावस्थितानीत्येतत्साधारणंलक्षणंप्राप्तंतथाअरूपत्वमपिप्राप्तंपुद्गलानामपि।अतस्तदप
वादार्थमाह॥ ॥रूपिणःपुद्गलाः॥रूपंमूर्त्तिरित्यर्थः।कामूर्त्तिः।रूपादिसंस्थानपरिणामोमूर्त्तिः
रूपमेषामस्तिरूपिणःमूर्त्तिमंतइत्यर्थः अथवारूपमितिगुणविशेषवचनशब्दस्तदेषामस्तीति
रूपिणःरसाद्यग्रहणमितिचेत्।नतदविनाभावात्तदंतर्भावः।पुद्गलाइतिबहुवचनंभेदप्रतिपाद
नार्थंभिन्नाहिपुद्गलाःस्कंधपरमाणुभेदात्तद्विकल्पउपरिष्टाद्वक्ष्यते।यदिप्रधानवद्रूपत्वमेकत्वं
चेष्टंस्यात्तद्विश्वरूपकार्यदर्शनविरोधःस्यात्।आहकिंपुद्गलवद्धर्म्मादीन्यपिद्रव्याणिप्रत्येकंभि
न्नानीत्यत्रोच्यते॥ ॥आआकाशादेकद्रव्याणि॥आङयमभिविध्यर्थः।सौत्रीमानुपूर्वीमाश्रित्यैतदु
क्तंतेनधर्म्माधर्म्माकाशानिगृह्यंते।एकशब्दःसंख्यावचनः।तेनद्रव्यंविशेष्यते।एकंद्रव्यंएकद्रव्य
मितियद्येवंबहुवचनमयुक्तंधर्म्माद्यपेक्षयाबहुत्वसिद्धिर्भवति।एकस्यानेकार्थप्रत्यायनशक्तियो
गात्।एकैकमित्यस्तुलघुत्वात्द्रव्यग्रहणमनर्थकंतत्क्रियतेद्रव्यापेक्षयाएकत्वख्यापनार्थंद्रव्य
ग्रहणंक्षेत्रभावापेक्षयाअसंख्येयत्वानंतत्वविकल्पस्येष्टत्वात्।नजीवपुद्गलवदेषांबहुत्वमित्ये

दियोगाभावः इति चेत् ॥ न वायुस्तावद्रूपादिमान् स्पर्शवत्त्वात् ॥ घटादिवत् चक्षुरादिकरणग्राह्य
त्वाभावात् ॥ रूपाद्यभाव इति चेत् न परमाण्वादिष्वतिप्रसंगः स्यात् आपो गंधवत्यः स्पर्शादिमत्वा
त् पृथिवीवत् तेजोपि रसगंधवद्रूपवत्वात् तद्वदेव ॥ मनोपि द्विविधं द्रव्यमनो भावमनश्चेति तत्र भा
वमनो ज्ञानं तस्य जीवगुणत्वात् आत्मन्यंतर्भावः द्रव्यमनस्तु रूपादियोगात् पुद्गलद्रव्यविकारः
रूपादिमन्मनः ॥ ज्ञानोपयोगकारणत्वात् चक्षुरिंद्रियवत् ननु अमूर्तेपि शब्दे ज्ञानोपयोगकारण
त्वदर्शनात् व्यभिचारी हेतुरिति चेत् ॥ न तस्यापि पौद्गलिकत्वात् मूर्तिमत्वोपपत्तेः ननु यथा सर्वेषां
परमाणूनां रूपादिमत्कार्यत्वदर्शनात् ॥ रूपादिमत्वं न तथा वायुमनसो रूपादिमत्कार्यं दृश्यते इ
ति चेत् न नु तेषामपि तदुपपत्तेः सर्वेषां परमाणूनां सर्वरूपादिमत्कार्यत्वप्राप्तियोग्यताभ्युपगमात्
न च के चित् पार्थिवादिजातिविशेषयुक्ताः परमाणवः संति ॥ जातिसंकरेणारंभदर्शनात् दिशोप्याका
शेंतर्भावः आदित्योदयाद्यपेक्षया आकाशप्रदेशपंक्तिषु इत इदमिति व्यवहारोपपत्तेः उक्तानां
द्रव्याणां विशेषप्रतिपत्त्यर्थमाह ॥ ४ ॥ नित्यावस्थितान्यरूपाणि ॥ नित्यं ध्रुवमित्यर्थः नेर्ध्रुवे त्य इति
नेर्ध्रुवे नित्य इति निष्पादितत्वात् धर्मादीनि द्रव्याणि गतिहेतुत्वादिविशेषलक्षणद्रव्यार्थादेशाद
स्तित्वादिसामान्यलक्षणद्रव्यार्थादेशाच्च कदाचिदपि न व्ययंतीति नित्यानि वक्ष्यते हि ॥ तद्भावाव्ययं नि

पृथकसिद्धेस्तः यद्यपृथकसिद्धयोरपियोगःस्यात्॥ आकाशकुशुमस्यप्रकृतिपुरुषद्वितीयशि
रसश्चयोगःस्यादिति॥ अथअपृथकसिद्धिरभ्युपगम्यतेद्रव्यत्वकल्पनानिरर्थिकागुणसंद्रावोद्रव्यमि
तिचेत्तत्रापिगुणानांसमुदायस्यचभेदाभावेतद्रव्यव्यपदेशोनोपपद्यतेभेदाभ्युपगमेचपूर्वोक्त
एवदोषोननुगुणानद्रवतिगुणैर्वाद्रूयतेइतिविग्रहेपिसएवदोषः॥ इतिचेन्नकथंचिद्भेदाभेदोपप
तेस्तद्व्यपदेशसिद्धिःव्यतिरेकेणानुपलब्धेरभेदःसंज्ञालक्षणप्रयोजनादिभेदाद्भेदइतिप्रकृता
धर्मादयोवहवः॥ तत्सामान्याधिकरण्यात्वहुत्वनिर्देशःस्यादेतत्संख्यानुवृत्तिवत्पुल्लिंगानुवृत्ति
रपिप्राप्नोतिनैषदोषः॥ आविष्टलिंगाशब्दानकदाचिल्लिंगंव्यभिचरंति॥ अतोधर्मादयोद्रव्याणि
भवंतीतिअनंतरत्वाच्चतुर्णामेवद्रव्यव्यपदेशप्रसंगेऽध्यारोपणार्थमिदमुच्यते॥२॥ जीवाश्च
॥ जीवशब्दोव्याख्यातार्थःवहुत्वनिर्देशोव्याख्यातभेदप्रतिपत्यर्थःचशब्दःद्रव्यसंज्ञानुकर्षणा
र्थः जीवाश्चद्रव्याणीतिएवमेतानिवक्ष्यमाणेनकालेनसहषड्द्रव्याणिभवंतिद्रव्यस्यलक्षणं
वक्ष्यते॥ गुणपर्ययवद्द्रव्यमितितल्लक्षणयोगात्धर्मादीनांद्रव्यव्यपदेशोभवतिनार्थःपरिगण
नेनपरिगणनमवधारणार्थंतेनान्यवादिपरिकल्पितानांपृथिव्यादीनांनिवृत्तिःकृताभवति॥
कथंपृथिव्यापतेजोवायुमनांसिपुद्गलद्रव्येंतर्भवंतिरूपरसगंधस्पर्शवत्वात्॥ वायुमनसोरूपा

ध्यारोप्यते कुत उपचारः यथा शरीरं पुद्गलद्रव्यप्रचयात्मकं तथा धर्मादिष्वपि प्रदेशप्रचयापे
क्षया इव काया इति अजीवाश्च ते कायाश्च अजीवकाया विशेषणं विशेष्येणेति वृत्तिः ननु च नी
लोत्पलादिषु व्यभिचारे सति विशेषणविशेष्ययोर्योग्यः ॥ इहापि व्यभिचारोस्ति अजीवश
ब्दः अकाये कालेपि वर्तते कायोपि जीवे किमर्थः कायशब्दः प्रदेशबहुत्वज्ञापनार्थः धर्मादीनां
प्रदेशा बहव इति ॥ ननु च असंख्येयाः प्रदेशा धर्माधर्मैकजीवानामित्यनेन प्रदेशबहुत्वं ज्ञापितं
सत्यं परं किं तु ॥ अस्मिन् विधौ सति तदवधारणं विज्ञायते असंख्येयाः प्रदेशा न संख्येया नाप्यनं
ताः ॥ इति कालप्रदेशप्रचयाभावज्ञापनार्थं च इह कायग्रहणं कालो वक्ष्यते ॥ तस्य प्रदेशप्रचयप्र
तिषेधार्थं इह कायग्रहणं ॥ यथाणोः प्रदेशमात्रत्वात् द्वितीयादयोस्य प्रदेशा न संतीत्यप्रदेशोणुः
तथा कालपरमाणुरप्येकप्रदेशत्वादप्रदेश इति तेषां धर्मादीनामजीव इति सामान्यसंज्ञा जीव
लक्षणाभावमुखेन प्रवृत्ता धर्माकाशपुद्गला इति विशेषसंज्ञा सामयिकी ॥ अत्राह सर्वे द्रव्यपर्या
येषु केवलस्येत्येवमादिषु द्रव्याण्युक्तानि कानि तानीत्युच्यते ॥ २ ॥ द्रव्याणि ॥ यथा यथा योग्यं स्वप
र्यायैर्द्रूयंते गम्यंते प्राप्यंते यथास्वं यथायथं पर्यायाः पर्यायैर्या निद्रवंति वा तानीति द्रव्याणि द्रव्य
योगाद्द्रव्यमिति चेन्नोभयासिद्धेः यथा दंडदंडिनोर्योगो भवति पृथक्सिद्धयोर्न च तथा द्रव्यद्रव्यत्वे

र्थीनार्थमाह॥ ॐ॥दशवर्षसहस्राणिप्रथमायां॥ ॰अपरास्थितिरित्यनुवर्तते॰अथभवनवासि
नांकाजघन्यास्थितिरित्याह॥ ॐ॥भवनेषुच॥चशब्दः किमर्थः प्रकृतसमुच्चयार्थः तेनभवनवा
सिनामपरास्थितिर्दशवर्षसहस्राणीत्यभिसंबंध्यते व्यंतराणांतर्हिकाजघन्यास्थितिरित्यतआ
ह॥ ॐ॥व्यंतराणांच॥चशब्दप्रकृतसमुच्चयार्थः तेनव्यंतराणामपरास्थितिर्दशवर्षसहस्राणि
इत्यवगम्यते॰अथैषांपरास्थितिकेत्यत्रोच्यते॥ ॐ॥परापल्योपममधिकं॥परा उत्कृष्टास्थितिर्व्यंत
राणांपल्योपममधिकंइदानींज्योतिष्काणांपरास्थितिर्वक्तव्येत्यत॰आह॥ ॐ॥ज्योतिष्काणांच॥च
शब्दः प्रकृतसमुच्चयार्थः तेनैवमभिसंबंधः ज्योतिष्काणांचपरास्थितिः पल्योपममधिकमिति
॰अथापराकियतीत्याह॥ ॐ॥तदष्टभागोपराः॥तस्यपल्योपमस्याष्टभागोज्योतिष्काणामपरा
स्थितिरित्यर्थः ॰अथलौकांतिकानांविशेषोक्तानांस्थितिविशेषोनोक्तः सकियानिति॥ ॐ॥लौ
कांतिकानामष्टौसागरोपमाणिसर्वेषां॥ ॰अविशिष्टाः सर्वेतेशुक्ललेश्याः पंचोत्सेधशरीराः च
तुर्णिकायदेवानांस्थानभेदाः सुखादिकंपरापरस्थितिर्लेश्यातुर्योध्यायेनिरूपितं॥ ॐ॥इति त
त्त्वार्थवृत्तौसर्वार्थसिद्धिसंज्ञिकायांचतुर्थोध्यायः॥ ॐ॥इदानींसम्यग्दर्शनविषयभावेनोपक्षे
पुजीवादिषुजीवपदार्थोव्याख्यातः ॰अथाजीवपदार्थोविचारप्राप्तः स्तस्यसंज्ञाभेदसंकीर्तनार्थमि
दमुच्यते॥ ॐ॥अजीवकायाधर्माधर्माकाशपुद्गला॥कायशब्दः शरीरेव्युत्पादितः इहोपचारात

येसप्तविंशतिःतृतीयेऽष्टाविंशतिः उपरिमग्रैवेयकेषुप्रथमेएकोनत्रिंशत्द्वितीयेत्रिंशत्त्रि
तृतीयेएकत्रिंशत्ऽनुदिशविमानेषुद्वात्रिंशत्विजयादिषुत्रयस्त्रिंशत्सागरोपमानिउत्कृष्टा
स्थितिः सर्वार्थसिद्धेत्रयस्त्रिंशदेवेतिनिर्दिष्टोत्कृष्टस्थितिकेषुदेवेषुजघन्यस्थितिप्रतिपादना
र्थमाह॥ऽपरापल्योपममधिकं॥पल्योपमंव्याख्यातंऽपराजघन्यस्थितिःपल्योपमसाधि
कंकेषांसौधर्मैशानीयानांकथमवगम्यतेपरतः इत्युत्तरत्रवक्ष्यमाणत्वात् ततऊर्द्ध्वंजघन्यस्थि
तिप्रतिपादनार्थमाह॥ ॥परतःपरतःपूर्वापूर्वानंतरा॥परस्मिन्देशेपरतःवीप्सायांद्वित्वंपूर्वसब्द
स्यापिऽधिकग्रहणमनुवर्ततेतेनैवमभिसंबंध क्रियतेसौधर्मैशानयोर्द्वेसागरोपमेसाधिके
उक्तेतेसाधिकेसानत्कुमारमाहेंद्रयोर्जघन्यास्थितिःसानत्कुमारमाहेंद्रयोःपरास्थितिः सप्तसाग
रोपमानिसाधिकानितानिसाधिकानिब्रह्मब्रह्मोत्तरयोर्जघन्यास्थितिरित्यादिएवंविजयादिपर्य्य
तेषुज्ञेयंनारकाणांउत्कृष्टास्थितिरुक्ताजघन्यासूत्रेनुपात्ताऽप्रकृतामपिलघुनोपायेनप्रतिपा
दयितुमिच्छन्नाह॥ ॥नारकाणांचद्वितीयादिषु॥चशब्दःकिमर्थःप्रकृतसमुच्चयार्थःकिंचप्र
कृतंपरतःपरतःपूर्वानंतराऽपरास्थितिरितितेनायमर्थोलभ्यतेरत्नप्रभायांनारकाणांपरास्थि
तिरेकंसागरोपमंशर्कराप्रभायांजघन्याशर्कराप्रभायांउत्कृष्टास्थितिस्त्रीणिसागरोपमाणिसा
वालुकाप्रभायांजघन्येत्यादिएवंद्वितीयादिषुजघन्यास्थितिरुक्ताप्रथमायांकाजघन्येतित्याह

सप्त॥ अनयोः कल्पयोर्देवानां सप्तसागरोपमानि साधिकानि उत्कृष्टा स्थितिर्ब्रह्मलोकादिष्वच्यु
तावसानेषु स्थितिविशेषप्रतिपत्त्यर्थमाह॥ त्रिसप्तनवैकादशत्रयोदशपंचदशभिरधिकानितु॥
सप्तग्रहणं प्रकृतं तस्येह त्र्यादिभिर्निर्दिष्टैरभिसंबंधो द्रष्टव्यः सप्त त्रिभिरधिकानि सप्त सप्तभि
रधिकानि इत्यादि द्वयोर्द्वयोरभिसंबंधो वेदितव्यः तुशब्दो विशेषणार्थः किं विशिनष्टि अधिकश
ब्दोनुवर्त्तमानश्चतुर्भिरिह संबध्यते नोत्तराभ्यामित्ययमर्थो विशिष्यते तेनायमर्थो भवति ब्र
ह्मलोकब्रह्मोत्तरयोर्दशसागरोपमाणि साधिकानि लांतवकापिष्टयोश्चतुर्दशसागरोपमा
नि साधिकानि शुक्रमहाशुक्रयोः षोडशसागरोपमानि साधिकानि सतारसहस्रारयो
रष्टादशसागरोपमानि साधिकानि आनतप्राणतयोर्विंशतिसागरोपमाणि आरणाच्यु
तयोर्द्वाविंशतिसागरोपमाणि तत ऊर्द्ध्वं स्थितिविशेषप्रतिपत्त्यर्थमाह॥ आरणाच्युता
दूर्द्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धौ च॥ अधिकग्रहणमनुवर्त्तते तेनेह सं
बंधो वेदितव्यः एकैकेनाधिकानीति नवग्रहणं किमर्थं प्रत्येकमेकैकमधिकमिति ज्ञापनार्थं इतर
था हि ग्रैवेयकेषु एकमेवाधिकं स्याद्विजयादिष्विति आदिशब्दस्य प्रकारार्थत्वात् अनुदिशानाम
पि ग्रहणं सर्वार्थसिद्धेः पृथग्ग्रहणं जघन्याभावप्रतिपादनार्थं तेनायमर्थः अधोग्रैवेयकेषु
त्रयोविंशतिः द्वितीये चतुर्विंशतिस्तृतीये पंचविंशतिः मध्यमग्रैवेयकेषु प्रथमे षड्विंशतिः द्विती

भ्यः शेषास्तिर्यग्योनयः॥ उपपादिका उक्तादेवनारकाः मनुष्याश्चनिर्दिष्टाः प्राग्मानुषोत्तरा
न्मनुष्या इति एभ्योन्ये संसारिणोजीवाः शेषास्तिर्यग्योनयोवेदितव्याः एषांतिरश्चां देवादीनामि
व क्षेत्रविभागः पुनर्निर्देष्टव्यः सर्वलोकव्यापित्वात्तेषां क्षेत्रविभागोनोक्तः आह स्थितिरुक्ता
नारकाणांमनुष्याणांतिरश्चांच देवानांनोक्ता तस्यांवक्तव्यायां आदावुद्दिष्टानांभवनवा
सिनांस्थितिप्रतिपादनार्थमाह॥ २८॥ स्थितिरसुरनागसुपर्णद्वीपशेषाणांसागरोपमत्रिप
ल्योपमार्द्धहीनमिताः॥ असुरादीनांसागरोपमादिभिर्यथाक्रमं अत्राभिसंबंधोवेदितव्यः
इयंस्थितिरुत्कृष्टाजघन्याप्युत्तरत्रवक्ष्यते तद्यथा असुराणांसागरोपमास्थितिर्नागानांत्री
णिपल्योपमानिस्थितिः सुपर्णानामर्द्धतृतीयानि द्वीपानांद्वे शेषाणांषण्णां अध्यर्द्धपल्यो
पमं॥ आद्यदेवनिकायस्थित्यभिधानादनंतरं व्यंतरज्योतिष्कस्थितिवचने क्रमप्राप्ते सति
तदुल्लंघ्यवैमानिकानांस्थितिरुच्यते कुतस्तयोरुत्तरंघनमुत्तरत्रलघुनोपायेनस्थितिवचनात्॥
तेषुचादावुद्दिष्टयोः स्थितिविधानार्थमाह॥ २९॥ सौधर्मैशानयोः सागरोपमे अधिके॥ सा
गरोपमे इति द्विवचननिर्देशात् द्वित्वगतिः अधिके इत्ययमधिकारः आ कुतः आ सहस्रा
रात् इदंतुकुतोज्ञायते इति चेत् उत्तरत्रतुशब्दकरणात् तेनसौधर्मैशानयोर्देवानांद्वे सा
गरोपमे सातिरेके प्रत्येतव्ये उत्तरयोः स्थितिविशेषप्रतिपत्त्यर्थमाह॥ सानत्कुमारमाहेन्द्रयोः

स्वतादित्यांतरे॰अग्न्याभसूर्याभा॰आदित्यस्यचवन्हेश्चांतरेचांद्राभसत्याभाः वन्ह्यरुणांतरालेश्रे
यस्करक्षेमंकरा॰अरुणगर्दतोयांतरेवृषभेष्टकामचराः गर्दतोयतुषितमध्येनिर्म्माणरजोदिगंत
रक्षिताःतुषिताव्याबाधमध्ये॰आत्मरक्षितसर्वरक्षिता ॰अव्याबाधारिष्टांतरालेमरुद्वसवः॰अरि
ष्टसारस्वतांतरे॰अश्वविश्वाःसर्वेस्वतंत्राहीनाधिकत्वाभावात् विषयरतिविरहात्देवर्षयइतरेषांदे
वानां॰अर्चनीयाचतुर्दशपूर्वधरा तीर्थकरनिष्क्रमणप्रतिबोधनपरावेदितव्याः ॰आहउक्तालौ
कांतिकाततश्च्युताएकंगर्भवासमवाप्यनिर्वास्यंतीत्युक्तं किमेवमन्येष्वपिनिर्वाणप्राप्तिकालविभा
गोविद्यतइत्यत॰आह॥छ॥विजयादिषुद्विचरमाः॥॰आदिशब्दःप्रकारार्थेवर्तते तेनविजयवैजयं
तजयंतापराजितानुदिशविमानानामिष्टानांग्रहणंसिद्धंभवतिकःपुनरत्रप्रकारः॰अहमिंद्रेसति
सम्यग्दृष्ट्युपपादःसर्वार्थसिद्धिप्रसंगःइतिचेन्नतेषांपरमोत्कृष्टत्वात्॰अन्वर्थसंज्ञाएकचरम
त्वसिद्धेःचरमत्वंदेहस्यमनुष्यभवापेक्षया द्वौचरमौयेषांतेद्विचरमाःविजयादिभ्यश्च्युता॰अप्र
तिपतितःसम्यक्त्वामनुष्येषूत्पद्यसंयममाराध्यपुनर्विजयादिषुउत्पद्यततश्च्युताःपुनर्म्मनुष्यभव
मवाप्यसिद्ध्यंतीतिद्विचरमदेहत्वं ॰आहजीवस्यऊदयिकेषुभावेषुतिर्यग्योनिरौदयिकीत्युक्तं पुन
श्चस्थितौतिर्यग्योनिजानांचेतितत्रनज्ञायतेकेतिर्यग्योनयइति॰अत्रोच्यते॥उपपादिकमनुष्ये

इदं न ज्ञायते इत आरभ्य कल्पा भवंतीति सौधर्म्मादिग्रहणमनुवर्त्तते तेनायमर्थो लभ्यते सौधर्म्मा
दयः प्राग्ग्रैवेयकेभ्यः कल्पाः परिशेष्यादितरे कल्पातीता इति लौकांतिका देवा वैमानिकाः संतः क्वग्रह्यं
ते कल्पोपपन्नेषु कथमिति चेदुच्यते ॥छ॥ ब्रह्मलोकालया लौकांतिकाः ॥ एत्य तस्मिन्नीयंत इत्यालय
आवासो ब्रह्मलोक आलयो येषां ते ब्रह्मलोकालयाः लौकांतिका देवा वेदितव्याः यद्येवं सर्वेषां ब्रह्म
लोकालयानां लौकांतिकत्वप्रसक्तं अन्वर्थसंज्ञाग्रहणाददोषः ब्रह्मलोको लोकः तस्यांतो लोकांतः
लोकांते भवा लौकांतिका इति न सर्वेषां ग्रहणं तेषां हि विमानानि ब्रह्मलोकस्यांतेषु स्थितानि अथवा
जातिजरामरणाकीर्णो लोकः संसारस्तस्यांतो लोकांते भवा लौकांतिकाः ते सर्वे परीतसंसाराः तत
श्च्युता एकं गर्भवासं प्राप्य परिनिर्वास्यंतीति तेषां सामान्येनोपदिष्टानां भेदप्रदर्शनार्थमाह ॥छ॥ सारस्व
तादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधारिष्टाश्च ॥ क्वेमे सारस्वतादयः अष्टासु पूर्वोत्तरासु दिक्षु
विदिक्षु यथाक्रममेते सारस्वतादयो देवगणा वेदितव्याः तद्यथा पूर्वोत्तरकोणे सारस्वतविमानं पूर्व
स्यां दिशि आदित्यविमानं पूर्वदक्षिणस्यां दिशि वह्निविमानं दक्षिणस्यां दिशि अरुणस्य विमानं
दक्षिणापरकोणे गर्दतोयविमानं अपरस्यां दिशि तुषितविमानं उत्तरापरस्यां दिशि अव्याबाधा
विमानं उत्तरस्यां दिशि अरिष्टविमानं चशब्दः समुच्चितार्थस्तेषामंतरेषु द्वौ द्वौ देवगणौ तद्यथा सार

विधिप्रतिपत्त्यर्थमाह॥ पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु॥ पीता च पद्मा च शुक्ला च पीतप
द्मशुक्लाः पीतपद्मशुक्ला लेश्या येषां ते पीतपद्मशुक्ललेश्याः कथं ह्रस्वत्वं उतरपदिकं यथा
द्रुतायां तपरकरणे मध्यविलंबितयोरुपसंख्यानमिति अथवा पीतश्च पद्मश्च शुक्लश्च पी
तपद्मशुक्लाः वर्णवंतोर्थाः तेषामिव लेश्या येषां ते पीतपद्मशुक्ललेश्याः तत्र कस्य का लेश्ये
त्यत्रोच्यते सौधर्मैशानयोः पीतलेश्याः सानत्कुमारमाहेंद्रयोः पीतपद्मलेश्याः ब्रह्मलोकब्र
ह्मोत्तरलांतवकापिष्ठशुक्रमहाशुक्रेषु पद्मलेश्या मध्यमांशः सतारसहस्रारयोः पद्मशुक्ल
लेश्ये आनतादिषु त्रयोदशस्थानेषु शुक्ललेश्याः तत्राप्यनुदिशानुत्तरेषु परमशुक्ललेश्या॥
सूत्रेऽनभिहितं कथं मिश्रग्रहणं साहचर्यात् लोकवत् यथा छत्रिणो गच्छंतीति अछत्रिषु
छत्रिव्यवहार एवमिहापि मिश्रयोः अन्यतरग्रहणं भवति अयमर्थः सूत्रतः कथं गम्यत इ
ति चेदुच्यते एवमभिसंबंधः क्रियते द्वयोः कल्पयोर्युगलयोः पीतलेश्याः सानत्कुमारमाहेंद्रयोः
पद्मलेश्याया अविवक्षात् ब्रह्मलोकादिषु कल्पयुगलेषु पद्मलेश्याः शुक्रमहाशुक्रयोः शु
क्ललेश्याया अविवक्षितत्वात् शेषेषु तारादिषु शुक्ललेश्या पद्मलेश्याया अविवक्षात् इति
नास्ति दोषः आह कल्पोपपन्ना इत्युक्तं तत्रेदं न ज्ञायते के कल्पा इत्युच्यंते॥छ॥ प्राग्ग्रैवेयकेभ्यः

शरीरेण सहस्थानं स्थितिः शापानुग्रहशक्तिः प्रभावः सुखमिंद्रियार्थानुभवः शरीरवसनाभर
णादिदीप्तिर्द्युतिर्लेश्यालेश्याया विशुद्धिर्लेश्याविशुद्धिः इंद्रियाणामवधिश्च विषय इंद्रियावधि
विषयः तेभ्यस्तैर्वाधिका इति तस्य उपर्युपरि प्रतिकल्पं प्रतिप्रस्तारं च वैमानिकाः स्थित्यादिभिरधि
का इत्यर्थः यथा स्थित्यादिभिरुपर्युपरि अधिकाः एवं गत्यादिभिरपीत्यतिप्रसंगे तन्निवृत्त्यर्थ
माह ॥ २१ ॥ गतिशरीरपरिग्रहाभिमानतो हीनाः ॥ देशाद्देशांतरप्राप्तिहेतुर्गतिः शरीरं वैक्रियकमु
क्तं लोभकषायोदयाद्विषयेषु संगः परिग्रहः मानकषायोदयादुत्पन्नो हंकारः अभिमानः एतैर्गत्या
दिभिरुपर्युपरि हीना देशांतरविषयक्रीडारतिप्रकर्षाभावात् उपरि उपरि गतिहीनाः शरीरं सौधर्मै
शानयोर्देवानां सप्तारत्निप्रमाणं सानत्कुमारमाहेंद्रयोः षडरत्निप्रमाणं ब्रह्मलोकब्रह्मोत्तरलांतव
कापिष्ठेषु पंचारत्निप्रमाणं शुक्रमहाशुक्रसतारसहस्रारेषु चतुररत्निप्रमाणं आनतप्राणतयो
रर्द्धचतुर्थारत्निप्रमाणं आरणाच्युतयोरत्नित्रयप्रमाणं अधोग्रैवेयकेषु अर्द्धतृतीयारत्निप्रमा
णं मध्यमग्रैवेयकेषु अरत्निद्वयप्रमाणं उपरिमग्रैवेयकेषु अनुदिशविमानेषु चाध्यर्द्धारत्निप्र
माणं अनुत्तरेष्वरत्निप्रमाणं परिग्रहश्च विमानपरिच्छदादि उपर्युपरि हीनः अभिमानश्च उपर्यु
परितनुमंदकषायत्वाद्धीनः पुरस्तात्त्रिषु निकायेषु देवानां लेश्याविधिरुक्तः इदानीं वैमानिकेषु लेश्या

श्चत्वारियोजनानि उत्तुल्यश्नैश्चरावरंतिसरावज्योतिर्गणगोचरो नभोवकाशो दशाधिक
योजनशतबहलतिर्यगसंख्यातद्वीपसमुद्रप्रमाणेघनोदधिपर्यंतः उक्तंच नवुत्तदुरसत्तंस
याद्सप्तदीचदुतियंदुगच्चउक्क ताराररविससिरिरका बुहभग्गवञ्जंगिरारसणी ज्योतिष्का
णांगतिविशेषप्रतिपत्त्यर्थमाह॥ ॥मेरुप्रदक्षिणानित्यगतयोन्नृलोके॥मेरोःप्रदक्षिणामे
रुप्रदक्षिणामेरुप्रदक्षिणा इति वचनंगतिविशेषप्रतिपत्त्यर्थेविपरीतगतिर्मोविज्ञायीतिनित्य
गतयइतिविशेषणमनुपरतक्रियाप्रतिपादनार्थंनृलोकग्रहणंविषयार्थमर्द्धतृतीयेषुद्वीपे
षुद्वयोश्चसमुद्रयोर्ज्योतिष्कानित्यगतयोनान्यत्रइतिज्योतिष्कविमानानांनित्यगतिहेत्वभावा
त् तद्वृत्त्यभावइतिचेन्नासिद्धत्वात्गतिरताभियोग्यदेवप्रेरितगतिपरिणामात्कर्म्मविपाकस्य
वैचित्र्यात्तेषांहिगतिसुखेनैवकर्म्मविपच्यतइतिएकादशभिर्योजनशतैरेकविंशैर्म्मेरुमप्रा
प्यज्योतिष्काःप्रदक्षिणाश्चरंतिगतिमज्ज्योतिःसंबंधेनव्यवहारकालप्रतिपत्त्यर्थमाह॥ ॥
तत्कृतःकालविभागः तद्ग्रहणंगतिमज्ज्योतिःप्रतिनिर्देशार्थंनकेवलयागत्यानापिकेवलै
र्ज्योतिभिःकालपरिछिद्यते अनुपलब्धेः अपरिवर्तनाच्चकालोद्विविधःव्यावहारिकोमुख्य
श्चव्यवहारिकः कालविभागस्तत्कृतःसमयावलिकादिक्रियाविशेषपरिछिन्नोऽन्यस्या

परिछिन्नस्यपरिछेदहेतुर्मुख्योन्योवक्ष्यमाणलक्षणइतरत्रज्योतिषामवस्थानलक्षणप्रति
पादनार्थमाह॥ वहिरवस्थिताः॥ वहिरित्युच्यतेकुतोवहिर्न्रलोकात्कथमवगम्यते अर्थ
वशाद्धिभक्तिपरिणामोभवतिननुचन्रलोकेनित्यगतिवचनादन्यत्रावस्थानंज्योतिषांसि
द्धं अतोवहिरवस्थिताइतिवचनमनर्थकमितितत्रकिंकारणंन्रलोकादन्यत्र हिज्योतिषां
अस्तित्वमवस्थानंच असिद्धं अतस्तदुभयंसिद्ध्यर्थंवहिरवस्थिताइत्युच्यतेविपरीतगति
निवृत्त्यर्थंकदाचित्गतिनिवृत्त्यर्थंचसूत्रमारब्धव्यंतुरीयस्यनिकायस्यसामान्यसंज्ञासंकीर्ति
नार्थमाह॥ वैमानिकाः॥ वैमानिकग्रहणमधिकारार्थंइतउत्तरंयेवक्ष्यन्तेतेषांवैमानिक
संप्रत्ययोयथास्यादिति अधिकारःक्रियतेविशेषेणात्मस्थान्सुकृतिनोमानयंतीतिविमा
नानिविमानेषुभवावैमानिकाः तानिविमानानित्रिविधानिइंद्रकश्रेणीपुष्पप्रकीर्णकभेदेन
तत्रइंद्रकविमानानिइंद्रवत्मध्ये अवस्थितानितेषांचतसृषुदिक्षु आकाशप्रदेशश्रेणिवद
वस्थानात् श्रेणिविमानानिविदिक्षुप्रकीर्णपुष्पवदवस्थानात्पुष्पप्रकीर्णकानितेषांवैमा
निकानांभेदाववोधनार्थमाह॥ ७॥ कल्पोपपन्नाःकल्पातीताश्च॥ कल्पेषुषोडशस्वर्गेषूपप
न्नाःकल्पोपपन्नाःकल्पानतीताःकल्पातीताश्चेतिनवग्रैवेयकदेवाः नवानुदिशदेवाःपंचा

नुत्तरनिवासिनो त्रिप्रकारा॥ अथाहमिंद्राः कल्पातीताः कथ्यंते द्विविधा वैमानिकाः तेषाम
वस्थाविशेषनिश्चानार्थमाह॥ ७॥ उपर्युपरि किमर्थमिदमुच्यते तिर्यगवस्थितिप्रतिषे
धार्थमुच्यते नज्योतिष्कवत्तिर्यगवस्थिता नव्यंतरवदसमव्यवस्थितयः उपर्युपरि इत्यु
च्यंते के ते कल्पाः पुद्येवं किं पत्सु कल्पविमानेषु ते वा भवंतीत्यत आह॥ ७॥ सौधर्म्मेशानस
नत्कुमारमाहेंद्रब्रह्मब्रह्मोत्तरलांतवकापिष्ठशुक्रमहाशुक्रसतारसहस्रारेष्वानतप्राण
तयोरारणाच्युतयोर्नवसुग्रैवेयकेषु विजयवैजयंतजयंतापराजितेषु सर्वार्थसिद्धौ च
॥ कथमेषां सौधर्म्मादिशब्दानां कल्पाभिधानं सत्यं चातुरर्थिकेनाण स्वभावतो वा कल्पस्या
भिधानं भवति अथ कथमिंद्राभिधानं स्वभावतः साहचर्याद्वा तत्कथं इति चेदुच्यते सुध
र्म्मा नाम सभा सास्मिन्नस्तीति सौधर्म्मः कल्पः तदस्मिन्नस्तीत्यण् तत्कल्पसाहचर्यात् इंद्रोपि सौ
धर्म्मः ईसानो नाम इंद्रः स्वभावतः ईशानस्य निवासः कल्पः ऐशानः तस्य निवास इत्यण् तत्
साहचर्यादिंद्रोपि ऐशानः सनत्कुमारो नाम इंद्रः स्वभावतः तस्य निवास इत्यण् सानत्कुमारः
कल्पः तत्साहचर्यादिंद्रोपि सानत्कुमारः माहेंद्रो नामेंद्रः स्वभावतस्तस्य निवासः कल्पः माहेंद्रः
तत्साहचर्यादिंद्रोपि माहेंद्र एवमुत्तरत्रापि योज्यं आगमापेक्षया व्यवस्था भवतीति उपर्यु

परीत्यनेन द्वयोर्द्वयोरभिसंबंधो वेदितव्यः प्रथमौ सौधर्मैशानकल्पौ तयोरुपरि सानत्कुमारमा
हेंद्रौ तयोरुपरि ब्रह्मलोकब्रह्मोत्तरौ तयोरुपरि लांतवकापिष्ठौ तयोरुपरि शुक्रमहाशुक्रौ त
योरुपरि सतारसहस्रारौ तयोरुपरि आनतप्राणतौ तयोरुपरि आरणाच्युतौ अध उपरि च
प्रत्येकमिंद्रसंबंधो वेदितव्यः मध्ये प्रतिद्वयं सौधर्मैशानसनत्कुमारमाहेंद्राणां चतुर्णां च
त्वार इंद्राः ब्रह्मलोकब्रह्मोत्तरयोरेकः ब्रह्मोनाम लांतवकापिष्ठयोरेको लांतवाख्यः शुक्रमा
हाशुक्रयोरेकः सतारसहस्रारयोरेकः सतारनामा आनतप्राणतआरणाच्युतानां चतुर्णां च च
त्वारः एवं कल्पवासिनां द्वादश इंद्रा भवंति जंबूद्वीपे महामंदरो योजनसहस्रावगाहो नवतियोजन
सहस्रोच्छ्रायः तस्याधस्तादधोलोकः बाहल्येन तत्प्रमाणस्तिर्यक्प्रसृतस्तिर्यग्लोकः तस्योपरि
ष्टात् ऊर्द्धलोकः चूलिका चत्वारिंदशद्योजनोच्छ्राया तस्या उपरि केशांतरमात्रे व्यवस्थितमृजुवि
मानमिंद्रकं सौधर्मस्य सर्वमन्यल्लोकनियोगाद्वेदितव्यं नवसु ग्रैवेयकेष्विति नवशब्दस्य पृथ
ग्वचनं किमर्थं अन्यान्यपि नवविमानानि अनुदिससंज्ञकानि संतीति ज्ञापनार्थं तेनानुदिशानां
ग्रहणं वेदितव्यं एषामधिकृतानां वैमानिकानां परस्परतो विशेषप्रतिपत्त्यर्थमाह॥ २०॥ स्थिति
प्रभावसुखद्युतिलेश्याविशुद्धींद्रियावधिविषयतोधिकाः॥ स्वोपात्तस्यायुषः उदयात्तस्मिन्भवे

वानंकुमाराणांवासाः द्वितीयनिकायस्यसामान्यविशेषसंज्ञावधारणार्थमाह॥ छ॥ व्यंतराः॥
किन्नराः किंपुरुषमहोरगगंधर्वयक्षराक्षसभूतपिशाचा॥ विविधदेशांतराणियेषांनिवासास्ते
व्यंतरा इति अन्वर्थासामान्यसंज्ञेयमपिविकल्पानांतेषांव्यंतराणां अष्टौविकल्पाः किन्नरादयो
वेदितव्याः नामकर्मोदयविशेषापादिताः क्वपुनस्तेषामावासा इतिचेदुच्यते॥ अस्माज्जंबूद्वीपादसंख्ये
यांतद्वीपसमुद्रानतीत्यउपरिष्ठेखरपृथिवीभागेसप्तानांव्यंतराणामावासाः राक्षसानांपंकबहुलभा
गे तृतीयस्यनिकायस्यसामान्यविशेषसंज्ञाकीर्तनार्थमाह॥ छ॥ ज्योतिष्काः सूर्याचंद्रमसौग्रहन
क्षत्रप्रकीर्णकतारकाश्च॥ ज्योतिःस्वभावत्वादेषांपंचानामपिज्योतिष्का इतिसामान्यसंज्ञा अन्व
र्थाः सूर्यादयस्तद्विशेषसंज्ञानामकर्मोदयप्रत्ययाः सूर्याचंद्रमसाविति पृथक्ग्रहणंप्राधान्य
ख्यापनार्थं किंकृतंपुनः प्राधान्यंप्रभावादिकृतं क्वपुनस्तेषां आवासा इत्यत्रोच्यते अस्मात्समान
भूमिभागादूर्द्ध्वंसप्तयोजनशतानिनवत्युत्तराणि उत्प्लुत्यसर्वेषांज्योतिषामधोभागेविन्यस्तास्तारका
श्चरंति ततोदशयोजनान्युत्प्लुत्यसूर्याश्चरंति ततोशीतियोजनानामुत्प्लुत्यचंद्रमसोभ्रमंति त
तस्त्रीणियोजनानिउत्प्लुत्यनक्षत्राणि ततश्चत्वारियोजनानिबुधाः ततस्त्रीणियोजनान्युत्प्लु
त्य शुक्राः ततस्त्रीणियोजनान्युत्प्लुत्यबृहस्पतयः॥ ततश्चत्वारियोजनानिउत्प्लुत्यअंगारकाः॥ तत

ब्रह्मोत्तरलांतवकापिष्टेषुदेवादिव्यांगनाशृंगाराकारविलासचतुरमनोज्ञवेषरूपालोकनमा
त्रादेवपरमसुखमाप्नुवंति ॥ शुक्रमहाशुक्रसतारसहस्रारेषुदेवावनितानांमधुरसंगीतम्र
दुहसितललितकथितभूषणारवश्रवणमात्रादेवपरांप्रीतिमास्कंदंति ॥ आनतप्राणतारणा
च्युतकल्पेषुदेवाःस्वांगनामनःसंकल्पमात्रादेवपरंसुखमवाप्नुवंति ॥ अथोत्तरेषांकिंप्रकारंसु
खमित्युक्तेतन्निश्चयार्थमाह ॥ ९ ॥ परेऽप्रवीचाराः ॥ परग्रहणमितराशेषसंग्रहार्थं अप्रवीचार
ग्रहणंपरमसुखप्रतिपत्त्यर्थंप्रवीचारोहिवेदनाप्रतीकारः तदभावेतेषांपरमसुखमनवरतमित्यु
क्तंभवति ॥ उक्तायेआदिनिकायादेवाः दशविकल्पाइतितेषांसामान्यविशेषसंज्ञावधारणार्थ
मिदमुच्यते ॥ भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥ भवने
षुवसंतीत्येवंशीलाभवनवासिनः ॥ आदिनिकायस्येयंसामान्यसंज्ञाः असुरादयःविशेषसंज्ञाःवि
शिष्टनामकर्मोदयापादितवृत्तयः ॥ सर्वेषांदेवानांअवस्थितवयःस्वभावत्वेपिवेषभूषायुधया
नवाहनक्रीडनादिकुमारवदेषांआभासतइतिभवनवासिषुकुमारव्यपदेशोरूढः ॥ प्रत्येकंपरि
समाप्यतेअसुरकुमाराइत्येवमादि ॥ क्वतेषांभवनानीतिचेदुच्यतेरत्नप्रभायाः पंकबहुलभागे
असुरकुमाराणांभवनानिखरपृथिवीभागेउपर्यधश्चएकैकयोजनसहस्रंवर्जयित्वाशेषेन

हाघोषश्च । उदधिकुमाराणांजलकांतोजलप्रभश्चद्वीपकुमाराणांपूर्णोवसिष्ठश्चदिकुमा
राणां॰अमितिगतिरमितवाहनश्चेतिव्यंतरेष्वपिकिंनराणांद्वाविंद्रोकिंनरकिंपुरुषश्चके
पुरुषाणांसत्पुरुषोमहापुरुषश्चमहोरगाणां॰अतिकायोमहाकायश्चगंधर्वाणांगीतरतिर्गी
तयशाश्चयक्षाणांपूर्णभद्रोमाणिभद्रश्चराक्षसाणांभीमोमहाभीमश्चपिशाचानांकालोम
हाकालश्चभूतानांप्रतिरूपोऽप्रतिरूपश्च॰अथैषांदेवानांसुखंकीदृशमित्युक्तेसुखावबोधना
र्थमाह॥७॥कायप्रविचाराआऐशानात्॥प्रवीचारोमैथुनोपसेवनंकायेनप्रवीचारोयेषांते
कायप्रवीचाराः॰आङभिविध्यर्थः॰असंहितयानिर्देशः॰असंदेहार्थःएतेभवनवास्यादयः
ऐशानांताःसंक्लिष्टकर्म्मकत्वात्मनुष्यवत्स्त्रीविषयसुखमनुभवंतीत्यर्थः॰अवधिग्रहणादि
तरेषांसुखविभागे॰अनिर्ज्ञातेतत्प्रतिपादनार्थमाह॥८॥शेषाःस्पर्शरूपशब्दमनःप्रवीचा
राः॥उक्ताविशिष्टसंग्रहार्थंशेषग्रहणंकेपुनरुक्ताअवशिष्टाकल्पवासिनःस्पर्शश्चरूपंचशब्दश्च
मनश्चस्पर्शरूपशब्दमनांसितेषुप्रवीचारोयेषांतेस्पर्शरूपशब्दमनःप्रवीचाराः कथमभिसंबंध
आर्षाविरोधेनकुतःपुनःप्रवीचारग्रहणमिष्टसंप्रत्ययार्थमितिकःपुनरिष्टोभिसंबंधः॰आर्षावि
रोधीसनत्कुमारमाहेंद्रयोर्देवादेवांगनांगस्पर्शमात्रादेवपरांप्रीतिमुपलभ्यंतेतथादेव्योपि ब्रह्म

स्त्रिंशाः वयस्यपीठमर्द्दसदृशाः परिषदि भवा पारिषदाः। आत्मरक्षाः शिरोरक्षोपमानाः
अर्थचरारक्षिकसमा लोकपालाः लोकं पालयंतीति लोकपालाः पदात्यादीनि सप्तानीका
नि सैन्यस्थानीकानि दंडस्थानीयानि प्रकीर्णकाः पौरजनपदकल्पाः आभियोग्या दाससमा
नाः वाहनादिकर्म्मणि प्रवृत्ताः अंतेवासस्थानीयाः किल्विषिकाः किल्विषमेषामस्तीति कि
ल्विषिकाः एकैकशः एते इंद्रादयो दशविकल्पाश्चतुर्षु निकायेषु उत्सर्गेण प्रसक्तास्ततोपवा
दार्थमाह॥ त्रायस्त्रिंशलोकपालवर्ज्या व्यंतरज्योतिष्काः॥ व्यंतरेषु ज्योतिष्केषु च त्रायस्त्रिं
शान् लोकपालांश्च वर्ज्जयित्वा इतरेष्टौ विकल्पा द्रष्टव्याः। अथ तेषु निकायेषु किमेकैक इंद्र उ
तान्यः प्रतिनियमः कश्चिदस्तीत्यत आह॥ पूर्वयोर्द्वींद्राः॥ पूर्वयोर्निकाययोः भवनवासिव्यं
तरनिकाययोः कथं द्वितीयस्य पूर्वत्वं सामीप्यात् पूर्वत्वमुपचर्योक्तं द्वींद्रा इति अंतरनीतः
वीप्सार्थः द्वौ द्वौ इंद्रौ येषां ते द्वींद्राः इति यथा सप्तपर्णोष्टापद इति तद्यथा भवनवासिषु ताव
दसुरकुमाराणां द्वाविंद्रौ चमरो वैरोचनश्च नागकुमाराणां धरणो भूतानंदश्च विद्युत्कुमा
राणां हरिसिंहो हरिकांतश्च सुपर्णकुमाराणां वेणुदेवो वेणुदारी च अग्निकुमाराणां अ
ग्निशिखोग्निमाणवश्च वातकुमाराणां वेलंप्रभंजनश्च स्तनितकुमाराणां सुघोषोम

षांते पीतांतलेश्याः एतदुक्तंभवति आदितस्त्रिषुनिकायेषुभवनवासिव्यंतरज्योतिष्का
णांअसुरदेवानांकृष्णानीलाकापोतपीतेतिचतस्रलेश्याभवंति तेषांनिकायानामंतर्वि
कल्पप्रतिपादनार्थमाह॥ दशाष्टपंचद्वादशविकल्पाःकल्पोपपन्नपर्यंताः॥चतुर्णांदेव
निकायानांदशादिभिःसंख्याशब्दैःयथासंख्यमितिसंबध्येवेदितव्यःदशविकल्पाःभव
नवासिनअष्टविकल्पाव्यंतराः पंचविकल्पाज्योतिष्काः।द्वादशविकल्पावैमानिकाइति
सर्ववैमानिकानांद्वादशविकल्पांतः॥पातित्वेप्रशक्तेग्रैवेयकादिनिवृत्त्यर्थंविशेषणमु
पादीयतेकल्पोपपन्नपर्यंताइतिअथकथंकल्पसंज्ञा॥इंद्रादयःप्रकाराःदशैतेषुकल्प्य
तइतिकल्पाःभवनवासिषुतत्कल्पनासंभवेपिरूढिवशात्वैमानिकेष्वेववर्ततेकल्पश
ब्दः कल्पेषूपपन्नाःकल्पोपपन्नाःपर्यंतायेषांतेकल्पोपन्नपर्यंताःपुनरपितद्विशेषप्रति
पत्त्यर्थमाह॥इंद्रसामानिकत्रायस्त्रिंशत्परिशदात्मरक्षलोकपालानीकप्रकीर्णकाभि
योग्यकिल्विषकाश्चैक॥४॥अन्यदेवासाधारणाणिमादिगुणयोगादिंदंतीतींद्राः॥आज्ञै
श्वर्येवर्जितंयत्तस्थानायुर्वीर्यपरिवारभोगोपभोगादितत्समानंतस्मिनसमानेभवाःसा
मानिकाःमहत्तराःपितृगुरूपाध्यायतुल्याःमंत्रिपुरोहितस्थानीयाः॥त्रयस्त्रिंशदेवत्रय

ष्योः॥भूबिललेश्यायायुर्द्वीपोदधिवोस्य गिरिसरःसरित्तांमानेन्द्रणांभेदस्थितिः तिरश्वामपि
तृतीये॥ ७॥ भवप्रत्ययोवधिर्देवनारकाणामित्येवमादिष्वसकृद्देवशब्द उक्तः तत्रनज्ञाय
तेकेदेवाः कतिविधाइतिवातन्निर्णयार्थमाह॥ ७॥ देवाश्चतुर्णिकायाः॥ देवगतिनामक
र्मोदयेसत्यभ्यंतरहेतौवाह्यविभूतिविशेषैः द्वीपादिसमुद्रादिप्रदेशेषुयथेष्टंदीव्यंतिक्रीडं
तीतिदेवाः॥ इहेकवचननिर्देशोयुक्तः देवश्चतुर्णिकायइतिसजात्यभिधानात् वहूनांप्रति
पादकोभवति वहुत्वनिर्देशस्तदंतर्गतभेदप्रतिपत्त्यर्थः इंद्रसामानिकादयोवहवोभेदाः
संन्तिस्थितित्यादिकृताश्चतत्सूचनार्थं देवगतिनामकर्मोदयस्यस्वकर्म्मविशेषापादित
भेदस्यसामर्थ्यात् निचीयंतइतिनिकायाः संघाताइत्यर्थः चत्वारोनिकायायेषांतेचतु
र्निकायाः केपुनस्तेभवनवासिनोव्यंतराज्योतिष्कावैमानिकाश्चेति तेषांलेश्यावधारणा
र्थमिदमुच्यते॥ ७॥ ऽआदितस्त्रिषुपीतांतलेश्याः॥ ऽआदितइत्युच्यतेऽअंतेमध्येऽअन्यथा
वाग्रहणंमाविज्ञायीति ऽआदौ ऽआदित द्वयोरेकस्यचनिवृत्त्यर्थंत्रिग्रहणंक्रियतेऽअथच
तुर्णांनिवृत्त्यर्थंकस्मान्नभवति ऽआदितइतिवचनात् षड्लेश्याउक्ताः तत्रचतस्रणांलेश्या
नांग्रहणार्थंपीतांतग्रहणंक्रियतेपीतांतेजइत्यर्थः पीताऽअंतेयासांताः पीतांतालेश्याये

॥६०॥ श्रीजिनायनमः॥ ॐ अथ श्रीजिनसहस्र
नाम श्रीजिनसेनाचार्यकृत लिख्यते॥ स्वयं
भुवेनमस्तुभ्य मुत्पाद्यात्मानमात्मनि स्वात्मनैव
तथोद्भूत वृत्तयेचिंत्यवृत्तये॥१॥ नमस्तेजगतां
पत्ये लक्ष्मीभर्त्रेनमोनमः विदांवरनमस्तुभ्यं॥
नमस्तेवदतांवर॥२॥ कामशत्रुहणंदेव मामनं
तिमनीषिण त्वामानमत्सुरेण्मौलिः स्रग्मा
लाभ्यर्चितक्रमं॥३॥ ध्यानदुर्घणनिर्भिन्न घन
घातिमहातरु॥ अनंतभवसंतान जयादासी
रनंतजित्॥४॥ त्रैलोक्यनिर्जयावाप्त दुर्दर्पमति
दुर्जयोभवान्॥५॥ विधूताशेषसंसारबंधनोभ
व्यबांधव त्रिपुरारिस्त्वमीशोसि जन्ममृत्युज
रांतकृत्॥६॥ त्रिकालविषयाशेषतत्वभेदात्त्रि
धोत्थितं केवलाख्यंदधच्चक्षुः स्त्रिनेत्रोसित्व
मीशिनः॥७॥ त्वामंधकांतकंप्राहु मोहांधासुर
मर्द्दनात्॥ अर्द्धंतेनारयोयस्मा दर्द्धनारीश्वरो
स्यतः॥८॥ शिवःशिवपदध्यासा दुरितारिहरो
हरः शंकरःकृतसंलोके शंभवस्त्वंभवन्सुखे
॥९॥ वृषभोसिजगज्ज्येष्ठः पुरुः पुरुगुणोदयैः
नाभेयोनाभिसंभूते रिक्ष्वाकुकुलनंदनः॥१०॥
त्वमेकपुरुषस्कंध स्त्वंद्वेलोकस्यलोचने त्वंत्रि

धातुर्धिसन्मार्गस्त्रिरत्नस्त्रिज्ञानधारकः २१ त्वनु-
स्मरणमांगल्य। मूर्तिस्त्वंचतुरस्रधी। पंचब्रह्म
मयोदेव। पावनस्त्वंपुनीहिमां २२ त्वनुःस्मरण-
मांगल्य। मूर्तिस्त्वंचतुरस्रधी। पंचब्रह्ममयोदेव
पावनः॥ स्वर्गावतारिणेतुभ्यं। सद्योजातात्मनेनमः
जन्माभिषेकमादाय वामदेवोनमोस्तुते। २३।
पुरुषायसुरूपत्वेन। विमुक्तिपदभागिने नम
स्त्वत्पुरुषावस्थः। भाविनीतेद्यविश्रुते २४ श्रा
नीकांतायघोरायपरंप्रशममीयुषे। केवल
ज्ञानसंसिद्धा। वीशणायनमोस्तुते २५ ज्ञानव
रणनिर्हासा। नमस्तेनंतचक्षुषे दर्शनावरण
छेदी। नमस्तेविश्वदर्शने २६ नमोदर्शनमोहघ्न
क्षायिकामलदृष्टये। नमश्चारित्रमोहघ्ने। वि
रागायमहौजसे २७ नमस्तेनंतवीर्याय। नमोनं
तसुखात्मने। नमस्तेनंतलोकाय। लोकालोकावि
लोकिने २८ नमस्तेनंतदानाय। नमस्तेनंतलब्ध
ये। नमस्तेनंतभोगाय। नमोनंतोपभोगिने। २९
नमःपरमयोगाय। नमस्तुभ्यमयोनये। नमः
परमपूताय। नमस्तेपरमर्षये। ३०। नमःप
रमविद्याय। नमःपरमतच्छिदे। नमःपरमत
त्वाय। नमस्तेपरमात्मने। ३१ नमःपरमरूपा

य॥नमः परमतेजसे॥नमः परममार्गाय॥
नमस्तेपरमेष्टिने॥२२॥परमंभेजुषेधाम प॥
मंज्योतिषेनमः॥नमः पारेतमःप्राप्त धाम्नेप
रमरात्मने॥२३॥नमः क्षीणकलंकाय॥क्षीण
बंधनमोस्तुते॥नमस्तेक्षीणमोहाय॥क्षीणदोषा
यतेनमः॥२४॥नमःसुगतयेतुभ्यं॥शोभनांग
तिमीयुषे॥नमस्तेतींद्रियज्ञान॥सुखायानींद्रिया
त्मने॥२५॥कायबंधननिर्मोक्षा॥दकायायन
मोस्तुते॥नमःस्तुभ्यमयोग्याय॥योगिनाम
धियोगिने॥२६॥अवेदायनमस्तुभ्य मकषा
यतेनमः॥नमःपरमयोगींद्रः वंदितांह्रिद्वयाय
ते॥२७॥नमःपरमविज्ञान॥नमः परमसंयतः
नमःपरमदृग्दृष्ट परमार्थायतापिने॥२८॥नमस्तुभ्य
मलेश्यायशुक्ललेश्यांशकस्पृशे॥नमोभव्येतराव
स्था॥व्यतीतायविमोक्षिणे॥२९॥संज्ञसंज्ञि द्व
याबस्था॥व्यतिरिक्तामलात्मने नमस्तेवितसं
ज्ञाय॥नमःक्षायिकदृष्टये॥३०॥अनाहाराय
तृप्ताय॥नमः परमभाजुषे॥व्यतीतसेषदोषा
य भवाब्धेपारमीयुषे॥३१॥अजरायनमस्तु
भ्य॥मवलायक्षरात्मने॥३२॥अलमास्तांगुण
स्तोत्रं मनंतास्तावकागुणाः॥त्वनामस्मृतिमा

ण।पर्युपासिशिषामहे।३३।प्रसिद्धाष्टसहस्रेद्ध
लक्षणांत्वांगिरांपतिं।नाम्नामष्टसहस्रेण।तोष्टु
मोभीष्टसिद्धये।३४।इतिस्तुतिः।श्रीमान्स्वयंभु
र्वृषभः।शंभवःसंभुरात्मभूः।स्वयंप्रभःप्रभुर्भो
क्ता।विश्वभूरपुनर्भवः।३५।विश्वात्माविश्वलो
केशो।विश्वतश्चक्षुरक्षरः।विश्वविद्विश्वविद्येशो
विश्वयोनीरनीश्वरः।३६।विश्वदृश्वाविभुर्द्धाता
विश्वेशोविश्वलोचनः।विश्वव्यापीविधिर्वेधा।
शाश्वतोविश्वतोमुखः।३७।विश्वकर्माजगज्ज्ये
ष्ठो विश्वमूर्तीर्जिनेश्वरः।विश्वदृग्विश्वभूतेशो
विश्वज्योतिरनीश्वरः।३८।जिनोजिष्णुरमेयात्मा
विश्वरीशोजगत्पतिः।अनंतजिदचिंतात्मा।भ
व्यबंधुरबंधनः।३९।युगादिपुरुषोब्रह्मा।पंचब्र
ह्ममयःशिवः।परःपरतरःसूक्ष्मःपरमेष्ठीस
नातनः।४०।स्वयंज्योतिरजोजन्मा ब्रह्मयोनिरयो
निजः।मोहारिविजयीजेता।धर्मचक्रीदयाध्वजः
४१।प्रशांतारिरनंतात्मा।योगीश्वरार्चितः ब्रह्म
विद्ब्रह्मतत्वज्ञो।ब्रह्मोविद्यो।विद्यतीश्वरः ४२
सिद्धोबुद्धप्रबुद्धात्मा।सिद्धार्थःसिद्धशासनः।सि
द्धसिद्धांतविद्ध्येयं।सिद्धसाध्योजगद्धितः।४३।सहि
ष्णुरच्युतोनंत।प्रभविष्णुर्भवोद्भवः।प्रभूष्णुरजरो

जयो भ्राजिष्णुर्धीश्वरोव्ययः ४४ विभावसुर
संभूष्णु स्वयंभूष्णु पुरातनः परमात्मा परंज्योति
स्त्रिजगत्परमेश्वरः ४५ इति श्रीमद्धृतं दिव्य
भाषापतिर्दिव्यः पूतवाक्पूतशासनः पूतात्मा
परमंज्योति धर्माध्यक्षो दमीश्वरः ४६ श्रीप
तिर्भगवानर्हं नरजा विरजाः शुचिं तीर्थकृत्के
वलीशान पूजार्हः स्नातकोमलः ४७ अनंतदि
प्तिर्ज्ञानात्मा स्वयंबुद्धः प्रजापतिः मुक्तः शक्तो निरा
बाधो निःकलो भुवनेश्वरः ४८ निरंजनो जग
ज्योति निरुक्तो निरामयः अचलस्थितिरक्षो
भ्यः कूटस्थस्थानुरक्षयः ४९ अग्रणी ग्रामणी
र्नेता प्रणेता न्यायशास्त्रकृत् शास्ता धर्मपति
र्धर्म्यो धर्मात्मा धर्मतीर्थकृत् ५० वृषध्वजो वृ
षाधीशो वृषकेतुर्वृषायुधः वृषो वृषपतिर्भर्ता
वृषभांको वृषोद्भवः ५१ हिरण्यनाभिर्भूतात्मा
भूतभृद्भूतभावनः प्रभवो विभवो भास्वंभवो
भावो भवांतकः ५२ हिरण्यगर्भः श्रीगर्भः प्रभू
त विभवो भवः स्वयंप्रभु प्रभुत्मात्मा भूतनाथो
जगत्प्रभुः ५३ सर्वादि सर्वदृक्सार्व सर्वज्ञस
र्वदर्शिनः सर्वात्मा सर्वलोकेस सर्ववित्सर्
वलोकजित् ५४ सुगतिः सुश्रुतः सुश्रून

सर्वावस्तुरिर्विहृस्तुत। विस्तुतो विस्तुतः पादो।
विश्वशीर्षस्तु विश्वश्रवाः॥५५॥ सहस्रशीर्षः क्षेत्र
ज्ञः सहस्राक्षः सहस्रपात् भूतभव्यभवद्भ
र्त्ता विश्वविद्यामहेश्वरः॥५६॥ दिव्यशर्ता स्थ
विष्ठः स्थविरो ज्येष्ठः प्रष्ठः प्रेष्ठो वरिष्ठधीः स्थे
ष्ठो गरिष्ठो बंहिष्ठः श्रेष्ठोऽणिष्ठो गरिष्ठगीः॥
५७॥ विश्वभृद्विश्वसृड् विश्वेड् विश्वभुग्विश्व
नायक विश्वासी विश्वरूपात्मा विश्वजिद्विजि
तांतकः॥५८॥ विभवो विभयो वीरो विशोको
विजरो जरन् विरागो विरतो संगो विविक्तो वी
तमत्सरः॥५९॥ विनेयजनताबंधुर्विलीनाशे
षकल्मषः वियोगो योगविद्विद्वान् विधाता सु
विधीः सुधीः॥६०॥ क्षांतिभाक् पृथिवीमूर्त्तिः शांति
भाक् सलिलात्मकः॥ वायुमूर्त्तिरसंगात्मा वह्नि
मूर्त्तिरधर्मधक्॥६१॥ सुयज्वा यजमानात्मा सुत्वा
सुत्रामपूजितः ऋत्विग्यज्ञपतिर्यज्ञो यज्ञां
गममृतं हविः॥६२॥ व्योममूर्त्तिरमूर्त्तात्मा नि
र्लेपो निर्मलो चलः सोममूर्त्तिः सुसौम्यात्मा सू
र्यमूर्त्तिर्महाप्रभुः॥६३॥ मंत्रविन्मंत्रकृन्मंत्री मंत्र
मूर्त्तिरनंतगः स्वतंत्रस्तंत्रकृत्स्वांतः कृतांतांतः
कृतांतकृत्॥६४॥ कृती कृतार्थसत्कृत्यः कृतकृत्य

कृत: कृतु: निरोमृत्युंजयोमृत्यु रमृतात्माम्रु
तोम्रव: ६४ ब्रह्मनिष्ठपरंब्रह्म ब्रह्मात्माब्रह्मसं
भव: महाब्रह्मपतिर्ब्रह्मे ब्रह्माब्रह्मपरेश्वर: ६६
सुप्रसन्नप्रसन्नात्मा: ज्ञानधर्मदम:प्रभु: प्रशमा
त्माप्रशांतात्मा पुराणंपुरुषोत्तम: ६७ [illegible]
[illegible] महाशोकध्वजोशोक: क: स्रष्टाप
द्मविष्टर: पद्मेसन्यप्रसंभृति: पद्मनाभिरनु
तर: ६८ पद्मयोनिर्जगद्योनि रित्यस्तुत्य: स्तुति
स्वर: स्तवनार्हो हृषीकेशो जितजेयकृत:क्रिय:
६९ गणाधिपोगणज्येष्ठो गुण्य:पुण्यो गुणागुणी
गुणाकरोगुणांभोधि र्गुणज्ञोगणनायक: ७०
गुणादरीगुणोच्छेदी निर्गुण: पुण्य:गीर्गुण: श
रण्यपुण्यवाक्पूतो वरेण्यगुणनायक: ७१ अ
गण्यपुण्यधीर्गण्य पुण्यकृत्पुण्यशासन: धर्मा
रामोगुणग्रामा पुण्यापुण्यनिरोधक: ७२ पा
पापेतोविपापात्मा विपाप्मावीतकल्मष: निर्द्व
द्वोनिर्मद: शांतो निर्मोहोनिरुपद्रव: ७३ निर्नि
मेषोनिराहारो नि:क्रियोनिरुपप्लव: नि:कलंको
निरस्तेनो निर्धूतागो निरास्रव: ७४ विशालो
विपुलज्योति रतुलोचिंत्यवैभव: सुसंवृत:सुगु
प्तात्मा सुभृत्सनयतत्ववित् ७५ एकविद्योमहा

विद्यो मुनिःपरिदृढव्रतिः। धीशो विद्यानिधीःसा
क्षीः। विनिता विहितांतकः। ७६। पिता पितामहःपा
ताः पवित्रपवनोगतिः। त्राता विषगवरोवर्यो वर
रःपरमःपुमान्। ७७। कविःपुराणपुरुषो। वर्षीया
वृषभःपुरुः। प्रतिष्ठाप्रवसोहेतु र्भुवनैकपिताम
हः। ७८। इति महाशतं। श्रीवत्सलक्षणःश्ल
क्ष्णो। लक्षण्यःशुभलक्षणः। निरीक्षपुंडरीकाक्षः
पुष्कलःपुष्करेक्षणः। ७९। सिद्धिदः सिद्धसंकल्पः
सिद्धात्मासिद्धसाधनः। बुद्धोबोध्योमहाबोधि र्व
र्द्धमानोमहर्द्धिकः। ८०। वेदांगो वेदविद्वेद्यो। जातरू
पोविदांवरः। वेदवेद्यःस्वयंवेद्यो। विवेदोवदतांव
रः। ८१। अनादिनिधनोव्यक्तो। व्यक्तवागव्यक्तशा
सनः। युगादिकृद्युगाधारो। युगादिर्जगदादिजः। ।
८२। अतींद्रोतींद्रियोधींद्रो। महेंद्रोतींद्रियार्थदृक्।
अतिंद्रियोहमिंद्रार्च्यो। महेंद्रमहतोमहान्। ८३।
उद्भवकारणंकर्त्ता। पारगोभवतारकः। अगाह्योग
हनंगुह्यं परार्द्धःपरमेश्वरः। ८४। अनंतर्द्धिरमे
यर्द्धि रचिंत्यर्द्धीसमाग्रधीः। प्राग्यप्राग्हरोभ्यग्र्य
यःप्रत्यग्रोग्रिमोग्रजः। ८५। महातपोमहातेजाः
महोदर्कोमहोदयः। महाजसामधामाः। महासत्वो
महाद्युतिः। ८६। महाधीर्योमहावीर्यो। महासंपन्म

हावलः॥महाशक्तिर्महाज्योतिर्महाभूतिर्महाद्यु
तिः॥८७॥महामतिर्महानीतिर्महाक्षांतिर्महोदयः
महाप्राज्ञो महानंदो महाभागो महाकविः॥८८॥म
हामहा महाकीर्तिर्महाकांतिर्महावपुः॥महादानो
महाज्ञानो महायोगो महागुणः॥८९॥महामहाप
तिः प्राप्त महाकल्याणपंचकः॥महाप्रभुर्महाप्राति
हार्योधीशो महेश्वरः॥९०॥ ॥महा
मुनिर्महाध्यानी महामौनी महादमः॥महाक्षमो
महाशीलो महायज्ञो महामखः॥९१॥महाव्रतप
तिर्मह्यो महाकांतिधिरोधिपः॥महामैत्रीमयोमे
यो॥महोपायो महोमयः॥९२॥महाकारुणिकोमं
ता॥महामंत्रो महायतिः॥महानादो महाघोषो॥म
हेज्यो महसांपतिः॥९३॥महाध्वरधरो धुर्यो महौद
र्यो महिष्ठवाक्॥महात्मा महसांधाम॥महर्षिर्महि
तोदयः॥९४॥महाक्लेशांकुशः शूरो महाभूतपतिर्गुरुः
महापराक्रमोनंतो महाक्रोधरिपुर्वशी॥९५॥मह
भवाब्धिसंतारि महामोहाद्रिसूदनः॥महागुणा
करः क्षांतो महायोगीश्वरः शमी॥९६॥महाध्यानप
तिर्ध्याता महाधर्मा महाव्रती॥महाकर्मारिहात्म
ज्ञो महादेवो महेशिता॥९७॥सर्वक्लेशापहः साधुस
र्वदोषहरो हरः॥असंख्येयोप्रमेयात्मा शमात्मा

प्रशमाकरः॥९८॥सर्वयोगीश्वरोचिंत्यः श्रुतात्मा विष्टरश्रवा॥दंतात्मादमतीर्थेशो।योगात्मा ज्ञानसर्वगः॥९९॥प्रधानमात्माप्रकृतिःपरमःप रमोदयः॥प्रक्षीणःवंधकामारी।क्षेमकृतक्षेम शाशनः॥१००॥प्रणवःप्रणयःप्राणः प्राणदःप्रा णतेश्वर प्रमाणंप्रणधिर्दक्षो।दक्षिणोध्वर्युरध्वरः॥१०१॥आनंदोनंदनोनंदो।वंघोनंघोमिनंदकः का महाकामदकाम्यः।कामधेनुररंजयः॥१०२॥

इतिमहामुनिशतं॥ असंस्कृतसुसंस्कारो।प्रा कृतोवेकृतांतकृत।अंतःकृत्कांतगुःकांति श्चिंतामणिरभीष्टदः॥३॥अजितोजितकामारी रमितोमितशासनः।जितक्रोधोजितामित्रो॥जि तक्लेशोजितांतकः॥४॥जिनेंद्रःपरमानंदो।मुनिं द्रोदुंदुभिःस्वनः।महेंद्रवंघोयोगींद्रो।यतींद्रोनाभि नंदन॥५॥नाभेयोनाभिर्योजातः सुव्रतोमुनिरुत्त मः॥अभेद्योनिरयोनार्ष्वा।अधिकोधिगुरुःसुगी ॥६॥स्वमेधासहक्रमीस्वामी।दुराधर्षोनिरुत्सुकः विशिष्टशिष्टभुक्शिष्टः।प्रत्ययःकामनोनघः॥७ क्षेमीक्षेमंकरोक्षय्यःक्षेमधर्मःपतीक्षमी।अग्राह्योग्यानिग्राह्यो।ध्यानगम्योनिरुत्तरः॥८ सुकृतिधातुरिज्याहः सुनयचतुराननः॥श्रीनिवा

अनुर्वक्त॥अनुरास्य अनुमुखः॥९॥सत्यात्मास
त्यविज्ञानः॥सत्यवाक्सत्यशासनः॥सत्याशी
सत्यसंधानः॥सत्यसत्यपरायणः॥१०॥स्थेयान्
स्थवीयान्नेदीयान्दवीयान्दूरदर्शनः॥अणो
रणीयान्नुरणु॥गुरुराद्यो गरीयसां॥११॥सदायो
गः सदाभोगः॥सदातृप्तसदाशिवः॥सदागतिस
दासौख्यः॥सदाविद्यः सदोदयः॥१२॥सुघोषः स
मुखः सौम्यः॥सुखदः सुमितः सुकृत्॥सुगुप्तो गु
प्तिभृद्गोप्ता लोकाध्यक्षो दमेश्वरः॥११३॥इति सं
स्कृतशतं॥बृहद्बृहस्पतीर्वाग्मी॥वाचस्पतीरुदा
रधीः॥मनीषी॥धिषणो धीमान्॥शेमुषीशो गि
रांपतिः॥१४॥नैकरूपो नयोत्तुंगो॥नैकात्मा नैकध
र्मकृत्॥अविज्ञेयो प्रतर्क्यात्मा॥कृतज्ञः कृतल
क्षणः॥१५॥ज्ञानगर्भो दयागर्भो॥रत्नगर्भः प्रभा
स्वरः॥पद्मगर्भो महागर्भो॥हेमगर्भ सुदर्शनः॥१६
लक्ष्मीवांस्त्रिदशाध्यक्षो॥दृढीयान् इनईशिता॥म
नोहरो मनोज्ञांगो॥धीरो गंभीरशासनः॥१७॥ध
र्मयूपो दयायागो॥धर्मनेमि मुनीश्वरः धर्मच
क्रायुधो देवः॥कर्महा धर्मघोषणः॥१८॥अमो
घवाग् अमोघाज्ञो॥निर्मलो मोघशासनः॥सुरूप
सुभगस्त्यागी॥समयज्ञः समाहितः॥१९॥सुस्थितः

स्वास्थ्यस्वस्थ्यस्थो नीरजस्को निरुद्धवः ।अलेपो निः
कलंकात्मा ।वीतरागोगतस्पृहः ।२०।वस्येंद्रियोवि
मुक्तात्माः ।निसपत्नो जितेंद्रियः ।प्रशांतोनंतधा
मेर्षिमंगलंमलहानघः ।२१।अनीदृगुपमाभू
तो ।दिष्टिर्देवमगोचरः ।अमूर्तोमूर्तीमनेको ।नै
कोनानेकतत्वदृक् ।२२।अध्यात्मगम्योगम्या
त्मा ।योगविद्योगिवंदितः ।सर्वत्रगःसदाभावि ।त्रि
कालविषयार्थदृक् ।२३।शंकरःशंवदोदांतोद
मीक्षांतिपरायणः ।अधिपःपरमानंदः ।परात्म
ज्ञःपरापरः ।२४।त्रिजगद्वल्लभोभ्यर्च्यस्त्रिजन्मं
गलोदयः ।त्रिजगत्पतिपूज्यांह्रि ।त्रिलोकाग्रशि
खामणिः ।२५।इति वृहच्छंदः ।८। त्रिकालदर्शी
लोकेशो लोकधाता दृढव्रतः ।सर्वलोकातिगःपू
ज्यः सर्वलोकैकसारथिः ।२६।पुराणपुरुषःपू
र्वः कृतपूर्वांगविस्तरः ।आदिदेवपुराणाद्यःपु
राणाद्यः पुरुदेवोधिदेवताः ।२७।युगमुख्योयु
गज्येष्ठो ।युगादिस्थितिदेसकः ।कल्याणवर्णः
कल्याणःकल्पःकल्याणलक्षणः ।२८।कल्याण
प्रकृतीदीप्तःकल्याणात्माविकल्मषः ।विकलं
कवलातीतकलिलघ्नःकलाधरः ।२९।देवदे
वोजगन्नाथो जगद्बंधुर्जगद्विभुः ।जगद्धितैषी

लोकज्ञः सर्वगो जगदग्रणी ।३०। चराचरगुरु
र्गोप्यो गूढात्मा गूढगोचरः ।। सद्योजातः प्र
काशात्मा ज्वलज्ज्वलनसप्रभः ।३१। आदित्य
वर्णो भर्माभः सुप्रभः कनकप्रभः सुवर्णव
र्णो रुक्माभः सूर्यकोटिसमप्रभः तपनीयनि
भस्तुंगो बालार्काभोनलप्रभुः संध्याभ्रबभ्रुर्हे
मा हेमतप्तचामीकरछविः ।३३। निष्टप्तकनक
छाय कनत्कांचनसंनिभः हिरण्यवर्णः स्व
र्णाभः शातकुंभनिभप्रभः ।३४। द्युम्नाभो जात
रूपाभो दीप्तजांबुनदद्युतिः सुधौतकलधौ
तश्रीः प्रदीप्तो हाटकद्युतिः ।३५। शिष्टेष्टः पुष्टि
दः पुष्टिः स्पष्टः स्पष्टाक्षरः क्षमः शत्रुघ्नोऽप्रति
घोऽमोघः प्रशास्ता शासिता स्वभूः ।३६। शांतनि
ष्ठो मुनिज्येष्ठः शिवतातिः शिवप्रदः शांतिदः
शांतिकृच्छांतिः कांतिमत्कामितप्रदः ।३७। श्रेयो
निधिरधिष्ठानमप्रतिष्ठः प्रतिष्ठितः सु
स्थिरः स्थावरः स्थाणुः प्रथीयान् प्रथितः पृथुः
३८ ।। इति त्रिकालदर्शनं ।।५।। दिग्वासा वातरस
नो निर्ग्रंथेशो दिगंबरः निष्किंचनो निराशंसो
ज्ञानचक्षुरमोमुहः ।३९। तेजोराशिरनंतौजा
ज्ञानाब्धिः शीलसागरः तेजोमयोऽमितज्योति

ज्योतिमूर्तिस्तमोपहः॥४०॥ जगच्चूडामणिर्दीप्तः शंवान्विघ्नविनायकः॥ कलिघ्नःकर्मशत्रुघ्नो लोकालोकप्रकाशकः॥४१॥ अनिद्रालुरतंद्रालु र्जागरूकःप्रमामयः॥ लक्ष्मीपतीर्जगज्ज्योति र्धर्म राजप्रजाहितः॥४२॥ मुमुक्षुर्बंधमोक्षज्ञो जिताक्षो जितमन्मथः॥ प्रशांतरसशैलूषो भव्यपेटकना यकः॥४३ मूलकर्ताखिलज्योतिर्मलघ्नो मूलका रणं॥ आप्तोवागीश्वरःश्रेयान् श्रायसोक्तिनिरु क्तवाक्॥४४॥ प्रवक्तामचशामीशो मारजिद्विश्व भावविन्॥ सुतनुस्तनुनिर्मुक्तः सुगतोहतदुर्नय यः॥४५॥ श्रीशः श्रीश्रितपादाब्जो वीतभीरभ यंकरः॥ उत्सन्नदोषो निर्विघ्नो निश्चलो लोक वत्सलः॥४६॥ लोकोत्तरोलोकपतिः लोकचक्षुर पारधीः॥ धीरधीर्बुद्धसन्मार्गः सुद्धःसूनृतपूत वाक्॥४७॥ प्रज्ञापारमितिःप्राज्ञो यतिर्नियम तेंद्रियः भदंतोभद्रकृद्भद्रः॥ कल्पवृक्षोवरप्रदः॥ ४८॥ समुन्मूलनकर्मारि कर्मकाष्ठाशुशुक्ष्म णि॥ कर्मण्यकर्मठः प्रांशु हेयादेयविचक्षणः॥ ४९॥ अनंतशक्तिरच्छेद्यः त्रिपुरारिस्त्रिलोचनः॥ त्रिनेत्रः त्र्यंबकः त्र्यक्षः केवलज्ञानवीक्षणः॥५०॥ समंतभद्रः शांतारिः धर्माचार्योदयानिधिः॥

सूक्ष्मदर्शी जितानंग। कृपालुर्धर्मदेशकः॥ ५१॥
शुभंयुः सुखसाद्भूतः॥ पुनः राशिरःनामयः॥ ध
र्मपालोजगत्पालोहूर्म्मसाम्राज्यनायकः॥ ५२॥
इतिदिग्वाससतं॥ १०॥ धाम्नांपतेतवामुनिना
मान्यागमकोविदे। समुच्चितानन्वध्यायन् पुमा
न् पूतिस्मृतिर्भवेत्॥ ५३॥ गोचरोपिगिरामीशं
त्वमवाग्गोचरोमतः। स्तोतातथाप्यसंदिग्धं। त्व
त्तोविष्टंफलंभजेत॥ ५४॥ त्वमतोसिजगद्बंधुः
स्त्वमितोजगद्भिषक्। त्वमितोसिजगद्दाता त्व
मितोसिहजगद्धितः॥ ५५॥ त्वमेकंजगतांज्योर
ति स्त्वंद्विरूपोपयोगभाक्। त्वंत्रिरूपैकमुक्त्यंगो
स्वोत्थानंतचतुष्टयः॥ ५६॥ त्वंपंचब्रह्मतत्वात्मा
त्वंचकल्याननायकः॥ षड्भेदभावतत्वज्ञ। त्वं
सप्तनयसंग्रहः॥ ५७॥ दिव्याष्टगुणमूर्तिस्त्वं
नवकेवललब्धिकः। दशावतारनिर्धार्यो मां
पाहिपरमेश्वरः॥ ५८॥ युष्मन्नामावलिर्दृब्ध
विलसत्स्तोत्रमालया। भवंतंवरिवःस्यामः प्रसी
दानुग्रहाणना॥ ५९॥ इदंस्तोत्रमनुस्मृत्य पूतो
भवतीभक्तिकः॥ यःसंपाठंपठत्येव। सस्यात्क
ल्याणभाजनं। ६०॥ ततःसंदेहपुण्यार्थी। पुमा
न्पठतुपुण्यधी। पौरहूंतीश्रीयंप्राप्तुः। परमाम